# LAGHUYOGAVĀSIṢṬHA

*(Text with the Sanskrit Commentary Vāsiṣṭha-Candrikā)*

Edited by

VASUDEVA SHARMA PANASIKARA



MOTILAL BANARSIDASS
*Delhi Varanasi Patna Madras*

निर्णयसागरीयद्वितीयावृत्तितः पुनर्मुद्रितः

# लघुयोगवासिष्ठः

वासिष्ठचन्द्रिकाव्याख्यासहितः

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा
वासुदेवशर्मणा संशोधितः

मोतीलाल बनारसीदास
दिल्ली वाराणसी पटना मद्रास

शिक्षामन्त्रालय, भारत सरकार की आर्थिक सहायता से प्रकाशित ।


मुख्य कार्यालय : बंगलो रोड, जवाहर नगर, दिल्ली ११० ००७
शाखाएं : चौक, वाराणसी २२१ ००१
अशोक राजपथ, पटना ८०० ००४
६ अप्पर स्वामी कोइल स्ट्रीट, मैलापुर, मद्रास ६०० ००४

द्वितीय संस्करण : बम्बई, १९३७
पुनर्मुद्रण : दिल्ली, १९८५
मूल्य : रु० ३० (तीस रुपये मात्र)

मुद्रण-दोष होने पर प्रकाशक को पहली प्रति भेजकर
दूसरी प्रति मंगवा लें ।

नरेन्द्र प्रकाश जैन, मोतीलाल बनारसीदास, दिल्ली ७
द्वारा प्रकाशित तथा शान्तिलाल जैन, श्री जैनेन्द्र प्रेस, ए-४५,
फेज-१, नारायणा, नई दिल्ली २८ द्वारा मुद्रित ।



# प्रस्तावना

सत्यं ज्ञानमनन्तमेकमजरं नित्योदितं शाश्वतं
प्रत्यग्ब्रह्मरसायनं सुखघनं पूर्णं परं पावनम् ।
स्वात्मज्योतिरनादिमध्यनिधनं मायाविलासैर्मुहु-
र्विश्वाकारमपास्तमायमभयं वन्दे विशुद्धं पदम् ॥

अथ जगदिदमनादिमोहनिशासुप्तमनवरतदुःस्वप्नभ्रमपरंपराक्लिपते जन्मजरामयमरणहर्षामर्षशोकाद्यनर्थसंकटसहस्रसंकुले ग्रहातिग्रहव्याघ्रभीषणे तापत्रितयदावानलज्वालमालाकुले षड्र्मिजालेऽरिषड्वर्गव्याधवध्यमानप्राणिनिकाये संसारमहारण्ये मोमुह्यमानं विवेकान्धं प्रबोधोपायदौर्लभ्यवशात्समुद्वीक्ष्य शास्त्रभानूदयेन तत्प्रबोधनाय भगवतः पद्मजन्मनः शासनात् स्वतश्च प्रवर्तमानः परमकारुणिको भगवान्वाल्मीकिः श्रीरामचन्द्रमहोदयविविधचित्रपवित्रचरित्रपूर्णं पूर्वरामायणं आत्मानात्मविवेचनपूर्वकात्मसाक्षात्कारगर्भं योगवासिष्ठसंज्ञकमुत्तररामायणमिति च निबन्धद्वयरूपं महानिबन्धमाविश्चकार ।

ननु क्षीणरागादिदोषस्त्रैवर्णिकश्चेत्स संन्यासपूर्वकवेदान्तश्रवण एवाधिकारी । पूर्वकाण्डानुष्ठानस्य चित्तशुद्धिद्वारोत्तरकाण्डाधिका-

रप्रापकत्वस्य 'तमेतं वेदानुवचनेन' इत्यादिश्रुतिसिद्धत्वात् । न चात्रात्रैवर्णिकस्याधिकारः । तस्य 'नावेदविन्मनुते तं बृहन्तम्' इत्यधिकारनिषेधात् । तस्मान्नात्राधिकारी सुलभ इति चेन्न । स्मार्तकर्मवदुपपत्तेः । यथा त्रैवर्णिकस्य त्रेताग्निसाध्ये कर्मण्यधिकारेऽप्यनाहिताग्निसाधारणः स्मार्तकर्माधिकारोऽस्त्येव तथा श्रौतज्ञानाधिकारिणोऽप्यसंन्यासिमुमुक्षुसाधारणोऽस्मिन्नपि ग्रन्थेऽस्त्यधिकारः अज्ञानावधिकश्च । अस्यापि स्मृतिवद्वेदोपबृंहणत्वात् । तथाचोक्तम्—'वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना' इति । तत्र वैदिकपूर्वकाण्डस्य श्रीरामचरितकथाव्याजेनोपबृंहणं षट्काण्डं सोत्तरं पूर्वरामायणं उत्तरकाण्डस्य षट् प्रकरणमिदं सोत्तरमिति । यथा केषुचित् स्मार्तकर्मसु स्त्रीशूद्रसाधारणोऽधिकारस्तथाऽस्यापि श्रवणे पुराणवत् 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' 'जनश्च शूद्रोऽपि महत्त्वमीयात्' इत्यादिवचनलिङ्गात् । 'नावेदविन्मनुते तं बृहन्तं' 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिवचनं त्ववेदविदः श्रौतज्ञानानधिकारपरमिति केचित् । अपरोक्षज्ञानाभावपरमित्यन्ये । वेदपूर्वकप्राशस्त्यपरमित्यपरे । सर्वथाप्यस्त्येवान्येषामपि पौराणिकसाधारणे ज्ञानेऽधिकारः । 'स हि सर्वैर्विजिज्ञास्य आत्मा वर्णैस्तथाश्रमैः' इत्यादिवचनेभ्यः । तत्र श्रौतज्ञाने पूर्वकाण्डोक्तधर्मानुष्ठानजन्या चित्तशुद्धिरिवेहापि पूर्वरामायणोपदर्शितस्वस्ववर्णाश्रमोचितनिष्कामधर्मानुष्ठानजा चित्तशु-

द्विर्जिज्ञासोत्पादनद्वारा हेतुरिति पूर्वोत्तररामायणयोर्हेतुहेतुमद्भाव-संगतिः । तथाचेदमुत्तररामायणापरपर्यायमखिलवेदान्तसिद्धान्त-गर्भं श्रीमद्वसिष्ठमहर्षिश्रीरामचन्द्रसंवादरूपेण जगति योगवासिष्ठ-संज्ञया वरीवर्ति ।

भगवान्नारायणश्च दशरथान्वये लब्धजन्मा सुग्रीव—सौमित्र—विभीषणादीन् सज्जनांस्त्रायमाणः खर—दूषण—त्रिशिरो—ऽतिकाय—घटकर्णेन्द्रजिद्दशाननादींश्च दुष्टान्निवर्हयंस्त्रयीधर्मं यथावत्समस्थाप-यन् महीमण्डल इति पूर्वरामायणाज्ज्ञायत एव । एवमौपनिषद्-तत्त्वज्ञानमपि भगवतो वसिष्ठाच्छ्रुततत्त्वज्ञानो भगवान्दाशरथिः प्रातिष्ठिपज्जगदुद्धाराय तस्य च योगवासिष्ठसंज्ञस्योत्तररामायणस्य वैराग्य—मुमुक्षुव्यवहार—जगदुत्पत्ति—स्थिति—उपशम—निर्वाणसंज्ञ-कानि षट्प्रकरणानि, पद्यानां च द्वात्रिंशत्सहस्राणि । तस्मात् षट्सहस्रश्लोकमितं सारमुद्धृत्य लघुयोगवासिष्ठ इति व्यवहृतो ग्रन्थः काश्मीरकपण्डितेनाभिनन्दनाम्ना संगृहीतो मुमुक्षुहितकामनया । तस्यैव च वासिष्ठचन्द्रिकाख्या सुबोधा व्याख्या श्रीमतात्मसुखा-ख्यविद्वद्वरेण प्रागेव विरचिता । तद्व्याख्यासंवलितोऽयं लघुयोगवा-सिष्ठो नाम प्राचीनो वेदान्तग्रन्थो मुमुक्षुजनहिताय प्रागेव निर्णय-सागरमुद्रणालये मुद्रितः । इदानीं च तत्प्रतिरूपकाणां दुर्लभत्वमा-लोक्येदं पुनर्मुद्रणं क्रियते । बहुजनोपकारकेणानेन कर्मणा सज्ज-नानां धन्यवादा लभ्येरन् निर्णयसागरयन्त्रालयाधिपतिना । भग-

वाञ्ज्ञानकीजानिश्चिरमायुरारोग्यादिशुभसंततिं वितरतु श्रेष्ठिप्रवरेभ्यः श्रीमद्भ्यः पाण्डुरङ्ग जावजी महोदयेभ्य इति परमेश्वरं भृशं प्रार्थयामहे ।

यथामति संस्कृतेऽप्यस्मिन्ग्रन्थे गच्छतः स्खलनन्यायेन दृग्दोषाल्पप्रेक्षानवधानाक्षरयोजकनिबन्धनं मानुषशेमुषीसुलभं स्खलितं दृष्टिसरणिमापतितं निसर्गकरुणावरुणालया निबन्धसंशोधनश्रमविदुषो विद्वांसो मार्जयेयुरिति सप्रश्रयं विज्ञापयति ।

ग्रन्थसंस्कर्ता.



# लघुयोगवासिष्ठस्थविषयानुक्रमणिका ।

समाप्तेयं विषयानुक्रमणिका।



ॐ श्रीरामाय नमः ॥

# लघुयोगवासिष्ठः।

## वासिष्ठचन्द्रिकाव्याख्यासहितः ।

### वैराग्यप्रकरणम्—

स्वाविद्याकल्पितद्वैतं नरसिंहाभिधं महः ॥ वेदान्तवेद्यं वन्देऽहं परमानन्दविग्रहम् ॥ १ ॥ सर्वमुत्तमसुखप्रसादतो जीवजातमनिति श्रुतिर्जगौ । तस्य वेदगदितस्य वर्ण्यते किं महत्त्वमखिलात्मनो गुरोः ॥ २ ॥ नतभवपरिपन्थि ज्ञानदानैकलीलं मुनिवरनिकुरम्बैः पूज्यमानाङ्घ्रिपद्मम् । विधुतसकलदोषं सत्यविज्ञप्तिमूर्तिं श्रुतिशतनुतमारादाश्रये विश्वनाथम् ॥ ३ ॥ यो देहलीमधिवसञ्छिवराजधान्यां बाह्यान्तरैर्विरचितापचितीच्छयेव । दृष्टैव वारयति विघ्नशतानि सोऽव्यादस्मान्समस्तसुरवन्दितपादपद्मः ॥ ४ ॥ यस्या महामहिमसागरसंविगाहः सद्यः पुनाति सकलं जनमाश्वपाकात् । सा शारदा त्रिपथगेव समस्तदेवैः सेव्या समग्रवरमाशु ददातु मह्यम् ॥ ५ ॥ वाल्मीकिमुनिवाग्गङ्गा सहस्रमुखवाहिनी । ब्रह्मसागरसंयाता मद्वचांसि पुनात्वलम् ॥ ६ ॥ वसिष्ठरामपादाब्जवरिवस्याविधौ मम । वचांसि पुष्पतां यान्तु चित्तवृत्तानि दीपताम् ॥ ७ ॥ श्रीमद्गुरुगणेशानवाचः संकल्पितार्थदाः । प्रणम्य सादरं मूर्ध्ना कुर्वे वासिष्ठचन्द्रिकाम् ॥ ८ ॥ वासिष्ठाब्धिं तितीर्षामि हनूमानिव लीलया । रामपादाब्जभक्त्याहं क्षन्तुमर्हन्ति सूरयः॥ ९ ॥

दिवि भूमौ तथाकाशे बहिरन्तश्च मे विभुः ।
यो विभात्यवभासात्मा तस्मै सर्वात्मने नमः ॥ १ ॥

अथ सत्यज्ञानानन्दाद्वितीयः परमात्मा भगवान्नारायणः कल्पादौ क्षेत्राणि तमःप्रधानानि जीवांश्च चित्प्रधानान् भावनाज्ञानकर्मानुसारेण ससर्ज । तथाचोक्तमाचार्यैः—'तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् । परःकारणतामेति भावनाज्ञानकर्मभिः' इति । अथ स्वसृष्टानां प्राणिनामभ्युदयनिःश्रेयसार्थमुपायोपेयतया स्थितं कर्मज्ञानलक्षणं वेदार्थं मरीच्यादिभ्यः सनकादिभ्यश्चोपदिदेश । तैश्चोपदिष्टं प्राणिभिरनुष्ठीयमानं तं वेदार्थं रावणादिदस्युभिर्विघ्नितानुष्ठानमालक्ष्य तत्परिपालनेच्छया वशीकृतमायः सत्यसंकल्पो भगवान्संकल्पसमासादिताङ्गभावः कौसल्यायां दशरथादवततार । अवतीर्य च वसिष्ठशिष्यताविडम्बनां धारयन्नानाख्यानावलिमण्डितेन तत्संवादेन ज्ञानामृतरसमाविश्चकार । कर्म च प्रवर्तयामास रक्षोगणवधेन तदुभयरक्षणं च चक्रे। तत्र रामस्य शिष्यता ब्रह्मण एव ब्रह्मविद्याधिकारित्वं दर्शयितुम् । तथाच श्रुतिः—'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभव'दिति । तथाच वार्तिकम्—'स्वाभासफलकारूढं तदेवारूपकं परम् । ब्रह्मविद्याधिकारित्वं द्वैविध्यात्प्रतिपद्यत' इति । तं च वसिष्ठरामसंवादं दिव्यज्ञानसंपन्नो भगवान्वाल्मीकिर्द्वात्रिंशच्छ्लोकसहस्रैर्निर्बबन्ध । तमिमं वासिष्ठसमुद्रं वैराग्यमुमुक्षुव्यवहारजगदुत्पत्तिस्थित्युपशमनिर्वाणप्रतिपादकषट्प्रकरणकल्लोलमनेकाख्यानवरतरङ्गं विवेकवैराग्योपरतिविज्ञानादिरत्ननिलयं मन्दमतिदुस्तरमालक्ष्य परमकारुणिकः काश्मीरपण्डितोऽभिनन्दनामा श्लोकानां षट्सहस्रीं तस्मा-

दुर्जहार । तदिदं वासिष्ठं मन्दोपकृतये यथामति व्याख्यास्यामः । प्रारीप्सितग्रन्थस्याविघ्नेन परिसमाप्तये प्रचयगमनाय चेष्टदेवतानमस्कारलक्षणं मङ्गलाचरणं मुखतः कुर्वन्नर्थाच्छास्त्रप्रतिपाद्यमर्थं दर्शयति भगवानाचार्यः—दिवीति ॥ यच्छब्दस्य प्रसिद्धार्थाभिधायकत्वादात्मनः प्रसिद्धत्वादात्मा विशेष्यतया संबध्यते—य आत्मेति ॥ य आत्मा मे विभाति तस्मै नम इति संबन्धः । तस्य स्वरूपं दर्शयति—अवभासेति ॥ अवभासो ज्ञप्तिरात्मा स्वरूपं यस्य स तथा तस्य । देशतः परिच्छेदं व्यावर्तयति—विभुरिति ॥ सकलदेशव्यापीत्यर्थः । विभुत्वं साधयति—दिवीत्यादिना ॥ दिवि स्वर्गे आकाशे अन्तरिक्षे संक्षेपविस्तराभ्यां प्रतिपादितोऽर्थः श्रोतृबुद्धिमनायासमारोहयतीति मन्वानो विस्तरेण प्रतिपादितमर्थं संक्षिप्याह—बहिरन्तश्चेति ॥ अथवा लोकत्रयेऽन्तर्बहिश्च यो विभाति तस्मै 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति श्रुतेः । 'बहिरन्तश्च भूतानामचरं चरमेव चे'ति स्मृतेश्च । एवंविध आत्मस्वरूपे विद्वदनुभवः प्रमाणमिति सूचयति भगवान्वाल्मीकिः—यो विभातीति ॥ नन्वात्मनो व्यतिरिक्तवस्तुसद्भावाद्वस्तुतः परिच्छेदः स्यादिति चेन्नेत्याह—सर्वात्मन इति ॥ सर्वस्य द्वैतप्रपञ्चस्य कल्पितस्य शुक्तिकेव रजतस्यात्मा परमार्थस्वरूपं तस्मै । वस्तुपरिच्छेदनिराकरणेनात्मनः कालपरिच्छेदोऽपि निराकृतो वेदितव्यः । कालस्यापि वस्तुतः स्वस्मिन्कल्पितस्य सत्तास्फूर्तिप्रदत्वेन आत्मनस्तत्परिच्छेदासंभवात् । अथवा दिवि द्योतमाने लिङ्गशरीरे भुवि भूमिकार्ये स्थूलशरीरे आकाशे अव्याकृताख्ये कारणशरीरे तत्साक्षितया यो विभाति तस्मै नमः । शिष्टं पूर्ववत् । 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न

अहं बद्धो विमुक्तः स्यामिति यस्यास्ति निश्चयः ।
नात्यन्तमज्ञो नो तज्ज्ञः सोऽस्मिञ्शास्त्रेऽधिकारवान् ॥२॥

स वेद यथा पशुरेव सदेवानामि'ति श्रुत्यात्मव्यतिरिक्तदेवतादर्शनस्य निन्दितत्वात् 'आत्मैव देवताः सर्वा' इति मनुस्मृतेश्च आत्मैवेष्टदेवतात्वेन नमस्कृत इत्यवगन्तव्यम् । अथवा परमात्मा विशेष्यतया संबध्यते यः परमात्मेति तस्यापीश्वरत्वेन प्रसिद्धत्वात्तस्य जीवेभ्यो भेदं वारयति—सर्वात्मन इति ॥ सर्वेषां जीवानामात्मने परमार्थस्वरूपाय नमः । शिष्टं समानम् । अथवा भूमावाकाश इत्याद्यन्तयोर्ग्रहणान्मध्यवर्ति भूतत्रयमपि संदंशन्यायेन गृहीतं भवति । कारणभूतग्रहणेन कार्यं च । तथाचायमर्थः—आकाशादिरूपभूतभौतिकेष्वन्तः क्षेत्रज्ञात्मना बहिश्च संसारात् दिवि स्वे महिम्नि यो विभाति तस्मै नम इति । 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी'ति श्रुतेः । तदेवं त्रिविधपरिच्छेदरहितं नित्याद्वितीयपरिपूर्णं चिदात्मकं वस्तु शास्त्रप्रतिपाद्यमिति दर्शितं भवति ॥ १ ॥ शास्त्रादौ श्रोतृप्रवृत्त्यङ्गतया विषयं दर्शयित्वाधिकारिणं दर्शयन् प्रयोजनसंबन्धौ च सूचयति—अहं बद्ध इति ॥ बद्धोऽहं विमुक्तः स्यामिति यस्य निश्चयोऽस्ति सोऽस्मिन् शास्त्रे शास्त्रश्रवणाधिकारवानिति योजना । तस्य श्रवणादिकप्रयोजकमापातज्ञानं दर्शयति—नात्यन्तमिति ॥ नो इति पदच्छेदः । तदिति ब्रह्मोच्यते । 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति स्मृतेः । तज्जानातीति तज्ज्ञो ब्रह्मवित् न उत ज्ञ इति वा पदच्छेदः । उतशब्दोऽप्यर्थे । 'उताप्यर्थविकल्पयोरि'त्यमरः । ज्ञ उत ज्ञोऽपि नेत्यर्थः । ब्रह्मणि सम्यग्ज्ञातेऽत्यन्तमज्ञाते च श्रवणादौ प्रवृत्त्यसंभवादापाततो जानन्नधिकारीत्यर्थः । विमुक्तः स्यामित्यनेन

गुरुमासीनमेकान्ते वाल्मीकिं सर्वदर्शिनम् ।
पप्रच्छ प्रणतो भूत्वा भरद्वाजो मृदुस्वरम् ॥ ३ ॥
भगवञ्ज्ञातुमिच्छामि कथं संसारसंकटे ।
रामो व्यवहृतो ह्यस्मिन्कारुण्याद्ब्रूहि मे गुरो ॥ ४ ॥

बन्धनिवृत्तिरेतच्छास्त्रश्रवणप्रयोजनमिति सूचितम् । नात्यन्तमज्ञ इत्यादिना च शास्त्रब्रह्मणोः प्रतिपाद्यप्रतिपादकभावलक्षणः संबन्ध इत्यावेदितं भवति ॥ २ ॥ एवं तावत्प्रथमश्लोकेन मङ्गलाचरणं विषयसूचनं च विधाय द्वितीयेनाधिकारिप्रयोजनसंबन्धावावेद्य शास्त्रमारभमाणोऽस्य प्रथमं संवादकथारूपतां द्योतयितुं गुरुशिष्यक्रमं प्रस्तौति—गुरुमिति ॥ ब्रह्मानन्दास्वादनार्थमेकान्त आसीनं समदर्शनशीलं वाल्मीकिं गुरुं भरद्वाजः शिष्यः प्रणतो भूत्वा मृदुस्वरं मृदुशब्दं यथा भवति तथा पप्रच्छेति संबन्धः ॥ ३ ॥ भगवन्निति॥ संकटं संबाधः । 'संकटं ना तु संबाध' इत्यमरः । व्यवहृतः व्यवहृतवान् । अत्र साध्याहारं योजना—रामो जीवन्मुक्तपदं लब्ध्वा कथं संसारसंकटे व्यवहृत इति । नन्विममेवार्थं भरद्वाजः पृष्टवानिति कुतोऽवगम्यते । उच्यते बृहद्वासिष्ठे । कथं संसारसङ्कटे रामो व्यवहृतवानिति पूर्वप्रश्नस्योत्तरत्र । 'जीवन्मुक्तस्थितिं ब्रह्मन्कृत्वा राघवमादितः । क्रमात्कथय मे नित्यं भविष्यामि सुखी यथे' ति विवरणात् । 'जीवन्मुक्तपदं प्राप्तो यथा रामो महामनाः । तत्तेऽहं शृणु वक्ष्यामी' त्युत्तरप्रारम्भाच्च । किंच । 'रामानुयायिनस्ते वा मन्त्रिपुत्रा महाधियः । निर्दुःखतां यथैवैते प्राप्तास्तद्ब्रूहि मे स्फुट' मिति रामभरतादिविषयप्रश्नानन्तरं मन्त्रिपुत्रनिर्दुःखितालक्षणजीवन्मुक्तिप्राप्तिप्रकारप्रश्नाच्चावगम्यते—अयमेवार्थः पृष्टो भरद्वाजेनेति ॥ ४ ॥

वाल्मीकिरुवाच ।

साधु वत्स भरद्वाज योग्योऽसि कथयामि ते ।
श्रुतेन येन संमोहमलं दूरे करिष्यसि ॥ ५ ॥
भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ।
अपुनःस्मरणं साधो मन्ये विस्मरणं वरम् ॥ ६ ॥
दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ ७ ॥

साधु वत्सेति ॥ त्वया यत्पृष्टं तत्साध्वित्यध्याहृत्य योजनीयम् । योग्योऽसि श्रवणाय । ते तुभ्यम् । येन रामजीवन्मुक्तिलाभोपायेन संमोहमज्ञानमलमत्यर्थं दूरे करिष्यसीति । विनष्टाज्ञानो भविष्यसी-त्यर्थः । अथवा । संमोहमेव मलं हेयत्वात् । अतएव तस्य दूरे प्रक्षे-पणमुचितम् ॥५॥ संसारसंकटे रामः कथं व्यवहृतवानिति प्रश्नस्य 'जीवन्मुक्तपदं प्राप्तो यथा रामो महामना' इत्यादिनोत्तरं वक्ष्य-न्नादौ वक्ष्यमाणजीवन्मुक्तिसाधनभूतात्मापरोक्षज्ञानस्योपायं चित्त-स्य चिन्मात्रावशेषतालक्षणं ध्यानमसंप्रज्ञातसमाधितया प्रसिद्धं रामवृत्तान्तकथनद्वारा विस्तरेण प्रतिपिपादयिषितं सोपायं बुद्धिसौ-कर्यार्थं संक्षिप्याह—भ्रमस्येति ॥ अथवा जीवन्मुक्तपदं प्राप्त इत्या-दिना प्रश्नस्योत्तरं वक्ष्यन्नादौ मुक्तिं तदुपायलक्षणं शास्त्रार्थं बुद्धिसौ-कर्यार्थं संक्षिप्याह—भ्रमस्येत्यादिना ॥ आकाशवर्णवदाकाशश्याम-त्ववज्जागतस्य जगत्संबन्धिनो भ्रमस्य विस्मरणं वरं श्रेष्ठमुपायं मन्य इति संबन्धः । पुनः सत्यत्वेन स्मरणं जगद्भ्रमविषयं न विद्यते यस्मिन्विस्मरणे तदपुनःस्मरणम् ॥ अथवा ज्ञानेन मूलाविद्याविच्छेदे सति भ्रमस्याभावमेव विस्मरणशब्देन विवक्षितं अतएवापुनःस्मर-णमित्युक्तम् ॥ ६ ॥ दृश्यमिति ॥ दृश्यं नास्ति कल्पितमधिष्ठान-

अन्यथा शास्त्रगर्तेषु लुण्ठतां भवतामिह ।
भवत्यकृत्रिमाज्ञानां कल्पैरपि न निर्वृतिः ॥ ८ ॥
अशेषेण परित्यागो वासनानां य उत्तमः ।
मोक्ष इत्युच्यते सद्भिः स एव विमलक्रमः ॥ ९ ॥

द्रष्टृव्यतिरेकेणेत्यागमादिजनितबोधेन मनसः सङ्कल्पात्मकादन्तःकरणाद्दृश्यसार्जनं संपन्नं जातं चेत्तर्हि निर्वाणनिर्वृतिर्मोक्षसुखमुत्पन्नाभिव्यक्ता भवति । तस्या विषयसुखवत्सातिशयत्वं वारयति—परेति ॥ दृश्यमिथ्यात्वनिश्चयदार्ढ्ये सति तद्वासनानिवृत्तेस्तत्र रागानुदयात्ततो विमुखं चित्तं ब्रह्मानन्दमवगाहते । ततो विगतप्रतिबन्धादपरोक्षज्ञानान्निर्वाणं भवतीति भावः ॥ ७ ॥ विद्याबलेन चित्तस्य विषयवैमुख्यमसंपादयतां दोषमाह—अन्यथेति ॥ उक्तविधयान्तर्मुखतामसंपाद्य बहिर्मुखतया शास्त्रगर्तेषु शास्त्राण्येव गर्ता अवटास्तेषु लुण्ठतां गात्रचेष्टनं कुर्वतामकृत्रिमस्याज्ञा अकृत्रिमाज्ञास्तेषामब्रह्मविदां भवतां भरद्वाजादीनां कल्पैरप्यतिमहता कालेनापि निर्वृतिर्मोक्षसुखं न भवति । अथवा अकृत्रिमा अज्ञानामिति पदद्वयम् । अज्ञानामकृत्रिमा निर्वृतिर्न भवतीति संबन्धः । यथा गर्ते लुण्ठतां लुण्ठनं कर्दमलेपगात्रभङ्गादिजनितदुःखाय भवति तथा बहिर्मुखानां शास्त्रश्रवणं दुःखायैव न सुखायेति भावः ॥ ८ ॥ बोधेन दृश्यमार्जनं दृश्यवासनानिवृत्तिद्वारैव भवति यतोऽतो वासनात्यागो दृश्यमार्जनादिद्वारा मोक्षस्योत्तमोपायत्वादनुष्ठेय इत्याह—अशेषेणेति ॥ वासनात्यागस्य कथं मोक्षत्वमित्याशङ्क्योपचारादित्यभिप्रेत्याह—स एवेति ॥ वासनात्याग एव विमलक्रमो निर्मलोपायो मोक्षस्येत्यर्थः ॥ ९ ॥

वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।
मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी ॥ १० ॥
अज्ञानसुघनाकारा घनाहंकारशालिनी ।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥ ११ ॥
पुनर्जन्माङ्कुरांस्त्यक्त्वा स्थिता संभ्रष्टबीजवत् ।
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते ॥ १२ ॥
ये शुद्धवासना भूयो न जन्मानर्थभाजनम् ।
ज्ञातज्ञेयास्त उच्यन्ते जीवन्मुक्ता महाधियः ॥ १३ ॥

वासनात्यागो मोक्षोपाय इति सामान्योक्तेरविशेषेण सर्ववासनात्यागे प्राप्ते शुद्धवासना न त्याज्येति दर्शयितुं वासनाद्वैविध्यमाह—वासनेति ॥ तयोर्विरुद्धकार्यकारित्वं दर्शयति हेयोपादेयत्वज्ञापनार्थम्—मलिनेति ॥ १० ॥ तत्र मलिनवासनाया लक्षणमाह—अज्ञानेति ॥ अज्ञानेन सुघनः सुनिविडः सुदृढो वा आकारो यस्याः सा तथोक्ता । अज्ञाने हि सति वासनाया निबिडत्वं नान्यदा । घनेन निबिडेन दृढेन वाऽहंकारेण शालते शोभत इति घनाहंकारशालिनी ॥ ११ ॥ शुद्धवासनालक्षणमाह—पुनर्जन्मेति ॥ संभ्रष्टबीजवत्सम्यग्भर्जितबीजवत्पुनःप्ररोहायोग्या स्थिता देहार्थं ध्रियते वर्तमानदेहस्थित्यर्थं ध्रियते। ज्ञातज्ञेया ज्ञातं ज्ञेयं ब्रह्म यस्यां निमित्तभूतायां सा तथोक्ता॥ १२॥ उक्तमेवार्थं प्रपञ्चयति—ये शुद्धेति ॥ जन्मैवानर्थस्तस्य भाजनं पात्रं जन्मानर्थभाजनं ये पुरुषाः शुद्धवासना भवन्ति ज्ञातज्ञेया महाधियस्ते भूयो जन्मानर्थभाजनं न भवन्ति ते च जीवन्मुक्ता उच्यन्त इति योजना । यस्माच्छुद्धाशुद्धवासने एवंलक्षणे तस्मान्मुमुक्षुणा शुद्धवासना न

जीवन्मुक्तपदं प्राप्तो यथा रामो महामनाः ।
तत्तेऽहं शृणु वक्ष्यामि जरामरणशान्तये ॥१४॥
विद्यागृहाद्विनिष्क्रम्य रामो राजीवलोचनः ।
दिवसाननयद्गेहे लीलाभिरकुतोभयः ॥ १५ ॥
अथ गच्छति काले तु रामस्य गुणशालिनः ।
तीर्थपुण्याश्रमश्रेणीर्द्रष्टुमुत्कण्ठितं मनः ॥ १६ ॥
राघवश्चिन्तयित्वैवमुपेत्य चरणौ पितुः ।
हंसः पद्माविव नवौ जग्राह नखकेसरौ ॥ १७ ॥

राम उवाच ॥

तीर्थानि देवसद्मानि वनान्यायतनानि च ।
द्रष्टुमुत्कण्ठितं नाथ ममेदं तात मानसम् ॥ १८ ॥

त्याज्या किंतु मलिनवासनैव । शुद्धा तु प्रयत्नतः संपाद्येति समुदायार्थः ॥ १३ ॥ एवं तावज्जीवन्मुक्तिसाधनविज्ञानोपायभूतं समाधिं सोपायां मुक्तिं तदुपायलक्षणं शास्त्रार्थं वा संक्षेपेणाभिधायेदानीं केन क्रमेण जीवन्मुक्तपदं लब्ध्वा संसारसङ्कटे व्यवहृतवान् राम इति प्रश्नस्योत्तरं प्रतिज्ञापूर्वकमाहोत्तरग्रन्थसंदर्भेण—जीवन्मुक्तेत्यादिना ॥ जीवन्मुक्तानां पदं स्थानं स्वाराज्यं निर्वाणपरमानन्दलक्षणं यथा येन प्रकारेण येन क्रमेणेत्यर्थः ॥ १४ ॥ विद्यागृहाद्विद्यालाभस्थानादाचार्यगृहात् । राजीवं कमलम् ॥ १५ ॥ तीर्थानि पुण्याश्रमाश्च तीर्थपुण्याश्रमास्तेषां श्रेणीः पङ्क्तीः । उत्कण्ठोत्कलिका सास्य जातेति उत्कण्ठितम् । संजातानुरागमित्यर्थः ॥ १६ ॥ नवावभिनवौ नखा एव केसराः किञ्जल्का ययोश्चरणयोस्तौ तथोक्तौ ॥ १७ ॥ देवसद्मानि देवालयाः । आयतनानि चैत्यानि । 'चैत्यमायतनं

तदेतामर्थितां पूर्वां सफलां कर्तुमर्हसि ।
न सोऽस्ति भुवने नाथ त्वया योऽर्थी न मानितः॥१९॥
इति संप्रार्थितो राजा वसिष्ठेन समं तदा ।
विचार्यामुञ्चदेवैनं रामं प्रथममर्थिनम् ॥ २० ॥
शुभे नक्षत्रदिवसे भ्रातृभ्यां सह राघवः ।
निरगात्स्वगृहात्तस्मात्तीर्थयात्रार्थमुद्यतः ॥ २१ ॥
अथारभ्य स्वकात्तस्मात्क्रमात्कोसलमण्डलात् ।
स्नानदानजपध्यानपूर्वकं स ददर्श ह ॥ २२ ॥
नदीस्तीर्थानि पुण्यानि वनान्यायतनानि च ।
जाङ्गलानि वनान्तेषु तटान्यब्धिमहीभृताम् ॥ २३ ॥
अमरकिन्नरमानवमानितः समवलोक्य महीमखिलामिमाम् ।
उपययौ स्वगृहं रघुनन्दनो विहृतदिक् शिवलोकमिवेश्वरः२४
लाजपुष्पाञ्जलिव्रातैर्विकीर्णः पुरवासिनाम् ।
प्रविवेश पुरं श्रीमाञ्जयन्तो विष्टपं यथा ॥ २५ ॥
उवास स सुखं गेहे ततःप्रभृति राघवः ।
वर्णयन्विविधाकारान्देशाचारानितस्ततः ॥ २६ ॥

तुल्यमि' त्यमरः ॥ १८ ॥ तत्तस्मात् । अर्थी याचकः ॥ १९ ॥ सममित्यव्ययं सहार्थे । 'साकं सार्धं समं सहे' त्यमरः ॥ अमुञ्च-न्मोचनमकरोत्॥२०॥ नक्षत्रसहितो दिवसो नक्षत्रदिवसस्तस्मिन्नि-रगान्निर्गतः ॥२१॥२२॥ जाङ्गलानि वातबहुलदेशान् । 'जाङ्गलं वात-भूयिष्ठ' मितिवचनात् । अथवा जङ्गलं मरुभूमिगतारण्यं तत्संबन्धीनि स्थलानि जाङ्गलानि ॥२३॥ विहृताः क्रीडिता दिशो येन स तथोक्तः ॥२४॥जयन्त इन्द्रसुतः।विष्टपं स्वर्गम्॥२५॥उवास उषितवान्॥२६॥

प्रातरुत्थाय रामोऽसौ कृत्वा सन्ध्यां यथाविधि ।
सभासंस्थं ददर्शेन्द्रसमं स्वपितरं तदा ॥ २७ ॥
कथाभिः सुविचित्राभिः स वसिष्ठादिभिः सह ।
स्थित्वा दिनचतुर्भागं ज्ञानगर्भाभिरावृतः ॥ २८ ॥
जगाम पित्रानुज्ञातो महत्या सेनया वृतः ।
वराहमहिषाकीर्णं वनमाखेटकेच्छया ॥ २९ ॥
तत आगत्य सदनं कृत्वा स्नानादिकं क्रमात् ।
समित्रबान्धवो भुक्त्वा निनाय ससुहृन्निशाम् ॥ ३० ॥
एवं दिनसमाचारो भ्रातृभ्यां सह राघवः ।
आगत्य तीर्थयात्रायाः समुवास पितुर्गृहे ॥ ३१ ॥
नृपतिसंव्यवहारमनोज्ञया सुजनचेतसि चन्द्रिकयानया ।
परिनिनाय दिनानि च चेष्टया स्नुतसुधारसपेशलयानघः ३२
अथोनषोडशे वर्षे वर्तमानो रघूद्वहः ।
जगामानुदिनं कार्श्यं शरदीवामलं सरः ॥ ३३ ॥

सभायां संस्था संस्थितिर्यस्य स सभासंस्थस्तम् ॥ २७ ॥ ज्ञानं गर्भे यासां कथानां ताभिः ॥ २८ ॥ महत्याखेटकेच्छया मृगयावाञ्छया ॥ २९ ॥ सदनं गृहम् ॥ ३० ॥ एवं दिनसमाचार इत्येकं पदम् ॥ ३१ ॥ नृपतिसंव्यवहारमनोज्ञया राजोचितसंव्यवहारेण मनोरमया सुजनचेतसि सज्जनचित्ते चन्द्रिकया ज्योत्स्नावदानन्दकारिण्या स्नुतसुधारसपेशलया स्नुतः प्रस्नुतः। स्नु प्रस्रवण इति धातोः । सुधारसोऽमृतरसस्तद्वत्पेशलया मञ्जुलया ॥ ३२ ॥ अत्रेयं श्रुत्युक्ता निःश्रेयसोपायपरिपाटी। फलानभिसन्धिपूर्वकं स्ववर्णाश्रमकर्मानुष्ठानात्पुण्योत्पत्तिस्ततः पापक्षयः । 'पुण्येन पापमपनुदती'ति श्रुतेः । ततश्चित्तस्य विवेकक्षमता ततः

क्रमादस्य विशालाक्षं पाण्डुतां मुखमाददे।
पाकोत्फुल्लदलं शुक्लं सालिमालमिवाम्बुजम् ॥ ३४ ॥
कपोलतलसंलीनपाणिः पद्मासनास्थितः।
चिन्तापरवशस्तूष्णीमव्यापारो बभूव ह ॥ ३५ ॥
कृशाङ्गश्चिन्तया युक्तः खेदी परमदुर्मनाः।
नोवाच कस्यचित्किंचिल्लिपिकर्मार्पितो यथा ॥ ३६ ॥
खेदात्परिजनेनासौ प्रार्थ्यमानः पुनःपुनः।
चकाराह्निकमाचारं परिम्लानमुखाम्बुजः ॥ ३७ ॥

संसारतत्त्वपरिज्ञानं ततो वैराग्यादि ततो मुमुक्षुत्वं ततो मोक्ष-साधनगवेषणं ततः सर्वकर्मसंन्यासः ततो गुरुचरणोपसर्पणं ततः श्रवणाद्यनुष्ठानं ततो ब्रह्मात्मसाक्षात्कारः ततोऽज्ञानविनष्टिः ततः स्वाराज्य एवावस्थानम्। 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति श्रुतेरिति। तामिमामानुपूर्वीं जगद्गुरुरामचरणकमलभजनाभिरतकतिपयपुरुषधौरेयस्यायुक्तां पुरुषोत्तमेऽपि लोकाननुजिघृक्षया ब्रह्मविद्याधिकारिधुरं दधाने दाशरथौ दिदर्शयिषुस्तस्य निष्कामकर्मानुष्ठानमतीतग्रन्थसंदर्भेणाख्यायेदानीं तत्फलं विवेकवैराग्यलक्षणं दर्शयति—अथेति ॥ ऊनं न्यूनं षोडशानां पूरकं षोडशं ऊनं च तत् षोडशं च तस्मिन्समाप्तप्राये षोडशवर्षे इत्यर्थः ॥३३॥ विशालाक्षमिति बहुव्रीहिः। पाकेन कालपाकेन उत्फुल्लानि विकसितानि दलानि यस्याम्बुजस्य तत्तथोक्तम्। सहालिमालया वर्तत इति सालिमालम् ॥ ३४ ॥ तूष्णीं बभूवेति संबन्धः ॥ ३५ ॥ परमदुर्मनाः अत्यन्तमहृष्टचित्तः। लिपिकर्मणा अर्पितेन समर्पितेन भित्त्यादौ चित्रेणोपमा यस्य स तथोक्तः ॥ ३६ ॥ परिजनेन सेवकजनेन ॥ ३७ ॥ घस्रा

क्व ते पुत्र घना चिन्तेत्येवं दशरथे नृपे ।
पृच्छति स्निग्धया वाचा कृत्वोत्सङ्गे पुनःपुनः ॥ ३८ ॥
न किंचित्तात मे दुःखमित्युक्त्वा पितुरङ्कगः ।
रामो राजीवपत्राक्षस्तूष्णीमेव स तिष्ठति ॥ ३९ ॥
एतस्मिन्नेव काले तु विश्वामित्र इति श्रुतः ।
महर्षिरभ्यगाद्द्रष्टुं तमयोध्यानराधिपम् ॥ ४० ॥
तं दृष्ट्वा मालितं लक्ष्म्या निवेद्य स्वर्णविष्टरम् ।
प्रहृष्टवदनो राजा स्वयमर्घ्यं न्यवेदयत् ॥ ४१ ॥
उपविष्टाय तस्मै स विश्वामित्राय धीमते ।
पाद्यमर्घ्यं च गां चैव भूयोभूयो न्यवेदयत् ॥ ४२ ॥
अर्चयित्वा तु विधिवद्विश्वामित्रमभाषत ।
प्राञ्जलिः प्रयतो वाक्यमिदं प्रीतमना नृपः ॥ ४३ ॥
अशङ्कितोपनीतेन भास्वता दर्शनेन ते ।
साधो स्वनुग्रहीताः स्मो रविणेवाम्बुजाकराः ॥ ४४ ॥

निविडा दृढा वा । उत्सङ्गोऽङ्कः ॥ ३८ ॥३९ ॥ एवं निष्कामकर्मफलं वैराग्यं संक्षेपेण प्रतिपाद्यैतदेव प्रश्नोत्तराभ्यां विस्तरेण प्रतिपिपादयिषुः प्रश्नप्राप्त्यर्थं प्रसङ्गमाह—एतस्मिन्नित्यादिना ॥ श्रुतो विश्रुतः प्रसिद्धः ॥ ४० ॥ लक्ष्म्या ब्रह्मवर्चसात्मिकया । व्रताध्ययनजा त्वग्गता दीप्तिर्हि ब्रह्मवर्चसम् । मालितं संजातमालम् । मालाकारलक्ष्म्यावृतमित्यर्थः । स्वर्णविष्टरं स्वर्णासनम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ अशङ्कितमसङ्कल्पितमुपनीतमशङ्कितोपनीतं तेन मत्सङ्कल्पं विना समीपं प्रापितेनेत्यर्थः । भास्वता दीप्तिमता दीप्तिमद्विषयत्वात् ।

यदनादि यदक्षुण्णं यदपायविवर्जितम् ।
तदानन्दसुखं प्राप्तमद्य त्वद्दर्शनान्मुने ॥ ४५ ॥
यथाऽमृतस्य संप्राप्तिर्यथा वर्षमवर्षके ।
यथान्धस्येक्षणप्राप्तिर्भवदागमनं तथा ॥ ४६ ॥
यथा हर्षो नभोगत्या मृतस्य पुनरागमात् ।
तथा त्वदागमाद्ब्रह्मन्स्वागतं ते महामुने ॥ ४७ ॥
कश्च ते परमः कामः किं च ते करवाण्यहम् ।
तीर्थभूतोऽसि मे विप्र प्राप्तः परमधार्मिकः ॥ ४८ ॥
गङ्गाजलाभिषेकेण यथा प्रीतिर्भवेन्मम ।
तथा त्वद्दर्शनात्प्रीतिरन्तःशीतयतीव माम् ॥ ४९ ॥
विगतेच्छाभयक्रोधो वीतरागो निरामयः ।

विस्पष्टेनेति वा । स्वावशङ्कितोपनीतत्वं भास्वत्त्वं च प्रसिद्धमेव ॥ ४४ ॥ अनुगृहीतत्वं दर्शयति—यदनादीति ॥ अनाद्यपि प्रागभाववदनित्यं माभूदित्याह—अपायेति ॥ अपायो नाशः । अनपाय्यपि सादि स्यात्प्रध्वंसवदत आह—अनादीति ॥ आद्यन्तरहितस्यापि न कूटस्थनित्यत्वं जगन्नित्यत्ववादिनः पृथिव्यादिवदित्यत आह—अक्षुण्णमिति ॥ पृथिव्यादिवत् क्वचित् क्षुण्णं खण्डितावयवं न भवतीत्यक्षुण्णं कूटस्थं नित्यमित्यर्थः । आनन्दसुखं ब्रह्मसुखम् । 'आनन्दो ब्रह्मेति व्यजानात् । विज्ञानमानन्दं ब्रह्म । यदेष आकाश आनन्दो न स्या' दित्यादिश्रुतिषु आनन्दशब्दार्थतया ब्रह्मणः प्रसिद्धत्वात् ॥ ४५ ॥ यथामृतस्येत्यत्र अमृतस्येति पदच्छेदः ॥ ४६ ॥ ४७ ॥ काम्यत इति कामः ॥ ४८ ॥ शीतयत्यसंतापं करोति । इवशब्दोऽवधारणे ॥ ४९ ॥ विगतेति ॥ इच्छा अर्थमा-

इदमत्यद्भुतं ब्रह्मन्यद्भवान्मामुपागतः ॥ ५० ॥
यत्कार्यं येन चार्थेन प्राप्तोऽसि मुनिपुङ्गव ।
कृतमित्येव तद्विद्धि मान्योऽसि हि भृशं मम ॥ ५१ ॥
तच्छ्रुत्वा राजशार्दूलवाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ ५२ ॥
सदृशं राजशार्दूल तवैवैतन्महीतले ।
महावंशप्रसूतस्य वसिष्ठवशवर्तिनः ॥ ५३ ॥
अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।
तस्य विघ्नकरा घोरा राक्षसा मम संस्थिताः ॥ ५४ ॥
त्रातुमर्हसि मामार्तं शरणार्थिनमागतम् ।
तवास्ति तनयः श्रीमान्दृप्तशार्दूलविक्रमः ॥ ५५ ॥

त्रविषया । रागः स्त्र्यादिविशेषविषयः । अप्राप्तेऽर्थे प्रार्थनामात्रमिच्छा । प्राप्ते प्रार्थना राग इति केचित् । मामुपागत इति यदिदमत्यद्भुतमिति संबन्धः ॥ ५० ॥ येनार्थेन प्रयोजनेन प्राप्तोऽसि तदर्थं यन्मया कार्यं तत्कृतमेव विद्धीत्यन्वयः । तत्र हेतुर्मान्योऽसीति ॥ ५१ ॥ हृष्टानि हर्षादुद्भिन्नानि रोमाणि यस्य स तथा ॥ ५२ ॥ राजशार्दूल राजश्रेष्ठ । 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः' इत्यमरः ॥ ५३ ॥ आतिष्ठेऽवलम्बे। यद्यपि विश्वामित्रः कृतार्थस्तथापि लोकदृष्टिमाश्रित्याह—सिद्ध्यर्थमिति ॥ कार्यकारणसंघातस्य ज्ञाननिष्ठायोग्यताप्राप्तिः सिद्धिः । कर्मणा साक्षान्मुक्तिलक्षणसिद्धेरसंभवात् । मम तस्य नियमस्य विघ्नकरा इति संबन्धः ॥ ५४ ॥ शरणशब्दो रक्षितृवाचकः । 'शरणं गृहरक्षित्रो' रिति वचनात् । दृप्तशार्दूलो दर्पान्वितव्याघ्रस्तद्वद्विक्रमोऽतिशक्तिता यस्य स दृप्तशा-

महेन्द्रसदृशो वीर्ये रामो रक्षोविदारणः ।
तं पुत्रं राजशार्दूल रामं सत्यपराक्रमम् ॥ ५६ ॥
काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ।
शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ॥ ५७ ॥
राक्षसा येऽपकर्तारस्तेषां मूर्धविनिग्रहे ।
न च पुत्रकृतं स्नेहं कर्तुमर्हसि पार्थिव ॥ ५८ ॥
न तदस्ति जगत्यस्मिन्यन्न देयं महात्मनाम् ।
हन्त ते प्रतिजानामि हतांस्तान्विद्धि राक्षसान् ।
नह्यस्मदादयः प्राज्ञाः संदिग्धे संप्रवृत्तयः ॥ ५९ ॥
अहं वेद महात्मानं रामं राजीवलोचनम् ।
वसिष्ठश्च महातेजा ये चान्ये दीर्घदर्शिनः ॥ ६० ॥

दूलविक्रमः । 'विक्रमस्त्वतिशक्तिता' इत्यमरः ॥ ५५ ॥ सत्यपराक्रमः सत्योऽवितथः फलपर्यवसायी पराक्रमो यस्य स तथोक्तः ॥ ५६ ॥ काकपक्षः शिखा तस्य । रक्षोवधे शक्तिरहितत्वाददेयत्वशङ्कां शातयति—शक्त इति ॥५७॥ अपकर्तारोऽपकारकर्तारः तेषां मूर्धविनिग्रहे शक्त इत्यन्वयः । ननु दिव्येन तेजसा शक्तत्वमृषिगुप्तत्वं च विरुद्धमिति चेन्न । अज्ञानावतारे ऋषेरप्यस्त्रदानादिना दिव्यतेजसोऽभिव्यञ्जकत्वसंभवात् ॥ ५८ ॥ अशक्तत्वमुररीकृत्याह—न तदिति ॥ महात्मनां देयं न भवति यत्तन्नास्तीति संबन्धः । स्मर्यते हि—'त्वचं कर्णः शिबिर्मांसं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि किमदेयं महात्मना' मिति । 'हन्त हर्षेऽनुकम्पाया'मित्यमरः । संदिग्धे कार्ये संप्रवृत्तय इति बहुव्रीहिः । प्रवृत्तेः सम्यक्त्वं दृढत्वम् ॥ ५९ ॥ ननु बालकस्य कथमेतादृशं सामर्थ्यं यत इयं तव प्रति-

यदि धर्मो महत्त्वं च यशस्ते मनसि स्थितम् ।
तन्मह्यं स्वमभिप्रेतमात्मजं दातुमर्हसि ॥ ६१ ॥
इत्येवमुक्त्वा धर्मात्मा धर्मार्थसहितं वचः ।
विरराम महातेजा विश्वामित्रो मुनीश्वरः ॥ ६२ ॥
तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ।
मुहूर्तमासीन्निश्चेष्टः सदैन्यं चेदमब्रवीत् ॥ ६३ ॥
ऊनषोडशवर्षोऽयं रामो राजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ ६४ ॥
इयमक्षौहिणी पूर्णा यस्याः पतिरहं स्थितः ।
तया परिवृतो युद्धं दास्यामि पिशिताशिनाम् ॥ ६५ ॥
बालो रामस्त्वनीकेषु न जानाति बलाबलम् ।
अन्तःपुरादृते दृष्टा नानेनान्या रणावनिः ॥ ६६ ॥
नववर्षसहस्राणि मम जातस्य कौशिक ।
दुःखेनोत्पादितास्त्वेते चत्वारः पुत्रका मया ॥ ६७ ॥
प्रधानभूतस्तेष्वेको रामः कमललोचनः ।
तं विनेह त्रयोऽप्यन्ये धारयन्ति न जीवितम् ॥ ६८ ॥

ज्ञेत्यत आह—अहमिति ॥ महात्मानं सङ्कल्पमात्रेण जगत्कुटीसंघटनविघट्टनपटीयांसं परमात्मानं वेद जानामि ॥ ६० ॥ यदि धर्म इति ॥ धर्मादिकं ते मनस्यत्याज्यतया स्थितं तर्हि स्वं स्वीयमात्मजं पुत्रम् । कथंभूतम् । अभिप्रेतमिष्टम् । दातुमर्हसि ॥ ६१ ॥ उपरराम तूष्णीं बभूवेत्यर्थः ॥ ६२ ॥ ६३ ॥ षोडशानां पूरकं षोडशं तच्च तद्वर्षं च ऊनं किंचिन्न्यूनं षोडशवर्षं यस्य स तथा ॥ ६४ ॥ पिशिताशिनां मांसाशिनां रक्षसाम् । 'पिशितं तरसं मांसं पललं क्रव्यमामिष' मित्यमरः ॥ ६५ ॥ रणावनिर्युद्धभूमिः ॥ ६६ ॥ नववर्ष-

स एव रामो भवता नीयते राक्षसान्प्रति ।
यदि तत्पुत्रहीनं त्वं मृतमेवाशु विद्धि माम् ॥ ६९ ॥
अन्यच्च यदि ते विघ्नं करोति स हि रावणः ।
ततो युधि न शक्ताः स्मो वयं तस्य दुरात्मनः ॥ ७० ॥
काले काले पृथग्भिन्ना भूरिवीर्यविभूतयः ।
भूतेष्वभ्युदयं यान्ति प्रलीयन्ते च कालतः ॥ ७१ ॥
अद्यास्मिंस्तु वयं काले रावणादिषु शत्रुषु ।
न समर्थाः पुरः स्थातुं नियतेरेष निश्चयः ॥ ७२ ॥
अयमन्यतमः कालः पेलवीकृतसज्जनः ।
राघवोऽपि गतो दैन्यं यत्र वार्धकजर्जरः ॥ ७३ ॥

सहस्राणीति क्वचित् । षष्टिर्वर्षसहस्राणीत्यन्यत्र ॥ ६७ ॥ ६८ ॥ राक्षसान्प्रति नीयते यदीति संबन्धः । तत्तर्हि ॥ ६९ ॥ रामाप्रदानेऽन्यदपि निमित्तं शङ्कितमस्तीत्याह—अन्यच्चेति ॥ ७० ॥ ननु रावणस्यैवंविधं वीर्यं कुतः, कुतश्च भवता रावणादेरप्यधिकबलानां काकुत्स्थादिवंशप्रसूतानां तद्विपर्यय इत्यत आह—काल इत्यादिना ॥ पृथग्भिन्ना अन्योन्यं विलक्षणा भूरिवीर्या विभूतयो बहुशौर्यसंपदः काले कालेऽभिव्यक्तानुकूले भूतेषु प्राणिष्वभ्युदयमभिव्यक्तिं यान्ति । कालतः प्रलयानुकूलत्वात् ॥ ७१ ॥ अस्मिन्काले अस्मत्प्रतिकूले । तत्राद्य रावणादिषु शत्रुषु विषयेषु । नियतिर्विधिः ॥ ७२ ॥ कालस्य प्रातिकूल्यमेव दर्शयति—अयमन्यतम इति ॥ पेलवीकृतसज्जनः विरलीकृतसाधुजनः । 'घनं निरन्तरं सान्द्रं पेलवं विरलं तन्वि'त्यमरः । अयं कालोऽन्यतमोऽत्यन्तमन्यः । पूर्वस्मादत्यन्तं विपरीत इत्यर्थः । वार्धकं वृद्धत्वं वार्धक इव जर्जरो वार्धकजर्जरः ऊन-

तच्छ्रुत्वा वचनं तस्य स्नेहपर्याकुलाक्षरम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ ७४ ॥
करिष्यामीति संश्रुत्य प्रतिज्ञां हातुमिच्छसि ।
स भवान्केसरी भूत्वा मृगतामभिवाञ्छसि ॥ ७५ ॥
यदि त्वमक्षमो राजन्गमिष्यामि यथागतम् ।
हीनप्रतिज्ञः काकुत्स्थ सुखी भव सबान्धवः ॥ ७६ ॥
तस्मिन्कोपपरीते तु विश्वामित्रे महात्मनि ।
चचाल वसुधा कृत्स्ना सुरांश्च भयमाविशत् ॥ ७७ ॥
क्रोधाभिभूतं विज्ञाय जगन्मित्रं महामुनिम् ।
धृतिमान्सुव्रतो धीमान्वसिष्ठो वाक्यमब्रवीत् ॥ ७८ ॥
इक्ष्वाकुवंशजातोऽपि स्वयं दशरथोऽपि सन् ।
न पालयसि चेद्वाक्यं कोऽपरः पालयिष्यति ॥ ७९ ॥
युष्मदादिप्रणीतेन व्यवहारेण जन्तवः ।
मर्यादां न विमुञ्चन्ति तां न हातुं त्वमर्हसि ॥ ८० ॥
गुप्तं पुरुषसिंहेन गरुडेनामृतं यथा ।
कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ॥ ८१ ॥

षोडशवर्षोऽपि राघवो वार्धकावस्थायामिव जर्जरो भूत्वा यत्र यस्मिन्काले दैन्यं दीनभावं दुःखितां गतः । राघवशब्दो दशरथविषय इति केचित् ॥ ७३ ॥ कौशिकः कुशिकगोत्रो विश्वामित्रः ॥ ७४ ॥ केसरी सिंहः ॥ ७५ ॥ अक्षमः असमर्थः । काकुत्स्थेति संबोधनं साभिप्रायम् ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ कृतान्यभ्यस्तानि साधितानि वा अस्त्राणि येन स कृतास्त्रस्तं न शक्ष्यन्ति शक्ता न भविष्यन्ति । धर्षयितुमिति शेषः ॥ ८१ ॥ कुतो रामः

वाल्मीकिरुवाच ॥

तथा वसिष्ठे ब्रुवति राममृत्यजनान्नृपः ।
कथं कीदृक्कुतो राम इति पप्रच्छ बुद्धिमान् ॥ ८२ ॥

राममृत्या ऊचुः ॥

रामो राजीवपत्राक्षो यतःप्रभृति चागतः ।
सविप्रस्तीर्थयात्रायास्ततःप्रभृति दुर्मनाः ॥ ८३ ॥
यत्नप्रार्थनयास्माकं निजव्यापारमाह्निकम् ।
सोऽयमाम्लानवदनः करोति न करोति वा ॥ ८४ ॥
किं संपदा किं विपदा किं गेहेन किमीहितैः ।
सर्वमेवासदित्युक्त्वा तूष्णीमेकोऽवतिष्ठते ॥ ८५ ॥
वस्त्रपानाशनादानपराङ्मुखतया तथा ।
परिव्राड्धर्मिणं राजन्सोऽनुयाति तपस्विनम् ॥ ८६ ॥
नाभिमानमुपादत्ते नाभिवाञ्छति राजताम् ।
नोदेति नास्तमायाति सुखदुःखादिवृत्तिषु ॥ ८७ ॥
नीतमायुरनायासपदसंप्राप्तिवर्जितैः ।
चेष्टितैरिति काकल्या भूयोभूयः प्रगायति ॥ ८८ ॥
आपदामेकमावासमभिवाञ्छसि किं धनम् ।
अनुशिष्येति सर्वस्वमर्थिभ्यः संप्रयच्छति ॥ ८९ ॥

कुत्र राम इत्यर्थः ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ परिव्राड्धर्मिणं परिव्राजां संन्यासिनां धर्मा नैरपेक्ष्यादयो यस्य स तथोक्तस्तम् ॥ ८६ ॥ उदेति हृष्यति । अस्तमायाति विषीदतीत्येतत् ॥ ८७ ॥ अनायासपदं निर्वाणम् । काकल्या कलसूक्ष्मध्वनिना । 'काकली तु कले सूक्ष्मे' इत्यमरः ॥ ८८ ॥ हे अर्थिन्, आपदामेकं मुख्यमा-

न विद्मः किं महाबाहोस्तस्य तादृशचेतसः ।
कुर्मः कमलपत्राक्ष गतिरत्र हि नो भवान् ॥ ९० ॥
ईदृशः स्यान्महासत्त्वः क इहास्मिन्महीतले ।
प्राकृते व्यवहारे तं यो नियोजयितुं क्षमः ॥ ९१ ॥

विश्वामित्र उवाच ॥

एवं चेत्तन्महाप्राज्ञं भवन्तो रघुनन्दनम् ।
इहानयन्तु त्वरिता हरिणं हरिणा इव ॥ ९२ ॥
एष मोहो रघुपतेर्नापद्भ्यो नापि रागतः ।
विवेकवैराग्यकृतो बोध एष महोदयः ॥ ९३ ॥
एतस्मिन्मार्जिते युक्त्या मोहे स रघुनन्दनः ।
विश्रान्तिमेष्यति पदे तस्मिन्वयमिवोत्तमे ॥ ९४ ॥
निजां च प्राकृतामेव व्यवहारपरम्पराम् ।
परिपूर्णमना मान्य आचरिष्यत्यखण्डिताम् ॥ ९५ ॥
एवं मुनीन्द्रे ब्रुवति पितुः पादाभिवन्दनम् ।
कर्तुमभ्याजगामाथ रामः कमललोचनः ॥ ९६ ॥
प्रथमं पितरं पश्चान्मुनी मान्यैकमानितौ ।
ततो विप्रांस्ततो बन्धून् प्रणनाम ततो गुरून् ॥ ९७ ॥

वासं निलयं धनं किं किमर्थमभिवाञ्छसि अभीच्छसीत्यनुशिष्य अनुशासनं कृत्वा सर्वस्वमर्थिने याचकाय प्रयच्छति ददाति ॥८९॥ तादृशचेतसस्तस्य किं कुर्मो न विद्म इति संबन्धः ॥ ९० ॥ प्राकृते व्यवहारे तं रामं निवेशयितुं यः क्षम ईदृशो महासत्त्वोऽस्मिन्महीतले क इव स्यात्कोनु स्यादिति संबन्धः ॥ ९१ ॥ ९२ ॥ महानुदयः परमानन्दाविर्भावो यस्मात्स तथोक्तः एष मोहो बोध इति मोहस्यै-तादृशस्य बोधहेतुत्वादुपचर्यते ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥

जग्राह च ततो दृष्ट्या मनाङ्मूर्ध्ना ततो गिरा ।
राजलोकेन विहितां तां प्रणामपरम्पराम् ॥ ९८ ॥
उत्सङ्गे पुत्र तिष्ठेति वदत्येवं महीपतौ ।
भूमौ परिजनास्तीर्णे चासने स न्यविक्षत ॥ ९९ ॥

दशरथ उवाच ॥

पुत्र प्राप्तविवेकस्त्वं कल्याणानां च भाजनम् ।
जडवज्जीर्णया बुद्ध्या खेदायात्मा न दीयताम् ॥१००॥
वृद्धविप्रगुरुप्रोक्तं त्वादृशेनानुतिष्ठता ।
पदमारुह्यते पुण्यं न मोहमनुधावता ॥ १०१ ॥
तावदेवापदो दूरे तिष्ठन्ति परिपेलवाः ।
यावदेव न मोहस्य प्रसरः पुत्र दीयते ॥ १०२ ॥

वसिष्ठ उवाच ॥

राजपुत्र महाबाहो शूरस्त्वं विजितास्त्वया ।
दुरुच्छेदा दुरारम्भा अप्यमी विषयारयः ॥ १०३ ॥
किमतज्ज्ञ इवाज्ञानां योग्ये व्यामोहसागरे ।
विनिमज्जसि कल्लोलबहुले जाड्यशालिनि ॥ १०४ ॥

मनाङ्मूर्ध्ना ईषच्छिरःकम्पनेन ॥ ९८ ॥ न्यविक्षत उपवेशनमकार्षीत् । विश प्रवेशन इति धातोर्लुङि प्रथमपुरुषैकवचनम् । 'नेर्विश' इति सूत्रादात्मनेपदम् ॥ ९९ ॥ १०० ॥ १०१ ॥ परिपेलवाः प्रविरलाः । प्रसरः प्रचारः ॥ १०२ ॥ दुःखेनोच्छेदो येषां ते दुरुच्छेदाः । दुष्टः प्रारम्भो व्यापारो येषां ते दुरारम्भाः । यद्वा दुरारम्भा दुरुपक्रमाः । दुःसाध्या इत्यर्थः ॥ १०३ ॥ अतज्ज्ञ इव अब्रह्मविदिव । कल्लोला महोर्मयः व्यामोहसागरे कल्लोलाः प्रचण्डा-

विश्वामित्र उवाच ॥

किंनिष्ठाः के च ते केन कियन्तः कारणेन ते ।
आधयः प्रविलुम्पन्ति मनो गेहमिवाखवः ॥ १०५ ॥
यथाभिमतमाशु त्वं ब्रूहि प्राप्स्यसि चानघ ।
सर्वमेव पुनर्येन भेत्स्यन्ति त्वां तु नाधयः ॥ १०६ ॥
इत्युक्तमस्य सुमते रघुवंशकेतु-
राकर्ण्य वाक्यमुचितार्थविलासगर्भम् ।
तत्याज खेदमभिगर्जति वारिवाहे
बर्हीं यथा त्वनुमिताभिमतार्थसिद्धिः ॥ १०७ ॥

इति श्रीवाल्मीकीये मोक्षोपाये वैराग्यप्रकरणे वैराग्यो-
त्पत्तिप्रतिपादनो नाम प्रथमः सर्गः ॥ १ ॥

पदः । सागरे जाड्यशालित्वं तु शिशिरताशालित्वम् । 'शिशिरो जड' इत्यमरः ॥ १०४ ॥ संक्षेपेण पूर्वं प्रतिपादितस्य वैराग्यस्य विस्तरेण प्रतिपादकोत्तरग्रन्थसन्दर्भोत्थानहेतुभूतान्विश्वामित्रप्रश्नानुत्क्षिपति—किंनिष्ठा इति ॥ आखवो मूषका गेहमिव ये मनःपीडालक्षणा आधयस्ते तव मनो विलुम्पन्ति विशेषेण छिदन्ति । ते किंनिष्ठाः केषु विषयेषु नितरां तिष्ठन्तीति किंनिष्ठाः । के च स्वरूपतः । केन कारणेन जाताः । कियन्तः कियत्परिमाणाः ॥१०५॥ प्रश्नोत्तरदानस्य निष्प्रयोजनत्वशङ्कां शातयति—यथेति ॥ हे अनघ, आधयो येन प्राप्तेनाभिमतेन सर्वे त्वां पुनर्न भेत्स्यन्ति यथाभिप्रेतं तत्सर्वमेव त्वमाश्ववाप्स्यसि । ब्रूहीत्यन्वयः ॥ १०६ ॥ केतुर्ध्वजः । यथा रथस्य केतुरलङ्कारस्तथा रघुवंशस्यालङ्कार इत्यर्थः । उचितानामर्थानां विलासो विस्तारो गर्भे यस्य तत्तथा । वारिवाहो मेघः । बर्हीं मयूरः । अनुमिताऽभिमतस्यार्थस्य प्रयोजनस्य सिद्धिर्येन स

## द्वितीयः सर्गः

वाल्मीकिरुवाच ॥

इति पृष्टो मुनीन्द्रेण समाश्वास्य च राघवः ।
उवाच वचनं चारु परिपूर्णार्थमन्थरम् ॥ १ ॥

श्रीराम उवाच ॥

भगवन्भवता पृष्टो यथावदधुनाखिलम् ।
कथयाम्यहमज्ञोऽपि को लङ्घयति सद्वचः ॥ २ ॥
अहं तावदयं जातो निजेऽस्मिन्मन्दिरे पितुः ।
क्रमेण वृद्धिं संप्राप्तः प्राप्तविद्यश्च संस्थितः ॥ ३ ॥
ततः सदाचारपरो भूत्वाहं मुनिनायक ।
विहृतस्तीर्थयात्रार्थमुर्वीमम्बुधिमेखलाम् ॥ ४ ॥
एतावता च कालेन संसारास्थामिमां हरन् ।
प्रादुर्भूतो मनसि मे विचारः सोऽयमीदृशः ॥ ५ ॥

तथोक्तः ॥ १०७॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य उत्तमसुख-पूज्यपादशिष्यश्रीमदात्मसुखविरचितायां वासिष्ठचन्द्रिकायां वैराग्यप्रकरणे वैराग्यसंभूतिर्नाम प्रथमः सर्गः ॥ १ ॥

पूर्वं संक्षेपेण प्रतिपादितं वैराग्यं विस्तरेण प्रतिपादयितुमुत्तर-ग्रन्थसन्दर्भ इति तात्पर्यमवादिष्म । तत्रातीतसर्गान्ते किंनिष्ठा इति प्रश्ना उपक्षिप्ताः तन्निर्णयार्थं वचनमुवाच राम इत्याह—इतीति ॥ मन्थरं मन्दगामि। गम्भीरमित्यर्थः । 'मन्दगामी तु मन्थर' इत्यमरः ॥ १ ॥ २ ॥ ३ ॥ अम्बुधिः समुद्रो मेखला काञ्ची यस्याः सा तथोक्ता ताम् ॥ ४ ॥ ईदृशो वक्ष्यमाणप्रकारः ॥ ५ ॥

किं नामेदं वद सुखं येयं संसारसंस्थितिः।
जायते मृतये लोको म्रियते जननाय च ॥ ६ ॥
अस्थिराः सर्व एवैते सचराचरचेष्टिताः।
सर्वापदां पदं पापा भावा विभवभूमयः ॥ ७ ॥
अयःशलाकासदृशाः परस्परमसङ्गिनः।
श्लिष्यन्ते केवलं भावा मनःकल्पनया स्वया ॥ ८ ॥
किं मे राज्येन किं भोगैः कोऽहं किमिदमागतम्।
यन्मिथ्यैवास्तु तन्मिथ्या कस्य नाम किमागतम् ॥ ९ ॥

येयं संसारसंस्थितिः इदं किंनाम सुखं वदेत्यन्वयः। असुखकरत्वमेव दर्शयति—जायत इति ॥ मृतये जायते। जननं मरणाविनाभूतमित्यर्थः। जननाय म्रियते च। मृतिश्चाज्ञस्यावश्यं जन्महेतुरित्यर्थः॥६॥ सचराचरचेष्टिताः। सचराचरैः कृता इत्यर्थः। पापाः पापहेतवः भावाः पदार्थाः विभवभूमयः ऐश्वर्यकारणानि। विभवभूमयो भावाः सर्वापदां पदं स्थानं भवन्तीत्यन्वयः। आपदां पतय इति क्वचित्पाठः ॥ ७ ॥ स्वप्नसंसारवन्मनोनिर्मित एव संसार इत्याह—अय इति ॥ परस्परमसङ्गिनः स्वभावतोऽन्योन्यसंबन्धरहिताः। स्वतः-संबन्धराहित्ये दृष्टान्तः—अयःशलाकेति ॥ अयोनिर्मितशङ्कुतुल्याः। नह्ययःशलाका जतुकाष्ठवत्परस्परं संबध्यते। भावाः पुत्रभार्यादि-लक्षणपदार्थाः केवलं स्वया मनःकल्पनया ममायं पुत्रो ममेयं भार्या ममायं पतिरित्यादिलक्षणया श्लिष्यन्ते संबध्यन्ते ॥ ८ ॥ कोऽह-मिति ॥ शरीरेन्द्रियमनोबुद्ध्यहंकारचित्ताज्ञानचित्प्रतिबिम्बबिम्ब-केवलानां मध्ये कोऽहं कतमोऽहमागतमभिव्यक्तमिदं जगत्किं सत्य-मुतासत्यम्। सम्यग्विचारणायां तज्जगन्मिथ्यैवास्तु। नहि मिथ्या कदाचित्सत्यं भवति तेन कस्य किमागतं नाम। नहि मिथ्यापदार्थेना-

एवं विमृशतो ब्रह्मन्सर्वेष्वेव ततो मम ।
भावेष्वरतिरायाता पथिकस्य मरुष्विव ॥ १० ॥
शाम्यतीदं कथं दुःखमिति तप्तोऽस्मि चिन्तया ।
जरद्वृक्ष इवोग्रेण कोटरस्थितवह्निना ॥ ११ ॥
संसारदुःखपाषाणनीरन्ध्रहृदयो ह्यहम् ।
निजलोकभयादेव गलद्बाष्पं न रोदिमि ॥ १२ ॥
चिन्तानिचयचक्राणि नानन्दाय धनानि मे ।
संप्रसूतकलत्राणि गृहाण्युग्रापदामिव ॥ १३ ॥

पकार उपकारो वा कस्यचिद्भवति । नहि मरीचिकोदकेन भूमेर्भूषणमभूषणं वा भवति । अधिष्ठानभूतस्यात्मनः कल्पितप्रपञ्चेन न किंचिदपि भवतीति भावः ॥ ९ ॥ एवं संसारयाथात्म्यविचारस्य किं फलमित्याह—एवमिति ॥ ततस्तस्माद्विमर्शादरतिररमणम् । पथिकः पान्थः । मरुषु मरुभूमिषु ॥ १० ॥ किंनिष्ठा इत्यादिप्रश्नोत्तरदानार्थमेवमुपोद्घातं कृत्वेदानीं तदुत्तराण्याह—शाम्यतीति ॥ इदं संसारदुःखं कथं केनोपायेन शाम्यति नश्यतीति चिन्तया तप्तोऽस्मि दुःखितोऽस्मि । जरद्द्रुमो जीर्णवृक्षः । कोटरं निष्कुहः वृक्षच्छिद्रम् । केन कारणेनाधयः प्रलुम्पन्तीत्यस्यापि प्रश्नस्य संसारशान्त्युपायापरिज्ञानेन कारणेनेत्युत्तरसमर्थादत्रैवोक्तमिति वेदितव्यम् ॥ ११ ॥ १२ ॥ सर्वभोग्यसमावृतस्त्वं कथं दुःखमेव वर्णयसि दरिद्र इवेत्याशङ्क्य सर्वमनर्थकरं दुष्टमेवेति दर्शयन्नादावनेकानर्थहेतुं धनं निन्दति—चिन्तेति ॥ चिन्तानां निचयाः समूहा एव चक्राण्यायुधविशेषा येषां तानि तथोक्तानि । धनैरुत्पादितो हि चिन्तानिचयश्चक्रवद्विदारयति पुरुषम् । संप्रसूतकलत्राणि सम्यक् प्रकर्षेण कृतप्रसवानि कलत्राणि दारा येषु गृहेषु तानि तथोक्तानि । उग्रापदां

इयमस्मिन्स्थितोदारा संसारे परिपेलवा ।
श्रीर्मुने परिमोहाय सापि नूनं न शर्मदा ॥ १४ ॥
गुणागुणविचारेण विनैव किल पार्श्वगम् ।
राजप्रकृतिवन्मूढा दुरारूढावलम्बते ॥ १५ ॥
कर्मणा तेनतेनैषा विस्तारमनुगच्छति ।
दोषाशीविषवेगस्य यत्क्षीरं विसरायते ॥ १६ ॥

उग्रा आपदो येषां पुरुषाणां त उग्रापदस्तेषाम् । यथा प्रवृद्धाभिरापद्भिराक्रान्तानां कुटुम्बिनां चक्रतुल्यचिन्तासमूहजनकानि बह्वपत्यपरिवृतभार्याणि गृहाणि न सुखाय भवन्ति किंतु दुःखायैव तथा धनानीत्यर्थः ॥ १३ ॥ धननिन्दानन्तरं धनहेतुं श्रियं निन्दति—इयमस्मिन्नित्यादिभिः सप्तभिः श्लोकैः ॥ अस्मिन्संसारे स्थिता । उदारा महती । 'उदारो दातृमहतो' रित्यमरः । परिपेलवा परितः समन्ताददृढा येयं श्रीः सापि शर्मदा सुखदा न भवति । नूनं निश्चये प्रत्युत परिमोहाय भवतीति योजना ॥ १४ ॥ गुणिनमेवाश्रयते लक्ष्मीरिति नियमाभावात्तस्या आश्रयतो दुष्टत्वमाह—गुणेति ॥ दुरारूढा दुःखेनारूढा । दुःखानुषङ्गिणीति यावत् । अथवा आरूढशब्देनारोहो लक्ष्यते । दुरारोहा दुःसाध्येत्यर्थः । गुणागुणविचारेण अस्मिन्गुणोऽस्त्यस्मिन्नगुणोऽस्तीति विचारेण विना पार्श्वगमवलम्बते । किलेति वार्तायाम् । 'वार्तासंभाव्ययोः किले'त्यमरः । राजप्रकृतिवद्राजस्वभाववत् । यथा राजस्वभावो दुर्जनं सज्जनं वा पार्श्वगं विचारं विनावलम्बते दुरारूढश्च भवति तद्वत् । अथवा राजप्रकृतिरमात्यादीनाश्रयते ॥ १५ ॥ लक्ष्म्या दोषमुक्त्वाभिवृद्धौ तमाह—कर्मणेति ॥ तेन तेन साधुना वाऽसाधुना

तावच्छीतमृदुस्पर्शः परे स्वे वर्तते जनः।
वात्ययेव हिमं यावच्छ्रिया न परुषीकृतः ॥ १७ ॥
प्राज्ञाः शूराः कृतज्ञाश्च पेशला मृदवश्च ये।
पांसुमुष्ट्येव मणयः श्रिया ते परुषीकृताः ॥ १८ ॥
श्रीमानजननिन्द्यश्च शूरश्चाप्यविकत्थनः।
समदृष्टिः प्रभुश्चेति दुर्लभाः पुरुषास्त्रयः ॥ १९ ॥
मनोरमा कर्षति चित्तवृत्तिं कदर्थसाध्या क्षणभङ्गुरा च।
व्यालावलीगात्रविवृत्तदेहा श्वभ्रोत्थिता पुष्पलतेव लक्ष्मीः २०

कर्मणा विस्तारमभिवृद्धिमनुगच्छति। अभिवृद्धापि सानर्थाय भवतीत्याह—दोषेति ॥ यल्लक्ष्मीरूपं क्षीरं दोषाशीविषवेगस्य दोषा दर्पादय आशीविषा भुजङ्गमास्तेषां विषवेगस्य विसरः विसर्पणं तद्वदाचरति। यथा क्षीरमुरगस्य विषवेगवर्धकं भवति तथा दोषसर्पाणां प्रभावरूपविषवेगवर्धकं लक्ष्मीरूपं क्षीरमित्यर्थः। यत्क्षीरं विसरायते सैषेति पूर्वेण संबन्धः ॥ १६ ॥ यत् क्षीरं विसरायत इत्युक्ते स्पष्टयति—तावदित्यादि श्लोकचतुष्टयेन ॥ शीतः सुखकरो मृदुर्विनयमधुरवाक्त्वादिगुणः स्पर्शः संपर्को यस्य जनस्य स तथा। वात्या चक्रवातः। परुषीकृतः कर्कशीकृतः। चक्रवातचलितं हिमं यथा दुःखदस्पर्शं तथा लक्ष्म्या विषमीकृतचित्तो दुःखसंपर्को भवतीत्यर्थः ॥ १७ ॥ प्राज्ञाः पण्डिताः। कृतज्ञाः कृतोपकाराविस्मर्तारः। पेशलाः पटवः। 'दक्षे तु चतुरपेशलपटव' इत्यमरः। मणयो रत्नादयः ॥ १८ ॥ जननिन्द्यो न भवतीत्यजननिन्द्यः। अविकत्थनः शूरोऽहं को नाम मत्सदृशोऽस्तीत्येवं प्रजल्परहितः। श्रीमानजननिन्द्यः पुरुषो दुर्लभ इत्यस्य दृष्टान्तत्वेनात्मस्तुतिरहितः शूरादिरुक्त इति ज्ञेयम् ॥ १९ ॥ श्वभ्रोत्थिता श्वभ्राद्वल्मीकादिरन्ध्रु-

आयुः पल्लवकोणाग्रलवाम्बुकणभङ्गुरम् ।
उन्मत्तमिव संत्यज्य यात्यकाण्डे शरीरकम् ॥ २१ ॥
विषयाशीविषासङ्गपरिजर्जरचेतसाम् ।
अप्रौढात्मविवेकानामायुरायासकारणम् ॥ २२ ॥
वयं परिमितकारपरिनिष्ठितनिश्चयाः ।
संसाराभ्रतडित्पुञ्जे मुने नायुषि निर्वृताः ॥ २३ ॥

दुत्पन्ना । 'छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषि'रित्यमरः । पुष्पलतेव पुष्पयुक्तलतेव लक्ष्मीरापातसौन्दर्यान्मनोरमासती चित्तवृत्तिमाकर्षति । स्वाभिमुखीकरोतीत्यर्थः । कदर्थसाध्या कदर्थेन कुत्सितार्थेन नीचसेवादिजनितेन साध्या । व्यालावली गात्रविवृत्तदेहा व्यालाः शठाः । 'भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयो'रित्यमरः । तेषामावल्या पङ्क्त्या गात्रेषु विवृत्तो लुठितो देहो यस्याः सा तथोक्ता । लतापक्षे तु व्यालावलीगात्रविवृत्तदेहा सर्पपङ्क्तिशरीरलुठितदेहा ॥ २० ॥ लक्ष्मीनिन्दानन्तरं लक्ष्मीभोगनिमित्तमायुर्निन्दति—आयुरिति ॥ पल्लवस्य कोणोऽन्त्यभागस्तस्याग्रे लम्बमानोदकलेशवद्भङ्गशीलमायुरकाण्डेऽनवसरे । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिष्वि'ति नामानुशासनात् । शरीरं सन्त्यज्य यातीत्यन्वयः । अत्र दृष्टान्तः—उन्मत्तमिवेति ॥ यथानुन्मत्त उन्मत्तं त्यजति तद्वत् । अथवा उन्मत्तमिव स्थितं शरीरमिति संबन्धः ॥ २१ ॥ ननु क्वचिद्दीर्घमायुरपि दृश्यते । सत्यम् । तदप्यात्मज्ञानानुपयोग्यमनर्थायैवेत्याह—विषयेति ॥ विषया एवाशीविषा भुजङ्गमास्तेष्वासङ्गेनासक्त्या संबन्धेन वा परिजर्जराणि प्रशिथिलानि चेतांसि येषां ते तथोक्तास्तेषाम् । अप्रौढोऽप्रवृद्धः आत्मविवेको येषां ते तथोक्तास्तेषाम् ॥ २२ ॥ पुनरप्यायुषोऽस्थिरत्वं प्रतिपादयति—वयमित्यादिश्लोक-

युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ।
ग्रन्थनं च तरङ्गाणामास्था नायुषि युज्यते ॥ २४ ॥
पेलवं शरदीवाभ्रमस्नेह इव दीपकः ।
तरङ्गक इवालोलं गतमेवोपलक्ष्यते ॥ २५ ॥
अविश्रान्तमनाः शून्यमायुराततमीहते ।
दुःखायैव विमूढोऽन्तर्गर्भमश्वतरी यथा ॥ २६ ॥
प्राप्यं संप्राप्यते येन भूयो येन न शोच्यते ।
पराया निर्वृतेः स्थानं यत्तज्जीवितमुच्यते ॥ २७ ॥

त्रयेण ॥ परिमितः परिच्छिन्न आकारो यस्यानात्मनस्तस्मिन् परिनिष्ठितनिश्चयाः स्थिरबुद्धयो वयं संसाराभ्रतडित्पुञ्जे संसारमेघविद्युत्समूहे आयुषि न निर्वृताः न सुखिनः ॥ २३ ॥ ग्रन्थनं बन्धनम् ॥ २४ ॥ पेलवं तनु । 'पेलवं विरलं तन्वि'त्यमरः ॥ २५ ॥ ननूपायविशेषेण स्थिरमायुरपि संपादयन् कश्चित्पुरुषो लोके दृश्यते । सत्यम् । तदप्यब्रह्मविदस्तस्यानर्थायेत्याह—अविश्रान्तेति ॥ विमूढो विशेषेण मूढोऽतएव ब्रह्मण्यविश्रान्तमनाः । शून्यं व्यर्थमाततं विस्तीर्णमायुर्दुःखायैवेहते चेष्टते । संपादयतीत्यर्थः । अश्वतरीनामाश्वाद्गर्दभ्यामुत्पन्ना । तस्या गर्भस्तामेव हन्तीति प्रसिद्धम् ॥ २६ ॥ ज्ञानानुपयोग्यायुर्विनिन्द्य तदुपयोग्यायुः स्तौति उपादेयत्वाय—प्राप्यमिति श्लोकत्रयेण ॥ येन जीवितेन प्राप्यं ब्रह्म संप्राप्यते । अतएव येन जीवितेन जन्मान्तराप्राप्त्या भूयो न शोच्यते । यज्जीवितमाप्रारब्धकर्मक्षयात्पराया विषयसुखविलक्षणाया निर्वृतेः सुखस्य स्थानं भवति तज्जीवितमुच्यते । सज्जीवितमुच्यत इत्यर्थः । कार्यस्तुतौ हि तत्कारणस्तुतिरवश्यं भवतीत्यायुषः कार्यभूतजीवितस्य

तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः ।
स जीवति मनो यस्य मननेनैव जीवति ॥ २८ ॥
जातास्त एव जगति जन्तवः साधुजीविताः ।
ये पुनर्नेह जायन्ते शेषा जरठगर्दभाः ॥ २९ ॥
भारोऽविवेकिनः शास्त्रं भारो ज्ञानं च रागिणः ।
अशान्तस्य मनो भारो भारोऽनात्मविदो वपुः ॥ ३० ॥
रूपमायुर्मनो बुद्धिरहंकारः स्थिरेहितम् ।
भारो भारवहस्येव सर्वं दुःखाय दुर्धियः ॥ ३१ ॥
दिनैः कतिपयैरेव परिज्ञाय गतादरम् ।
दुर्जनः सज्जनेनेव यौवनेन वियुज्यते ॥ ३२ ॥

प्राणधारणलक्षणस्य स्तुतिरत्र कृता ॥ २७ ॥ यस्य पुंसो मनो दुर्वासनापरवशं मननेनैव वस्तुतत्त्वविषयभूतनिरूपणेनैव जीवति । मननादिजनितसाक्षात्कारेण बाधितमेव भवति स जीवति । सम्यग्जीवतीत्यर्थः ॥ २८ ॥ जरठगर्दभाः जरायुक्तगर्दभाः ॥ २९ ॥ अज्ञजीवितस्य वृक्षादिजीवितवद्दुर्जीवितत्वं दर्शयता तच्छरीरादेरपि दुष्टत्वमर्थाद्दर्शितं तद्विशदयति—भार इत्यादिश्लोकद्वयेन ॥ भारो यथा दुर्धरः स्वाधीनो न भवति एवमविवेक्यादेः शास्त्रादिकं स्वाधीनं न भवतीत्यर्थः । अविवेक्यत्र विवेकासमर्थो मन्दबुद्धिर्विवक्षितः । भारोऽनात्मविदो वपुरित्यस्य दृष्टान्ततयान्यत्सर्वमुपन्यस्तमिति ज्ञेयम् ॥ ३० ॥ नन्वात्मविदोऽपि वपुर्भार एव तत्र किमुच्यते भारोऽनात्मविदो वपुरिति । नैतत् । आत्मविदः शरीरस्यैवाभावात् । प्रातिभासिके तस्मिन्पूर्ववदभिनिवेशाभावात्तदीयलाभोच्छेदयोरौदासीन्यात् । स्थिरेहितं स्थिरचेष्टितम् । स्थिरकार्यविषयत्वात्स्थिरत्वमीहितस्य। स्थितेहितमिति क्वचित्पाठस्तत्रापि स एवार्थः ॥ ३१ ॥ यौवनाव-

स्थिरतया सुखभासितयानया सततमुज्झितमुत्तमफल्गुवत् ।
जगति नास्ति तथा गुणवर्जितं मरणभाजनमायुरिदं यथा ३३

मुधैवाभ्युत्थितो मोहान्मुधैव परिवर्तते ।
मिथ्यामयेन भीताः स्मो दुरहंकारवैरिणा ॥ ३४ ॥

अहंकारवशादापदहंकाराद्दुराधयः ।
अहंकारवशादीहा नाहंकारात्परो रिपुः ॥ ३५ ॥

तमहंकारमाश्रित्य परमं चिरवैरिणम् ।
न भुञ्जे न पिबाम्यम्भः किमु भोगान्भजे मुने ॥ ३६ ॥

स्थाया रूपादिकं सुखाय भवतीत्याशङ्क्य तस्यास्थिरत्वान्नैवमित्याह—दिनैरिति ॥ परिज्ञाय दुर्जन इति ज्ञात्वा गतादरमिति क्रियाविशेषणम् ॥३२॥ आयुर्निन्दामुपसंहरति—स्थिरतयेति ॥ सुखभासितया सुखदीपितया सुखशोभितया प्रसिद्धया स्थिरतया स्थिरत्वेन सततमुज्झितं त्यक्तं उत्तमफल्गु असत्यसारं तद्वत्तदुक्तम् । 'असारं फल्गु शून्यं त्वि'त्यमरः। मरणभाजनमिदमायुर्यथा गुणवर्जितं तथा गुणवर्जितमन्यद्वस्तु जगति नास्तीत्यर्थः ॥ ३३ ॥ आयुषोऽहंकारद्वारानर्थहेतुत्वात्तन्निन्दानन्तरं तदनर्थदानस्य प्रधानद्वारमहंकारं निन्दति—मुधैवेत्यादिभिः सप्तश्लोकैः ॥ दुष्टोऽहंकारो दुरहंकारः दुरहंकार एव वैरी दुरहंकारवैरी मोहादज्ञानान्मुधैव वृथैवाभ्युत्थितः आभिमुख्येनोद्गतः । अहंकारस्योत्पत्तौ वैयर्थ्यमुक्त्वाभिवृद्धौ तदाह—मुधैवेति ॥ मिथ्यामयेन मिथ्यास्वरूपेण । अहमिति तावत्प्रथमोऽध्यास इति ह्याचार्याः ॥ ३४ ॥ अहंकारस्य दुर्वैरित्वं साधयति—अहंकारवशादिति ॥ दुराधयो दुष्टा मनःपीडाः । ईहा वाञ्छा । पर उत्कृष्टः ॥ ३५ ॥ अहंकारस्य वैरित्वपरिज्ञानफलमाह—तमिति ॥ ३६ ॥

अहंकारवशाद्यद्यन्मया भुक्तं हृतं कृतम् ।
तत्तत्सर्वमवस्त्वेव वस्त्वहंकाररिक्तता ॥ ३७ ॥
ब्रह्मन्यावदहंकारवारिदः परिजृम्भते ।
तावद्विकासमायाति तृष्णाकुटजमञ्जरी ॥ ३८ ॥
निरहंकारवृत्तेर्मे मौर्ख्याच्छोकेन सीदतः ।
यत्किंचिदुचितं ब्रह्मंस्तदाख्यातुमिहार्हसि ॥ ३९ ॥
सर्वापदां निलयमध्रुवमन्तरस्थ-
मुन्मुक्तमुत्तमगुणेन न संश्रयामि ।
यत्नादहंकृतिपदं परितोऽतिदुःखं
शेषेण मां समनुशाधि महानुभाव ॥ ४० ॥

ननु शत्रुमाश्रितस्यापि लोके कस्यचिद्भोजनादौ प्रवृत्तिर्दृश्यते तद्वत्तव किं न स्यादित्यत आह—अहंकारवशादिति ॥ अवस्त्वेवापरमार्थ एव । यथा स्वप्ने भुक्त्यादिकमहंकारवशात्कृतं मिथ्यैव तद्वज्जागरेऽपीत्यर्थः । अहंकाररिक्तता अहंकाररहितता । वस्तु परमार्थः ॥३७॥ अहंकारवशादित्युक्तं प्रपञ्चयति—ब्रह्मन्निति ॥ अहंकारवारिदः अहंकारमेघः । कुटजो वत्सकाख्यो वृक्षः । 'जयोऽथ कुटजः शक्रो वत्सक' इत्यमरः । तृष्णैव कुटजस्य मञ्जरी । कुटजवृक्षो हि जलदागमे विकसन्मञ्जरीसंछन्नो भवति ॥ ३८ ॥ एवं गुर्वनुशासनयोग्यतामात्मनो दर्शयित्वा तदनुशासनं प्रार्थयते—निरहंकारेति ॥ निरहंकारा वृत्तिर्वर्तनं यस्य स तथोक्तस्तस्य । मौर्ख्यात् मौढ्यात् । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशा' इत्यमरः । सीदतः अवसीदतः ॥ ३९ ॥ सर्वापदामित्येतत्पूर्वस्य प्रपञ्चः । अहंकृतिपदं अहंकारवस्तु अहंकारस्थानं वा । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिव-

दोषैर्जर्जरतां यातं सत्कार्यादार्यसेवितात् ।
वातान्तः पिच्छलववच्चेतश्चलति चञ्चलम् ॥ ४१ ॥
इतश्चेतश्च सुव्यग्रं व्यर्थमेवाभिधावति ।
दूराद्दूरतरं दीर्घं ग्रामे कौलेयको यथा ॥ ४२ ॥
न प्राप्नोति क्वचित्किंचित्प्राप्तैरपि महावनैः ।
नान्तः संपूर्णतामेति करण्डकमिवाम्बुभिः ॥ ४३ ॥

स्तुष्वि'त्यमरः । अहंकृतिपदं यत्नान्न संश्रयामीति संबन्धः । निलयस्त्वाश्रयः । अन्तरस्थं देहाभ्यन्तरस्थं । शेषेणाहंकारत्यागेन तत्साक्षितयावशिष्टेनानिदमंशेन समनुशाधि सम्यगनुशासनं कुरु । अत्र ध्वनितमर्थं वदामः । अहमिति शब्दं करोत्यहंकृद्गौस्तत्र वर्तमानं पदम् । यद्वाहंशब्दविषया कृतिः प्रयत्नो यस्या गोः साहंकृतिस्तस्याः पदं पादः । तथाचायमर्थः—अध्रुवं चञ्चलं अन्तरस्थं कुक्षिप्रदेशस्थं उत्तमगुणेन उत्तमरज्ज्वा उन्मुक्तं संत्यक्तं परितः समन्ततोऽतिदुःखं प्रहारादिना अतिशयितदुःखं यस्मात्तददान्तगोष्पदं यथा विवेकी न संश्रयते तदहंकारपदं न संश्रयामीति ॥ ४० ॥ अहंकारनिन्दानन्तरमहंकारकार्यं मनो निन्दति—दोषैरित्यादिभिरेकादशश्लोकैः ॥ चञ्चलं चेतो दोषैरागादिभिर्जर्जरतां शिथिलतां यातं सत् आर्यसेवितात् कार्यात् निःश्रेयससाधनानुष्ठानलक्षणाच्चलति । अथ सत्कार्यादित्येकं पदं चलनकर्तृत्वमात्रे दृष्टान्तः । वातान्तःपिच्छलववत् वायुमध्यस्थबर्हलेशवत् ॥ ४१ ॥ ननु सतिप्रयोजने चलनं न दोषायेत्यत आह—इतश्चेति ॥ तरबर्थस्य दूरातिशयस्य शतयोजनादिषु पर्यवसानं वारयितुं दीर्घमित्युक्तम् । कौलेयकः श्वा । 'कौलेयकः सारमेयः कुक्कुरो मृगदंशकः । शुनको भषकः श्वा स्या'दित्यमरः ॥ ४२ ॥ व्यर्थमेवानुधावतीत्यनुपपन्नं क्वचिदर्थप्राप्तेरपि दर्शनात्तत्राह—प्राप्तैर-

क्रूरेण जडतां यातस्तृष्णाभार्यानुगामिना ।
शवः कौलेयकेनेव ब्रह्मन्भुक्तोऽस्मि चेतसा ॥ ४४ ॥
अवान्तरनिपाताय शून्ये वा भ्रमणाय च ।
तृणं चण्डानिलेनेव दूरं नीतोऽस्मि चेतसा ॥ ४५ ॥
पातालाद्गच्छता पृथ्वीं पृथ्व्याः पातालगामिना ।
कूपकाष्ठं कुदाम्नेव वेष्टितोऽस्मि कुचेतसा ॥ ४६ ॥
मिथ्यैव स्फाररूपेण विचाराद्विसरारुणा ।
बालो वैतालिकेनेव गृहीतोस्मि कुचेतसा ॥ ४७ ॥

पीति ॥ करण्डकमत्र वंशनिर्मितकण्डोलम् ॥ ४३ ॥ न केवलं चेतसः चलनं व्यर्थमनर्थदं चेत्याह—क्रूरेणेति ॥ जडतामविवेकतां तृष्णैव भार्या तामनुगच्छतीति तृष्णाभार्यानुगामी तेन । यथा शुनीं भार्यामनुगच्छता शुनकापरपर्यायेण कौलेयकेन शवो भुक्तो भवति तथा चेतसोक्तविशेषणेन भुक्तोऽस्मि उपद्रुतोऽस्मीत्यर्थः ॥ ४४ ॥ न केवलं जीवतो मे दुःखकारणं चित्तं मृतस्य नरकतिर्यगादियोनिप्रापककर्मबीजं चेत्याह—अवान्तरेति श्लोकद्वयेन ॥ अवान्तरनिपात आरूढपातित्वम् । शून्ये भ्रमणं पुरुषार्थसाधनशून्ये तिर्यगादियोनौ भ्रमणम् । तृणपक्षे शून्ये भ्रमणं निराकारे गगने परिभ्रमणम् ॥ ४५ ॥ ४६ ॥ ननु 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' इत्यात्मतत्त्वप्रतिपादकश्रुतेस्तव चेत एव नास्ति कुतस्तत्प्रेर्यत्वमित्याशङ्क्याह—मिथ्यैवेति ॥ स्फाररूपेण भूरिरूपेण । विसरारुणा विसरणशीलेन । यथा बाल आत्मच्छायादावारोपितवेतालेन गृहीतो भवति तद्वदित्यर्थः । मिथ्यैव स्फारत्वं तद्विचाराद्विसरारुत्वं च चेतोवैतालिकयोः समा-

वह्नेरुष्णतरः शैलादपि कष्टतरक्रमः ।
वज्रादपि दृढो ब्रह्मन्दुर्निग्रहमनोग्रहः ॥ ४८ ॥
अप्यब्धिपानान्महतः सुमेरून्मूलनादपि ।
अपि वह्न्यशनात्साधो विषमश्चित्तनिग्रहः ॥ ४९ ॥
चित्तं कारणमर्थानां तस्मिन्सति जगत्त्रयम् ।
तस्मिन्क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ ५० ॥
चित्तादिमानि सुखदुःखशतानि नून-
मभ्यागतान्यगवरादिव काननानि ।
तस्मिन्विवेकवशतस्तनुतां प्रयाते
मन्ये मुने निपुणमेव गलन्ति तानि ॥ ५१ ॥

नम् ॥ ४७ ॥ नन्वेवं दुश्चेष्टितं चेतो निगृह्यतामित्यत आह—वह्ने-रित्यादि ॥ कष्टतरक्रमः पादविक्षेप आरोहणं यस्य स तथोक्तः । मनोग्रहः मनोभूतम् ॥ ४८ ॥ सुमेरून्मूलनान्मेरूत्पाटनात् । वन्ह्य-शनादग्निभक्षणात् ॥ ४९ ॥ एवं चित्तनिग्रहोऽतिदुष्करश्चेत्तर्हि तमुपेक्ष्यान्यदेव कर्तव्यं पुरुषार्थायेत्यत आह—चित्तमित्यादि ॥ अर्था-नामाकाशादिपदार्थानां चित्तं कारणमुपादानकारणम् । तथाचोक्तं संक्षेपशारीरके—'मुक्तामुक्तौ विद्वदज्ञौ त्वदन्यावाकाशादिक्ष्मावसानं च विश्वम् । स्वाविद्योत्थं स्वान्तनिष्पन्दनं तद्विज्ञातव्यं माग्रहीरन्य-थैतदि'ति । तस्मिंश्चित्ते सति वर्तमाने जगत्त्रयं तत्कार्यभूतं वर्तते । तस्मिन्कारणे क्षीणे नष्टे सति तत्कार्यं जगत् क्षीणमेव भवति । अतस्तच्चित्तमेव पुरुषार्थाय प्रयत्नतो वक्ष्यमाणाच्चिकित्स्यं चिकित्स-नीयम् । गृहीतव्यमित्यर्थः ॥ ५० ॥ अगवरात्पर्वतश्रेष्ठात् । 'शैलवृक्षौ नगावगावि'त्यमरः । तस्मिन् चित्ते । तनुतां कृशताम् । निपुणमेव

हार्दान्धकारशर्वर्या तृष्णयैव दुरन्तया।
स्फुरन्ति चेतनाकाशे दोषकौशिकपङ्क्तयः ॥५२॥
यां यामहमवीतास्थं संश्रयामि गुणश्रियम्।
तां तां कृन्तति मे तृष्णा तन्त्रीमिव कुमूषिका ॥५३॥
गन्तुमास्पदमात्मीयमसमर्थधियो वयम्।
तृष्णाजाले विमुह्यामो जाले शकुनयो यथा ॥ ५४ ॥
तृष्णाभिधानया तात दग्धोऽस्मि ज्वालया तथा।
यथा दाहोपशमनमाशङ्के नामृतैरपि ॥ ५५ ॥

गलन्ति। सम्यगेव नश्यन्तीत्यर्थः। गलन्तीति मन्य इति संबन्धः ॥५१॥ मनसस्तृष्णाद्वारानर्थहेतुत्वान्मनोनिन्दानन्तरं तृष्णां निन्दति हेयत्वाय—हार्देत्यादिचतुर्दशश्लोकैः ॥ हृद्गता हार्दा अन्धकारयुक्ता शर्वर्यन्धकारशर्वरी चन्द्रिकारहिता रात्रिः हार्दा चासावन्धकार-शर्वरी चेति तथा तया हार्दान्धकारशर्वर्येति तृष्णा विशिष्यते। दुरन्तया दुःखावसानया। चेतनाकाशे चेतन एवाकाशस्तस्मिन् दोषकौशिकपङ्क्तयः दोषाः क्रोधादयस्त एव कौशिका उलूकास्तेषां पङ्क्तयः। 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिक' इत्यमरः। प्रसि-द्धान्धकारशर्वरी प्रसिद्धाकाशउलूकपङ्क्तीनां स्फुरणहेतुरिति प्रसिद्धम् ॥ ५२ ॥ न केवलं दोषानेवोत्पादयति तृष्णा गुणांश्च नाशयती-त्याह—यां यामिति ॥ अवीतास्थं अविगतासक्ति यथाभवति तथा। गुणश्रियं गुणशोभाम् ॥ ५३ ॥ विस्तरेण तृष्णां निन्दति—गन्तु-मिति ॥ आत्मीयमास्पदं स्वस्वरूपम्। निरस्ताशेषक्लेशं परमानन्दलक्ष-णम्। जालमानायः। शकुनिपक्षे त्वात्मीयमास्पदं स्वनीडम् ॥५४॥ निरतिशयदुःखहेतुतया तृष्णां निन्दति—तृष्णाभिधानयेति ॥ अमृतैः

भीषयत्यपि धीरेहमन्धयत्यपि सेक्षणम् ।
खेदयत्यपि शान्तेहं तृष्णा कृष्णेव शर्वरी ॥ ५६ ॥
अनावर्जितचित्तापि सर्वमेवानुधावति ।
न चाप्नोति फलं किंचित्तृष्णा जीर्णेव कामिनी ॥ ५७ ॥
यन्न शक्नोति तत्रापि धत्ते ताण्डविनीं गतिम् ।
नृत्यत्यानन्दरहितं तृष्णा जीर्णेव नर्तकी ॥५८॥
पदं करोत्यलङ्घ्येऽपि तृप्तापि फलमीहते ।
चिरं तिष्ठति नैकत्र तृष्णा चपलमर्कटी ॥ ५९ ॥

सुधाभिः अमृतैरपि यथा दाहोपशमनं नाशङ्के तथा दग्धोऽस्मीति संबन्धः ॥५५॥ ननु धीरस्य विचारवतस्तृष्णानुकूलव्यापाररहितस्य तव कथं तृष्णादाहकरीत्यत आह—भीषयत्यपीति ॥ धीरा धैर्ययुक्ता ईहा चेष्टा यस्य स धीरेहस्तं सहेक्षणेन विचाराख्येन वर्तत इति सेक्षणस्तं शान्ता ईहा चेष्टा यस्य स तथा तं खेदजनकव्यापाररहितमपि खेदयतीत्यर्थः॥५६॥अन्यदपि तृष्णाया दौरात्म्यं वृद्धा सत्कामिनीदृष्टान्तेनाह—अनावर्जितेति॥ अनावर्जितमवशीकृतं चित्तं यया सा तथोक्ता। दुर्जनं सज्जनं सर्वमेवानुधावत्यनुसरति। पुरुषस्यानुधावनं तृष्णाप्रयुक्तमिति तृष्णानुधावतीत्युच्यते। एवमुत्तरत्रापि तृष्णायाः कर्तृत्वमौपचारिकं द्रष्टव्यम्॥ ५७॥ प्रकारान्तरेण तृष्णां निन्दति—यन्न शक्नोतीति ॥ ताण्डविनीं नर्तनवतीं गतिं धत्ते। नृत्यती गच्छतीत्यर्थः । गत्वानन्दरहितं यथा भवति तथा नृत्यति। अशक्यमप्यर्थं साधयितुं ससंभ्रमं गच्छति। तृष्णया विनैव सुखं कष्टं चेष्टते इत्यर्थः ॥ ५८ ॥ असाध्येऽपि विषये जायमानत्वदुःपूरत्वास्थिरत्वलक्षणदोषान्तराण्याह—पदमिति ॥५९॥ एकत्रानवस्थानमेव दर्शयति-क्षणमिति ॥ षद्-

क्षणमायाति पाताले क्षणं याति नभस्तलम् ।
क्षणं भ्रमति दिक्कुञ्जे तृष्णा हृत्पद्मषट्पदी ॥ ६० ॥

सर्वसंसारदोषाणां तृष्णैका दीर्घदुःखदा ।
अन्तःपुरस्थमपि या योजयत्यतिसङ्कटे ॥ ६१ ॥

लोकोऽयमखिलं दुःखं चिन्तयोज्झितयोज्झति ।
तृष्णाविषूचिकामन्त्रश्चिन्तात्यागो हि कथ्यते ॥ ६२ ॥

रोगार्तिरङ्गनातृष्णा गम्भीरमपि मानवम् ।
उत्तानतां नयत्याशु सूर्यांशव इवाम्बुजम् ॥ ६३ ॥

पदी अलिनी ॥ ६० ॥ किं वहुना, संक्षेपेण श्रूयतां तृष्णाया दौष्ट्य-मित्यभिप्रेत्याह—सर्वेति ॥ सर्वेषां संसारदोषाणां मध्ये ॥ ६१ ॥ कस्तर्हि तृष्णात्यागोपाय इत्यत आह—लोकोऽयमिति ॥ अयं लोको जनः उज्झितया त्यक्तया चिन्तया पापभूतयाखिलं दुःखमुज्झति त्यजतीत्यविवादम् । तत्र चिन्तात्यागो दुःखकारणभूततृष्णात्याग-संपादनद्वारैव दुःखस्याखिलस्य त्यागहेतुरिति युक्तं अत आह—तृष्णा-विषूचिकेति ॥ हिशब्दः प्रसिद्धौ । चिन्तात्यागो विषयचिन्तात्यागः तृष्णाविषूचिकामन्त्रः कथ्यते हीत्यन्वयः । तृष्णैव विषूचिकाख्यो रोगः तन्निवर्तनो मन्त्रस्तृष्णाविषूचिकामन्त्रः । विषयेषु रमणीयत्व-चिन्तया हि तत्र तृष्णा जायते तत्र चिन्तापरित्यागेन रागापरप-र्याया तृष्णा न जायते अतो युक्तमुक्तं चिन्तात्यागस्तृष्णाविषूचिका-मन्त्र इति ॥ ६२ ॥ सर्वदोषाणां मध्ये तृष्णा दीर्घदुःखदेत्युक्तं द्रढयितुं पुनस्तृष्णां निन्दति—रोगार्तिरित्यादिश्लोकत्रयेण ॥ उत्तानतां स्तनंधयप्रसिद्धावाङ्मुखशायिताविरोधिनीं शरीरसंस्थाम् ॥ ६३ ॥

नासिधारा न वज्राग्निर्न तप्तायःकणार्चिषः ।
तथा तीक्ष्णा यथा ब्रह्मन् तृष्णेयं हृदि संस्थिता ॥ ६४ ॥
अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् ।
तृणीकरोति तृष्णैषा निमिषेण नरोत्तमम् ॥६५॥
आर्द्रान्त्रतन्त्रीगहनो विकारी परितापवान् ।
कायः स्फुरति संसारे सोऽपि दुःखाय केवलम् ॥६६॥
स्तोकेनानन्दमायाति स्तोकेनायाति खेदताम् ।
नास्ति देहसमः शोच्यो नीचो गुणविवर्जितः ॥६७॥
कलेवरमहंकारगृहस्थस्य महागृहम् ।
लुण्ठत्वभ्येतु वा स्थैर्यं किमनेन मुने मम ॥ ६८ ॥
पङ्क्तिबद्धेन्द्रियपशुं चलत्तृष्णागृहाङ्गनम् ।
चित्तभृत्यकृतानन्दं नेष्टं देहगृहं मम ॥ ६९ ॥

वज्राग्निरशनिर्दहनः। तप्तायःकणार्चिषस्तप्तलोहकणानां ज्वालाः॥६४॥ ॥ ६५ ॥ एवं मुधैवाभ्युत्थितो मोहादित्यादिभिरपि मेरूपमं प्राज्ञमित्येतदन्तैर्लिङ्गशरीरं सधर्मं विनिन्द्य स्थूलशरीरं निन्दति—आर्द्रेत्यादिभिर्नवभिः ॥ अन्त्राणि शिराः । आर्द्रान्त्राण्येव तन्त्र्यस्ताभिर्गहनो दुःप्रवेश आर्द्रान्त्रतन्त्रीगहनः । परितापवान् परितस्तापो दुःखं तद्वान् । परिपातवानिति क्वचित् । शिरस्तुम्बकनिबद्धैककोटिः कायः कुवीणादण्डवत्स्फुरति प्रकाशते ॥ ६६ ॥ स्तोकेनाल्पेन ॥ ६७ ॥ कलेवरमिति ॥ कलेवरं शरीरम् । अहंकार एव गृहस्थस्तस्य लुण्ठतु पर्येतु नश्यत्वित्यर्थः । ममासङ्गस्यानेन कलेवरेण किं, न किमपि भवति ॥ ६८ ॥ पङ्क्तिबद्धेन्द्रियपशुं पङ्क्तिरूपेण बद्धा दशेन्द्रियपशवो यस्मिंस्तत्तथा । चलत्तृष्णागृहाङ्गनं तृष्णैव गृहाङ्गना चलती

जिह्वामर्कटिकाक्रान्तवदनद्वारभीषणम् ।
दृष्टदन्तास्थिशकलं नेष्टं देहगृहं मम ॥ ७० ॥
किं श्रिया किं च राज्येन किं कायेन किमीहया ।
दिनैः कतिपयैरेव कालः सर्वं निकृन्तति ॥ ७१ ॥
रक्तमांसमयस्यास्य सबाह्याभ्यन्तरं मुने ।
नाशैकधर्मिणो ब्रूहि कैव कायस्य रम्यता ॥ ७२ ॥
जराकाले जरामेति मृतिकाले तथा मृतिम् ।
सममेवाविशेषज्ञः कायो भोगिदरिद्रयोः ॥७३॥
तडित्सु शरदभ्रेषु गन्धर्वनगरेषु च ।
स्थैर्यं येन विनिर्णीतं स विश्वसतु विग्रहे ॥ ७४ ॥
लब्ध्वापि तरलाकारे कार्यभारतरङ्गिणि ।
संसारसागरे जन्म बाल्यं दुःखाय केवलम् ॥ ७५ ॥

गृहाङ्गना यस्मिंस्तत्तथा । चित्तभृत्यकृतानन्दं चित्तमेव भृत्यस्तस्मिन्नेव कृत उत्पादित आनन्दो येन तत्तथोक्तम् । यथा लोके पङ्क्तिवद्धाऽदान्तानेकपशुभिर्निरवकाशीकृतं परगृहगमनादीक्षया चलदङ्गनं भृत्यायैव दत्तानन्दं गृहं विवेकिन इष्टं न भवति तथा ममापि देहमित्यर्थः ॥ ६९ ॥ जिह्वेति ॥ जिह्वामर्कटिकाक्रान्तवदनद्वारभीषणम् । जिह्वैव मर्कटिका तयाक्रान्तेन वक्त्रापरपर्यायवदनद्वारेण भीषणं भयङ्करम् । दृष्टदन्तास्थिशकलं दन्ता एवास्थिशकलानि दृष्टानि दन्तास्थिशकलानि यस्मिंस्तत्तथोक्तम् ॥ ७० ॥ किं श्रियेति ॥ श्रीर्धनधान्यादिसंपत्तिः । ईहा चेष्टा ॥ ७१ ॥ ७२ ॥ ७३ ॥ विग्रहे शरीरे ॥ ७४ ॥ एवं देहं विनिन्द्य तदवस्थां विनिन्दितुं प्रवर्तमानो बाल्यमादौ निन्दति—लब्ध्वापीत्यादिभिरष्टभिः श्लोकैः ॥ अपिशब्दो

अशक्तिरापदस्तृष्णा मूकता मूढबुद्धिता ।
गृध्नुता लोलता दैन्यं सर्वं बाल्ये प्रतिष्ठितम् ॥ ७६ ॥
मनः प्रकृत्यैव चलं बाल्यं चञ्चलतापरम् ।
तयोः संश्लिष्यतोस्तात क इवान्तः कुचापले ॥ ७७ ॥
स्त्रीलोचनैस्तडित्पुञ्जैर्ज्वालामालैस्तरङ्गकैः ।
चापलं शिक्षितं ब्रह्मञ्शैशवाक्रान्तचेतसः ॥७८॥
स्तोकेन वशमायाति स्तोकेनैव विकारिताम् ।
अमेध्य एव रमते बालः कौलेयको यथा ॥ ७९ ॥
संहृष्टो भुवनं भोक्तुमिन्दुमादातुमम्बरात् ।
वाञ्छते येन मौर्ख्येण तत्सुखाय कथं भवेत् ॥ ८० ॥

गर्हायाम् । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपी'त्यमरः । तरलाकारे चञ्चलाकारे कार्यभारतरङ्गिणि कार्याणां कर्तव्यानामैहलौकिकपारलौकिकानां भारास्तरङ्गा यस्मिन्संसारसागरे स तथोक्तस्तस्मिन् । जन्म लब्ध्वापि वर्तमानस्येत्यध्याहारः ॥ ७५ ॥ अशक्तिरिति॥ तृष्णा अर्थमात्रविषयाकाङ्क्षा । गर्धोऽर्थविशेषविषयाभिकाङ्क्षा-लोलुपता ॥ ७६ ॥ मन इति ॥ संश्लिष्यतोः संमिलितयोः सतोः कुचापले कुत्सितचापलत्वे कोऽन्तोऽस्ति, न कोऽपि । कुचापलत्वस्यान्त एव नास्तीत्यर्थः । क इवेत्यत्र इवशब्दोऽवधारणे ॥ ७७ ॥ शैशवाक्रान्तचेतसः शैशवं शिशुत्वं तेनाक्रान्तं चेतो यस्य स तथोक्तस्तस्माद्बाल्यात् । यद्वा शैशवाक्रान्तं च तच्चेतश्च तस्मात् ॥ ७८ ॥ स्तोकेनेति ॥ स्तोकोऽल्पः । कौलेयकः शुनकः ॥ ७९ ॥ भुवनं भोक्तुं यत्किंचिद्दृष्टं तद्भक्षयितुम् । अम्बरादाकाशात् लवणाक्तफलशकलशालिदध्योदनकवलशङ्कयेन्दुमादातुं च येन मौर्ख्येण वाञ्छते इच्छति

शैशवे गुरुतो भीतिर्मातृतः पितृतस्तथा ।
जनतो ज्येष्ठबालाच्च शैशवं भयमन्दिरम् ॥ ८१ ॥
सकलदोषदशाभिहताशयं भवनमप्यविवेकविलासिनः ।
इह न कस्यचिदेव महामुने भवति बाल्यमिदं परितुष्टये ॥ ८२ ॥
बाल्यावस्थामथ त्यक्त्वा पुमानभिहताशयः ।
आरोहति निपाताय यौवनं संभ्रमेण तु ॥ ८३ ॥
स्वचित्तबिलसंस्थेन नानाविभ्रमदायिना ।
बलात्कामपिशाचेन विवशः परिभूयते ॥ ८४ ॥
विस्तीर्णापि प्रसन्नापि पावन्यपि हि यौवने ।
मतिः कलुषतामेति प्रावृषीव तरङ्गिणी ॥ ८५ ॥

तन्मौर्ख्यं मौढ्याद्यपरपर्यायं सुखाय कथं भवेत् । न कथंचित् ॥८०॥ शैशवे शिशुत्वे । ज्येष्ठबालाद्वयोधिकबालात् ॥ ८१ ॥ बाल्यं दुःखाय केवलमिति प्रतिज्ञाय प्रसाधितमुपसंहरति—सकलेति॥ दोषा रागादयः सकलाभिर्दोषदशाभिरभिहत उपद्रुत आशयोऽन्तःकरणं यस्मिंस्त-त्तथा । अविवेकविलासिनो भवनमपि अविवेकविटस्यास्पदं च बाल्य-मिह संसारे कस्यचिदपि पुरुषस्यालमत्यर्थं परितुष्टये परितोषाय न भवति प्रत्युतात्यन्तदुःखायैव भवतीत्याशयः ॥ ८२ ॥ अनेक-दोषास्पदं बाल्यं भवतु नाम दुःखाय, यौवनं तु शक्तत्वपटुवाक्त्वा-दिगुणवत्त्वात्सुखाय भवतीत्याशङ्क्य सप्तभिः श्लोकैस्तन्निन्दति—बाल्येति ॥ अभिहतः कामादिभिरुपद्रुत आशयोऽन्तःकरणं यस्य स तथा । निपाताय यौवनाद्भ्रंशाय ॥ ८३ ॥ स्वचित्तमेव बिलं छिद्रं तस्मिन्संस्था सम्यक्स्थितिर्यस्य स तथोक्तः तेन नानाविभ्रम-दायिना कामः स्त्रीविषयः स एव पिशाचस्तेन ॥ ८४ ॥ विस्तीर्णा

शरीरमरुतापोत्थां युवतामृगतृष्णिकाम् ।
मनोमृगाः प्रधावन्तः पतन्ति विषयावटे ॥ ८६ ॥
यदा यदा परां कोटिमध्यारोहति यौवनम् ।
वल्गन्ति सज्वराः कामास्तदा नाशाय केवलम् ॥ ८७ ॥
ते वन्द्यास्ते महात्मानस्त एव पुरुषा भुवि ।
ये सुखेन समुत्तीर्णाः साधो यौवनसंकटात् ॥ ८८ ॥
विनयभूषितमार्यजनास्पदं करुणयोज्ज्वलमावलितं गुणैः ।
इह हि दुर्लभमङ्गलयौवनं जगति काननमम्बरगं यथा ॥८९॥
मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम् ॥९०॥

बह्वर्थदर्शिनी । कलुषतां आविलताम् ॥ ८५ ॥ शरीरमरुतापोत्थां शरीरमेव मरुभूमिस्तत्र कालानुगृहीतवैश्वानरतापादुत्पन्नाम् । युवतामृगतृष्णिकाम् । युवतां मृगतृष्णिकामिति वा पाठः । युवता यौवनं तदेव मृगतृष्णिका मरीचिकोदकता ताम् । अवटो गर्तः ॥ ८६ ॥ यौवनस्य प्रारम्भे दोषमाख्यायाभिवृद्धौ तमाह—यदेति ॥ परां कोटिमुपरितनं विभागं यौवनं यदायदाभिवृद्धिं प्राप्नोतीत्यर्थः । ज्वरोऽत्र कामजः । कामाः कामिनः ॥ ८७ ॥ एवं यौवनदोषानाख्याय तत्प्रयुक्तकामादिनेहपरयोर्दुःखबीजं संपाद्य ततो निर्गतान् तन्निस्तारे महायत्नः कर्तव्यो मुमुक्षुणेति दर्शयितुम्—ते वन्द्या इति ॥ ८८ ॥ यौवनस्य दोषास्पदत्वमुक्त्वा गुणवैधुर्यमाह—विनयेति ॥ आवलितं आवेष्टितम् । इह जगतीति संबन्धः ॥ ८९ ॥ यौवनस्य स्त्रीद्वारा प्रायेणानर्थकरत्वात्तन्निन्दानन्तरं तदनर्थकरणद्वारं स्त्रियं निन्दति—मांसेत्यादिना ॥ पाञ्चालिका वस्त्रादिकृता पुत्रिका ।

त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचनम् ।
समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ॥ ९१ ॥
मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन्स्तने मुक्ताहारस्योल्लासशालिता ॥ ९२ ॥
श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥ ९३ ॥

'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः । मांसपाञ्चालिकायाः मांसनिर्मितपुत्रिकायाः। स्नाय्वस्थिग्रन्थिशालिन्याः स्नायवो वस्नसाः देहबन्धनानि । 'अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंस्यथ वस्नसा । स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे' इत्यमरः। स्नायूनामस्थीनां च ग्रन्थिभिः । यद्वा स्नायुभिरस्थिभिर्मांसग्रन्थिभिश्च शालते शोभते इति तथोक्ता तस्याः स्त्रिया अङ्गपञ्जरे अङ्गनीडे। कीदृशे। यन्त्रलोले जलयन्त्रादिवच्चञ्चले॥ ९० ॥ ननु यस्या लोचने लोलेन्दीवररमणीये स्तनौ च परिलुठद्धवलहारवलितौ कनककलशरुचिरौ तस्याः स्त्रियाः अङ्गपञ्जरे किमिव शोभनमिति कथमाक्षिप्यत इति शङ्कां श्लोकत्रयेण परिहरति—त्वगित्यादिना॥ बाष्पाम्बु अश्रुः । त्वङ्मासेत्यादिद्वन्द्वैकवद्भावः । त्वङ्मांसादिसमूहात्मकं हि लोचनं तत्त्वदृष्ट्या रम्यं चेत्तर्हि त्वगादिकं पृथक्कृत्य लोचनं समालोचय सम्यक्पश्य। मुधा वृथा ॥ ९१ ॥ यस्मिन्स्तने मुक्ताहारस्योल्लासशालिता मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा दृष्टा स ललनास्तन एव दिगन्तेषु श्मशानेषु अन्धसो लघुपिण्ड इव काले श्वभिरास्वाद्यत इति द्वितीयेनान्वयः। मेरुशृङ्गतटे उल्लसत्युद्दीप्यत इति मेरुशृङ्गतटोल्लासि । यद्वा मेरुशृङ्गतटे उल्लासि उच्चलत् गङ्गाजलं तस्य रयेण वेगेन उपमा यस्या उल्ला-

केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरान् ॥ ९४ ॥
ज्वलतामतिदूरेऽपि सरसा अपि नीरसाः ।
स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ॥ ९५ ॥
कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् ।
नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥ ९६ ॥

सशालितायाः उल्लासेनोल्लुण्ठनेन शालते शोभत इत्युल्लासशाली तस्य भावस्तत्ता । अन्धसोऽन्नस्य । 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री' इत्यमरः ॥ ९२ ॥९३॥ केशेति ॥ केशकज्जलधारिण्यः केशा एव कज्जलानि मष्यः तानि धारयन्तीति तथा दुःखदत्वात् । दुःस्पर्शाः । दुष्कृताग्निशिखाः दुष्कृतानि पापान्येवाग्नयस्तेषां शिखा ज्वालाः ॥ ९४ ॥ ज्वलतामिति ॥ स्त्रियोऽतिज्वलतां नरकाग्नीनां चारु दारुणमिन्धनं भवतीति संबन्धः । चारुशब्देनाद्भुतत्वमत्र विवक्षितम् । दारुणं भयङ्करम् । स्त्रीणां चार्विन्धनीभावं साधयितुं विशेषणम् । सरसा अपि नीरसा इति॥ रसः सारः। भ्रान्तदृष्ट्या सरसा अपि तदितरया नीरसा निःसारा इत्यर्थः । रसशब्देन द्रवोऽप्युच्यते । इन्धनं हि लोके सरसं नीरसं वा भवति नोभयात्मकम् । स्त्रियस्तु यतः सरसा अपि नीरसाः अतश्चार्विन्धनं भवति । यतो दूरे स्थिता अपि नरकलक्षणाग्नीनुदीपयन्ति अतोऽपि चार्विन्धनं दारुणेन्धनं च भवति ॥ ९५ ॥ कामनाम्नेति ॥ नार्यो मुग्धचेतसां मूढचित्तानां नरविहङ्गानां नरपक्षिणां कामनाम्ना किरातेन विकीर्णा विक्षिप्ता अङ्गबन्धनवागुरा अवयवबन्धनजालानि भवन्ति । अङ्गेति संबोधनं वा । मृगबन्धनवाचकेन वागुराशब्देनेह जालानि लक्ष्यन्ते

जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जौ नारीबडिशपिण्डिका ॥ ९७ ॥
सर्वेषां दोषरत्नानां सुसमुद्गिकयानया ।
दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥ ९८ ॥
इतो मांसमितोरक्तमितोऽस्थीनीति वासरैः ।
ब्रह्मन्कतिपयैरेव याति स्त्री विसरारुताम् ॥ ९९ ॥
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥१००॥

॥ ९६ ॥ जन्मपल्वलमत्स्यानां जन्मैव पल्वलमल्पसरः । 'वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिके' त्यमरः । तस्य मत्स्यानां चित्तमेव कर्दमः पङ्कस्तच्चारिणां पुंसां ग्रहणाय दुर्वासनैवाविवेकाख्यकैवर्तहस्तस्था रज्जुर्भवति नारी तु बडिशपिण्डिका भवति । बडिशस्य मत्स्यवेधस्य रज्ज्वग्रवर्तिलोहादिशङ्कग्रनिहितमत्स्यहारपिण्डो भवतीत्यर्थः ॥ ९७ ॥ एवं स्त्रीदोषान्प्रदर्श्य तत्परिज्ञानफलमाह—सर्वेषामिति ॥ दोषा एव रत्नानि तेषां समुद्गिकया शोभनसंपुटिकया । 'समुद्गकः संपुटक' इत्यमरः । शृङ्खलया दुःखप्रदशृङ्खलारूपया स्त्रिया अलमस्तु । अलंशब्दो वारणे । 'अलं भूषणपर्याप्तिशक्तिवारणवाचक'इत्यमरः ॥ ९८ ॥ अस्थिरत्वाच्चालं स्त्रियेत्याह—इत इति ॥ विसरारुतां विसरणशीलताम् ॥ ९९ ॥ ननु भोगेच्छायां सत्यामलमस्तु मम स्त्रियेति कथमुच्यते तत्राह—यस्य स्त्रीति ॥ यस्य पुंसः स्त्र्यस्ति तस्य भोगेच्छास्ति । भोगेच्छाभावे निपुणस्य तत्परिग्रहासंभवात् निःस्त्रीकस्य स्त्रीपरिग्रहवर्जकस्य भोगभूः क्व भोगेच्छा कुत्र, न कुत्रापि । भोगेच्छायां सत्यां तत्परिग्रहवर्जनासंभवात् । भवत्वेवं तथापि स्त्रीत्यागमात्रात् किं भवेत्तत्राह—स्त्रियमिति ॥१००॥

आपातमात्ररमणेषु सुदुस्तरेषु
भोगेषु नाहमलिपक्षतिचञ्चलेषु ।
ब्रह्मन् रमे मरणरोगजरादिभीत्या
शाम्याम्यहं परमुपैमि पदं प्रयत्नात् ॥ १०१ ॥
अपर्याप्तं हि बालत्वं बलात्पिबति यौवनम् ।
यौवनं च जरा पश्चात्पश्य कर्कशतां मिथः ॥ १०२ ॥
अनायासकदर्थिन्या गृहीते जरया जने ।
पलाय्य गच्छति प्रज्ञा सपत्न्येवाहताङ्गना ॥ १०३ ॥
दासाः पुत्राः स्त्रियश्चैव बान्धवाः सुहृदस्तथा ।
हसन्त्युन्मत्तकमिव नरं वार्धककम्पितम् ॥ १०४ ॥
दुःप्रेक्ष्यं जरठं दीनं हीनं गुणपराक्रमैः ।
गृध्रो वृक्षमिवादीर्घं गर्धो ह्यभ्येति वार्धकम् ॥ १०५ ॥

प्रकरणार्थमुपसंहरति—आपातेति ॥ विषयाणामिन्द्रियाणां प्रत्यापतनमापातो विषयेन्द्रियसंबन्धः । आपातमात्रे आपातसमय एव रमयन्तीति तथा तेषु। आपातमात्रतो रमणं रतिर्येभ्यस्ते तथा तेष्विति वा । दुस्तरेषु अलिपक्षतिचञ्चलेषु भ्रमरपक्षांशचञ्चलेषु । यथाहुः—'पक्षतिः पक्षमूलं स्यात्पक्षांशश्चे'ति ॥१०१॥ यौवनस्य प्रायेणानर्थकरणद्वारं स्त्रियं निन्दित्वा यौवनानन्तरभाविनीं जरामुत्तरग्रन्थसन्दर्भेण निन्दितुं प्रस्तौति बाल्यादीनां बाध्यबाधकभावं दर्शयन्—अपर्याप्तमिति ॥ अपर्याप्तमसमर्थं यौवनरक्षःसंतृप्तये बालत्वं बालभावं पिबति । यौवनं च जरा बलात्पिबति । कर्कशताम् । क्रूरतामित्यर्थः ॥ १०२ ॥ अनायासकदर्थिन्येत्यादिश्लोकाः स्पष्टार्थाः । तत्र कानिचित्पद्यानि व्याख्यायन्ते। अनायासेन कदर्थयति क्लेशयतीत्यनायासकदर्थिनी॥१०३॥ १०४॥ जरठं वृद्धं गर्धोऽर्थे विशेषविषयेच्छा॥१०५॥

दैन्यदोषमयी दीर्घा हृदि दाहप्रदायिनी।
सर्वापदामेकसखी वार्धके वर्धते स्पृहा ॥ १०६ ॥
कर्तव्यं किं मया कष्टं परत्रेत्यतिदारुणम्।
अप्रतीकारयोग्यं हि वार्धके वर्धते भयम् ॥ १०७ ॥
गर्वोऽभ्युदेति सोल्लासमुपभोक्तुं न शक्यते।
हृदयं दह्यते नूनं शक्तिदौःस्थ्येन वार्धके ॥ १०८ ॥
परिपक्वमिवालोक्य जरा क्षारविधूसरम्।
शिरःकूष्माण्डकं भुङ्क्ते पुंसां कालः किलेश्वरः ॥ १०९ ॥
मरणस्य मुने राज्ञो जरा धवलचामरा।
आगच्छतोऽग्रे निर्याति ह्याधिव्याधिपताकिनी ॥११०॥
जरासुधालेपसिते शरीरान्तःपुरान्तरे।
अशक्तिरार्तिरापच्च तिष्ठन्ति सुखमङ्गनाः ॥ १११ ॥
किंतेन दुर्जीवितदुर्ग्रहेण जरां गतेनापि हि जीव्यते यत्।
जरा जगत्यामजिता जनानां सर्वैषणास्तात तिरस्करोति ११२

स्पृहा अर्थमात्रविषया ॥ १०६ ॥ परत्रातिदारुणं कष्टं भविष्यति मया किंकर्तव्यमित्यप्रतीकारयोग्यं भयम् ॥ १०७ ॥ सोल्लासं ससंभ्रममित्यर्थः। शक्तिदौःस्थ्येन शक्तिमान्द्येनेति यावत् ॥ १०८ ॥ जरैव पलितयुक्ता क्षारं भस्म तेन विधूसरमीषत्पाण्डु। कूष्माण्डफलं ह्युपरिभागे भस्मसदृशवर्णेन विधूसरं भवति ॥ १०९ ॥ जरैव पलितयुक्ता धवलं चामरं यस्यां पताकिन्यां सा तथोक्ता पताकिनी सेना। आगच्छतो मरणस्य राज्ञोऽग्र इति संवन्धः ॥ ११० ॥ सुधा चूर्णादिविकारः ॥ १११ ॥ किंवहुना जरागतस्य जीवनादनेकयातनास्पदाद्वरं मरणमेवेत्याह—किंतेनेति ॥ जरां गतेन वहुयातनापा-

क्वचिद्वा विद्यते येषां संसारे सुखभावना ।
आखुस्तन्तुमिवाशेषं कालस्तामपि कृन्तति ॥ ११३ ॥
न तदस्तीह यदयं कालः सकलघस्मरः ।
ग्रसते न जगज्जातं महाब्धिमिव वाडवः ॥ ११४ ॥
महतामपि नो देवः परिपालयति क्षणम् ।
कालः कवलिताशेषविश्वो विश्वात्मतां गतः ॥ ११५ ॥
ये रम्या ये शुभारम्भाः सुमेरुगुरवोऽपि ये ।
कालेन विनिगीर्णास्ते गरुडेनेव पन्नगाः ॥ ११६ ॥

त्रभूतेनापि जीव्यते यत् तेन दुर्जीवितदुर्ग्रहेण दुर्जीवितदुरभिनिवेशेन किम् । दिग्विजयिभिरप्यजिता जरा । यतः ज्ञानाद्याक्रमति । महादुःखदायित्वेन सर्वेषणास्तिरस्करोति । अतिमहता जरादुःखेनाकुलितचित्तः तद्दुःखनिवृत्तिमेवाशास्ते नान्यदित्याशयः ॥ ११२ ॥ एवमतीतग्रन्थसंदर्भेण दुःखशतसंकुले संसारे निरवद्यं सुखं क्वापि नास्तीति निर्धारितम् । संप्रति सुखाभ्युपगमेऽपि तस्य भोक्तृभोग्यभोगात्मकस्यानित्यत्वदोषान्न मुक्तिरस्तीत्युत्तरग्रन्थसंदर्भेण प्रतिपादयति । तत्र सुखस्यानित्यत्वं तावदाह—क्वचिदिति ॥ वाशब्दो मतान्तरद्योतनार्थः ॥ ११३ ॥ ननु सुखजनकविषयजातस्य नित्यत्वे सुखस्यापि प्रवाहरूपेण नित्यत्वं संभवेदित्यत आह—न तदिति ॥ घस्मरो भक्षणशीलः । 'भक्षको घस्मरोऽद्मर' इत्यमरः ॥११४॥ वराकाणां कालाद्भये सत्यपि महात्मनां न तदस्तीत्यत्राह—महतामिति ॥११५॥ रमणीयत्वसत्कर्मत्वगुणाकरत्वान्यपि कालनिवारकाणि न भवन्तीत्याह—ये रम्या इति ॥ शुभ आरम्भो येषां ते तथा ॥११६॥

तृणं पांशुं महेन्द्रं च सुमेरुं पर्णमर्णवम् ।
आत्मंभरितया सर्वमात्मसात्कर्तुमुद्यतः ॥ ११७ ॥
कालोऽयं भूतमशकघुंघुमानां प्रपातिनाम् ।
ब्रह्माण्डोदुम्बरौघानां बृहत्पादपतां गतः ॥ ११८ ॥
प्रेक्ष्याहर्विनिमेषेण सूर्याक्ष्णा पाकवत्फलम् ।
लोकपालफलान्यत्ति जगज्जीर्णवनादयम् ॥ ११९ ॥
जगज्जीर्णकुटीकीर्णान्निक्षिपत्युग्रकोटरे ।
क्रमेण गुणवल्लोकमणीन्मृत्युसमुद्गके ॥ १२० ॥

नन्वनन्तपदार्थविचित्रमध्ये कालाग्रस्तं किंचित्संभावितमित्यत आह—तृणमिति ॥ आत्मंभरितया स्वोदरपूरकतया । 'उभौ त्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरका' वित्यमरः ॥ ११७ ॥ सर्वमात्मसात्कर्तुमुद्यत इत्यनेन कालस्य सर्वसंहर्तृत्वमुक्तं प्रपञ्चयति—कालोऽयमित्यादिना ॥ महाकल्पेषु राजत इत्यन्तेन ग्रन्थसंदर्भेण ॥ तत्र प्रथमं प्राकृतप्रलये ब्रह्माण्डसंहर्तृत्वमाह—कालोऽयमिति ॥ भूतान्येव मशकास्तत्कृतो घुंघुमः ध्वनिर्येषु ते तथा तेषां ब्रह्माण्डान्येवोदुम्बरफलानि तेषामोघाः समूहा ब्रह्माण्डोदुम्बरौघास्तेषां बृहत्पादपतां स्थूलवृक्षताम् ॥ ११८ ॥ ब्रह्माण्डसंहर्तृत्वे कालस्याभिहिते तदन्तर्वर्ति संहर्तृत्वं यद्यपि सिद्धं तथाप्यनित्यत्वबुद्धिदार्ढ्यार्थं पृथक् तदन्तःस्थवस्तुसंहर्तृत्वं दर्शयन्नादौ लोकपालसंहर्तृत्वमाह—प्रेक्ष्येति ॥ अह्नि विगतो निमेषोऽस्तमयसमयलक्षणो यस्मात् सूर्याक्ष्णस्तदहर्विनिमेषं तेन ॥ ११९ ॥ पालकसंहर्तृत्वमुक्त्वा पाल्यसंहर्तृत्वमाह—जगदित्यादिश्लोकद्वयेन ॥ जगदेव जीर्णकुटी तस्यां कीर्णान्विक्षिप्तान् गुणवन्तो लोका एव मणयस्तान् उग्रः

गुणैरापूर्यते यैव लोकरत्नावली भृशम् ।
भूषार्थमिव तामङ्गे कृत्वा भूयो निकृन्तति ॥ १२१ ॥
अस्यैवाचरतो दीनैर्मुग्धैर्भूतमृगव्रजैः ।
आखेटकं जर्जरितैर्जगज्जाङ्गलजालके ॥ १२२ ॥
एकदेशोल्लसच्चारुवडवानलपङ्कजा ।
क्रीडापुष्करिणी रम्या कल्पकालमहार्णवः ॥ १२३ ॥
कटुतिक्ताम्लभूताद्यैः सदधिक्षीरसागरैः ।
तैरेव यैः पर्युषितैर्जगद्भिः कल्यवर्तनम् ॥ १२४ ॥

कोटरः छिद्रं यस्य समुद्गकस्य स तथा तस्मिन्मृत्युरेव समुद्गकस्तस्मिन्निक्षिपति ॥१२०॥ स्थितिकाले तामङ्गे कृत्वा संहारकाले निकृन्तति ॥ १२१ ॥ प्रकारान्तरेण कालस्य लोकसंहर्तृत्वं दर्शयति—अस्यैवेत्यादिना कोदण्डः परिस्फुरति सर्वत इत्यन्तेन ग्रन्थसंदर्भेण ॥ वातभूयिष्ठदेशाभिधायकेन जाङ्गलशब्देनात्र मृगयायोग्या देशा लक्ष्यन्ते । जालकं समूहः । जगज्जाङ्गलजालके भूतमृगवृन्दैराखेटकं मृगयां चरतोऽस्यैव कालनाम्नो राजकुमारस्य कल्पकालमहार्णवः क्रीडापुष्करिणीत्येवमादिभिरुत्तरग्रन्थसमूहप्रतिपाद्यैरर्थैः संबन्धः । वडवानल एव पङ्कजं एकदेशे उल्लसच्चारुवडवानलपङ्कजं यस्यां सा तथा ॥ १२२ ॥ १२३ ॥ मृगयाचरणजनितश्रमापनोदनाय पुष्करिणीं प्रदर्श्य कालराजकुमारस्य मृगयानिर्गमनात्पूर्वं भोजनं दर्शयति—कट्विति ॥ कटुतिक्ताम्लानि भूतानि प्राणिन आद्यानि येषु तानि तथा तैः । नानारसयुक्तभूतोपदंशानां दधिक्षीरसागरोपसेचनानां जगदन्नानां पर्युषितत्वे हेतुमाह—तैरिति ॥ यानि यानि कल्पादौ स्थितानि तानि तान्येव जगन्ति कल्पान्तेऽपि तिष्ठन्तीति पर्युषितत्वम् ।

चण्डी चतुरसंचारा सर्वमातृगणान्विता ।
संसारवनविन्यस्ता व्याघ्री भूतौघघातिनी ॥ १२५ ॥
पृथ्वी करतले पृथ्वी पानपात्री रसान्विता ।
कमलोत्पलकह्लारलोलजालकमालिता ॥ १२६ ॥
विरावी विकटास्फोटो नृसिंहो भुजपञ्जरे ।
सटाविकटपीनांसः कान्तः क्रीडाशकुन्तकः ॥ १२७ ॥
अलाबुवीणामधुरः शरद्व्योमामलच्छविः ।
देवः किल महाकालो लीलाकोकिलपालकः ॥ १२८ ॥

कल्यवर्तनमुषःकालभोजनम् । 'प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपी'त्यमरः ॥ १२४ ॥ मृगयामाचरतः कालस्य शुनीस्थानीयां व्याघ्रीं दर्शयति—चण्डीति ॥ चण्डी जरा ॥ १२५ ॥ तस्य मद्यपानाय करतलन्यस्तां पात्रीं दर्शयति—पृथ्वीति ॥ पृथ्वी भूमिरेव कालस्य करतले पानपात्री भवति सा चानल्पेत्याह—पृथ्वीति ॥ रसान्विता मद्यरसान्विता मद्यस्य । सौगन्ध्यार्थं कमलोत्पलकह्लाराणां लोलेन जालकेन समूहेन मालिता । संवलितेत्यर्थः । कह्लारं सौगन्धिकम् ॥ १२६ ॥ जगदटव्यामाखेटकाटनपटीयसः कालमहाभटस्य प्रचण्डभुजदण्डारूढं तत्क्रीडायोग्यं पक्षिणं दर्शयति—विरावीति ॥ विरावो निर्घोषोऽस्यास्तीति तथा । संहतयोः प्रकोष्ठप्रगण्डयोः पाणितलास्फालनमास्फोटः विकटो विरूपः आस्फोटो यस्य स तथा । सटाविकटपीनांसः सटाभिर्ग्रीवारोमभिर्विकटो विरूपः पीनावंसौ स्कन्धौ यस्य सः पीनांसः सटाविकटश्चासौ पीनांसश्चेति तथा । अथवा सटाविकटौ पीनांसौ यस्य स तथा । शकुन्तः पक्षी ॥ १२७ ॥ नृसिंहवद्रुद्रानुचरभूतो महाकालनामा देवोऽपि कालस्य क्रीडोपक-

अजस्रस्फूर्जिताकारो वान्तदुःखशरावलिः ।
अभावनामा कोदण्डः परिस्फुरति सर्वतः ॥ १२९ ॥
कालरात्रिः स्वयं भूत्वा नृत्यत्येष निजेच्छया ।
यस्या भूषणमङ्गेषु देवलोकान्तरावलिः ॥ १३० ॥
नरकाली च मञ्जीरमाला कलकलोज्ज्वला ।
प्रोता दुष्कृतसूत्रेण पातालचरणे स्थिता ॥ १३१ ॥

रणमित्याह—अलाब्विति ॥ यथाहुः क्षीरस्वामिनः—'रुद्रानुचरो नन्दी महाकालो भृङ्गी'ति। अलाबुवीणावन्मधुरो मधुरध्वनिः। मधुरध्वनिर्व्योमेति वा पाठः । कोकिलवत्तस्य कार्ष्ण्यमाह—शरदिति ॥१२८॥ जगज्जीर्णाटवीं प्रविष्टस्य प्राणिमृगवधे व्यापृतस्य धनुर्दर्शयति—अजस्रेति ॥ नेन्द्रो न चन्द्रो न मेरुर्न विन्ध्य इत्यजस्रं स्फूर्जित आकारो यस्य स तथा। दुःखान्येव शरास्तेषामावलिः पङ्क्तिः । वान्ता उद्गीर्णा दुःखशरावलिर्येन स तथा । कोदण्डो धनुः । कालात्मनः परमेश्वरस्य ॥ १२९ ॥ विधान्तरेण जगत्संहारलीलां वर्णयति—कालरात्रिरित्यादिना ॥ महाकल्पेषु राजत इत्यनेन सर्वसंहारपटीयसी तमःप्रधाना शक्तिः कालरात्रिरित्युच्यते । एष कालात्मा परमेश्वरः स्वयं कालरात्रिर्भूत्वा नृत्यतीति संबन्धः । तस्य नृत्योपकरणानि दर्शयति—यस्या इति ॥ देवलोकान्तराणां देवलोकभेदानामावलिर्यस्या अङ्गेषु भूषणं भवति सा कालरात्रिरिति पूर्वेण संबन्धः ॥ १३० ॥ नरकाली च यस्याः पातालचरणे स्थिता मञ्जीरमाला भवतीत्यन्वयः । आली पङ्क्तिः । मञ्जीरो नूपुरः । मञ्जीरमाला साधर्म्यं संपादयति—कलकलेत्यादिना ॥ कलकलेन कोलाहलेन उज्ज्वला दीप्ता ॥ १३१ ॥

एकस्मिञ्श्रवणे दीर्घा हिमवानस्थिमुद्रिका ।
अपरे हि महामेरुः कान्ता काञ्चनकर्णिका ॥ १३२ ॥
अत्रैव कुण्डले लोले चन्द्रार्कौ गण्डमण्डले ।
लोकालोकाचलश्रेणी सर्वतः कटिमेखला ॥ १३३ ॥
पश्चात्प्रलम्बविश्रान्तकौमारमृतबर्हिभिः ।
नेत्रत्रयबृहद्रन्ध्रभूरिझांकारभीषणैः ॥ १३४ ॥
लम्बलोलजटाचन्द्रविकीर्णहरमूर्धभिः ।
उच्चरच्चारुमन्दारगौरीकबरचामरैः ॥ १३५ ॥
उत्ताण्डवाचलाकारभैरवोदरतुम्बकैः ।
रणत्पद्मशतरन्ध्रेन्द्रदेहभिक्षाकपालकैः ॥ १३६ ॥

हिमपाण्डुर्हिमवान्यस्या एकस्मिन् श्रवणे दीर्घा किंचिन्न्यूनलक्षयोजनदीर्घा अस्थिमुद्रिका भवति । कर्णिका कर्णालङ्कारविशेषः॥१३२॥ चन्द्रार्कौ यस्या अत्रैव कुण्डले भवत इत्यन्वयः । अत्रेति पूर्वश्लोकोक्ते श्रवणे निर्दिश्येते । लोले इति कुण्डलयोर्विशेषम् । गण्डमण्डले गण्डमण्डलयोरित्यर्थः । श्रेणी पङ्क्तिः ॥ १३३ ॥ तस्या रूपं लोकभयावहमिति किं वक्तव्यमित्यभिप्रेत्याह—पश्चादिति ॥ पश्चात्प्रलम्बेत्यादीनां खट्वाङ्गभङ्गैरित्यन्तानां षण्णां तृतीयान्तानामापूरिताम्बरमित्यनेन संबन्धः । पश्चाद्भागे कबरादौ । प्रलम्बाः प्रलम्बमाना विश्रान्ताश्च ते कौमारमृतबर्हिणः षण्मुखमृतमयूरास्तैः ॥ नेत्रेति ॥ हरमूर्धविशेषाणां नेत्रत्रयस्य बृहद्रन्ध्रेषु वायुपूरणवशात् भूरिझाङ्कारास्तैर्भीषणैः ॥ १३४ ॥ लम्बो लोलो जटासु चन्द्रो येषां ते लम्बलोलजटाचन्द्रास्ते च ते विकीर्णहरमूर्धानश्च तैः । उच्चरच्चारुमन्दाराणि उच्चरच्चारुमन्दारपुष्पाणि यानि गौरीकबराणि तान्येव चामराणि तैः । कबरं केशपाशम् ॥ १३५ ॥ उत्ताण्डवानि उल्लुठितानि अचलाकाराणि च

शुष्कशारीरखट्वाङ्गभङ्गैरापूरिताम्बरम् ।
भीषयत्यात्मनात्मानं सर्वसंहारकारिणी ॥ १३७ ॥
विश्वरूपशिरश्चक्रचारुपुष्करमालया ।
ताण्डवेषु विवल्गन्ती महाकल्पेषु राजते ॥ १३८ ॥
एतस्मिन्नेवमेतेषां कालादीनां महामुने ।
संसारनाम्नि कैवास्था मादृशानां भवत्विह ॥ १३९ ॥

यानि भैरवोदराणि तान्येव तुम्बकान्यलाबुफलानि तैः । अथवा उत्ताण्डवेति कालरात्रिविशेषणम् ॥ रणदिति रणन्तो ध्वनन्तः सशतरन्ध्राः शतरन्ध्रैः सह वर्तमानाश्च ये इन्द्रदेहास्त एव भिक्षाकपालास्तैः ॥ १३६ ॥ शुष्काणि यानि शारीराणि शरीरभवास्थीनि तान्येव खट्वाङ्गभङ्गा मज्ञावयवखण्डास्तैः । ननु कौमारबर्हादीनामेकत्वाद्बर्हिभिरित्यादिबहुवचनं कथमितिचेत् मैवं । महाकल्पेषु राजत इति अत्रैव बहुवचनेन परिहृतत्वान्महाकल्पभेदेन मयूरादीनां बहुत्वसंभवात् । आपूरितमम्बरं नभो येनात्मना तम् ॥ १३७ ॥ किंबहुना कालरात्रेः प्रभावः संक्षेपेण श्रूयतामित्यभिप्रेत्याह—विश्वरूपेति ॥ विश्वरूपस्य गीतासु प्रसिद्धस्य शिरसामनेककोटीनां चक्राणि समूहा एव चारुपुष्करमाला तया । विवल्गन्तीति क्वचित्तत्र ताण्डवेषु ताण्डवावसरेष्वित्यर्थः । विवल्गन्तीत्यन्वयः । तत्र ताण्डवेषु नाट्येषु कर्तव्येष्वित्यर्थः ॥ १३८ ॥ एवं कालादीनां वृत्तमाख्यातमनुवदंस्तद्दोषपरिज्ञानफलं विशदयति—कालादीनामेवमुक्तेन प्रकारेण एवमेतस्मिन्वृत्ते सतीत्यध्याहृत्य योजना । वृत्तेऽस्मिन्नेवमेतेषामिति क्वचित् । कालादीत्यत्रादिशब्देन चन्द्रादिर्गृह्यते । कालादीनां वृत्तमन्येषां पूर्वोक्त-

शत्रवस्त्विन्द्रियाण्येव सत्यं यातमसत्यताम् ।
प्रहरत्यात्मनात्मानं मन एव मनो रिपुः ॥ १४० ॥
वस्त्ववस्तुतया ज्ञातं दत्तं चित्तमहंकृतौ ।
अभाववेधिता भावा भावान्तो नोपलभ्यते ॥ १४१ ॥

संसारदोषाणामुपलक्षणम्॥ १३९॥ननु संसारनाश्यनर्थे आस्था नास्ति चेत्तर्हि तन्निवृत्तौ परमो यत्न आस्थीयतां किं वल्गनेनेत्याशङ्क्य तन्निवृत्तिप्रतिकूलानां सौलभ्यमनुकूलानां दौर्लभ्यं चाह–शत्रव इत्यादिना भवबन्धिनीत्यन्तेनग्रन्थजातेन॥ननु प्राप्यं सत्यज्ञानादिलक्षणं वस्तु साक्षात्प्रतिभासते चेत् किं करिष्यन्तीन्द्रियशत्रव इत्यत आह–सत्यमिति ॥ सत्यं ज्ञानादिलक्षणं वस्तु असत्यतामनृतदेहादिरूपतां यातम्। ननु मनः स्वानुकूलं चेन्नेन्द्रियशत्रुभ्यो भेतव्यमित्यत आह–प्रहरतीति ॥ द्वितीयकल्पकं मनो रिपुर्भूत्वा आत्मना स्वेन आत्मानं स्वं प्रहरति ॥ १४० ॥ मनसो रिपुत्वं साधयति–वस्त्विति ॥ कार्यकारणसंघातसाक्षिलक्षणं वस्तु अवस्तुतया कार्यकारणसंघातात्मना गृहीतम् । ननु संघातसाक्षितया वस्तुग्रहणसंभवादन्यथाग्रहणं निवर्तिष्यत इत्यत आह–दत्तमिति ॥ कामाकुलं तच्चित्तं विवेकाक्षमत्वादहंकारमेवानुधावतीति न तत्साक्षिणमित्यभिप्रायः । ननु वस्तुनावगाहते चेच्चित्तं तर्हि यानहंकारादिभावानवगाहते तत्रैव रतिर्वध्यतामत आह–अभावेति॥भावाः पदार्था अभाववेधिता अभावविद्धाः। अनित्या इत्यर्थः । तर्हि न विनश्यद्वस्तु कूटस्थान्तं विनश्यतीति न्यायान्नाशावधितया ज्ञायतामात्मेत्यत आह–भावेति ॥ भावानामनित्यपदार्थानामन्तोऽवसानभूमिरात्मेत्यर्थः । भवान्त इति क्वचित्॥१४१॥

तप्यते केवलं साधो मतिराकुलितान्तरा ।
रागरोगो विलसति विरागी विरलो जनः ॥ १४२ ॥

यत्नेन याति युवता दूरे सज्जनसंगतिः ।
गतिर्न विद्यते काचित्क्वचिन्नोदेति सत्यता ॥ १४३ ॥

मनो विमुह्यतीवान्तर्मुदिता दूरतां गता ।
नोज्ज्वला करुणोदेति दूरादायाति नीचता ॥ १४४ ॥

धीरताऽधीरतामेति पातोत्पातपरो जनः ।
सुलभो दुर्जनाश्लेषो दुर्लभः सत्समागमः ॥ १४५ ॥

अनात्मनि दोषदृष्टौ सत्यामात्मनि चाप्राप्ते फलितमाह—तप्यत इति ॥ अन्तरा वस्त्ववस्तुनोरन्तराले । ननु सर्वकामनात्यागात्तापनिवृत्तिसंभवे किमर्थं तप्यत इत्यत आह—राग इति ॥ तर्हि विरक्तसंपर्काद्रागो निवर्त्यतामित्यत आह—विरागीति ॥ १४२ ॥ तर्हि त्वरा न कार्येदानीमित्यत आह—यत्नेनेति ॥ यौवने हि कार्यकारणानां पुरुषार्थसंपादनक्षमता न वार्धक इत्याशयः । तर्हि इदानीमेव तत्त्वविदः सेव्यन्तामित्यत आह—दूर इति ॥ तर्ह्यन्य उपायोऽन्वेष्यतामत आह—गतिरिति ॥ ननु कथमन्या गतिर्नास्ति तर्कबलात्स्वयमेव वा स्वयंप्रकाश आत्मा प्रतिभास्यतीत्यत आह—क्वचिदिति ॥ सत्यता सत्यभावः । सत्यस्वरूपमित्यर्थः । अथवा जगत्सत्यत्वाङ्गीकारे द्वैतिनामिवान्या गतिर्भविष्यतीत्यत आह—क्वचिदिति ॥ क्वचिदपि जगद्गते पदार्थे सत्यता नोदेति । न भातीत्यर्थः ॥ १४३ ॥ १४४ ॥ संसारासज्जनमध्यवर्तिनः साम्यं दुर्लभमिति दर्शयितुं तत्स्थितेरस्थिरत्वमाह—धीरतेति ॥ पात ऐश्वर्यादिभ्रंशः । उत्पातस्तत्प्राप्तिः । अथवा

आगमापायिनो भावा भावना भवबन्धिनी ।
नीयते केवलं क्वापि नित्यं भूतपरम्परा ॥ १४६ ॥
दानवा अपि दीर्यन्ते ध्रुवोऽप्यध्रुवजीवितः ।
अमरा अपि मार्यन्ते कैवास्था मादृशे जने ॥ १४७ ॥
दिशोऽपि हि न दृश्यन्ते देशोऽप्यन्यापदेशभाक् ।
शैला अपि विशीर्यन्ते कैवास्था मादृशे जने ॥ १४८ ॥
अद्यतेऽसत्तया द्यौश्च भुवनं चापि भुज्यते ।
धरापि याति वैधुर्यं कैवास्था मादृशे जने ॥ १४९ ॥
शुष्यन्त्यपि समुद्राश्च शीर्यन्ते तारका अपि ।
सिद्धा अपि विनश्यन्ति कैवास्था मादृशे जने ॥ १५० ॥
परमेष्ठ्यपि निष्ठावान् ह्रियते हरिरप्यजः ।
भवोऽप्यभावमायाति कैवास्था मादृशे जने ॥ १५१ ॥

पातो नाश उत्पात उद्भवः ॥ १४५ ॥ भावना देहादिविषया । एवं पुरुषार्थानुकूलानां दुर्लभत्वं तत्प्रतिकूलानां सौलभ्यं च प्रतिपाद्य फलितमाह—नीयत इति ॥ केवलं पुरुषार्थसाधनानुष्ठानविधुरे क्वापि पुरुषार्थपरिपन्थिनि मार्गे नीयते। विधिनेति शेषः ॥ १४६ ॥ ॥ १४७ ॥ प्रदीप्तशिरसो जलावगाहन इव संसारदावाग्निदग्धस्य मम नित्यानन्दावगाहे अत्युत्कटेच्छास्तीति दर्शयितुमागमापायिनो भावा इत्युक्तमनित्यत्वं प्रपञ्चयति—दिश इत्यादिना अश्राव्येत्यतः पूर्वेण ग्रन्थसंदर्भेण॥ स च स्पष्टार्थः। कानिचित्पदानि व्याख्यायन्ते। अन्यापदेशभागन्यशब्दभाक् । देशोऽप्यदेशशब्दभाग्भवतीत्यर्थः । अन्योपदेशभागिति कचित्तत्रान्यस्योपदेशमेव भजते न स्वयमेव प्रतीयते । नष्टत्वादित्यर्थः ॥ १४८ ॥ असत्तयेति पदच्छेदः । वैधुर्यं असत्ताम् ॥ १४९ ॥ १५० ॥ निष्ठावान्नाशवान् । 'निष्ठानिष्पत्ति-

कालोऽपि काल्यतेऽन्येन नियतिश्चापि नीयते ।
व्योमापि लीयतेऽनन्तं कैवास्था मादृशे जने ॥ १५२ ॥
अश्राव्यावाच्यतत्त्वेन दुर्दर्शज्ञानमूर्तिना ।
भुवनानि विडम्ब्यन्ते केनचिद्भ्रमदायिना ॥ १५३ ॥
अद्योत्सवोऽयमृतुरेष तथेह यात्रा
ते बान्धवाः सुखमिदं स विशेषभोगः ।
इत्थं मुधैव कलयन्सुविकल्पजाल-
मालोलपेलवमतिर्गलतीह लोकः ॥ १५४ ॥
इतस्ततो दूरतरं विहृत्य प्रविश्य गेहं दिवसावसाने ।
विवेकिलोकाश्रयसाधुवृत्तरिक्तेऽह्नि याते क उपैति निद्राम् ॥

नाशयोरि'त्यमरः ॥ १५१ ॥ अनेन परमात्मना काल्यते संह्रियते इत्यर्थः । नियतिर्दैवम् । पूर्वकर्मेत्यर्थः । मर्यादा वा । नियतिः ॥१५२॥ कालोऽपि काल्यतेऽन्येनेत्युक्तमन्यं दर्शयति—अश्राव्येति ॥ निर्विकल्पतया अश्राव्यावाच्यं तत्त्वं पारमार्थिकं स्वरूपं यस्य स तथा तेन । दुर्दर्शज्ञानमेव मूर्तिः स्वरूपं यस्य तेन । 'तं दुर्दर्शं गूढमनुप्रविष्टमि'ति श्रुतेः । विडम्ब्यन्ते उपहास्यन्ते । तत्त्वमाच्छाद्य कल्पितमेव दर्शयता विप्रलभ्यन्ते। मायाविनेत्यर्थः ॥१५३॥ अधिष्ठानभूतपरमात्मना दत्तं भ्रममेवावलम्ब्य भ्रामकं तमपरिज्ञाय नश्यति लोक इत्यनुक्रोशति—अद्योत्सव इति ॥ आलोलपेलवमतिः परिचञ्चलतनुबुद्धिर्गलति नश्यतीत्यर्थः ॥ १५४ ॥ एवमविवेकिनः संसरतोऽनुकुश्य तन्मध्ये वर्तमानो मुमुक्षुरेकान्तप्रियब्रह्मनिष्ठसंनिधौ श्रवणाद्यसंभवाच्चिन्ताक्रान्ताकुलितत्वात् सहजामपि निद्रां नाद्रियत इत्याह—इत इति ॥ विवेकिलोका ब्रह्मविदस्तदाश्रयं तदधीनं यत्सा-

पुत्रांश्च दाराश्च धनं च बुद्ध्या प्रकल्प्यते तात रसायनाभम् ।
सर्वं तु तन्नाम करोत्यथान्ते यन्नातिरम्या विषमूर्च्छनैव १५६
विद्राविते शत्रुजने समग्रे समागतायामभितश्च लक्ष्म्याम् ।
सेव्यन्त एतानि सुखानि यावत्तावत्समायाति कुतोऽपि मृत्युः
इतोऽन्यतश्चोपगतास्तथैव समानसङ्केतनिबद्धभावाः ।
यात्रा समासङ्गसमा नराणां कलत्रमित्रव्यवहारमायाः १५८
कल्पाभिधानक्षणजीविनो हि कल्पौघसंख्याकलने विरिञ्चयाः।
अतः कलामालिनि कालजाले लघुत्वदीर्घत्वधियोऽप्यसत्याः

धुवृत्तं श्रवणादिलक्षणं तेन रिक्ते शून्ये ॥ १५५ ॥ ननु सर्वो जनः पुत्रदारादिकममृतकल्पं संकल्प्य तत्र प्रवर्तते न श्रवणादौ तद्वत्तव प्रवृत्तिः किं न स्यादत आह—पुत्रेति ॥ नातिरम्येत्येकं पदम् । अनतिरम्या विषमूर्च्छनैवेति यत्तदन्ते अन्तकाले करोतीति संबन्धः । नामशब्दः कुत्सायाम् । यत्रातिरम्येति क्वचित्तत्रायमर्थः । यत्र यस्मिन् दुःखे सति विषमूर्च्छनाप्यतिरम्यैव भवति तद्दुःखं करोतीत्यर्थः ॥ १५६ ॥ क्वचित्तद्दुःखोदर्कमपि विषयसुखमननुभूय तत्संपादनप्रयासमनुभूय मृत्युग्रस्तो भवति विषयपर इत्याह—विद्रावित इति ॥ १५७ ॥ भोक्ता मृत्युवक्त्रमप्रविश्य यदा जीवति तदापि तस्य भ्रान्त्यात्मकः कलत्रादिव्यवहारोऽस्थिर इत्याह—इत इति ॥ समानेन साधारणेन संकेतेन निबद्धो भावोऽभिप्रायो भोगादिविषयो यासु व्यवहारमायासु तास्तथा । अयमर्थः—फाल्गुने मासि कृष्णचतुर्दश्यां विश्वेश्वरयात्रा विधेयेति संकेतेन सर्वसाधारणेन नराणां यथानिबद्धाभिप्रायाः क्षणिका यात्राः समासङ्गा भवन्ति तथा विवाहादिकालीनेन साधारणसंकेतेन निबद्धाभिप्रायाः कलत्रादिव्यवहारभ्रान्तयः क्षणिका भवन्तीति ॥ १५८ ॥ नन्वस्मदादि-

जनः कामासक्तो विविधकुकलाचेष्टनपरः
स तु स्वप्नेऽप्यस्मिञ्जगति सुलभो नाद्य सुजनः ।
क्रिया दुःखासङ्गा विधुरविधुरा नूनमखिला
न जाने नेतव्या कथमिव दशा जीवितमयी ॥ १६० ॥
दिवसास्ते महान्तस्ते संपदस्ताः क्रियाश्च ताः ।
सर्वं स्मृतिपथं यातं यामो वयमतः परम् ॥ १६१ ॥
ब्रह्मा विष्णुश्च रुद्रश्च सर्वा वा भूतजातयः ।
नाशमेवानुधावन्ति सलिलानीव वाडवम् ॥ १६२ ॥
आपदः क्षणमायान्ति संपदः क्षणमेव च ।
क्षणं जन्माथ मरणं मुने किमिव न क्षणम् ॥ १६३ ॥

भोक्तुर्भोक्तव्यभोगावसर एव मृत्युसंभवेऽप्यनेकसहस्रयुगजीविनां ब्रह्मादीनां नैवमित्यत आह—कल्पेति ॥ अनादौ संसारे कल्पौघसंख्याकलने कल्पसमूहसंख्यागणने क्रियमाणे विरिञ्च्याः कल्पाभिधानक्षणजीविनो हि कल्पनामकक्षणजीविनो भवन्ति तथाप्यस्मदादिलघुकालापेक्षया दीर्घजीवनो हि ब्रह्मेत्यत आह—अत इति ॥ लघुत्वादिकं यथा स्वप्ने मुहूर्ते वत्सरौघभ्रान्तिः तद्वज्जागरेऽपीति भावः ॥ १५९ ॥ एवं संसारवृत्तमावेद्य तन्निवृत्त्युपायालाभनिमित्तं खेदं दर्शयति—जन इति ॥ कुकलाः कुविद्याः किं सुजनलाभेन क्रिययैव पुरुषार्थः साध्यतामत आह—क्रियेति ॥ अखिला क्रिया दुःखासङ्गा विधुरविधुरा भवति । दुःखैरासमन्तात्सङ्गो यस्याः सा तथोक्ता विधुरविधुरा । पुरुषार्थेनात्यन्तं रिक्तेत्यर्थः ॥ १६० ॥ एवमनात्मवर्गस्यानित्यत्वं विस्तरेण प्रतिपादितं संक्षिप्याह—दिवसास्त इत्यादि श्लोकत्रयेण ॥ १६१ ॥ वाडवं वडवाग्निम् ॥ १६२ ॥ किमिव ।

अशूरेण हतः शूर एकेन बहवो हताः ।
प्राकृताः प्रभुतां याताः सर्वमावर्त्यते जगत् ॥ १६४ ॥
श्रीराम उवाच ॥
इति मे दोषदावाग्निदग्धे सपदि चेतसि ।
प्रस्फुरन्ति न भोगाश्च मृगतृष्णासरःस्विव ॥ १६५ ॥
नाभिनिन्दामि मरणं नाभिनिन्दामि जीवितम् ।
यथा तिष्ठामि तिष्ठामि तथैव विगतज्वरः ॥ १६६ ॥
अथ चेत्स्वच्छया बुद्ध्या मुनीन्द्र न चिकित्स्यते ।
भूयश्चित्तचिकित्सायास्तत्किलावसरः कुतः ॥ १६७ ॥
विषं विषयवैषम्यं न विषं विषमुच्यते ।
जन्मान्तरघ्ना विषया एकदेहहरं विषम् ॥ १६८ ॥
न सुखानि न दुःखानि न मित्राणि न बान्धवाः ।
न जीवितं न मरणं बन्धाय ज्ञस्य चेतसः ॥ १६९ ॥

किन्त्वित्यर्थः ॥ १६३ ॥ अशूरेणेति स्पष्टार्थः ॥ १६४ ॥ एवं बहुधा संसारदोषान्निरूप्य तत्फलं निरतिशयं वैराग्यमाह—इतीति ॥ ॥ १६५ ॥ भोगेषु इच्छाभावेऽपि जीवनादौ प्रीतिः स्यादत आह—नाभिनिन्दामीति ॥ १६६ ॥ ननु विषयप्रवणस्य चित्तस्य चिकित्सा वार्धके कर्तुमुचिता यौवने किमिति क्रियत इत्यत आह—अथेति ॥ बाल्यानन्तर्यमथशब्दार्थः । तत्तर्हि चित्तमिति वा । किलेत्यसंभावनायाम् ॥ १६७ ॥ विषयेषु एतच्चित्तं चिकित्सनीयमेवेति कुतस्तत्राह—विषमिति ॥ विषयेषु वैषम्यं शोभनाशोभनत्वलक्षणरागद्वेषहेतुभूतम् ॥१६८॥ ननु ज्ञानवैराग्यौषधाभ्यां चिकित्सितचित्तेन किं फलं प्राप्तं येन त्वया चित्तचिकित्सा क्रियत इत्यत आह—न सुखा-

आयुर्वायुविघट्टिताभ्रपटलीलोलाम्बुवद्भङ्गुरं
भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चलाः।
लोलो यौवनलालनाजलरयश्चेत्याकलय्याद्रुतं
मुद्रैवाद्य मयार्पिता ननु दृढा चित्ते चिरं शान्तये ॥१७०॥
नावस्थितिमुपायाति न च याति यथेप्सितम्।
बुद्धिर्जीवेश्वरायत्ता कान्तेव प्रियसद्मनि ॥ १७१ ॥
अतोऽतुच्छमनायासमनुपाधि गतभ्रमम्।
किं तत्स्थितिपदं साधु यत्र शङ्का न विद्यते ॥ १७२ ॥

नीति ॥ ज्ञस्य ब्रह्मविदः ॥ १६९ ॥ चित्तचिकित्सायाः साफल्यं दर्शयित्वा फलितमाह—आयुरिति ॥ वितानमुल्लोचः। सौदामिनी विद्युत्। यौवनलालना यौवनोपलालनं सैव जलरयः जलवेगः। क्वचिल्लोलेति स्त्रीलिङ्गनिर्देशः। तत्र जलरय इति भिन्नं पदम्। जलरयो लोलत्वे दृष्टान्तत्वेनोच्यते। विषयधावनवारणाय विवेक-लोहकारकृता वैराग्यमुद्रा चित्तेऽर्पितेत्यर्थः ॥१७०॥ एवं मुद्रार्पिता चेत् कृतं कृत्यमतःपरं किं तवावशिष्टं तत्राह—नावस्थितिमिति ॥ जीव एव विवेकित्वेनेश्वरो नियन्ता तदायत्ता तदधीना जीवस्येश्वरैकत्वप्रवणा वा बुद्धिर्निर्दुःखे पदे अवस्थितिं नोपयाति। कान्तापक्षे जीवेश्वरः प्राणनाथो भर्ता। सापि प्रियसद्मनि भर्तृगृहे स्वेच्छास्थितिं भयादिना नोपयाति। यथेप्सितं च वहिर्न याति। चित्तेति क्वचित्तत्रापि बुद्धि-रेव विवक्षिता। विमले क्वचित्पदे चित्तविश्रान्तिरेव शिष्टेति भावः ॥ ॥ १७१ ॥ चिन्तावान्स्थितिस्थानमतिवादाय पृच्छति—अत इति ॥ यतः स्थितिं न याति चित्तमतः पृच्छामीत्यध्याहारः। अतुच्छं परमार्थसद्रूपं अनायासं निर्दुःखम्। अनायासत्वे हेतुर्गतभ्रममिति।

कथं च धीरवर्याग्नौ पततापि न दह्यते ।
पावके पारदेनेव वासनारसशालिना ॥ १७३ ॥
यस्मात्किल महाबाहो व्यवहारक्रियां विना ।
न स्थितिर्दग्धसंसारे विनाम्बुजलधाविव ॥ १७४ ॥
यथा जानासि भगवंस्तथा मोहनिवृत्तये ।
ब्रूहि मे साधवो येन नूनं निर्दुःखतां गताः ॥ १७५ ॥
अथवा तादृशी युक्तिर्यदि ब्रह्मन्न विद्यते ।
न वक्ति मम वा कश्चिद्विद्यमानामपि स्फुटम् ॥ १७६ ॥

गतभ्रमत्वे हेतुरनुपाधीति । उपाधिर्मनः । मनो हि सर्वभ्रान्तिमूलम् । तथाच प्रागुक्तं वक्ष्यति च—'आदौ मनस्तदनुबन्धविमोक्षदृष्टी पश्चात्प्रपञ्चरचना भुवनाभिधाने'ति । साधु शोभनम् । आनन्दरूपमित्यर्थः । यत्र पदे पुनर्दुःखसंबन्धशङ्का न विद्यते तदिति संबन्धः ॥ १७२ ॥ चित्तविश्रान्तिस्थानं पृष्ट्वा चित्तविक्षेपेऽपि दुःखासंस्पर्शोपायं पृच्छति—कथं चेति ॥ धीरवर्येति संबोधनम् । दाहप्राप्तिं दर्शयितुं वासनारसशालिनेति विशेषणम् । रस्यत इति रस आज्यादिः वासनैव रसस्तेन शालते शोभते पुरुष इति तथा तेन । अग्नौ संसाराख्ये पततापि पुरुषेण संसाराग्न्यर्चिर्भिः कथं न दह्यते केनोपायेन न दह्यते । पारदो रसः । 'क्षीराकारोऽथ चपलो रसः सूतश्च पारद'इत्यमरः । रसेन रसशालिनेति पाठे रसेनेति पारदशब्दार्थकथनम् । पारदो दुर्दाह इति प्रसिद्धिः ॥ १७३ ॥ संसारे निर्व्यापारतयावस्थानमेव दाहोपाय इत्यत आह—यस्मादिति ॥ अम्बुस्पर्शं विना समुद्रमध्ये स्थितिर्यथा न संभवति तद्वदित्यर्थः ॥१७४॥ यथा जानासीत्यादिग्रन्थसमूहः स्पष्टार्थः ॥ १७५ ॥ १७६ ॥

स्वयं चैव न चाप्नोमि तां विश्रान्तिमनुत्तमाम् ।
तदहं त्यक्तसंदेहो निरहंकारतां गतः ॥ १७७ ॥
न भोक्ष्ये न पिबाम्यम्बु नातः परिदधेऽम्बरम् ।
करोमि नाहं व्यापारं स्नानदानाशनादिकम् ॥ १७८ ॥
न च तिष्ठामि कार्येषु संपत्स्वापद्दशासु च ।
न किंचिदभिवाञ्छामि देहत्यागादृते मुने ॥ १७९ ॥
केवलं विगताशङ्कं निर्ममो गतमत्सरः ।
मौनमेवाधितिष्ठामि लिपिकर्मस्विवार्पितः ॥ १८० ॥

वाल्मीकिरुवाच ॥

इत्युक्तवानमलशीतकराभिरामो
रामो महत्तरविवेकविकाशिचेताः ।
तूष्णीं बभूव पुरतो महतां घनानां
केकारवश्रमवशादिव नीलकण्ठः ॥ १८१ ॥

इति श्रीमोक्षोपाये वैराग्यप्रकरणे जगद्दोषप्रकाशो नाम द्वितीयः सर्गः ॥२॥

---

## तृतीयः सर्गः

वाल्मीकिरुवाच ॥

वदत्येवं महामोहविनिवृत्तिकरं वचः ।
रामे राजीवपत्राक्षे तस्मिन्राजकुमारके ॥ १ ॥

॥ १७७ ॥ १७८ ॥ १७९ ॥ १८० ॥ केका मयूरध्वनिः, नीलकण्ठो मयूरः ॥ १८१ ॥ इति श्रीपरमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौ वासिष्ठचन्द्रिकायां द्वितीयः सर्गः ॥२॥

अतीतग्रन्थसंदर्भेण नित्यानित्यवस्तुविवेकतो वैराग्यं प्रतिपादितं तस्य विद्वज्जनमनोहरत्वं खेचरदुर्लभत्वं चाह रामस्य स्तुत्यर्थम्—

सर्वे बभूवुस्तत्रस्था विस्मयोत्फुल्ललोचनाः ।
भिन्नाम्बरा देहरुहैर्गिरः श्रोतुमिवोद्धुरैः ॥ २ ॥
अथ तूष्णीं स्थितवति रामे राजीवलोचने ।
साधुवादगिरा सार्धं सिद्धसङ्घसमीरिता ॥ ३ ॥
वितानकसमा व्योम्नः पौष्पी वृष्टिः पपातह ।
मुहूर्तस्य चतुर्भागाच्छान्ते कुसुमवर्षणे ।
इमान्सिद्धगणालापाञ्शुश्रुवुस्ते समागताः ॥ ४ ॥
आकल्पं सिद्धसेनासु भ्रमद्भिरभितो दिवम् ।
अपूर्वमिदमस्माभिः श्रुतं श्रुतिरसायनम् ॥ ५ ॥
उपशमामृतसुन्दरमादरादधिगतोत्तमतापदमेष यत् ।
कथितवाननुचितं रघुनन्दनः सपदि तेन वयं प्रतिबोधिताः ॥६॥

भरद्वाज उवाच ॥

पावनस्याथ वचसः प्रोक्तस्य रघुकेतुना ।
निर्णयं श्रोतुमिच्छामि वक्ष्यमाणं महात्मभिः ॥ ७ ॥

वदत्येवमित्यादिसार्धैः पञ्चभिः ॥ श्रुतं श्रुतिरसायनमित्यन्त उत्तरग्रन्थसंदर्भः स्पष्टार्थः ॥ १ ॥ देहरुहै रोमभिः । उद्धुरैरुन्मुखैः ॥२॥ ॥ ३ ॥ ४ ॥ ५ ॥ वीतरागोक्तिः सारार्थविषया श्रोतृषु सद्यः फलतीत्यभिप्रायेणाह—उपशमेति ॥ उत्तमतायाः पदं स्थानं परमपुरुषार्थः। अधिगतं प्राप्तं उत्तमतापदं येन वचसा तत्तथा । ज्ञानार्थिना गन्तव्याः सन्तः सद्भिश्च स सम्यक्परिग्राह्यस्तेन च सर्वानुकूल्येन तत्र वर्तितव्यमिति प्रतिपादितोऽर्थः ॥ ६ ॥ पावनस्येत्यादिः इति नादेनेत्यतः प्राक्तनो ग्रन्थसमूहः स्पष्टार्थः । क्वचित्किंचिद्दुर्बोधं तद्व्याख्यायते । रघुकेतुना रथस्य केतुवद्रघूणा-

वाल्मीकिरुवाच ॥

इत्युक्त्वा सा समस्तैव व्योमावासनिवासिनी ।
तां पपात सभां तत्र दिव्या मुनिपरम्परा ॥ ८ ॥

अथास्यां सिद्धसेनायां पतन्त्यां नभसो रसाम् ।
उत्तस्थौ मुनिसंपूर्णा तदा दाशरथी सभा ॥ ९ ॥

वसिष्ठविश्वामित्रौ तान्पूजयामासतुः क्षणात् ।
वसिष्ठमिश्वामित्रौ ते पूजयामासुरादरात् ॥ १० ॥

सर्वादरेण सिद्धौघान्पूजयामास भूपतिः ।
सिद्धौघा भूपतिं चैव कुशलप्रश्नवार्तया ॥ ११ ॥

वचोभिः पुष्पवर्षेण साधुवादेन चाभितः ।
रामं ते पूजयामासुः पुरः प्रणतमास्थितम् ॥ १२ ॥

मुनय ऊचुः ॥

अहो बत कुमारेण कल्याणगुणशालिनी ।
वागुक्ता परमोदारा वैराग्यरसगर्भिणी ॥ १३ ॥

अस्मिन्नुद्दामदौरात्म्यदैवनिर्माणनिर्मिते ।
द्विजेन्द्रा दग्धसंसारे सारो ह्यत्यन्तदुर्लभः ॥ १४ ॥

सकललोकचमत्कृतिकारिणोऽप्यभिमतं यदि राघवचेतसः ।
फलति नो तदिमे वयमेव हि स्फुटतरं मुनयो हतबुद्धयः ॥१५॥

मलंकारेण ॥ ७ ॥ ८ ॥ रसां भूमिम् ॥९॥१०॥११॥१२॥१३॥ उद्दामदौरात्म्यश्चासौ दैवनिर्माणनिर्मितश्चेति तथोक्तस्तस्मिन् संसारे हि निरङ्कुशेन दौरात्म्येन युक्तो भवत्यमानुषव्यापारनिर्मितश्च । दैवनिर्माणनिर्मित इत्यनेनानिर्वाच्यत्वं सूचितम् ॥ १४ ॥ १५ ॥

इति नादेन महता वचस्युक्ते महाजनैः ।
राममग्रगतं प्रीत्या विश्वामित्रोऽभ्यभाषत ॥ १६ ॥

विश्वामित्र उवाच ॥

न राघव तवास्त्यन्यज्ज्ञेयं ज्ञानवतां वर ।
स्वयैव सूक्ष्मया बुद्ध्या सर्वं विज्ञातवानसि ॥ १७ ॥
भगवद्व्यासपुत्रस्य शुकस्येव मतिस्तव ।
विश्रान्तिमात्रमेवान्तर्ज्ञातज्ञेयेऽप्यपेक्षते ॥ १८ ॥

श्रीराम उवाच ॥

भगवद्व्यासपुत्रस्य शुकस्य भगवन्कथम् ।
ज्ञेयेऽप्यादौ न विश्रान्तं विश्रान्तं च धिया पुनः ॥ १९ ॥

विश्वामित्र उवाच ॥

आत्मोदन्तसमं राम वक्ष्यमाणमिदं मया ।
शृणु व्यासात्मजोदन्तं जन्मनामन्तकारणम् ॥ २० ॥
तस्य चिन्तयतो लोकयात्रामेवमिमां हृदि ।
तवेव किल सद्बुद्धेर्विवेक उदभूदयम् ॥ २१ ॥
तेनासौ स्वविवेकेन स्वयमेव महामनाः ।
विचार्य सुचिरं चारु यत्सत्यं तदवाप्तवान् ॥ २२ ॥
स्वयं प्राप्ते परे वस्तुन्यविश्रान्तमनाः स्थितः ।
इदं वस्त्विति विश्वासं नासावात्मन्युपाययौ ॥ २३ ॥

इति नादेनेत्यादिः आ प्रकरणसमाप्तेर्ग्रन्थः स्पष्टार्थः । तत्र कानिचित्पदानि व्याख्यायन्ते ॥ १६ ॥ १७ ॥ १८ ॥ ज्ञेयेऽपीत्यपिशब्दो विरोधे सर्वक्लेशरहिते प्रमाणव्यापारात्प्रागेव स्वतःप्रकाशमानपरमानन्दरूपेऽपि धिया न विश्रान्तमिति विरुद्धम् ॥ १९ ॥ उदन्तो

केवलं विररामास्य चेतो विगतचापलम् ।
भोगेभ्यो भूरिभङ्गेभ्यो धराभ्य इव चातकः ॥ २४ ॥
एकदा सोऽमलप्रज्ञो मेरावेकान्तमास्थितम् ।
पप्रच्छ पितरं भक्त्या कृष्णद्वैपायनं मुनिम् ॥ २५ ॥
संसाराडम्बरमिदं कथमभ्युत्थितं मुने ।
कथं च प्रशमं याति कियत्कस्य कदेति च ॥ २६ ॥
इति पृष्टेन मुनिना व्यासेनाखिलमात्मजे ।
यथावदमलं प्रोक्तं वक्तव्यं विदितात्मना ॥ २७ ॥
अज्ञासिषं पूर्वमेतदहमित्यथ तत्पितुः ।
स शुकः शुभया बुद्ध्या न वाक्यं बहमन्यत ॥ २८ ॥
व्यासोऽपि भगवाञ्ज्ञात्वा पुत्राभिप्रायमीदृशम् ।
प्रत्युवाच पुनः पुत्रं नाहं जानामि तत्त्वतः ॥ २९ ॥
जनको नाम भूपालो विद्यते वसुधातले ।
यथावद्वेत्त्यसौ वेद्यं तस्मात्सर्वमवाप्स्यसि ॥ ३० ॥
पित्रेत्युक्तः शुकः प्रायात्सुमेरोर्वसुधातलम् ।
विदेहनगरीं प्राप जनकेनाभिपालिताम् ॥ ३१ ॥
आवेदितोऽसौ याष्टीकैर्जनकाय महात्मने ।
द्वारि व्याससुतो राजञ्शुकोऽत्र स्थितवानिति ॥ ३२ ॥
जिज्ञासार्थं शुकस्यासावास्तामेवेत्यवज्ञया ।
उक्त्वा बभूव जनकस्तूष्णीं सप्तदिनान्यथ ॥ ३३ ॥

वृत्तान्तः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ चातको भूमिस्थोदकपानविमुखः पक्षिविशेषः । धाराभ्यो वर्षधाराभ्यः चातकस्तुष्यनन्तरं यथा वर्षधाराभ्य उपरमतेस्म तथेत्यर्थः ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥ २९॥ ३०॥ ३१ ॥ याष्टीकैर्यष्ट्यायुधैः

ततः प्रवेशयामास जनकः शुकमङ्गणम् ।
तत्राहानि स सप्तैव तथैवास स उन्मनाः ॥ ३४ ॥
ततः प्रवेशयामास जनकोऽन्तःपुरं शुकम् ।
राजा न दृश्यते तावदिति सप्त दिनानि तम् ॥ ३५ ॥
तत्रोन्मदाभिः कान्ताभिर्भोजनैर्भोगसंचयैः ।
जनको लालयामास शुकं शशिनिभाननम् ॥ ३६ ॥
ते भोगास्तानि दुःखानि व्यासपुत्रस्य तन्मनः ।
नाजह्रुर्मन्दपवनो बद्धपीठमिवाचलम् ॥ ३७ ॥
केवलं सुमनाः स्वच्छो मौनी मुदितमानसः ।
संपूर्ण इव शीतांशुरतिष्ठदमलः शुकः ॥ ३८ ॥
परिज्ञातस्वभावं तं शुकं स जनको नृपः ।
आनीय मुदितात्मानमवलोक्य ननाम ह ॥ ३९ ॥
निःशेषितजगत्कार्य प्राप्ताखिलमनोरथ ।
किमीहितं तवेत्याशु कृतस्वागतमाह तम् ॥ ४० ॥

शुक उवाच ॥

संसाराडम्बरमिदं कथमभ्युत्थितं गुरो ।
कथं प्रशममायाति यथावत्कथयाशु मे ॥ ४१ ॥

॥ ३२ ॥ उन्मनाः जनकदर्शने सोत्कण्ठः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ बद्धपीठं बद्धाधिष्ठानम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ निःशेषितेति ॥ जगति श्रेयसे यानि कार्याणि सन्ति तानि निःशेषितानि अनवशेषितानि येन स तथा। निरवशेषितसर्वकार्य इति वार्थः॥४०॥ संसाराडम्बरं संसारसंरम्भः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

विश्वामित्र उवाच ॥

जनकेनेति पृष्टेन शुकस्य कथितं तदा ।
तदेव यत्पुरा प्रोक्तं तस्य पित्रा महात्मना ॥ ४२ ॥

शुक उवाच ॥

स्वयमेव मया पूर्वमेतज्ज्ञातं विवेकतः ।
एतदेव च पृष्टेन पित्रा मे समुदाहृतम् ॥ ४३ ॥
भवताप्येष एवार्थः कथितो वाग्विदां वर ।
एष एव च वाक्यार्थः शास्त्रेषु परिदृश्यते ॥ ४४ ॥
यथायं स्वविकल्पोत्थः स्वविकल्पपरिक्षयात् ।
क्षीयते दग्धसंसारो निःसार इति निश्चयः ॥ ४५ ॥
तत्किमेतन्महाबाहो सत्यं ब्रूहि ममाचलम् ।
त्वत्तो विश्राममाप्नोति चेतसा भ्रमता जगत् ॥ ४६ ॥

जनक उवाच ॥

नातः परतरः कश्चिन्निश्चयोऽस्त्यपरो मुने ।
स्वयमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतम् ॥ ४७ ॥
अव्युच्छिन्नचिदात्मैकः पुमानस्तीह नेतरत् ।
स्वसंकल्पवशाद्बद्धो निःसंकल्पश्च मुच्यते ॥ ४८ ॥
तेन त्वया स्फुटं ज्ञातं ज्ञेयं यस्य महात्मनः ।
भोगेभ्योऽप्यरतिर्जाता दृश्याद्वा सकलादिह ॥ ४९ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ अव्युच्छिन्नोऽविनाशी कूटस्थः नित्यः स चासौ चिदात्मा चेति तथा स्वतोऽद्वितीयोऽप्यात्मा सद्वितीयतया स्वसंकल्पवशाद्बद्धो भवति । तथाचोक्तं सुरेश्वराचार्यैः—'अभूताभिनिवेशेन स्वात्मानं वञ्चयत्यसौ । असत्यपि द्वितीयेऽर्थे सोमशर्म-

प्राप्तं प्राप्तव्यमखिलं भवता पूर्णचेतसा ।
न दृश्ये यतसि ब्रह्मन्मुक्तस्त्वं भ्रान्तिमुत्सृज ॥ ५० ॥

अनुशिष्टः स इत्येवं जनकेन महात्मना ।
विशश्राम शुकस्तूष्णीं स्वस्थे परमवस्तुनि ॥ ५१ ॥

वीतशोकभयायासो निरीहश्छिन्नसंशयः ।
जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम् ॥ ५२ ॥

तत्र वर्षसहस्राणि निर्विकल्पसमाधिना ।
दश स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ॥ ५३ ॥

व्यपगतकलनाकलङ्कशुद्धः
स्वयममलात्मनि पावने पदेऽसौ ।
सलिलकण इवाम्बुधौ महात्मा
विगलितवासनमेकतां जगाम ॥ ५४ ॥

विश्वामित्र उवाच ॥

तस्य व्यासतनूजस्य मलमात्रापमार्जनम् ।
यथोपयुक्तं ते राम तावदेवोपयुज्यते ॥ ५५ ॥

पिता यथे'ति । निःसंकल्पश्च मुच्यते ॥ ४८ ॥ ४९ ॥ ५० ॥ अनुशिष्टः ज्ञानप्राप्त्या स्वस्मिन्प्रतिविम्बकल्पे जीवेऽधिष्ठानतया स्थितः स्वस्थस्तस्मिन् ॥ ५१ ॥ ५२ ॥ ५३ ॥ व्यपगतेति ॥ कलना संकल्पः सैव कलङ्कोऽपवादः 'कलङ्कोऽङ्कापवादयो'रित्यमरः । व्यपगतः कलनाकलङ्को यस्मात्स तथा स चासौ शुद्धश्च । व्यपगतकलनाकलङ्केति तूलाज्ञाननिवृत्तिरुक्ता । शुद्ध इति मूलाज्ञाननिवृत्तिः । ब्रह्माप्यनाद्यागन्तुकमलद्वयरहितमित्याह—अमलात्मनि पावन इति

ज्ञातज्ञेयस्य मनसो नूनमेतद्विलक्षणम् ।
न स्वादन्ते समग्राणि भोगवृन्दानि यत्पुनः ॥ ५६ ॥
भोगभावनया याति बन्धो दार्ढ्यमघस्तुजः ।
तयोपशान्तया याति बन्धो जगति तानवम् ॥ ५७ ॥
वासनातानवं राम मोक्ष इत्युच्यते बुधैः ।
पदार्थवासनादार्ढ्यं बन्ध इत्यभिधीयते ॥ ५८ ॥
यशःप्रभृतिना यस्मै हेतुनैव विना पुनः ।
भोगा इह न रोचन्ते स जीवन्मुक्त उच्यते ॥ ५९ ॥
रामो यदेतज्जानाति वस्त्वस्तीत्येव सन्मुखात् ।
आकर्ण्य चित्तविश्रान्तिमाप्नोत्येव मुनीश्वराः ॥ ६० ॥
अत्रास्य चित्तविश्रान्त्यै राघवस्य महात्मनः ।
युक्तिं कथयतु श्रीमान्वसिष्ठो भगवानयम् ॥ ६१ ॥
रघूणामेष सर्वेषां प्रभुः कुलगुरुः सदा ।
सर्वज्ञः सर्वसाक्षी च त्रिकालामलदर्शनः ॥ ६२ ॥
वसिष्ठ भगवन्पूर्वं कच्चित्स्मरसि यत्स्वयम् ।
आवयोर्वैरशान्त्यर्थं श्रेयसे च महाधिया ॥ ६३ ॥
उपदिष्टं भगवता ज्ञानं पद्मभुवा मुहुः ।
तदेवोपदिशाद्य त्वं रामायान्ते निवासिने ॥ ६४ ॥

॥ ५४ ॥ ५५ ॥ समग्राणि भोगवृन्दानि पुनर्न स्वादन्ते रोचन्त इति यत्तदेतज्ज्ञातज्ञेयस्य मनसो लक्षणं हि नूनं निश्चयः । 'नूनं तर्केऽर्थनिश्चय' इत्यमरः ॥ ५६ ॥ ५७ ॥ ५८ ॥ कीर्तिलाभादिना निमित्तेन यस्मै भोगा न रोचन्ते स जीवन्मुक्तो माभूदित्याह—यशःप्रभृतिनेति ॥ यशःप्रभृतिना हेतुना विनैवेति ॥ ५९ ॥ ६० ॥

तज्ज्ञानं च स शास्त्रार्थस्तद्वैदग्ध्यमखण्डितम् ।
सुशिष्याय विरक्ताय साधो यदुपदिश्यते ॥ ६५ ॥
अशिष्यायाविरक्ताय यत्किंचिदुपदिश्यते ।
तत्प्रयात्यपवित्रत्वं गोक्षीरं श्वदृताविव ॥ ६६ ॥
इत्युक्ते गाधिपुत्रेण व्यासनारदपूर्वकाः ।
मुनयस्ते तमेवार्थं साधुसाध्वित्यपूजयन् ॥ ६७ ॥
अथोवाच महातेजा राज्ञः पार्श्वे व्यवस्थितः ।
ब्रह्मेव ब्रह्मणः पुत्रो वसिष्ठो भगवान्मुनिः ॥ ६८ ॥
मुने यदादिशसि मे तदविघ्नं करोम्यहम् ।
कः समर्थः समर्थोऽपि सतां लङ्घयितुं वचः ॥ ६९ ॥
स्मराम्यखण्डितं सर्वं संसारभ्रमशान्तये ।
निषधाद्रौ पुरा प्रोक्तं यज्ज्ञानं पद्मयोनिना ॥ ७० ॥

वाल्मीकिरुवाच ॥

इति निगदितवानसौ महात्मा परिकरबन्धगृहीतवक्तृतेजाः ।
अकथयदिदमज्ञतोपशान्त्यै परमपदैकविबोधनं वसिष्ठः ॥ ७१ ॥

इति श्रीवाल्मीकीये मोक्षोपाये वैराग्यप्रकरणे तृतीयः सर्गः ॥ ३ ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ दृतिर्भस्त्रा ॥ ६६ ॥ ॥ ६७ ॥ ६८ ॥ आदिशसि आज्ञापयसि ॥ ६९ ॥ ७० ॥ इतीति ॥ परिकरबन्धेति ॥ अभिवदनोपयोगिनो ये परिकरास्तेषां परिकराणां बन्धेन बन्धनेन गृहीतं स्वीकृतं वक्तृतेजो येन सः परिकरबन्धगृहीतवक्तृतेजाः ॥ ७१ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीसदात्मसुखकृतौ वासिष्ठचन्द्रिकायां वैराग्यप्रकरणं नाम तृतीयः सर्गः ॥ ३ ॥

संपूर्णमिदं वैराग्यप्रकरणम् ।

ॐश्रीरामाय नमः ॥

## मुमुक्षुव्यवहारप्रकरणम्—

श्रीवसिष्ठ उवाच ॥

सर्वदा सर्वमेवेह संसारे रघुनन्दन ।
सम्यक्प्रयुक्तात्सर्वेण पौरुषात्समवाप्यते ॥ १ ॥
उच्छास्त्रं शास्त्रितं चेति द्विविधं पौरुषं स्मृतम् ।
तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ २ ॥
आबाल्यादलमभ्यस्तैः शास्त्रसत्सङ्गमादिभिः ।
गुणैः पुरुषयत्नेन स्वार्थः संप्राप्यते हितः ॥ ३ ॥

श्रीराम उवाच ॥

प्राक्तनं वासनाजालं नियोजयति मां यथा ।
तथैव तिष्ठामि मुने कृपणः किं करोम्यहम् ॥ ४ ॥

पूर्वप्रकरणेन नित्यानित्यवस्तुविवेकतो वैराग्यं शमाद्यङ्कुरबीजं मुमुक्षुफलपर्यवसायि प्राधान्येन प्रतिपादितम् । इदानीं मुमुक्षुव्यवहारः शमादीतिकर्तव्यताको मनननिदिध्यासनाङ्गकश्रवणलक्षण उत्तरप्रकरणेन प्रतिपाद्यते । प्रसङ्गागतं च किंचित्किंचित् । तत्राद्यश्लोकेन दैवाधीनं सर्वं पौरुषं व्यर्थमतो विचारविषयप्रयत्नपरता नाश्रयणीयेतीतरजनशङ्कागमं निमित्तीकृत्य परिहरति भगवान्वसिष्ठः—सर्वमेवेति ॥ पौरुषं पुरुषकारः । उद्योग इत्यर्थः । एवशब्दस्य समवाप्यत इत्यनेनापि संबन्धः ॥ १ ॥ पौरुषात्सर्वं समवाप्यते चेत् अशास्त्रीयादपि पौरुषात्परमार्थप्राप्तिः स्यादतस्तदपि मुमुक्षुणानुष्ठेयं स्यादित्याशङ्क्याह—उच्छास्त्रमिति ॥ २ ॥ परमार्थाय शास्त्रितमित्येतत्प्रपञ्चयति—आबाल्यादिति ॥ ३ ॥ वासनापारतन्त्र्यात् स्वतन्त्रप्रवृत्त्या स्वार्थः संप्राप्तुं न शक्यत इत्याक्षिपति—प्राक्तनमिति

वासिष्ठ उवाच ॥

अतएव हि हे राम श्रेयः प्राप्नोषि शाश्वतम् ।
स्वप्रयत्नोपनीतेन पौरुषेणैव नान्यथा ॥ ५ ॥
द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते ।
प्राक्तनो विद्यते राम द्वयोरेकतरोऽथवा ॥ ६ ॥
वासनौघेन शुद्धेन तत्र चेदपनीयसे ।
तत्क्रमेण शुभेनैव पदं प्राप्स्यसि शाश्वतम् ॥ ७ ॥
अथ चेदशुभो भावस्त्वां योजयति संकटे ।
प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता स्वयम् ॥ ८ ॥
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ ९ ॥

॥ ४ ॥ परिहरति—अत इति ॥ अतएव प्राक्तनवासनाया अनियोज्यत्वादेव । स्वप्रयत्नोपनीतेन पौरुषेणैव पुरुषव्यापारेणैव श्रेयः प्राप्नोषि । अयमभिप्रायः—न पूर्ववासना तीव्रवायुवत्पुरुषं प्रेरयति, किंत्विच्छोपसंहारमुखेन स्वातन्त्र्यं प्रयच्छति, तथासति स्वतन्त्रप्रवृत्त्या स्वार्थः संप्राप्तुं शक्य इति ॥ ५ ॥ स्वप्रयत्नोपनीतेन पौरुषेणैव श्रेयःप्राप्तिः केन प्रकारेणेत्याशङ्क्य विभागेन प्राक्तनवासनाजालसद्भावं दर्शयंस्तत्रापि प्रकारं दर्शयति—द्विविध इत्यादिना ॥ शुभाशुभवासनासमूहयोर्मध्येऽन्यतरस्यात्यल्पत्वेनाविद्यमानकल्पकत्वाभिप्रायेण द्वयोरेकतरोऽथवेत्युक्तम् ॥ ६ ॥ तत्र तयोर्व्यूहयोर्मध्ये । तत्तर्हीत्यर्थः ॥ ७ ॥ ८ ॥ भावशब्देन वासनौघोऽत्र विवक्षितः । शुभाशुभवासनासमूहयोरन्यतरेण पुंसः प्रेर्यत्वे निःश्रेयसः प्राप्तिप्रकारमभिधायोभाभ्यां प्रेर्यत्वेऽपि तमाह—शुभाशुभाभ्यामिति ॥ ९ ॥

अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ।
स्वं मनः पुरुषार्थेन बलेन बलिनां वर ॥ १० ॥

अशुभाच्चालितं याति शुभं तस्मादपीतरत् ।
जन्तोश्चित्तं तु शिशुवत्तस्मात्तच्चालयेद्बलात् ॥ ११ ॥

समता सान्त्वनेनाशु न द्रागिति शनैः शनैः ।
पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ॥ १२ ॥

प्रागभ्यासवशाज्जातो यदा ते वासनोदयः ।
तदाभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन ॥ १३ ॥

उक्तमर्थं प्रपञ्चयति—अशुभेष्विति ॥ पुरुषार्थहेतुनेत्यर्थः ॥ १० ॥ शुभेष्ववतारणाय योग्यतां दर्शयन्नुक्तं निगमयति—अशुभादिति ॥ शुभो विषयः पौरुषमनपेक्ष्यैव स्वयमेवाशुभात्मनश्चालयति अतः पौरुषं व्यर्थमित्याशङ्क्याहेत्येवमवतारयन्ति केचिदिमं श्लोकम् ॥ ११ ॥ चित्तस्य शिशुसमत्वे सति तदुचितं चालनप्रकारं दर्शयति—समतेति ॥ हे चित्तबालक, नामतोऽर्थतश्च विषादप्यधिकान् विषयान् मा गृहाण । प्रियाप्रियविषयप्राप्तौ हर्षविषादरहिततालक्षणसमतां निरतिशयसुखप्राप्तिकामाश्रयेत्येवं समतासान्त्वनेन । द्राक्शब्दो द्रुतार्थः । 'सद्यो द्राक् मङ्क्षु सपदि द्रुत' इत्यमरः ॥ १२ ॥ अशुभाच्चित्तचालनाभ्यासस्य साफल्यं कदा भवतीत्यत आह—प्रागिति ॥ अस्मिन्नपि जन्मन्यत्यभ्यासं कुर्वतस्ते प्रागभ्यासवशात् प्राग्जन्मनोऽभ्यासवशात् अथवा प्राक् पूर्ववयसि आबाल्यादलमभ्यस्तैरित्युक्तं । द्रागिति क्वचित् । नन्वस्मिन्पक्षे न द्रागिति शनैःशनैरिति पूर्वश्लोकोक्तं विरुध्येतेति चेन्न । चित्तनिग्रहारम्भदशापेक्षया तथा विहितत्वात्तदुत्तरावस्थापेक्षया द्रागित्यभिधानात् ॥ १३ ॥ अशु-

सन्दिग्धायामपि भृशं शुभामेव समाहर ।
शुभायां वासनावृद्धौ तात दोषो न कश्चन ॥ १४ ॥
अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः ।
गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर ॥ १५ ॥
ततः पक्वकषायेण नूनं विज्ञातवस्तुना ।
शुभोऽप्यसौ परित्याज्यो वासनौघो निरोधिना ॥ १६ ॥
यदतिसुभगमार्यसेवितं तच्छुभमनुसृत्य मनोज्ञभावबुद्ध्या ।
अधिगमय पदं सदा विशोकं तदनु तदप्यवमुच्य साधु तिष्ठ ॥१७॥

वसिष्ठ उवाच ॥

अपुनर्ग्रहणायान्तस्त्यक्त्वा संसारभावनाम् ।
संपूर्णौ शमसंतोषौ चादायोदारया धिया ॥ १८ ॥

भवासनायाः शुभवासनात आधिक्ये तत्साम्ये च कर्तव्यमभिधाय तत्सन्देहेऽपि तदाह—सन्दिग्धायामिति ॥ शुभायामिति स्पष्टार्थः ॥ १४ ॥ ननु शुभवासनावृद्धौ दोषो नास्तीति कथम् । तस्या अप्यविद्याकार्यत्वेन दोषावहत्वसंभवादित्याशङ्क्यात्मसाक्षात्कार-पर्यन्तमादेया ततः परं त्याज्येत्याह—अव्युत्पन्नेत्यादिश्लोकत्रयेण ॥ अज्ञातं तत्पदं ब्रह्मस्वरूपं येन स तथा । तुशब्दोऽवधारणे । 'तु स्याद्भेदेऽवधारणे' इत्यमरः ॥ १५ ॥ पक्वकषायेण दग्धरागादिना विवेकिनेत्यर्थः ॥ १६ ॥ अतिशोभनो भगो माहात्म्यं यस्य तद-तिसुभगम् । शुभवासनाजालमनुसृत्य मनो विशोकं पदमभिगमयेति संबन्धः । अधिगमय प्रापयेत्यर्थः । मनः ज्ञभावबुद्ध्येति पदच्छेदः । तत्र ज्ञभावो ज्ञत्वं तद्विशिष्टबुद्ध्येत्यर्थः । अथवा मनोज्ञभावबुद्ध्ये-त्येकं पदम् । मनोज्ञो मनोहरो भावोऽभिप्रायो यस्याः सा मनोज्ञभावा सा चासौ बुद्धिश्च तया । मनोज्ञभाव इति संबोधनं वा ॥ १७ ॥ 'गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचरे'त्युक्तं विवृण्वन् श्रोतव्यस्य

सुपूर्वापरवाक्यार्थविचारविषयादृतम् ।
मनः समरसं कृत्वा सानुसन्धानमात्मनि ॥ १९ ॥
शृणु राम पुरा प्रोक्तं ब्रह्मणा परमेष्ठिना ।
सर्वदुःखक्षयकरं परमाश्वासनं धियः ॥ २० ॥

श्रीराम उवाच ॥

केनोक्तं कारणेनेदं ब्रह्मन्पूर्वं स्वयंभुवा ।
कथं च भवता प्राप्तमेतत्कथय मे प्रभो ॥ २१ ॥

वसिष्ठ उवाच ॥

अस्त्यनन्तविलासात्मा सर्वगः सर्वसंश्रयः ।
चिदाकाशोऽविनाशात्मा प्रदीपः सर्ववस्तुषु ॥ २२ ॥
स्पन्दास्पन्दसमाकारात्ततो विष्णुरजायत ।
तस्यापि हृदयाम्भोजात्परमेष्ठी व्यजायत ॥ २३ ॥

ज्ञानशास्त्रस्य विशिष्टसंप्रदायमूलत्वं परमपुरुषार्थकरत्वं चाह—अपुनरित्यादिश्लोकत्रयेण ॥ भावनां वासनाम् । उदारया महत्या । उत्तमयेत्यर्थः ॥ १८ ॥ सुपूर्वेति ॥ शोभनो यः पूर्वापरवाक्यार्थविचारः स एव विषयस्तस्मिन्नादृतम् । स्वपूर्वेति क्वचित् तत्र स्वावधारणौ यौ पूर्वापरवाक्यार्थौ तयोर्विचारविषयादृतमित्यर्थः । मनो विचारविषयादृतं समरसमात्मनि सानुबन्धं च कृत्वा ॥ १९ ॥ शृण्वित्यन्वयः ॥ २० ॥ केनोक्तमिति स्पष्टार्थः ॥ २१ ॥ ब्रह्मविद्यासंप्रदायकर्तुर्ब्रह्मणो महत्त्वख्यापनाय परमकारणोत्पन्नत्वजगत्कर्तृत्वे दर्शयन् केनोक्तमित्यादिप्रश्नद्वयस्योत्तरे आह—अस्त्यनन्तेत्यादिना यज्ज्ञात्वाहं सुखी स्थित इत्यन्तेन ग्रन्थजातेन । अनन्तविलासात्मा अनन्तकार्यस्वरूपभूतः सर्ववस्तुषु विषयेषु प्रदीपो भासकः ॥ २२ ॥ स्पन्दो जगद्रूपेण जृम्भणं अस्पन्दस्तद्विपर्ययः तयोः समाकारात्स-

सोऽसृजत्सकलं सर्गं विकल्पौघं यथा मनः ।
एतस्मिन्भारते वर्षे नानाव्यसनसंकुलम् ॥ २४ ॥
जनस्यैतस्य दुःखं स दृष्ट्वा सकललोककृत् ।
जगाम करुणामीशः पुत्रदुःखात्पिता यथा ॥ २५ ॥
क एतेषां हताशानां दुःखस्यान्तो हतायुषाम् ।
स्यादिति क्षणमेकाग्रश्चिन्तयित्वा न्वतप्यत ॥ २६ ॥
तपो दानं जपस्तीर्थं नात्यन्तं दुःखशान्तये ।
तत्तावद्दुःखमोक्षार्थं ज्ञानं प्रकथयाम्यहम् ॥ २७ ॥
इति संचिन्त्य भगवान्ब्रह्मा कमलसंस्थितः ।
मनसा परिसंकल्प्य मामुत्पादितवानिमम् ॥ २८ ॥
कमण्डलुधरो नाथः सकमण्डलुना मया ।
साक्षमालं स्थितः पद्मे स प्रणम्याभिवादितः ॥ २९ ॥
एहि पुत्रेति मामुक्त्वा स स्वाब्जस्योत्तरे दले ।
मां निवेश्य महाबाहो प्रोवाच भगवानजः ॥ ३० ॥
मुहूर्तमात्रं ते पुत्र चेतो वानरचञ्चलम् ।
अज्ञानमभ्याविशतु सबाष्पं दर्पणं यथा ॥ ३१ ॥
इति तेनाशु शप्तः सन्विचारं समनन्तरम् ।
अहं विस्मृतवान्सर्वं स्वरूपममलं किल ॥ ३२ ॥
अथाहं दीनतामेत्य स्थितोऽसंबुद्धया धिया ।
दुःखशोकाभिसंतप्तो जातो जन इवाधमः ॥ ३३ ॥

मत्स्वरूपात् ॥ २३ ॥ सृज्यत इति सर्गो जगत् । सृज्यस्य सत्यत्वशङ्कां शातयन् दृष्टान्तमाह—विकल्पौघमिति ॥ विकल्पौघो मनोरथसमूहः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ साक्षमालमिति क्रियाविशेषणम् ॥ २९ ॥ ३० ॥ बाष्पोऽत्र मुखोद्भव ऊष्मा ॥ ३१ ॥

अथाभ्ययात्स मां नाथः पुत्र किं दुःखवानसि ।
दुःखोपघातं मां पृच्छ सुखी नित्यं भविष्यसि ॥ ३४ ॥
ततः पृष्टः स भगवान्मया संसारभेषजम् ।
कथं नाथ महादुःखमयः संसार आगतः ॥ ३५ ॥
कथं च क्षीयते नाथ ततस्तेन महात्मना ।
तज्ज्ञानं सुबहु प्रोक्तं यज्ज्ञात्वाहं सुखी स्थितः ॥ ३६ ॥
ततो विदितवेद्यं मां निजायां प्रकृतौ स्थितम् ।
स उवाच जगत्कर्ता वाक्यं सकलकारणम् ॥ ३७ ॥
शापेनाज्ञपदं नीत्वा पृच्छकस्त्वं मया कृतः ।
पुत्रास्य ज्ञानसारस्य समस्तजनसिद्धये ॥ ३८ ॥
इदानीं शान्तशापस्त्वं बोधं परमुपागतः ।
गच्छ वत्स महीपीठं जम्बूद्वीपान्तरस्थितम् ॥ ३९ ॥
साधो भारतवर्षे त्वं लोकानुग्रहहेतुना ।
तत्र क्रियाकाण्डपरास्त्वया पुत्र महाधियः ॥ ४० ॥
उपदेश्याः क्रियाकाण्डक्रमेण शमशालिना ।
विरक्तचित्ताश्च तथा महाप्राज्ञा विचारिणः ॥ ४१ ॥
उपदेश्यास्त्वया साधो ज्ञानेनानन्ददायिना ॥ ४२ ॥
इति तेन नियुक्तोऽहं पित्रा कमलजन्मना ।
इह साधोऽवतिष्ठामि यावद्भूतपरम्परा ॥ ४३ ॥

॥ ३२ ॥ ३३ ॥ ३४ ॥ संप्रदायतो लब्धस्यैव ज्ञानस्य मुक्तिदत्वं नान्यस्येति दर्शयितुं ब्रह्मविदो लोकानुग्रहं मुक्त्वान्यत्कर्तव्यं नास्तीति ज्ञापयितुं पुरुषार्थसिद्धौ भारतवर्षस्यान्यस्माद्विशिष्टतां च दर्शयितुमाह—तत इति ॥ ३५ ॥ ३६ ॥ ततो विदितवेद्यमित्यादयः कर्तव्यमस्तीत्यतः प्राक्तनाः श्लोकाः स्पष्टार्थाः ॥ ३७ ॥ ३८ ॥ ३९ ॥

कर्तव्यमस्ति न ममेह हि किंचिदेव
　　स्थातव्यमित्यतिमना भुवि संस्थितोऽस्मि ।
संशान्तया सततसुप्तधियैव वृत्त्या
　　कार्यं करोमि नच किंचिदहं करोमि ॥ ४४ ॥

श्रीवसिष्ठ उवाच ॥

अज्ञतानज्ञते पूर्वं वक्तुर्निर्णीय कार्यतः ।
यः करोति नरः प्रश्नं पृच्छकः स महामतिः ॥ ४५ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ कल्पपर्यन्तं कर्मभूमावस्थानं गुरोर्वाक्यं परिपालयतस्तव लोकानुग्रहार्थमेव केवलं न भवति किंतु कृत्यशेषं कर्तुं चेत्याशङ्क्याह—कर्तव्यमिति ॥ अतिमना अतिक्रान्तमनाः । जितमना इत्यर्थः । अथवा अतिमनाः प्रकृष्टमनाः । अविमना इति क्वचित् । तत्र विमनाः दुर्मनाः स न भवतीत्यविमनाः । अज्ञवत्तवापि कार्येषु प्रवृत्तिदर्शनात् कथं कृतकृत्यस्त्वं तत्राह—समिति ॥ संशान्तया इष्टानिष्टप्राप्तौ हर्षविषादरहितया सततं सुप्ता धीर्यस्यां वृत्तौ तया वृत्त्या वर्तनेन परमार्थदृष्ट्या प्रातिभासिकदृष्ट्या वा कार्यकर्तृत्वमुक्त्वा पारमार्थिकदृष्ट्या तदभावमाह—नचेति ॥ धियः सुप्तत्वं सत्याद्वैतविषयत्वम् । तथाचोक्तमाचार्यैः—'सुषुप्तवज्जाग्रति यो न पश्यति द्वयं तु पश्यन्नपि चाद्वयत्वतः । तथापि कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चय' इति ॥ 'अहमित्यात्मधीर्या च ममेत्यात्मीयधीरपि । अर्थशून्ये यदा यस्य स आत्मज्ञो न चेतर' इति च ॥ तथाच भगवद्वचनम्—'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति ॥ ४४ ॥ एवं केनोक्तमित्यादिप्रश्नोत्तरे आख्याय प्रसङ्गागतं किंचिदुक्त्वा 'शृणु राम पुरा

पूर्वापरसमाधानक्षमबुद्धावनिन्दिते ।
पृष्टं प्राज्ञेन वक्तव्यं नाधमे पशुधर्मिणि ॥ ४६ ॥
मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः ।
शमो विचारः संतोषश्चतुर्थः साधुसंगमः ॥ ४७ ॥
एते सेव्याः प्रयत्नेन चत्वारो द्वौ त्रयोऽथवा ।
द्वारमुद्धाटयन्त्येते मोक्षे राजगृहे यथा ॥ ४८ ॥
एकं वा सर्वयत्नेन सर्वमुत्सृज्य संश्रयेत् ।
एकस्मिन्वशगे यान्ति चत्वारोऽपि वशं यतः ॥ ४९ ॥
शास्त्रैः सज्जनसंसर्गपूर्वकैः सतपोदमैः ।
आदौ संसारमुक्त्यर्थं प्रज्ञामेवाभिवर्धयेत् ॥ ५० ॥
दुःसहा राम संसारविषवेगविषूचिका ।
योगगारुडमन्त्रेण पावनेन प्रशाम्यति ॥ ५१ ॥

प्रोक्त'मिति वचनादभिमुखीभूताय रामाय ज्ञानं सोपायं विवक्षुर्विशिष्टपृच्छकवक्तृकयोरावयोः संवादोऽवश्यं फलाय कल्पत इति दर्शयितुं पृच्छकवक्तारौ लक्षयति—अज्ञतेत्यादिश्लोकद्वयेन ॥ ४५ ॥ गुरुतः श्रुतयोः पूर्वापरवाक्यार्थयोरनन्विततयाक्षेपे कृते तत्समाधाने क्षमा समर्था बुद्धिर्यस्य तथा तस्मिन्। अत्रैवं नियमः—पूर्वापरसमाधानक्षमबुद्धावेव वक्तव्यं शिष्यायानिन्दितायैव वक्तव्यं पृष्टमेव वक्तव्यमिति च ॥ ४६ ॥ संवादसाफल्यज्ञापनाय पृच्छकवक्तृलक्षणे आख्यायादौ मुमुक्षुकृत्यमाचष्टे—मोक्षद्वारमित्यादिभिरभिवर्धयेदित्यन्तैः श्लोकैः। ते च स्पष्टार्थाः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ अभिवृद्धया प्रज्ञया किं भवेदित्यत आह—दुःसहेति ॥ संसार एव विषवेगविषूचिका विषवेगोत्पन्नविषूचिकाख्यरोगः ।

दुरन्तेयं किल विषयविषजविषूचिका यदि न चिकित्स्यते तन्नितरां नरकनगरनिकरफलानुबन्धिनी तदैतत्करोति यत्र शिलाशितासिशत[1]पातोत्पलताडनम् ॥ ५२ ॥

अग्निदाहो हिमावसेचनं अङ्गावकर्तनचन्दनचर्चा निरवधिना एव नरकनिपातो निदाघविनोदनधारागृहशीकरवर्षं शिरच्छेदः सुखनिद्रामूकीकरणमाननमुद्रावाधिर्यं महानुपचयः ॥ ५३ ॥

योगो ब्रह्मात्मैक्यविज्ञानं स एव गारुडमन्त्रस्तेन । अयमेव योगशब्दार्थ इति बृहद्वासिष्ठगतादेतच्छ्लोकोत्तरश्लोकात्—'स च योगः सज्जनेन सह शास्त्रविचारणात् । परमार्थज्ञानमयो नूनं लभ्यत एव चे'त्यस्मादवगम्यते । संसाररोगच्छेदकदृढप्रज्ञायै शमाद्युपेत आत्मानं विचारयेदित्युक्तम् ॥ ५१ ॥ इदानीमेवमात्मानमविचारतो निरतिशयदुःखमाह—दुरन्तेयमित्यादिना ॥ विषया एव विषजविषूचिका । विषयविषूचिकेति क्वचित् । तत्र विषया एव विषूचिकेत्यर्थः । न चिकित्स्यते यदि तत्तर्हि नितरां सुतरां नरका एव नगराणि तेषां निकराः समूहास्त एव फलानि तैरनुषङ्गो यस्याः सा नरकनगरनिकरफलानुबन्धिनी भूत्वा तद्दुःखं करोति । किं तद्दुःखं करोतीत्याकाङ्क्षायामाह—यत्रेति ॥ यत्र यस्मिन् विषयविषमविषूचिकाजनितदुःखे शितानां तेजितानामसीनां शतानां पातो गात्रेषूत्पलताडनं भवति ॥ ५२ ॥ यत्रेति सर्वत्र संबध्यते । यत्राग्निदाहः शरीरे हिमावसेचनं भवति । अङ्गावकर्तनमवयवकृन्तनं चन्दनचर्चा चन्दनलेपनम् । नाराचाः सर्वलोहमया बाणाः । निदाघविनोदनधारागृह-

---

[1] 'शातः पात उपल' इति बृहद्योगवासिष्ठे ।

तदेवं राम शास्त्रेणावहेलया व्यवहर्तव्यम् । अवश्यमेवं विचारणीयम् । एवं चावबोद्धव्यम् । यथा किल शास्त्रविचाराद्बोधो भवतीति ॥ ५४ ॥

स्वानुभूतेश्च शास्त्रस्य गुरोश्चैवैकवाक्यता ।
यस्याभ्यासेन तेनात्मा संततेनावलोक्यते ॥ ५५ ॥

किंचित्संस्कृतबुद्धीनां श्रुतं शास्त्रमिदं यथा ।
मौर्ख्यापहं तथा शास्त्रमन्यदस्ति न किंचन ॥ ५६ ॥

शीकरवर्षणं निदाघविनोदनाय घर्मविनाशाय यन्त्रप्रेरितजलधारावति गृहे शीकरवर्षणमम्बुकणवर्षणम् । आननमुद्रा आस्यपिधानमित्यर्थः । उपचयोऽभिवृद्धिः । अयमभिप्रायः—महादुःखहेतवोऽप्यसिशतपातादयो यस्मिन्दुःखे दृश्यमानाः सुखहेतुवदाचरन्ति तन्निरतिशयदुःखं विषयविषमविषूचिका करोतीति ॥ ५३ ॥ यस्मादेवं तस्माद्विषयरोगचिकित्सायां प्रयतितव्यमित्याह—तदेवमिति ॥ अवहेला अवज्ञा लीला वा । काचिच्चिकित्सा कर्तव्या विषयरोगनिवृत्तये तत्राह—एवमिति ॥ किलशब्दः श्रुतीतिहासपुराणप्रसिद्धिद्योतनार्थः । सकलानर्थनिवृत्तिपरमानन्दपदप्राप्तिकामेन शास्त्रार्थविचारः सम्यक्कर्तव्य इत्यर्थः ॥ ५४ ॥ ननु शास्त्रविचारात्सम्यग्ज्ञानविचारद्वारैव श्रेयो भवति तत्सम्यग्ज्ञानं विचारकारिणां सर्वेषां किमिति न भवति तत्राह—स्वेति ॥ यस्य पुरुषस्य संततेनाभ्यासेन स्वानुभूत्यादित्रयसंवादो भवति तेन पुंसा आत्मावलोक्यते साक्षात्क्रियते नान्येन ॥ ५५ ॥ कस्य शास्त्रस्यार्थविचारः श्रेयोऽर्थिना कर्तव्य इत्यत आह—किंचिदिति ॥ शास्त्रं मौर्ख्यापहमित्युक्तम् ॥ ५६ ॥ मौर्ख्यस्या-

वरं शरावहस्तस्य चाण्डालागारवीथिषु ।
भिक्षार्थमटनं राम न मौर्ख्यं हतजीवितम् ॥ ५७ ॥
न धनान्युपकुर्वन्ति न मित्राणि न बान्धवाः ।
न हस्तपादचलनं न देशान्तरसङ्गमः ॥ ५८ ॥
न कायक्लेशवैधुर्यं न तीर्थाय न जीवितम् ।
केवलं तन्मनोमात्रजयेनासाद्यते परम् ॥ ५९ ॥
मोक्षद्वारे द्वारपालानिमाञ्शृणु यथाक्रमम् ।
एषामेकतमासक्त्या मोक्षद्वारे प्रवेश्यते ॥ ६० ॥
यानि दुःखानि या तृष्णा दुःसहा ये दुराधयः ।
तत्सर्वं शान्तचेतस्सु तमोऽर्केष्विव नश्यति ॥ ६१ ॥
मातरीव परं यान्ति विषमाणि मृदूनि च ।
विश्वासमिह भूतानि सर्वाणि शमशालिनि ॥ ६२ ॥
न रसायनपानेन न लक्ष्म्यालिङ्गनेन च ।
तथा सुखमवाप्नोति शमेनान्तर्यथा जनः ॥ ६३ ॥

वश्यहेयत्वमाह—वरमिति ॥ ५७ ॥ शास्त्रार्थविचारवत्सत्पात्रे धनादिदानमपि ब्रह्मप्राप्तावभ्यर्हितोपाय इत्याशङ्कां निराकरोति—न धनानीत्यादिना ॥ यथा धनादिकं ब्रह्मप्राप्तिकरं न भवति एवं विचारोऽपि तत्प्राप्तिकरो न भवति । विचारवतामपि बहूनां तत्प्राप्त्यदर्शनादित्याशङ्क्याह—केवलमिति ॥ मनोजयाभावादेव विचारवत्सु ब्रह्मप्राप्तिर्न दृश्यत इति भावः ॥ ५८ ॥ ५९ ॥ मोक्षद्वारे द्वारपाला इति ये पूर्वमुक्ताः यत्करणे पुरुषार्थ उक्तः यदकरणेऽनर्थ उक्तस्तान्प्रपञ्चयितुमारभते—मोक्षद्वार इति ॥६०॥ तत्रतावच्छान्तिफलमानुषङ्गिकमाह—यानीत्यादिना श्लोकत्रयेण ॥ ६१ ॥ ६२ ॥

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा शुभाशुभम्।
न हृष्यति ग्लायति यः स शान्त इति कथ्यते ॥ ६४ ॥
तुषारकरबिम्बाच्छं मनो यस्य निराकुलम्।
मरणोत्सवयुद्धेषु स शान्त इति कथ्यते ॥ ६५ ॥
तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च।
बलवत्सु गुणाढ्येषु शमवानेव राजते ॥ ६६ ॥
शममममृतमहार्यमार्यगुप्तं परमवलम्ब्य परं पदं प्रयाताः।
रघुतनय यथा महानुभावाः क्रममनुपालय सिद्धये तमेव ॥६७॥
शास्त्रावबोधामलया धिया परमपूतया।
कर्तव्यः कारणज्ञेन विचारोऽनिशमात्मनः ॥ ६८ ॥

॥ ६३ ॥ शान्तेः फलमभिधाय स्वरूपमाह—श्रुत्वेत्यादिश्लोकद्वयेन॥ ग्लायति हर्षक्षयं करोति। विषीदतीत्यर्थः॥ ६४ ॥ तुषारकरश्चन्द्रः। दृढविवेकवतो महद्वैराग्यमास्थितस्य भाविनोऽपरिहार्यतां च जानतः पुंसः सुखदुःखप्राप्तौ हर्षविषादरहितता भवति सैव शम इत्यर्थः ॥ ६५ ॥ शमस्यानुषङ्गिकं फलान्तरमाह—तपस्विष्विति ॥ ६६ ॥ शमस्य महाफलं दर्शयन्महानुभावगृहीततया तस्यानुष्ठेयतामाह—शममिति ॥ हार्यमनार्यगुप्तमपरमममृतमवलम्ब्य देवा अपरमेव पदं प्रयाताः। महानुभावास्त्वन्येनाहार्यं हर्तुमयोग्यमार्यगुप्तं विद्वद्रक्षितं शमाख्यं परमममृतमवलम्ब्य तदनुरूपं परमेव पदं यथा प्रयातास्तथा सिद्धये परमपदप्राप्तये तमेव क्रमं शमलक्षणोपायमथवा शमविचारसंतोषध्यानादीनां क्रममनुपालयानुतिष्ठेत्यर्थः ॥ ६७ ॥ शमादीनां मध्ये शमं विस्तरादाख्याय विचारं प्रस्तावयति—शास्त्रेत्यादिपञ्चभिः श्लोकैः॥ तत्र प्रथमं विचारं विधत्ते—शास्त्रेति ॥ आदावीश्वरार्पितकर्मभिः परमपूतया अनन्तरं निवृत्तिशास्त्रार्थावबोधेना-

विचारात्तीक्ष्णतामेत्य धीः पश्यति परं पदम् ।
दीर्घसंसाररोगस्य विचारो हि महौषधम् ॥ ६९ ॥
कोऽहं कस्य च संसार इत्यापद्यपि धीमता ।
चिन्तनीयं प्रयत्नेन सप्रतीकारमात्मना ॥ ७० ॥
अनष्टमन्धकारेषु बहुतेजःस्वजिह्मितम् ।
पश्यत्यपि व्यवहितं विचारश्चारुलोचनम् ॥ ७१ ॥
कोऽहं कथमयं दोषः संसाराख्य उपागतः ।
न्यायेनेति परामर्शो विचार इति कथ्यते ॥ ७२ ॥

वसिष्ठ उवाच ।

संतोषो हि परं श्रेयः संतोषः सुखमुच्यते ।
संतुष्टः परमभ्येति विश्राममरिमर्दन ॥ ७३ ॥
संतोषामृतपानेन ये शान्तास्तृप्तिमागताः ।
भोगश्रीरतुला तेषामेषा प्रतिविषायते ॥ ७४ ॥

मलया कारणज्ञेन इदमस्य कारणमिदमस्य कार्यमिति कारणाद्यभिज्ञेनेत्यर्थः ॥ ६८ ॥ विचारफलमाह—विचारादिति ॥ ६९ ॥ विचारस्य स्वरूपं दर्शयंस्तत्कर्तव्यतां विशदयति—कोऽहमिति ॥ सप्रतीकारमिति क्रियाविशेषणम् । विघ्नप्रतीकारेण सह वर्तत इति सप्रतीकारम् । आत्मना बुद्ध्या॥७०॥विचारं स्तौति—अनष्टमिति ॥ चारुलोचनत्वसाधनायानष्टमित्यादिविशेषणत्रयम् । अनष्टं कार्यवन्न नष्टं भवतीत्यनष्टम् । अजिह्मितमकुटिलितम् । अप्रतिहतमित्यर्थः ॥७१॥ विचारस्वरूपं विशदयति—कोऽहं कथमिति ॥ ७२ ॥ विचारानन्तरमुक्तं संतोषं प्रपञ्चयति षड्भिः । तत्र श्लोकद्वयेन संतोषं स्तौति—संतोष इत्यादिना ॥ विश्रामशब्देन विश्रान्तिर्विवक्षिता ॥ ७३ ॥ संतोषामृतपानेन तृप्तिमागता इति संबन्धः । प्रतिविषायते प्रतिवि-

अप्राप्तवाञ्छामुत्सृज्य संप्राप्ते समतां गतः ।
अदृष्टखेदाखेदो यः संतुष्टः स इहोच्यते ॥ ७५ ॥
आशावैवश्यविवशे चित्ते संतोषवर्जिते ।
म्लाने वक्त्रमिवादर्शे न ज्ञानं प्रतिबिम्बति ॥ ७६ ॥
नाभिवाञ्छत्यसंप्राप्तं प्राप्तं भुङ्क्ते यथाक्रमम् ।
यस्तु सौम्यसमाचारः संतुष्ट इति कथ्यते ॥ ७७ ॥
समतया मतया गुणशालिनां पुरुषराडिह यः समलंकृतः ।
तममलं प्रणमन्ति नरोत्तमा अपि महामुनयो रघुनन्दन ॥ ७८ ॥
विशेषेण महाबाहो संसारोत्तरणे नृणाम् ।
सर्वत्रोपकरोतीह साधुः साधुसमागमः ॥ ७९ ॥

षवदाचरति । प्रतिकूलं विषं प्रतिविषम् ॥ ७४ ॥ संतोषस्वरूपमाह—अप्राप्तेति ॥ अप्राप्ते इष्टे वाञ्छा अप्राप्तवाञ्छा तां । संप्राप्त इष्टे समतां विकाररहितताम् । संप्राप्ते इष्टभोगे अल्पत्वानल्पत्वाभ्यां हर्षविषादरहिततामित्यर्थः ॥ ७५ ॥ संतोषाभावे ज्ञानानुत्पत्तिरतः संतोषः कर्तव्य इत्याह—आशेति ॥ आशा वैवश्यविवशे । आशापारवश्येनास्वस्थ इत्यर्थः । म्लानशब्देन मलिनत्वं लक्ष्यते ॥ ७६ ॥ उक्तं संतोषस्वरूपं पुनराह तज्ज्ञानदार्ढ्याय—नेति ॥ क्रम आचारक्रमस्तमनतिक्रम्य वर्तत इति यथाक्रमम् ॥ ७७ ॥ संतोषस्यातिप्रशस्तत्वं दर्शयन्नुपसंहरति—समतयेति ॥ गुणशालिनां मतया समतया समलंकृत इति संबन्धः ॥ ७८ ॥ साधुसंगमं प्रपञ्चयति—विशेषेणेत्यादिभिश्चतुर्भिः श्लोकैः ॥ तत्राद्यश्लोकेन साधुसंगमफलं कथ्यते । द्वितीयतृतीयाभ्यां संस्तूयते । चतुर्थेन साधुस्वरूपकथनपूर्वकं तत्सेवाभिधीयते ॥ ७९ ॥ शून्यं स्थलसाकीर्णतां प्राणिसंकुलतामेतीवेति

शून्यमाकीर्णतामेति मृत्युरप्युत्सवायते ।
आपत्संपदिवाभाति विद्वज्जनसमागमे ॥ ८० ॥
यः स्नातः शीतसितया साधुसंगमगङ्गया ।
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥ ८१ ॥
विच्छिन्नग्रन्थयस्तज्ज्ञाः साधवः सर्वसंमताः ।
सर्वोपायेन संसेव्यास्ते ह्युपाया भवाम्बुधौ ॥ ८२ ॥
चत्वार एते विमला उपाया भवभेदने ।
यैरभ्यस्तास्त उत्तीर्णा मोहवारिभवार्णवात् ॥ ८३ ॥
त्वमेतयाखण्डितया गुणलक्ष्म्या समाश्रितः ।
मनोमोहहरं वाक्यं वक्ष्यमाणमिदं शृणु ॥ ८४ ॥
मोक्षोपायकथामेतां शृण्वतामरिमर्दन ।
अनिच्छतामपि बलात्परो बोधः प्रवर्तते ॥ ८५ ॥
लोभमोहादयो दोषास्तानवं यान्त्यलं धियः ।
मनः प्रसादमायाति शरदीवामलं सरः ॥ ८६ ॥

इवशब्दोऽत्रापि योजनीयः ॥ ८० ॥ शीता चासौ सिता च तया संसारतापनिवारकत्वात् । सितत्वं शुद्धत्वम् ॥ ८१ ॥ ग्रन्थिरहङ्कारः तस्यात्मानात्मग्रन्थिरूपत्वात् ग्रन्थिवद्दुर्भेद्यत्वाच्च ॥ ८२ ॥ चत्वार इति ॥ स्पष्टार्थः ॥ ८३ ॥ मोहवारिपूर्णभवार्णवोत्तारकैरेतैरहं विशिष्टः किं न वेत्यालोचयन्तं रामं प्रत्याह—त्वमिति ॥ गुणलक्ष्म्यालिङ्गितेन कर्तव्यमाह—मन इति ॥ ८४ ॥ इदं शृणिवत्युपक्षिप्ताया वक्ष्यमाणज्ञानकथायाः श्रवणफलप्रकाशनार्थं मोक्षोपायेत्यादिभिर्भवत्यविषयो गिरामित्यन्त उत्तरग्रन्थसन्दर्भः स च स्पष्टार्थः । क्वचित्किंचिद्विविच्यते ॥ ८५ ॥ तानवं तनुत्वम् ॥ ८६ ॥

दैन्यदारिद्र्यदोषाढ्या दृष्टयो दर्शितान्तराः ।
न निकृन्तन्ति मर्माणि ससन्नाहमिवेषवः ॥ ८७ ॥
हृदयं नावलुम्पन्ति भीमाः संसृतिभीतयः ।
साम्यं परमुदेत्यन्तर्निर्मन्दर इवार्णवः ॥ ८८ ॥
समुद्रस्येव गाम्भीर्यं स्थैर्यं मेरोरिव स्थितिः ।
अन्तः शीतलता चेन्दोरिवोदेति विचारिणः ॥ ८९ ॥
सच्छास्त्रसाधुवृत्तीनामविरोधिनि कर्मणि ।
रमते धीर्यथाप्राप्ते साध्वीवान्तःपुराजिरे ॥ ९० ॥
सा जीवन्मुक्तिता तस्य शनैः परिणतिं गता ।
शान्ताशेषविशेषस्य भवत्यविषया गिराम् ॥ ९१ ॥
दृश्यते लोकसामान्यो यथाप्राप्तानुवृत्तिमान् ।
इष्टानिष्टफलप्राप्तौ हृदयेनापराजितः ॥ ९२ ॥
सुखासनोपविष्टेन यथासंभवमश्नता ।
भोगजालं सदाचारविरुद्धेषु न तिष्ठता ॥ ९३ ॥
यथाक्षणं यथादेशं प्रविचारयता सुखम् ।
यथासंभवसत्संगमिमं मोक्षकथाक्रमम् ॥ ९४ ॥

दैन्यदारिद्र्ये एव दोषौ ताभ्यामाढ्याः दृष्टयो हेयादेयविषयविकल्पाः दर्शितान्तराः मर्मभेदनाय प्रकाशितावसराः । ससन्नाहं सुकवचम् ॥ ८७ ॥ अवलुम्पन्ति छिन्दन्ति ॥ ८८ ॥ ८९ ॥ अजिरमङ्गणम् ॥ ९० ॥ ९१ ॥ स जीवन्मुक्तः कीदृश इत्यत आह—दृश्यत इति ॥ शास्त्रतो लोकतश्च यथाप्राप्तस्य व्यवहारस्यानुवृत्तिरनुवर्तनं यस्य स तथा । हृदयेन मनसा ॥ ९२ ॥ मोक्षोपायः कथमित्यत्रोक्तं श्रवणमित्थं पुरुषेण कर्तव्यमिति दर्शयंस्तत्फलमात्मतत्त्वापरो-

आसाद्यते महान्येन बोधः संसारशान्तिदः ।
न भूयो जायते येन योनियन्त्रप्रपीडनम् ॥ ९५ ॥
एतावत्यपि ये भीताः पापा भोगरसे स्थिताः ।
स्वमातृविष्ठाकृमयः कीर्तनीया न तेऽधमाः ॥ ९६ ॥
शास्त्रोपशमसौजन्यप्रज्ञातज्ज्ञसमागमैः ।
अन्तरान्तरसंपन्नधर्मार्थोपार्जनक्रियः ॥ ९७ ॥
तावद्विचारयेत्प्राज्ञो यावद्विश्रान्तिमात्मनि ।
संप्रयात्यपुनर्नाशां शान्तिं तुर्यपदाभिधाम् ॥ ९८ ॥
तुर्यविश्रान्तियुक्तस्य प्रतीपस्य भवार्णवात् ।
जीवतोऽजीवतश्चैव गृहस्थस्याथवा यतेः ॥ ९९ ॥
न कृतेनाकृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ।
निर्मन्दर इवाम्भोधिः स तिष्ठति यथास्थितम् ॥ १०० ॥

क्षज्ज्ञानं दर्शयति—सुखासनेत्यादिना योनियन्त्रप्रपीडनमित्यन्तेन ग्रन्थसंदर्भेण। स च स्पष्टार्थः ॥ ९३ ॥ ९४ ॥ ९५ ॥ शास्त्रश्रवणं मनननिदिध्यासनाङ्गशमादीतिकर्तव्यतोपेतं कुर्वतस्तत्फलमाख्याय तदकुर्वतः पुरुषान्निन्दति—एतावत्यपीति ॥ सुखासनोपवेशादिन्यायेन शास्त्रश्रवणादिलक्षणप्रयासे महत्फलेऽल्पेऽपि कार्य इत्यर्थः ॥ ९६ ॥ कियत्कालं विचारोऽनुष्ठेय इति शङ्कायुक्तं सोपस्करमनुवदन्निराकरोति—शास्त्रेत्यादिना तुर्यपदाभिधामित्यन्तेन ॥ अन्तरेऽन्तरे मध्ये मध्ये संपन्नान्तरान्तरसंपन्ना धर्मार्थयोरुपार्जनक्रिया यस्य स तथोक्तः ॥ ९७ ॥ ९८ ॥ व्यावर्तमानेषु विश्वतैजसप्राज्ञेषु कुसुमेषु सूत्रमिवानुवर्तमानं निर्विकल्पचैतन्यं पृथक्कृत्य तुर्यत्वादपि व्युत्थाप्य विधूतद्वैतजाले तस्मिन्नहंभावेन निश्चलावस्थानलक्षणतुर्यविश्रान्तियुक्तस्य

शृणु तावदिदानीं त्वं कथ्यमानमिदं मया ।
राघव ज्ञानविस्तारं बुद्धिसारान्तरान्तरम् ॥ १ ॥
युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मयोनिना ॥ २ ॥
यैर्यैः काकुत्स्थ दृष्टान्तैस्त्वं मयेहावबोध्यसे ।
सर्वे सकारणास्ते हि प्राप्यन्तु सदकारणम् ॥ ३ ॥
ब्रह्मोपदेशदृष्टान्तो यस्तवेह हि कथ्यते ।
एकदेशसधर्मित्वं तत्रान्तः परिगृह्यताम् ॥ ४ ॥
एवं सति निराकारे ब्रह्मण्याकारवान्कथम् ।
दृष्टान्त इह चोद्यन्ति मूर्खं वैकल्पिकोक्तयः ॥ ५ ॥
ननु तार्किकतामेत्य नाशनीया प्रबुद्धता ।
अनुभूत्यपलापान्तैरपवित्रैर्विकल्पितैः ॥ ६ ॥

कृतशेषशङ्कां शातयति—तुर्येत्यादिना ॥ प्रतीपस्य । विमुखस्येत्यर्थः ॥ ९९ ॥ १०० ॥ संक्षेपविस्तराभ्यां वक्ष्यमाणज्ञानशास्त्रश्रवणफलमाख्याय तद्वक्तुमारभमाणः श्रोतव्यस्य विस्तीर्णत्वात्तत्र चित्तं समाधेयमित्याह—शृण्विति ॥ विस्तीर्णेऽप्यसारे तच्चित्तं समाधेयं नेदं तथेत्याह—बुद्धीति ॥ बुद्धिरस्यान्तरान्तरं मध्यं मध्यं ज्ञानसारमित्यर्थः ॥ १ ॥ त्वया च नास्मद्गौरवादर्थो ग्राह्यः किंतु प्रमाणानुसारि युक्त्युपेतमेवेत्याह—युक्तीति ॥ २ ॥ प्रमादाद्गुरूक्तस्याप्यनुपपन्नार्थस्यानादेयत्वमाख्याय ब्रह्मोपदेशाय वक्ष्यमाणेषु दृष्टान्तेष्वादेयांशं दृष्टान्तदार्ष्टान्तिकवैषम्यप्रदर्शनपूर्वकमाह—यैरित्यादिश्लोकद्वयेन ॥ सच्छब्दो ब्रह्मविषयः ॥ ३ ॥ ४ ॥ एवं सतीति स्पष्टार्थः ॥ ५ ॥ कुतर्कप्रभवमूर्खविकल्पास्त्वया नाश्रयणीयाः विज्ञानविनाशकत्वात्तेषामिति लब्धप्रसङ्गशिष्याञ्शास्ति—नेति ॥ अनुभूतेरप-

गुणाः शमाद्यो ज्ञानाच्छमादिभ्यस्तथा ज्ञता ।
परस्परं विवर्धन्ते द्वे पद्मसरसी इव ॥ ७ ॥

न यावत्सुसमभ्यस्तौ ज्ञानसत्पुरुषक्रमौ ।
एकोऽपि नोऽनयोस्तावत्पुरुषस्येह सिद्धिदः ॥ ८ ॥

इदं यशस्यमायुष्यं पुरुषार्थफलप्रदम् ।
श्रुत्वा त्वं बुद्धिनैर्मल्याद्बलाद्यास्यसि तत्पदम् ॥ ९ ॥

विदितवेद्यमिदं हि मनो मुनेर्विवशमेव हि याति परं पदम् ।
यदवबुद्धमखण्डितमक्रमं तदवबोधदशां न जहाति हि ॥ ११० ॥

इति श्रीवासिष्ठविवरणे वाल्मीकीये मोक्षोपाये प्रथमः सर्गः ॥ १ ॥

---

लापो अन्तो येषां ते अनुभूत्यपलापान्तास्तैरनुभवापलापपर्यवसानैः । अपवित्रार्थविषयत्वेनापवित्रैः । ब्रह्म सद्वितीयमद्वितीयं वा । सद्वितीयं चेदपसिद्धान्तः । अद्वितीयं चेद्गुरुशास्त्राद्यभावाज्ज्ञानानुत्पत्तिः । ब्रह्म सप्रमाणमप्रमाणं वा । सप्रमाणं चेदद्वैतक्षतिः प्रमाणरहितं चेत्प्रमेयस्य तस्यासिद्धिरित्यादिविकल्पितैः ॥६॥ मुमुक्षुकर्तव्यतया शमाद्युपेतो यो विचारः पूर्वमुक्तः स निदिध्यासनापरपर्यायज्ञानाभ्यासेन सहैवानुष्ठेयो मुमुक्षुणा न बहिर्मुखचित्तेनेतीममर्थं सोपपत्तिकमाह—गुणा इत्यादिश्लोकद्वयेन ॥ यावद्यावदन्तर्मुखः सन्नात्मतत्त्वं पश्यति तावत्तावच्छमादिमान्भवति यावद्यावदन्तर्मुखः सन् शमादिमान्भवति तावदात्मतत्त्वमीक्षत इत्यनुभवसिद्धत्वान्निर्विकल्पचिदेकाकारान्तःकरणवृत्त्या वृत्तिलक्षणज्ञानाभ्यासेन सहैव सत्पुरुषक्रमशब्दितं शमाद्युपेतात्मविचारमावर्तयेदित्यर्थः । अथवा 'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधा' इत्युक्तं

ज्ञानाभ्यासं शमसंतोषाभ्यासौ च समकालमेव कर्तव्याविति सोपपत्तिकमाह—गुणा इत्यादिना ॥ ७ ॥ ८ ॥ इदं यज्ञस्यमिति—स्पष्टार्थः ॥ श्रवणादिना बुद्धिनैर्मल्यान्महावाक्यजात् ॥९॥ सकृत्तत्पदप्राप्तिलक्षणज्ञाने जाते पुनस्तद्विस्मृतिर्भविष्यतीत्यत आह—विदितवेद्यमिति ॥ पदमिति द्वितीयान्तम् । एको हि शब्दोऽवधारणे । द्वितीयो विद्वत्प्रसिद्धौ । विवशं यात्येव । एतत्साधयति—यदिति ॥ अवबुद्धं साक्षात्कृतं अखण्डितं देशकालवस्तुतोऽपरिच्छिन्नं अतएवाक्रमं निरावरणपरिपूर्णबोधरूपत्वात् परमात्मा विद्वन्मनोवृत्तिव्याप्यतां न त्यजतीत्यर्थः ॥ ११० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमाहात्म्यसुखकृतौ वासिष्ठचन्द्रिकायां मुमुक्षुव्यवहारप्रकरणं समाप्तम् ॥

मुमुक्षुव्यवहारप्रकरणं समाप्तम् ।

## उत्पत्तिप्रकरणम्—

वसिष्ठ उवाच ॥

मुमुक्षुव्यवहारोऽयं मया ते परिकीर्तितः ।
अथेयं जागती श्रीमदुत्पत्तिः परिकीर्त्यते ॥ १ ॥
अनुभूतेर्वेदनस्य प्रतिपत्तेर्यथाभिधम् ।
प्रत्यक्षमिति नामेह कृतं जीवः स एव नः ॥ २ ॥

उत्पत्त्याख्ये प्रकरणे नवाख्यानविराजिते । आद्यमाकाशजाख्यानं लीलाख्यानमतः परम् ॥ १ ॥ कर्कट्या ऐन्दवानां च कृत्रिमेन्द्रस्य च क्रमात् । आख्यानान्यथ चित्तस्य षष्ठं बालस्य सप्तमम् ॥ २ ॥ ततः साम्बरिकाख्यानं ततो लवणभूभृतः ॥ आख्यानं सप्तभूमीनां वर्णनं यत्र शोभनम् ॥ ३ ॥ तेष्वाख्यानेषु पूर्वेण संक्षेपाद्बोध्यमुच्यते ॥ पूर्वप्रकरणवृत्तमनूद्योत्तरप्रकरणतात्पर्यमाह—मुमुक्षुव्यवहार इति ॥ 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुत्युक्तः शमादीतिकर्तव्यतोपेतो मनननिदिध्यासनाङ्गकः श्रवणलक्षणो व्यवहारो मुमुक्षुव्यवहार इत्युच्यते । जागती जगत्संबन्धिनी । गगनाद्गन्धर्वनगरोत्पत्तिरिव अधिष्ठानादज्ञाताद्ब्रह्मणो जगदुत्पत्तिरभिधीयत इत्यर्थः॥१॥मुमुक्षुणा द्रष्टव्ये ब्रह्मात्मतत्त्वे पूर्वं प्रतिपादिते प्रत्यक्षादिप्रमाणप्रकाशितप्रपञ्चसत्यताशङ्कया तस्य परिपूर्णताशङ्कायां तत्परिहाराय प्रपञ्चस्य कारणपरमात्मव्यतिरेकेणासत्त्वं प्रतिपादयितुं तस्मात्सृष्टिः पश्चाद्वर्णनीयेत्यभिप्रेत्य जीवस्वरूपे वादिविप्रतिपत्तेः स्वाभिमतजीवस्वरूपकथनपूर्वकं तस्य ब्रह्मैक्यमाह—अनुभूतेरित्यादिना स एव संविदित्यन्तेन ग्रन्थेन ॥ अथवा ऐकात्म्यं विज्ञातुमिच्छतो मुमुक्षोस्तदेव पूर्वं प्रतिपादनीयं तच्छेषतया सृष्टिः पश्चाद्वर्णनीयेत्यभिप्रेत्य बुभुत्सायाः प्रागेव तत्साक्षि-

स एव संवित्स पुमानहन्ताप्रत्ययात्मकः ।
स यदोदेति संवित्त्या सा पदार्थं इति स्मृता ॥ ३ ॥

तया प्रकाशमानेन साक्षिप्रमाणमिति प्रसिद्धेनापरोक्षचैतन्यात्मकेन जीवेन तद्विरुद्धस्य परोक्षस्य ब्रह्मण एकत्वं न संभवतीत्याशङ्क्य तस्या-परोक्षचैतन्यात्मतां दर्शयन् प्रत्यगैक्यमाह—अनुभूतेरिति ॥ अथवा मुमुक्षुजिज्ञासितजीवपरमात्मैक्यमनभिधायाजिज्ञासितजगदुत्पत्ति-परिकीर्तनप्रतिज्ञानुपपन्नेत्याशङ्क्याह—अनुभूतेरिति ॥ इह व्यवहा-रभूमावनुभूतिवेदनप्रतिपत्तिशब्दाभिहितापरोक्षचैतन्यस्य यथाभिधं अभिधानमनतिक्रम्यानुभूतिप्रत्यक्षं वेदनप्रत्यक्षं प्रतिपत्तिप्रत्यक्षमिति। प्रत्यक्षं नाम प्रत्येकं वादिभिः स्वाभिमतविशेषणप्रक्षेपपूर्वकं कृतं स एव नोऽस्माकमौपनिषदानां जीवः । तथाच महद्भिरुक्तम्—'अनुभू-तिर्वेदनं च प्रतिपत्तिरितीरितम् । चैतन्यमपरोक्षं यत्स जीव इह कथ्यते' इति । एतेन वादिभिरन्यथा कल्पितजीवस्वरूपमपास्तम् । ब्रह्मपक्षे त्वयं श्लोक एवं व्याख्येयः—अनुभूतिशब्देन ब्रह्मोच्यते । वेदनप्रतिपत्तिभ्यां तदेव विशिष्यते । वेदनमिति ब्रह्मापरोक्षज्ञानमु-च्यते प्रतिपत्तेरिति । अलौकिकं प्रत्यक्षं महावाक्यजनितान्तःक-रणवृत्त्यारूढं ब्रह्मैवापरोक्षज्ञानशब्दनिगद्यं भवति । चक्षुरादिजनि-तान्तःकरणवृत्त्यारूढं तदेव लौकिकप्रत्यक्षमुच्यते। वेदनप्रतिपत्त्या-त्मिकाया अनुभूतेर्ब्रह्मणो यथाभिधमभिधां प्रत्यक्षपर्यायतामनति-क्रम्येह मोक्षशास्त्रे प्रत्यक्षमिति नाम कृतम्। पठितमित्यर्थः । अप-रोक्षादपरोक्षं चक्षुर्नेत्रमिति प्रत्यक्षार्थानां प्रतिपादकश्रुतिः । स एव प्रत्यक्षनामकं ब्रह्मैव नोऽस्माकमौपनिषदानां जीवः जीवपदलक्ष्यः। प्रतिनिर्दिश्यमानापेक्षया लिङ्गव्यत्यय इति ॥ २ ॥ स एव संवि-दिति ॥ स जीवोऽपरोक्षचैतन्यात्मा संविदेव ब्रह्मैव । ननु मोक्ष-

स संकल्पविकल्पाद्यैः कृतनानाक्रमो भ्रमैः।
जगत्तया स्फुरत्यम्बु तरङ्गादितया यथा ॥ ४ ॥
प्रागकारणमेवाशु सर्गादौ सर्गलीलया।
स्फुरित्वा कारणं भूतं प्रत्यक्षं स्वयमात्मनि ॥ ५ ॥

कामस्य स एव संविदिति ब्रह्मैकत्वे प्रतिपादितेऽपि न मुक्तिः संभवति। परिपूर्णात्मनावस्थानं हि मुक्तिः। ब्रह्मव्यतिरिक्तस्य प्रपञ्चस्य सत्त्वेन तदसंभवादित्याशङ्क्य सर्वस्य प्रपञ्चस्य ब्रह्मविवर्ततां दर्शयति—स पुमानित्यादिना ॥ चित्तगतचित्प्रतिबिम्बलक्षणो जीवः पुमानित्युच्यते। अहन्तया प्रतीयत इत्यहङ्कारः। स इति तच्छब्देन संविद्रूपः परमात्मा परामृश्यते। स संविद्रूपः परमात्मा स्वाविद्यया पूर्वं चित्तोपाधिकः पुमान् भूत्वा पश्चादहन्ताप्रत्ययात्मको भवति। उपलक्षणमेतत्। बुद्ध्यात्मको मनआत्मकश्च भवतीत्यपि द्रष्टव्यम्। स एव बाह्यपदार्थरूपेणापि विवर्तत इत्याह—स इति ॥ स यया संवित्त्या घटपटाद्याकारयोदेति। यत्संविद्रूपेण विवर्तत इत्यर्थः। सा संवित् घटपटादिलक्षणः पदार्थ इति स्मृता। सर्वोऽपि पदार्थो मनोविलास एवेति हि शास्त्रमर्यादा ॥ ३ ॥ उक्तमर्थं स्पष्टयति—स संकल्पेति ॥ स परमात्मा संकल्पविकल्पौ भ्रमसंशयावाद्यौ येषामभिमानादीनां तैः कृतनानाक्रमः कृतो नानाभूतोऽवस्थाक्रमो यस्य स तथा। एवं ह्यवस्थाक्रमो भवति। परिपूर्णसंविद्रूपः परमात्मा सृष्टिकाले पूर्वं सामान्यतो दृश्यत्वावस्थामाप्नोति ततश्चित्तावस्थामाप्नोति ततोऽहंकारावस्थां ततो बुद्ध्यवस्थां ततो मनोवस्थामिति। अयं चैव क्रम उत्तरत्र स्पष्टीभविष्यति ॥ ४ ॥ ननु ब्रह्मेत्थं जगत्तया स्फुरति चेत्तर्हि जगत्कारणेन ब्रह्मणा तद्विपरीतस्य जीवस्यैक्य-

रूपालोकमनस्कारपदार्थैर्व्याकुलं जगत् ।
विद्यते वेदनस्यान्तर्वातान्तः स्पन्दनं यथा ॥ ६ ॥

मनुपपन्नमित्याशङ्क्याह—प्रागिति ॥ प्रत्यक्षप्रमाणात्मकप्रत्यगभिन्नत्वात्प्रत्यक्षाभिधं ब्रह्म, अथवा साक्षादेव प्रत्यक्षाभिधं ब्रह्म क्रियां कुर्वद्विकारमिति न्यायात्सृष्टेः प्राक् क्रियाभावादकारणमेव सत् । अथवा कारणत्वस्य मिथ्यात्वादकारणमेव सत् । सर्गादावाशु सर्गलीलया मायामय्या सर्गार्थेक्षणलीलया स्फुरित्वा यथाकारणनिर्वाहिकयात्मनि वर्तमानस्य जगतः स्फुरित्वात्मनि संस्काररूपेण विद्यमानस्य जगतः स्वयंकारणभूतं, अथवा सर्गादौ सृष्टिपालनादावकारणं वास्तवसहकारिकारणरहितं सृष्टेः प्राक् सर्गलीलया स्फुरित्वा मायया कारणनिर्वाहिकयात्मनि वर्तमानस्य जगतः कारणभूतं प्रपञ्चरूपेण विवर्तमानमायाधिष्ठानत्वं हि ब्रह्मणः कारणत्वम् ॥ ५ ॥ ब्रह्मण एव कारणत्वं मायाद्वारत्वमिति सूचयितुं 'तदात्मानं स्वयमकुरुते'तिश्रुतिं सूचयितुं स्वयमित्युक्तं प्रपञ्चयति—रूपेति ॥ अथवा ब्रह्मणो जगत उत्पत्तिमभिधाय तत्रैव स्थितिमाह—रूपेति ॥ मनस्कारो मनस आभोगो मनोविस्तारः । 'चित्ताभोगो मनस्कार'इत्यमरः । रूपं चालोकश्च मनस्कारश्चान्ये पदार्थाश्च रूपालोकमनस्कारपदार्थास्तैर्व्याकुलं व्यामिश्रं, अथवा रूपस्यालोकः प्रकाशो रूपदर्शनम् । अनेन जागरणं लक्ष्यते । मनस्कारशब्देन मनोविस्तारात्मकः स्वप्नो विवक्षितः रूपालोकमनस्कारयोर्जागरणस्वप्नयोर्ये पदार्थास्तैर्व्याकुलं जगद्वेदनस्य ब्रह्मलक्षणस्यान्तः संस्काररूपेण स्थूलरूपेण वान्तर्वर्तते । ब्रह्मणि तादात्म्येन जगद्वर्तत इति ज्ञापनाय दृष्टान्तमाह—वातान्तरिति ॥ ६ ॥ ननु ब्रह्म जगदुपादा-

सर्वात्मवेदनं शुद्धं यथोदेति तदात्मकम् ।
भाति प्रसृतदिक्कालबाह्यान्तारूपदेहकम् ॥ ७ ॥
स सर्वात्मा यथा यत्र समुल्लासमुपागतः ।
तिष्ठत्याशु तथा तत्र तद्रूप इव राजते ॥ ८ ॥
अकारणकमेवातो ब्रह्मकल्पमिदं स्थितम् ।
प्रत्यक्षमेव निर्मातृ तस्यांशास्त्वनुमादयः ॥ ९ ॥

नकारणं चेत्तर्हि घटो ब्रह्म पटो ब्रह्मेति तत्तदात्मना प्रतीयेत जलमिव तरङ्गाद्यात्मना । नचैतदस्ति अतो नोपादानं किंतु निमित्तमेवेत्यत आह—सर्वात्मेति ॥ सर्वात्मकवेदनं ज्ञानरूपं ब्रह्म यथा येन प्रकारेण यत्कार्यस्वरूपेणोदेति विवर्तते तदात्मकं तत्कार्यस्वरूपं सद्भाति । सन् घटः सन् पट इति हि तत्तदात्मना सद्रूपं ब्रह्म प्रकाशते । अतो युक्तं ब्रह्मण उपादानकारणत्वमपि । प्रसृतदिक्कालबाह्यान्तारूपदेहकम् । अन्तरित्यव्ययेनान्तरं वस्तु विवक्षितम् । विप्रसृतस्वरूपदिक्कालमुक्तबाह्यान्तराणां रूपं स्वरूपमेव देहो यस्य तत्तथा ॥ ७ ॥ उक्तमर्थं विशदयति—स सर्वात्मेति ॥ यत्र देशे यथा येन प्रकारेण यत्कार्यात्मना समुल्लासम् । समुज्जृम्भणमित्यर्थः ॥ ८ ॥ प्रागकारणमेवेत्यादिनोक्तमर्थं विशदयति—अकारणकमिति ॥ यतो मायाद्वारं विना ब्रह्मणि कारणत्वं न विद्यते अतोऽकारणकमेव वास्तवकारणरहितमेवेदं जगत्सृष्टेः प्राक् ब्रह्मकल्पमनभिव्यक्तनामरूपतया ब्रह्मस्वरूपमिव स्थितम् । अधिष्ठानभूते ब्रह्मणि संस्कारशेषं विलीनं जगत्ततोऽविभाव्यमानभेदं स्थितमित्यर्थः । सृष्टिकाले प्राप्ते जगतः प्रत्यक्षमेव प्रत्यक्षप्रमाणात्मकं ब्रह्मैव निर्मातृ भवति । अक्षपादादिदर्शन इव नानपरोक्षसमचिद्रूपं निर्मातृ अपरोक्षचैतन्यमेव जीव इति

बन्धोऽयं दृश्यसद्भावाद्दृश्याभावे न बन्धनम् ।
न संभवति दृश्यं तु यथेदं शृणु कथ्यते ॥ १० ॥
यदिदं दृश्यते सर्वं जगत्स्थावरजङ्गमम् ।
तत्सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति ॥ ११ ॥

दर्शयितुं प्रत्यक्षप्रमाणमेव जीव इत्युक्तम् । तत्प्रसङ्गादनुमानादिस्वरूपमाह—तस्येति ॥ अथवा परोक्षचैतन्यं ब्रह्मैवेति दर्शयितुं प्रत्यक्षनामकं ब्रह्मेत्युक्तं तत्प्रसङ्गादनुमानादिस्वरूपमाह—तस्येति ॥ अनुमानादयः तस्य प्रत्यक्षप्रमाणस्यापरोक्षचैतन्यात्मकब्रह्मणोंऽशा इवांशाः । परिपूर्णज्ञप्तिमात्रं ब्रह्मान्तःकरणप्रतिबिम्बितं सत्प्रमातेत्युच्यते । तदेवेन्द्रियलिङ्गादिजनितान्तःकरणांशारूढं प्रमाणमित्यभिधीयत इति हि वेदान्तमर्यादा ॥ ९ ॥ सर्वं जगद्ब्रह्मकार्यमिति दर्शयता कारणब्रह्मव्यतिरेकेण कार्यं जगदसदेवेत्युक्तम् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'ति कारणव्यतिरेकेण कार्यस्यासत्त्वप्रतिपादकश्रुतेः । इदानीं बन्धतन्निवृत्त्योः कारणप्रदर्शनपूर्वकं तदेव बन्धकारणभूतदृश्यजगदसत्त्वं प्रतिज्ञापूर्वकं प्रपञ्चयति 'सर्वं खल्विदं ब्रह्म तज्जलानि'इति श्रुतिमनुसरन्—बन्धोऽयमित्यादिना ॥ 'जगत्त्वमहमित्यादिसर्गात्मा दृश्यमुच्यत' इति वक्ष्यमाणस्य दृश्यस्य सद्भावादयं साक्षादनुभूयमानः कर्तृत्वभोक्तृत्वादिलक्षणो बन्धो भवति । ननु दृश्याभावे बन्धनं न भवतीति सत्यं, स एव दृश्याभावो न संभवतीत्याह—न संभवतीति ॥ तुशब्दः शङ्काव्यावृत्त्यर्थः । इदं दृश्यं यथा न संभवति तथा कथ्यते, शृणु ॥ १० ॥ यदिदमिति ॥ विमतं दृश्यं असत् विनाशित्वात् स्वप्नवत् । विमतं विनाशि दृश्यत्वात् स्वप्नवदित्यर्थः ॥ ११ ॥ दृश्यवद्ब्रह्मणो विनाशित्वमाशङ्क्याह—तत इति ॥ ततोऽनन्तरं ततं व्याप्तं

ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ १२ ॥
ऋतमात्मा परं ब्रह्म सत्यमित्यादिका बुधैः ।
कल्पिता व्यवहारार्थं तस्य संज्ञा महात्मनः ॥ १३ ॥
स तथाभूत एवात्मा स्वयमन्य इवोल्लसन् ।
जीवतामुपयातीव भाविनामकदर्थिताम् ॥ १४ ॥

तेजस्तमश्च न किंतु स्तिमितगम्भीरं निश्चलापरिच्छेद्यं, अनाख्यमनभिधानमिन्द्रियागोचरत्वादनभिव्यक्तं किंचिदिति निरूपणानर्हं सद्ब्रह्मावशिष्यते । 'सदेव सोम्येदमग्र आसीदि'ति श्रुतेः ॥ १२ ॥ अनाख्यमित्ययुक्तं ब्रह्मादिनामकत्वात्तस्येत्यत आह—ऋतमिति ॥ १३ ॥ एवं सर्वप्रपञ्चस्य ज्ञातब्रह्मात्मतालयमभिधाय स्वरूपादप्रच्युतादेव तस्मात्सृष्टिकाले जगदुत्थानं नभसो गन्धर्वनगरोत्थानमिव दर्शयन्नादौ समष्टिजीवहिरण्यगर्भोत्पत्तिमाह—स तथेति ॥ तथाभूत एव स्तिमितगम्भीररूप एव स परमात्मा आकाशमिव स्वच्छे जले स्वयमन्य इवोल्लसन्नन्य इव जृम्भमाणो भाविनामकदर्थितां भाविजीवादिनामभिः क्लेशितां कलुषीकृतां जीवतामुपयातीव । इवशब्दद्वयमन्यत्वादेर्मायिकत्वं द्योतयितुम् । अत्रायं सृष्टिक्रमः—सृष्टेः प्रागद्वितीयः परमात्मा सृष्टिकाले पूर्वमनालिङ्गितविशेषदृश्यमात्रात्मना विवर्तते, ततः समष्टिचित्रात्मना, ततः समष्टिजीवात्मना, ततोऽहंकारात्मना, ततो बुद्ध्यात्मना, ततो मनआत्मना, ततस्तन्मात्रभूतभौतिकात्मना विवर्तत इति । तथाच बृहद्वासिष्ठेऽभिहितम्—'पूर्वं चेत्यत्वकलनं ततश्चेत्यांशचेतनात् । उदेति चित्तकलनं चितिशक्तित्वचेतनात् ॥ ततो जीवत्वकलनं चेत्यसंयोगचेतनात् । ततोऽहंभावकलनं

ततः स जीवशब्दार्थः कलनाकुलतां गतः ।
मनो भवति भूतात्मा मननान्मन्थरीभवत् ॥ १५ ॥
मनः संपद्यते नाम महतः परमात्मनः ।
सुस्थिरादस्थिराकारं तरङ्ग इव वारिधेः ॥ १६ ॥
तत्स्वयं स्वैरमेवाशु संकल्पयति नित्यशः ।
तेनेयमिन्द्रजालश्रीर्जागती प्रवितन्यते ॥ १७ ॥
यथा कटकशब्दार्थः पृथक्त्वार्हो न काञ्चनात् ।
न हेम कटकात्तद्वज्जगच्छब्दार्थता परे ॥ १८ ॥

चेत्यैकपरतावशात् ॥ ततो बुद्धित्वकलनमहन्तापरिणामतः । एतदेव मनस्त्वादिशब्दतन्मात्रकादिमदि'ति ॥ १४ ॥ अयमेव क्रमः साकल्येनानुक्तस्थलेऽपि द्रष्टव्यः । दृश्यत्वचित्तद्वारा समष्टिजीवभावमापन्नस्य परमात्मनोऽहंकारबुद्धिद्वारा समष्टिमनोभावमाह—तत इति ॥ भूतानां कारणत्वाद्भूतात्मा स जीवशब्दार्थः कलनाकुलतां कलनेन संकल्पेनाकुलतां क्षुब्धतां गतः सन्मनो भवति । मनोविशेषणं मन्थरीभवदिति । मननात्संकल्पान्मन्थरीभवत्स्थूलिभवत् ॥ १५ ॥ उक्तं संक्षिप्याह—मन इति ॥ नामशब्दः कुत्सने ॥ १६ ॥ मनसः स्वभावं दर्शयंस्तेन समष्टिमनसा शब्दादिपञ्चतन्मात्राकाशादिपञ्चभूतब्रह्माण्डादिभौतिकलक्षणं जगदिन्द्रजालं प्रविरच्यत इत्याह—तदिति ॥ तेन मनसा प्रवितन्यते प्रकर्षेण विस्तार्यते ॥ १७ ॥ एवं समष्टिचित्तजीवाहंकारबुद्धिमनोभावमापन्नात्परमात्मन उत्पन्नं जगदिन्द्रजालं मिथ्या चेत्तर्हि तदभिन्नं ब्रह्मापि मिथ्या स्यात् । ब्रह्मणः सत्यत्वाज्जगतोऽपि सत्यता स्यादित्यत आह—यथेति ॥ कटकशब्दार्थः काञ्चनात्पृथक्त्वार्हो भेदार्हो न भवति । नियमेन तदभावेऽभावाद्रज्जु-

असतैव सती तापनद्येव लहरी चला ।
मनसैवेन्द्रजालश्रीर्जागती प्रवितन्यते ॥ १९ ॥
अविद्यासंसृतिर्मोहो बन्धो माया मलं तमः ।
कल्पितानीति नामानि तस्याः सकलवेदिभिः ॥ २० ॥
बन्धस्य तावद्रूपं त्वं कथ्यमानमिदं शृणु ।
ततः स्वरूपं मोक्षस्य ज्ञास्यसीन्दुसमानन ॥ २१ ॥
द्रष्टुर्दृश्यस्य सत्ताङ्ग बन्ध इत्यभिधीयते ।
द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते ॥ २२ ॥

सर्पवत् । सम्यग्व्यावृतचक्षुषा काञ्चनाद्भिन्नतयानुपलभ्यमानत्वाच्च हेम कटकात्पृथक्त्वार्हं न भवतीति न । तदभावेऽपि भावाद्रज्जुसर्पवत् । यथैतद्दृष्टान्तद्वयं तद्वत्परे परमात्मनि जगच्छब्दार्थता भवति । परं च जगच्छब्दादिति शेषः । आरोपितस्य सत्तास्फूर्त्योरधिष्ठानापेक्षत्वादधिष्ठानस्य सत्तास्फूर्त्योरारोपितानपेक्षत्वात् ब्रह्मजगतोरुक्तं वैलक्षण्यमेव ॥१८॥ ननु मनसश्छायापिशाचवदसत्त्वाज्जगदिन्द्रजालजनकत्वमनुपपन्नमिति चेत्तत्राह—असतैवेति ॥ इह संसारे तापनद्या मरीचिनद्याश्चला लहरीवोर्मिरिवासतैव मनसा सती जगतीन्द्रजालश्रीः प्रवितन्यते ॥१९॥ जगतो नामकल्पनाभिधानेनापि मिथ्यात्वं हेयत्वं च साधयति—अविद्येति ॥ यस्या जगदिन्द्रजालश्रिय इति नामानि कल्पितानि सा जागतीन्द्रजालश्रीरिति पूर्वेण संबन्धः । वक्ष्यति च—'अविद्यासंसृतिर्बन्धो मनो मोहो मलं तमः । इति संकल्पजालस्य नामान्येतानि राघवे'ति । बन्धोऽयं दृश्यसद्भावाद्दृश्याभावे न बन्धनम् । न संभवति दृश्यं तु यथेदं शृणु कथ्यत' इति ॥२०॥ अनेनोक्तं प्रपञ्चयति—बन्धस्येत्यादिना ॥२१॥ दृश्यस्य द्वैतप्रपञ्चस्य ।

जगत्त्वमहमित्यादिसर्गात्मा दृश्यमुच्यते ॥
यावदेतत्संभवति तावन्मोक्षो न विद्यते ॥ २३ ॥
आनीलवल्लरीरूपं यथा पद्माक्षकोटरे ।
आस्ते कमलिनीबीजं तथा द्रष्टरि दृश्यधीः ॥ २४ ॥
यथाङ्कुरोऽन्तर्बीजस्य संस्थितो देशकालतः ।
तनोति भासुरं देहं तनोत्येवं हि दृश्यधीः ॥ २५ ॥

अङ्गेति संबोधनम् । बध्यतेऽनेनेति बन्धः । उक्तं विशदयन् ज्ञानेन दृश्याभावे द्रष्टृत्वनिवृत्तेः कैवल्यमाह—द्रष्टुरिति ॥ २२ ॥ किं तद्दृश्यं यस्य बन्धहेतुत्वमित्यत आह—जगदिति ॥ ननु नैयायिकादीनामिव दृश्यसद्भावेऽपि मोक्षः किं न स्यादित्यत आह—यावदिति ॥ 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवती'ति श्रुतेर्द्वैतिनां मुक्तिः कमठीक्षीरायते ॥ २३ ॥ यावद्दृश्यं संभवति तावन्मोक्षो न दृश्यते चेत्तर्हि सुषुप्तिप्रलययोः सर्वदृश्यासंभवे सति मोक्षः किं न स्यात् । सुषुप्त्यादौ श्रुत्या सर्वदृश्याभावप्रतिपादनात् । तत्राज्ञानसद्भावादिति चेन्न । तस्योत्खातदंष्ट्रोरगवदकिंचित्करत्वान्न चाभ्युपगम्यते तत्र मोक्ष इत्याशङ्क्याह—आनीलेति ॥ कमलिनीबीजं भाविकमलिन्याः पद्मिन्या बीजभूतमानीलवल्लरीरूपं आ समन्तान्नीललतास्वरूपं पद्माक्षकोटरे पद्ममण्यभ्यन्तरावकाशे संस्काररूपेण यथास्ते तथा द्रष्टरि दृश्यधीरास्ते । प्रातिभासिकत्वाद्दृश्यस्य धीरित्युक्तम् ॥ २४ ॥ ननु द्रष्टरि दृश्यं संस्काररूपेण प्रलयादौ वर्तते चेत्तर्हि विचित्रसंस्कारचित्रितादज्ञातद्रष्टुर्दृश्याभिव्यक्तिस्तदैव किं न स्यादित्याशङ्क्य दृष्टान्तेन परिहरति—यथेति ॥ बीजस्यान्तः संस्काररूपेण स्थितोऽङ्कुरो देशकालतः प्रतिनियतदेशकालतो भासुरं प्रका-

द्रव्यस्य हृद्येव चमत्कृतिर्यथा सदोदितास्त्यस्तमयोज्झितोदरे ।
द्रव्यस्य चिन्मात्रशरीरिणस्तथा स्वभाववभूतास्त्युदरे जगत्स्थितिः

वसिष्ठ उवाच ॥

इदमाकाशजाख्यानं शृणु श्रवणभूषणम् ।
उत्पत्त्याख्यं प्रकरणं येन राघव बुध्यसे ॥ २७ ॥

ण्डशाखापत्रादिभिर्भासनशीलं रूपं स्थूलरूपं यथा तनोति एवं दृश्य-धीरपि नियतदेशकालतः स्थूलरूपं तनोति । हि यस्मात् ततो न तदैव जगदुत्पत्तिप्रसङ्गः ॥ २५ ॥ आनीलेत्यादिनोक्तमुपसंहरति—द्रव्यस्येति ॥ यथा द्रव्यस्य पद्माक्षादेर्हृद्यन्तरुदितोत्पन्ना चमत्कृतिराश्चर्यं तत्समा भाविद्रव्यस्य परमसूक्ष्मावस्थासंस्काराख्यास्तमयोज्झिता सती तस्योदर एव सदास्ति, तथा चिन्मात्रशरीरिणश्चिन्मात्रस्वरूपस्य परमात्मद्रव्यस्योदरेऽन्तः स्वभावभूता तत्स्वरूपाभिन्ना जगत्स्थितिरस्ति ॥ २६ ॥ एवं तावज्जीवब्रह्मणोरेकत्वं तात्पर्येण सर्ववेदान्तप्रतिपाद्यमभिधाय विरुद्धधर्माक्रान्ततया तयोरैक्यासंभवशङ्कानिरासाय तद्व्यतिरिक्ताकाशादिपदार्थसद्भावशङ्कानिरासाय च सर्वस्य विरुद्धधर्मजातस्याकाशादिप्रपञ्चस्य च सत्कारणस्य तज्जत्वादिना ब्रह्मव्यतिरेकेणासत्त्वमुक्त्वेदानीं ब्रह्मात्मैक्यापरोक्षज्ञानस्य कर्मतत्फलात्मकसंसारनिवृत्तिलक्षणफलं दर्शयितुं भगवान्वसिष्ठ उवाच । तत्र मृत्युयमसंवादव्याजेन विदुषि हिरण्यगर्भे विद्याफले दर्शिते सति विद्वदन्तरेऽपि न्यायसाम्यात्तद्दर्शितमेव भवतीत्यभिप्रेत्याकाशजाख्यानमवतारयति—इदमिति ॥ अभूतार्थवादोऽयं प्राणसंवादादिवत् भ्रान्तदृष्ट्यैव कर्मतत्फलात्मकः संसारः तत्त्वदृष्ट्या तु नासीदस्ति भविष्यतीत्येतदर्थप्रतिपादकमुत्पत्त्याख्यं प्रकरणम् । येनाकाशजा-

अस्तीहाकाशजो नाम द्विजः परमधार्मिकः ।
ध्यानैकनिष्ठः सततं प्रजानां च हिते रतः ॥ २८ ॥
स चिरं जीवति यदा तदा मृत्युरचिन्तयत् ।
सर्वाण्येव क्रमेणाहं भूतान्यद्मि किलाव्ययः ॥ २९ ॥
एनमाकाशजं विप्रं न कस्माद्भक्षयाम्यहम् ।
अत्र मे कुण्ठिता शक्तिः खड्गधारा यथोपले ॥ ३० ॥
इति संचिन्त्य तं हन्तुमगच्छत्तत्पुरं तदा ।
त्यजन्त्युद्यमसुद्युक्ता न स्वकर्मणि केचन ॥ ३१ ॥
ततस्तत्सदनं यावन्मृत्युः प्रविशति स्वयम् ।
तावदेनं दहत्यग्निः कल्पान्तदहनोपमः ॥ ३२ ॥
अग्निज्वालामहामालां विदार्यान्तर्गतो ह्यसौ ।
द्विजं दृष्ट्वा समादातुं हस्तेनैच्छत्प्रयत्नतः ॥ ३३ ॥
न चाशकत्पुरो दृष्टमपि हस्तशतैर्द्विजम् ।
बलवानप्यवष्टब्धुं संकल्पपुरुषं यथा ॥ ३४ ॥

ख्यानेन श्रुतेन बुध्यसे तदिदमाकाशजाख्यानं शृणु । 'आकाशो वै नामरूपयोर्निर्वहिते'ति श्रुतेः ॥ २७ ॥ आकाशं ब्रह्म तस्माज्जायत इत्याकाशजो ब्रह्मा। द्विजत्वादिकल्पना तु कथासौन्दर्यार्थम् ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥ ब्रह्मसदनरक्षणाय परितः प्राकाररूपेण स्थितोऽग्निरेनं मृत्युं दहति । अथवाऽऽकाशजेन द्विजेन बहुकालं शुश्रूषितः प्रीतोऽग्निरभ्यागारान्निर्गत्य स्वभक्तमारणोन्मुखमेनं मृत्युं दहति ॥ ३२ ॥ ३३ ॥ बलवानपि मृत्युः पुरो दृष्टमपि हस्तशतै-रप्यवष्टब्धुं गृहीतुं नाशकत् न शशाक। शक्लृ शक्तौ इति धातोर्लिङ् । अप्यर्थश्च शब्दोऽवष्टब्धुमित्यनेन संबध्यते । संकल्पपुरुषो मनोरथ-

अथागत्य स्वयं मृत्युरपृच्छत्संशयच्छिदम् ।
किमित्यहं न शक्नोमि भोक्तुमाकाशजं प्रभो ॥ ३५ ॥

यम उवाच ॥

मृत्यो न किंचिच्छक्तस्त्वमेको मारयितुं बलात् ।
मारणीयस्य कर्माणि तत्कर्तॄणीति नेतरत् ॥ ३६ ॥
तस्मादेतस्य विप्रस्य मारणीयस्य यत्नतः ।
कर्माणि वीक्ष्य तेषां त्वं सहायेनैनमत्स्यसि ॥ ३७ ॥
ततः स मृत्युर्बभ्राम तत्कर्मान्वेषणादृतः ।
मण्डलानि दिगन्तांश्च सरांसि सरितो दिशः ॥ ३८ ॥
एवं भूमण्डलं भ्रान्त्वा न कुतश्चित्स कानिचित् ।
तान्याकाशजकर्माणि लब्धवान्मृत्युरुद्धतः ॥ ३९ ॥
समपृच्छदुपागत्य धर्मं सर्वार्थकोविदम् ।
परायणं हि प्रभवः संदेहेष्वनुजीविनाम् ॥ ४० ॥
आकाशजस्य कर्माणि क्व स्थितानि वद प्रभो ।
धर्मराजोऽथ संचिन्त्य सुचिरं प्रोक्तवानिदम् ॥ ४१ ॥
आकाशजस्य कर्माणि मृत्यो सन्ति न कानिचित् ।
एष ह्याकाशजो विप्रो जातः खादेव केवलात् ॥ ४२ ॥

निर्मितः पुरुषाभासः ॥ ३४ ॥ ३५ ॥ त्वमेको बलात्किंचिदपि सत्वं मारयितुं न शक्त इत्यत्र हेतुमाह—मारणीयस्येति ॥ तच्छब्दो मारणविषयः । इतिशब्दो हेतौ । 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु' इत्यमरः ॥ ३६ ॥ तेषां कर्मणां मध्येऽन्यतमेन सहायेन । साहाय्येनेति क्वचित् तत्र सहायभावेनेत्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ विद्वदृष्टिमवलम्ब्याह—आकाशजस्येति ॥ तत्र हेतुमाह—एष इति ॥ केवलाद्वास्त-

अस्तीहाकाशजो नाम द्विजः परमधार्मिकः।
ध्यानैकनिष्ठः सततं प्रजानां च हिते रतः॥ २८॥
स चिरं जीवति यदा तदा मृत्युरचिन्तयत्।
सर्वाण्येव क्रमेणाहं भूतान्यद्मि किलाव्ययः॥ २९॥
एनमाकाशजं विप्रं न कस्माद्भक्षयाम्यहम्।
अत्र मे कुण्ठिता शक्तिः खड्गधारा यथोपले॥ ३०॥
इति संचिन्त्य तं हन्तुमगच्छत्तत्पुरं तदा।
त्यजन्त्युद्यममुद्युक्ता न स्वकर्मणि केचन॥ ३१॥
ततस्तत्सदनं यावन्मृत्युः प्रविशति स्वयम्।
तावदेनं दहत्यग्निः कल्पान्तदहनोपमः॥ ३२॥
अग्निज्वालामहामालां विदार्यान्तर्गतो ह्यसौ।
द्विजं दृष्ट्वा समादातुं हस्तेनैच्छत्प्रयत्नतः॥ ३३॥
न चाशकत्पुरो दृष्टमपि हस्तशतैर्द्विजम्।
बलवानप्यवष्टब्धुं संकल्पपुरुषं यथा॥ ३४॥

ख्यानेन श्रुतेन बुध्यसे तदिदमाकाशजाख्यानं शृणु। 'आकाशो वै नामरूपयोर्निर्वहिते'ति श्रुतेः॥ २७॥ आकाशं ब्रह्म तस्माज्जायत इत्याकाशजो ब्रह्मा। द्विजत्वादिकल्पना तु कथासौन्दर्यार्थम्॥ २८॥ ॥ २९॥ ३०॥ ३१॥ ब्रह्मसदनरक्षणाय परितः प्राकाररूपेण स्थितोऽग्निरेनं मृत्युं दहति। अथवाऽऽकाशजेन द्विजेन बहुकालं शुश्रूषितः प्रीतोऽग्निरग्न्यागारान्निर्गत्य स्वभक्तमारणोन्मुखमेनं मृत्युं दहति॥ ३२॥ ३३॥ बलवानपि मृत्युः पुरो दृष्टमपि हस्तशतैरप्यवष्टब्धुं गृहीतुं नाशकत् न शशाक। शक्लृ शक्तौ इति धातोर्लिङ्। अप्यर्थश्चशब्दोऽवष्टब्धुमित्यनेन संबध्यते। संकल्पपुरुषो मनोरथ-

अथागत्य स्वयं मृत्युरपृच्छत्संशयच्छिदम् ।
किमित्यहं न शक्नोमि भोक्तुमाकाशजं प्रभो ॥ ३५ ॥

यम उवाच ॥

मृत्यो न किंचिच्छक्तस्त्वमेको मारयितुं बलात् ।
मारणीयस्य कर्माणि तत्कर्तॄणीति नेतरत् ॥ ३६ ॥
तस्मादेतस्य विप्रस्य मारणीयस्य यत्नतः ।
कर्माणि वीक्ष्य तेषां त्वं सहायेनैनमत्स्यसि ॥ ३७ ॥
ततः स मृत्युर्बभ्राम तत्कर्मान्वेषणादृतः ।
मण्डलानि दिगन्तांश्च सरांसि सरितो दिशः ॥ ३८ ॥
एवं भूमण्डलं भ्रान्त्वा न कुतश्चित्स कानिचित् ।
तान्याकाशजकर्माणि लब्धवान्मृत्युरुद्धतः ॥ ३९ ॥
समपृच्छदुपागत्य धर्मं सर्वार्थकोविदम् ।
परायणं हि प्रभवः संदेहेष्वनुजीविनाम् ॥ ४० ॥
आकाशजस्य कर्माणि क्व स्थितानि वद प्रभो ।
धर्मराजोऽथ संचिन्त्य सुचिरं प्रोक्तवानिदम् ॥ ४१ ॥
आकाशजस्य कर्माणि मृत्यो सन्ति न कानिचित् ।
एष ह्याकाशजो विप्रो जातः खादेव केवलात् ॥ ४२ ॥

निर्मितः पुरुषाभासः ॥ ३४ ॥ ३५ ॥ त्वमेको बलात्किंचिदपि सत्वं मारयितुं न शक्त इत्यत्र हेतुमाह—मारणीयस्येति ॥ तच्छब्दो मारणविषयः । इतिशब्दो हेतौ । 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिष्वि'त्यमरः ॥ ३६ ॥ तेषां कर्मणां मध्येऽन्यतमेन सहायेन । साहाय्येनेति क्वचित् तत्र सहायभावेनेत्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ विद्वद्दृष्टिमवलम्ब्याह—आकाशजस्येति ॥ तत्र हेतुमाह—एष इति ॥ केवलाद्धास्त-

आकाशादेव यो जातः स व्योमेवामलं भवेत् ।
सहकारीणि नो सन्ति कारणान्यस्य कानिचित् ॥ ४३ ॥
सहकारिकारणानामभावे यः प्रजायते ।
नासौ स्वकारणाद्भिन्नो भवतीत्यनुभूयते ॥ ४४ ॥
एतदाक्रमणे मृत्यो तस्मान्मा यत्नवान्भव ।
श्रुत्वैतद्विस्मितो मृत्युर्जगाम निजमन्दिरम् ॥ ४५ ॥

वसहकारिकारणरहितात्खादेव परमात्मन एव बिम्बात्प्रतिबिम्बतया जातः हि यस्मात्केवलात् ॥ ४२ ॥ परमात्मनो जातत्वेऽपि हिरण्यगर्भस्य जीवस्य कथं कर्माभावस्तत्राह—आकाशादिति ॥ वास्तवसहकारिकारणरहितात्परमात्मनो यो जातः प्रतिबिम्बतयाऽभिव्यक्तः सोऽमलं कर्मादिमलरहितं व्योमैव भवेत् । आकाशजः स्वकारणाद्वस्तुतो न भिद्यते । वास्तवसहकारिकारणरहितत्वे सति जातत्वाज्जलचन्द्रवदित्यर्थः । उक्तमर्थं सार्धश्लोकेन विशदयति—सहकारीणीति ॥४३॥ अनुभूयते प्रतिबिम्बादिस्थले ॥ ४४ ॥ फलितमाह—एतदिति ॥ यस्माच्चित्प्रतिबिम्बात्मायमाकाशजो वस्तुतः परमात्मत्वात्कर्मरहितस्तस्मादित्यर्थः । मृत्युवशगत्वनिरासेन हिरण्यगर्भे तदविनाभूतः सर्वोऽपि सांसारिको धर्मो निरस्तो वेदितव्यः । ननु 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवदि'तिवचनाद्धिरण्यगर्भेण सह सर्वेषामपि जीवानां चित्प्रतिबिम्बत्वे वस्तुतो बिम्बभूतचिद्रूपत्वे कर्मतत्फलात्मकसंसाररहितत्वे च समाने कं विशेषमादाय हिरण्यगर्भस्यैवाकर्मिकत्वादिकमभिधीयत इति । अत्रोच्यते । हिरण्यगर्भस्य तत्त्ववित्त्वमेव विशेषमादायाकर्मित्वादिकमभिधीयते । तथाच श्रुतिस्तस्य तत्त्ववित्त्व-

श्रीराम उवाच ॥

ब्रह्मैष कथितो देवस्त्वया मे प्रपितामहः ।
स्वयंभूरज एकात्मा विज्ञानात्मेति मे मतिः ॥ ४६ ॥

वसिष्ठ उवाच ॥

एवमेतन्महाबाहो ब्रह्मैष कथितस्तव ।
विवादमकरोन्मृत्युर्यमेनैतत्कृते पुरा ॥ ४७ ॥
मन्वन्तरे सर्वभक्षो यदा मृत्युरदन्प्रजाः ।
बलमेत्याब्जजाक्रान्तावारम्भमकरोत्स्वयम् ॥ ४८ ॥
तदैव धर्मराजेन यमेनाप्यनुशासितः ।
ब्रह्मा किल पराकाशवपुराक्रम्यते कथम् ॥ ४९ ॥

सेवाह 'स हायमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति । तत एवास्य भयं वियाये' ति । श्रुत्वैतदित्यादि ब्रह्मा किल पराकाशवपुरित्यतः प्राक्तनो ग्रन्थसंदर्भः स्पष्टार्थः । क्वचित्किंचिद्विविच्यते ॥ ४५ ॥ प्रपितामह इत्यादिविशेषणचतुष्टयं ब्रह्मणो महत्त्वख्यापनार्थम् । विज्ञानात्मेति स्वरूपकथनार्थम् । पितॄणां पितरः पितामहाः । पितामहानां पिता प्रपितामहः । सर्वभूतानामादिकर्तेत्यर्थः । त्वया मेऽत्र पितामह इति क्वचित् । तस्योत्पत्तिवैशिष्ट्यमाह—स्वयंभूरिति ॥ स्वयमेव भवतीति स्वयंभूः । अतएवाजः शुक्रशोणितबीजादेर्न जायत इति । एक एवाप्नोति व्याप्नोति सर्वकार्यमिति एकात्मा । प्रधानात्मेति वा । विज्ञानं बुद्धिरात्मा स्वरूपं यस्य स तथा।ब्रह्मस्वरूप इति वा॥४६॥ ॥४७॥४८॥यमानुशासनमेव संक्षेपत आह—ब्रह्मा किलेति । किलेत्याक्रमणस्यासंभाव्यत्वे । पराकाशः परमात्मा वपुः स्वरूपं यस्य स तथा

आकाशे स्फुरदाकारः संकल्पपुरुषो यथा ।
पृथ्व्यादिरहितो भाति स्वयंभूर्भासते तथा ॥ ५० ॥
चिद्व्योम केवलमनन्तमनादिमध्यं
ब्रह्मेति भाति निजचित्तवशात्स्वयंभूः ।
आकारवानिव पुमानिव वस्तुतस्तु
वन्ध्यातनूज इव तस्य तु नास्ति देहः ॥ ५१ ॥
आतिवाहिक एवासौ देहोऽस्त्यस्य स्वयंभुवः ।
नत्वाधिभौतिको राम देहोऽजस्योपपद्यते ॥ ५२ ॥

श्रीराम उवाच ॥

आतिवाहिक एवास्ति देहोऽन्यस्त्वाधिभौतिकः ।
सर्वासां भूतजातीनां ब्रह्मणोऽस्त्येक एव किम् ॥ ५३ ॥

॥ ४९ ॥ ननु ब्रह्मा परब्रह्मशरीरश्चेत्कथं चतुर्मुखशरीरत्वं तस्येत्याशङ्क्याह—आकाशे स्फुरदिति ॥ प्रसिद्धाकाशे स्फुरन्नाकारः शिरःपाण्यादिमान्यस्य मनोरथकल्पितपुरुषस्य स तथा । प्रातिभासिकं ब्रह्मणः शरीरत्वम् । वस्तुतस्तु संकल्पपुरुषवन्नास्त्येवेत्यभिप्रायः ॥५०॥ उक्तं विशदयन्नुपसंहरति—चिद्व्योमेति ॥ निजचित्तवशात्स्वचित्तवशात् । द्रष्टृचित्तवशादित्यर्थः ॥५१॥ चिद्व्योमेति श्लोकानन्तरं विराडवस्थां प्राप्तहिरण्यगर्भविषयो बृहद्वासिष्ठगतश्लोकोऽत्र द्रष्टव्यः-'आतिवाहिक एवासौ देहोऽस्त्यस्य स्वयंभुवः । नत्वाधिभौतिको राम देहोऽजस्योपपद्यत'इति ॥ ५२ ॥ ब्रह्मणो जीवत्वाज्जीवान्तरवदाधिभौतिकदेहः कुतो न स्यादिति चोदयति—आतिवाहिक इति ॥ अतिवाह्यते नीयते तं तं देशं मार्गद्वयवर्तिदेवताभिरित्यातिवाहिकः सूक्ष्मो देहः ॥५३॥

वसिष्ठ उवाच ॥

सर्वेषामेव देहौ द्वौ भूतानां कारणात्मनाम् ।
अजस्य कारणासत्त्वादेक एवातिवाहिकः ॥ ५४ ॥
अन्येषां कारणं ब्रह्मप्रतिभासोत्थितं जगत् ।
अजस्य कारणं ब्रह्म तेनासावेकदेहवान् ॥ ५५ ॥
ब्रह्मा संकल्पपुरुषः पृथ्व्यादिरहिताकृतिः ।
केवलं चित्तमात्रात्मा कारणं त्रिजगत्स्थितेः ॥ ५६ ॥

स्थूलदेहारम्भकाकाशादिभूतसत्त्वासत्त्वाभ्यां जीवानां देहद्वयं हिरण्यगर्भस्य च स्थूलदेहासत्त्वे इत्युत्तरमाह—सर्वेषामिति ॥ कारणात्मनां कारणमुपादानलक्षणमात्मा स्वरूपं येषां तानि तथोक्तानि तेषाम् । अनेन देहद्वयारम्भककारणसत्त्वं व्यष्टिजीवानां सूचितम् । अजस्य कारणासत्त्वात्स्थूलदेहारम्भककारणासत्त्वम् ॥ ५४ ॥ उक्तमर्थं विशदयति—अन्येषामिति ॥ ब्रह्मप्रतिभासोत्थितं ब्रह्मणो हिरगर्भस्य प्रतिभासेन संकल्पेनोत्थितमुत्पन्नं जगत् सूक्ष्मभूतस्थूलभूतलक्षणं तेन तानि देहद्वययुक्तानीति शेषः । अजस्य तु ब्रह्मपरमात्मैव कारणं न भूतानि ॥ ५५ ॥ ननु सूक्ष्मभूतविकारान्मनसः सूक्ष्मभूतादिसर्वजगदुत्पत्तिः कथं घटत इति चेन्न । मनसः सूक्ष्मभूतविकारत्वस्य दृष्टिसृष्टिपक्षेऽनभ्युपगमात् । प्रदर्शिता चास्माभिः पूर्वमेव तत्र जीवसृष्टिप्रक्रिया । दृष्टिरेव सृष्टिरिति वसिष्ठसिद्धान्ते स्थिते सूक्ष्मभूतप्रभृति सर्वस्य जगतो मनोविकारत्वे विरोधाभावात् । 'यदा सुषुप्तः स्वप्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येती'त्यादिश्रुतिरपि मनसो लये सुषुप्तौ सर्वस्य जगतः प्रलय इव लयं दर्शयन्ती दृष्टिमेव सृष्टिमनुजानाति ।

ब्रह्मणा तन्यते विश्वं मनसैव स्वयंभुवा ।
मनोमयमतो विश्वं यन्नाम परिदृश्यते ॥ ५७ ॥

श्रीराम उवाच ॥

भगवन्मनसो रूपं कीदृशं वद मे स्फुटम् ।
यस्मात्तेनेयमखिला तन्यते दोषमञ्जरी ॥ ५८ ॥

ननु सुषुप्तौ प्रलय इव प्रपञ्चो विलीयते किंतु करणाभावेन न प्रतीयत इत्याशयेन तथा श्रुतिराहेति चेन्न । तत्र लयाप्रतिपादने जगतः प्रबोधसमये सृष्ट्यप्रतिपादनप्रसङ्गात् । प्रतिपादयति च श्रुतिः—'सर्वेसृष्टिप्रबोधे स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं प्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति श्रुत्यन्तरं च दृष्टिसृष्टिविषयं भवति । 'असतोऽधि मनोऽसृजत मनः प्रजापतिमसृजत प्रजापतिः प्रजा असृजत तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किंचे'ति । किंच कल्पितस्य द्वैतस्य शुक्तिरजतादेरिव प्रतिभासमात्रशरीरस्य प्रतिभासदशायां स्वकल्पनाधिष्ठानसन्मात्रातिरेकेण स्वरूपेणावस्थानासंभवाच्चेति विज्ञानोत्तमाचार्यवचनाद्'प्यात्मचित्तेन स्पन्दितं जीवजातमाकाशादि क्ष्मावसानं च पश्येदि'ति संक्षेपशारीरकवचनाच्च । वक्तव्यं चात्र बहुप्रपञ्चभिया न निगद्यते । ब्रह्मणो मनोमात्रशरीरत्वात्तत्कृतं जगन्मनोविकारत्वान्मनोराज्यवदसदेवेत्यभिप्रेत्याह—ब्रह्मा संकल्पपुरुष इत्यादिना ॥ संकल्पपुरुषः संकल्पपुरुषसम इत्यर्थः । संकल्पपुरुषसमत्वमेव विशदयति—पृथ्व्यादीति ॥ स्थूलदेहारम्भकपृथ्व्यादिरहिताकार इत्यर्थः ॥ ५६ ॥ ५७ ॥ मनसो विश्वकारणत्वे ब्रह्मवत्सत्त्वं स्यादित्यभिप्रायेण पृच्छति—भगवन्निति ॥

वसिष्ठ उवाच ॥

रामास्य मनसो रूपं न किंचिदपि दृश्यते ।
नाममात्रादृते व्योम्नो यथा शून्यजडाकृतेः ॥ ५९ ॥
न बाह्ये नापि हृदये सद्रूपं विद्यते मनः ।
सर्वत्रैव स्थितं ह्येतद्विद्धि राम यथा नभः ॥ ६० ॥
साधो यथैतदर्थस्य प्रतिभानं प्रथां गतम् ।
सतो वाप्यसतो वापि तन्मनो विद्धि नेतरत् ॥ ६१ ॥
यदर्थप्रतिभानं तन्मन इत्यभिधीयते ।
अन्यत्र किंचिदप्यस्ति मनो नाम कदाचन ॥ ६२ ॥
संकल्पनं मनो विद्धि संकल्पात्तन्न भिद्यते ।
यत्र संकल्पनं तत्र मनोऽस्तीत्यवगम्यताम् ॥ ६३ ॥
संकल्पमनसी भिन्ने न कदाचन के च न ।
अविद्यासंसृतिश्चित्तं मनो बन्धो मनस्तमः ॥ ६४ ॥

प्रश्नवैयर्थ्यमाशङ्क्याह—यस्मादिति ॥ ५८ ॥ वाचारम्भणशास्त्राद्धिकारस्य मनसो नाममात्रादृते न सत्त्वमित्युत्तरमाह—रामेत्यादिसार्धेन ॥ व्योम्नोऽपि पामरैर्वाचारम्भणादिशास्त्रसंस्कृतचित्तैश्च किंचिदपि सद्रूपं न दृश्यत एव ॥ ५९ ॥ नन्वनर्थमूलं मनो नास्ति चेत्तन्मूलोच्छेदाय प्रयतमाना वयं न कृतार्था इत्याशङ्क्य भ्रान्तदृष्ट्याह—सर्वत्रैवेति ॥ ६० ॥ सर्वत्र स्थितत्वमनुपपन्नमित्याशङ्क्यां शातयति श्लोकचतुष्टयेन सार्धेन—साधो इति ॥ प्रतिभानं ज्ञानम् । कीदृक्प्रतिभानं तत्राह—प्रथामिति ॥ प्रथां प्रसिद्धिं गतं घटज्ञानं पटज्ञानमिति प्रसिद्धिमित्यर्थः ॥ ६१ ॥ ६२ ॥ ६३ ॥ के च नेति द्विवचनम् ॥ ६४ ॥ एवं मनसो बन्धमूलत्वं स्वरूपविशेषं चाख्याय

इति संकल्पजालस्य नामान्येतानि राघव ।
संकल्पजाले गलिते स्वरूपमवशिष्यते ॥ ६५ ॥
असंभवति सर्वस्मिन्दिग्भूम्याकाशरूपिणि ।
प्रकाश्ये यादृशं रूपं प्रकाशस्यामलं भवेत् ॥ ६६ ॥
त्रिजगत्त्वमहं चेति दृश्येऽसत्त्वमुपागते ।
द्रष्टुः स्यात्केवलीभावस्तादृशो विमलात्मनः ॥ ६७ ॥
अनाप्ताखिलशैलादिप्रतिबिम्बे हि यादृशी ।
स्याद्दर्पणे दर्पणता केवलात्मस्वरूपिणी ॥ ६८ ॥
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसंभ्रमे ।
स्यात्तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे ॥ ६९ ॥

ज्ञानेन समूलस्य तस्य निवृत्तावात्मनः कैवल्यमाह—संकल्पेति ॥ ६५ ॥ जगन्नाम्नि संकल्पजाले गलिते यदात्मस्वरूपमवशिष्यते तद्भूतोपमानेन विशदयति—असंभवतीत्यादि ॥ असंभवतीति सतिसप्तमी ॥ ६६ ॥ असत्त्वमिति पदच्छेदः । दिग्भूम्यादिसकलप्रकाश्यविगमे यदि व्यापी निश्चलो विवस्वतः प्रकाशोऽवतिष्ठेत्तर्हि तस्य स्वरूपं कैवल्यावस्थायामात्मस्वरूपस्य दृष्टान्तो भवतीत्यर्थः ॥ ६७ ॥ भूतोपमानेनापि तत्स्वरूपमावेदयति—अनाप्तेति ॥ अनाप्ता अखिलानां शैलादिपदार्थानां प्रतिबिम्बा येन तत्तथोक्तम् । दर्पणे हि धारणविशेषेण प्रतिबिम्बविभ्रमोचितचक्षुःसंप्रयोगाभावादगृहीताखिलप्रतिबिम्बं भवति तस्मिन्दर्पणे यादृशी दर्पणता कीदृशीत्यत आह—केवलात्मस्वरूपिणी केवलदर्पणस्वरूपिणी ॥ ६८ ॥ अवीक्षणे वीक्षणीयस्याभावादेव तद्विषयवीक्षणरहिते स्थिते द्रष्टरि साक्षिणि तादृशी केवलता स्यात् ॥ ६९ ॥ एवंविधाऽकैवल्यप्राप्तौ मन एव विरोध्य-

मनो दृश्यमयं दोषं तनोतीमं क्षयात्मकम् ।
असदेव सदाकारं स्वप्नः स्वप्नान्तरं यथा ॥ ७० ॥

स्फुरति वल्गति गच्छति याचते
　भ्रमति मज्जति संहरति स्वयम् ।
अपरतामुपयात्यपि केवलं
　चलति चञ्चलशक्तितया मनः ॥ ७१ ॥

वसिष्ठ उवाच ॥

महाप्रलयसंपत्तावसत्तां समुपागते ।
अशेषदृश्ये सर्गादौ शान्तमेवावशिष्यते ॥ ७२ ॥
आस्तेऽनस्तमितो भास्वानजो देवो निरामयः ।
सर्वदा सर्वकृत्सर्वः परामात्मा महेश्वरः ॥ ७३ ॥

तस्तद्विनाशे परमो यत्न आस्थेय इति दर्शनाय तस्य दौरात्म्यं श्लोकद्वयेनाह—मन इत्यादिना ॥ ७० ॥ अपरतां देहाद्यनात्मरूपताधमतामिति वा । एवं चञ्चलशक्तितया केवलं मन एव चलति न त्वात्मेत्यर्थः ॥ ७१ ॥ प्रागुक्तकैवल्यप्राप्तिः परमात्मदर्शनाद्भवतीति वक्ष्यन्प्राकृतिकप्रलयमवलम्ब्यादौ परमात्मरूपं प्रतिपादयति—महाप्रलयेत्यादिना भिद्यते हृदयग्रन्थिरित्यतः प्राक्तनेन ॥ सर्गादौ सृष्टिपूर्वकाले । अथवा सृज्यतेऽनेनेति सर्गः कारणं तदादौ दृश्ये । शान्तमेव निर्विकारं ब्रह्मैव ॥ ७२ ॥ ननु दृश्यासत्त्ववद्द्रष्टुरप्यसत्त्वमेव युक्तम् । 'असद्वा इदमग्र आसीत्' । 'नासदासीन्नो सदासीत्तदानीं'मित्यादिश्रुतेरित्यत आह—आस्त इति ॥ अनस्तमितोऽज इति चाद्यन्तयोर्भावविकारयोर्निषेधान्मध्यवर्तिनोऽपि चत्वारो भावविकारा निषिद्धा वेदितव्याः । तस्याजडत्वमाह—देव इति ॥ द्योतमानत्वस्य

यतो वाचो निवर्तन्ते यो मुक्तैरवगम्यते ।
यस्य चात्मादिकाः संज्ञाः कल्पिता न स्वभावजाः ॥ ७४ ॥

यः पुमान्सांख्यदृष्टीनां ब्रह्म वेदान्तवेदिनाम् ।
विज्ञानमात्रं विज्ञानविदामेकान्तनिर्मलम् ॥ ७५ ॥

कादाचित्कत्वनिरासाय भास्वानित्युक्तम् । तस्य दुःखित्वं वारयति—निरामय इति ॥ सर्वदा शाश्वतः प्रतिपदविशेषणं वा । तस्य पूर्णत्वमाह—सर्व इति ॥ तत्र हेतुः सर्वकृदिति ॥ सर्वरूपेण विवर्तत इत्यर्थः । यद्वा निमित्तकारणत्वमाह—सर्वकृदिति ॥ सर्वकृत्त्ववत्सर्वनियामकत्वमपि तस्यैवेत्याह—महेश्वर इति ॥ ७३ ॥ ननु परमात्मा सर्वकृत्सर्वेश्वरश्चेत्तर्हि कार्यनियम्यसापेक्षत्वेन सविकल्पः स्यादित्याशङ्क्याविद्यकमेव सर्वकर्तृत्वादिकं वस्तुतो निर्विकल्पकमेव तस्य स्वरूपमित्यभिप्रेत्याह—यत इति ॥ यतो वाच इत्यादिषु पञ्चदश यच्छब्दास्तच्छब्दाध्याहारेणास्त इति पूर्वेण योजनीयाः । तस्मिन्दृष्टे परावर इति वक्ष्यमाणतच्छब्देन वा योजनीयाः । वागाद्यगोचरश्चेन्न तर्हि साक्षादुपलभ्येतेत्यत आह—यो मुक्तैरिति ॥ वागगोचरस्य ब्रह्मणः कथमात्मेत्यादिसंज्ञास्तत्राह—यस्येति ॥ न स्वभावजाः न स्वाभाविकाः ॥ ७४ ॥ ननु मुक्तैरनुभूयमानेऽपि तस्मिन्वागाद्यगोचरे नास्माकं विश्वास इत्याशङ्क्य तस्य विशिष्टकेवलरूपाभ्यां यथासंभवं सकलशास्त्रगम्यत्वान्मैवमित्यभिप्रायेणाह—य इति ॥ अथवा उक्ते परमार्थे वादिनां विप्रतिपत्तिदर्शिनां निरालम्बनविप्रतिपत्त्ययोगाद्विप्रतिपत्तेः प्रागेव तदालम्बनतया सिद्धे तस्मिन्विश्वासः कार्य इत्याशयेनाह—यः पुमानिति ॥ योगाचार्यमतमाह—विज्ञानेति ॥ एकान्तेन नियमेन निर्मलमेकान्तनिर्मलम् ॥ ७५ ॥ माध्यमिकमत-

यः शून्यवादिनां शून्यं भासको योऽर्कतेजसाम् ।
वक्ता मन्ता ऋतंभोक्ता द्रष्टा सर्ता सदैव यः ॥ ७६ ॥
सन्नप्यसज्जगति यो यो देहस्थोऽपि दूरतः ।
चित्प्रकाशो ह्ययं यस्मादालोक इव भास्वतः ॥ ७७ ॥
प्रकृतिव्रततिर्व्योम्नि जाता ब्रह्माण्डसत्फला ।
चित्तमूलेन्द्रियदला येन नृत्यति वायुना ॥ ७८ ॥

साह—यः शून्येति ॥ वस्तुतः शून्यमेव तत्त्वमित्याशङ्कानिरासायाह—भासक इति ॥ 'येन सूर्यस्तपति तेजसेद्ध' इति श्रुतेः। अर्कतेजोभासकत्वेन प्राप्तं तद्विपरीतजीवाद्भेदं परमात्मनो वारयति—वक्तेति ॥ ऋतंभोक्ता ऋतस्य भोक्ता। ऋतशब्देन कर्मफलमुच्यते। 'ऋतं पिबन्तौ सुकृतस्य लोके' इति श्रुतावृतशब्देन कर्मफलाभिधानात्। मन्ता ऋतमिति विसंधिकरणमार्षम्। वक्ता मन्ता स्वयं भोक्तेति क्वचित् ॥ ७६ ॥ सर्वव्यवहारसाधकज्योतिषोऽपि भासके प्रत्यक्षतमे तत्त्वे कथं वादिनां विप्रतिपत्त्यवकाश इत्याशङ्क्य रागादिदूषिततया सूक्ष्मवस्तुग्रहणासमर्थबुद्धित्वात्तदवकाशः संभवतीत्याशयेनाह—सन्नपीति ॥ जगति सन्नपि परमात्मा। 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रिति श्रुत्युक्तविशिष्टबुद्धिरहितानामसन्निव भवति सत्त्वफलाभावाद्देहस्थोऽपि दूरग इव भवति। तेषां वर्षसहस्रकोट्यापि तैरप्राप्यत्वात्। तस्यैव परमात्मनो जडप्रकाशकत्वनियामकत्वे क्रमेण श्लोकद्वयेनाह—चिदिति ॥ घटः स्फुरति पटः स्फुरतीत्यनुभूयमानश्चित्प्रकाशो यस्माच्चिदात्मनः प्रसृतः ॥ ७७ ॥ प्रकृतिरेव व्रततिर्लता। 'वल्ली तु व्रततिर्लते'त्यमरः। ब्रह्माण्डमेव सच्छोभनं फलं यस्यां सा तथोक्ता ॥ ७८ ॥ ननु जगद्भासकान्नियाम-

यश्चिन्मणिः प्रकचति प्रतिदेहसमुद्गके ।
यः प्लावयति संरब्धं पुर्यष्टकमितस्ततः ॥ ७९ ॥
शुद्धः संविन्मयत्वाद्यः खं भवेद्व्योमचिन्तया ।
पदार्थचिन्तयार्थत्वमिव गच्छत्यधिष्ठितः ॥ ८० ॥
आविर्भावतिरोभावमयास्त्रिभुवनोर्मयः ।
स्फुरन्त्यतितते यस्मिन्मराविव मरीचयः ॥ ८१ ॥

कात्र परमात्मनस्तद्विपरीतस्य जीवस्य भेदो युक्त इत्याशङ्क्य 'स एष इह प्रविष्टः', 'नान्योऽतोऽस्ति द्रष्टा', 'रूपं रूपं प्रतिरूपो बभूवे'त्यादिश्रुतिप्रापितं तस्यैव जीवस्वरूपेणावस्थानमाह—यश्चिदिति ॥ प्रकचति स्फुरति । समुद्गकः संपुटकः । प्रकृतिव्रततिरित्यनेनाधिदैवाभिप्रायेण नियामकत्वमुक्त्वा आध्यात्मिकाभिप्रायेणाह—यः प्लावयतीति ॥ इतस्ततः संरब्धं संक्षुब्धं पुर्यष्टकं यः प्लावयति गमयति। चालयतीत्यर्थः । पुर्यष्टकस्वरूपं महद्भिरुक्तम्—'ज्ञानेन्द्रियाणि खलु पञ्च तथाऽपराणि कर्मेन्द्रियाणि मनआदिचतुष्टयं च । प्राणादिपञ्चकमथो वियदादिकं च कामश्च कर्म च तमः पुनरष्टमी पूरि'ति ॥ ७९ ॥ ननु परमात्मैव शरीरमाविश्य संसरति चेत्तस्य कथं कैवल्यमित्याशङ्क्य वस्तुतोऽसंसारिणि तस्मिन्विपरीतभावनाप्रापितस्य तस्य संसारस्य तत्त्वभावनया निवृत्त्युपपत्तेर्घटत एव कैवल्यमित्याह—शुद्धेति ॥ अविद्यातत्कार्यरहितसंविद्रूपत्वाद्व्योमचिन्तयाकाशकल्पत्वचिन्तया खं भवेदाकाशकल्पं भवेत् । अथवा यो जीवभावमापन्नः परमात्मा स व्योमचिन्तया ब्रह्मचिन्तया खं भवेद्ब्रह्म भवेत् । पदार्थचिन्तया अनात्मपदार्थचिन्तया अधि संसारोपरि स्थितोऽधिष्ठितः । अथवा पदार्थचिन्तया व्यधिष्ठितो विषयीकृतः सन्नर्थत्वमाकाशादिपदार्थत्वं गच्छतीव ॥ ८० ॥ पदार्थचिन्तया-

कुर्वन्नपीह जगतां महतामनन्तं
　　वृन्दं न किंचन करोति कदाचनापि ।
स्वात्मन्यनस्तमयसंविदि निर्विकल्पे
　　त्यक्तोदयस्थितिमतिः स्थित एक एव ॥ ८२ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ८३ ॥

श्रीराम उवाच ॥

इयतो दृश्यजातस्य ब्रह्माण्डस्य जगत्स्थितेः ।
मुने कथमसन्नास्ति क्व मेरुः सर्षपोदरे ॥ ८४ ॥

र्थत्वमिव गच्छतीत्युक्तं प्रपञ्चयति—आविर्भावेत्यादिश्लोकद्वयेन ॥ अतितते ऽतिशयेन व्याप्ते यस्मिंश्चिदर्णवे आविर्भावतिरोभावप्रधानास्त्रिभुवनतरङ्गाः स्फुरन्ति स परमात्माऽस्त इति पूर्वेणान्वयः । 'तस्मिन्दृष्टे परावर'इत्युत्तरेणान्वय इत्यवादिष्म ॥ ८१ ॥ जगतां वृन्दं समूहं मायया कुर्वन्नपि वस्तुतो न करोति । त्यक्तोदयस्थितिमतिः त्यक्त उदयस्थितिसंकल्पो येन स त्यक्तोदयस्थितिमतिः । अथवा त्यक्तोदय इति भिन्नं पदम् । त्यक्त उदय उत्पत्तिर्येन स तथा स्थितिरस्यास्तीति स्थितिमांस्तस्मिन्निश्चल इत्येतत् । अनस्तमयसंविदि नाशरहितचिद्रूपे स्वात्मनि स्थितः । निराधारः स्थित इत्यर्थः ॥ ८२ ॥ एवमात्मस्वरूपं प्रतिपाद्य तद्विज्ञानफलमाह—भिद्यत इति ॥ हृदयग्रन्थिरहंकारः । परावरे पर उत्कृष्टः अवरो निकृष्टस्तद्रूपे सर्वात्मनीत्यर्थः ॥ ८३ ॥ परमात्मव्यतिरिक्तस्य सर्वस्य कल्पितत्वासंभवादद्वैतज्ञानं दुर्लभमित्याक्षिपति—इयत इति ॥ ८४ ॥

वसिष्ठ उवाच ॥

साधुसंगमसच्छास्त्रपरो भवसि राम चेत् ।
तद्दिनैरेव नो मासैः प्राप्नोषीमां परां धियम् ॥ ८५ ॥
सर्वेषामितिहासानामयं सार उदाहृतः ।
श्रुतेऽस्मिन्निर्मले यस्माज्जीवन्मुक्तत्वमव्ययम् ॥ ८६ ॥
उदेति स्वयमेवान्तरिदमेव विचारय ।
स्थितमेवास्तमायाति जगद्दृश्यं विचारणात् ॥ ८७ ॥
नृणां ज्ञानैकनिष्ठानामात्मज्ञानविचारिणाम् ।
सा जीवन्मुक्ततोदेति विदेहान्मुक्ततैव या ॥ ८८ ॥

श्रीराम उवाच ॥

ब्रह्मन्विदेहमुक्तस्य जीवन्मुक्तस्य लक्षणम् ।
ब्रूहि येन तथैवाहं यते शास्त्रगया दृशा ॥ ८९ ॥

ब्रह्मवित्सङ्गपूर्वकमद्वैतशास्त्रस्य निरन्तराभ्यासादतिसुलभमद्वैतज्ञानमिति परिहरति—साध्विति ॥ ८५ ॥ किं तच्छास्त्रं यत्परः परां धियं प्राप्नुयादिति तत्राह—सर्वेषामिति ॥ इतिहासानां भरतादीनां मध्ये सारत्वे हेतुमाह—श्रुत इति ॥ जीवन्मुक्तत्वं विदेहमुक्तत्वस्योपलक्षणम् ॥ ८६ ॥ अद्वैतज्ञानाय द्वैतविलय एव तदुचितोपायेन कार्यः किं विचारेणेत्यत्राह—स्थितमिति ॥ एवशब्दो विचारणादित्यनेनापि संबध्यते । जगद्दृश्यमधिष्ठानसाक्षात्कारपर्यवसायि विचारणादेव छायारोपितपिशाचवदस्तमायाति न तु मुद्गरप्रहारादिना तत्रापि यथास्थितमेवास्तमायाति नावयवविश्लेषादिद्वारा ॥ ८७ ॥ श्रुतेऽस्मिन्निर्मल इत्यादिनोक्तं विवृणोति—नृणामिति ॥ ८८ ॥ ब्रह्मन्निति स्पष्टार्थः ॥ ८९ ॥ जीवन्मुक्तस्य स्वानुभवैकगम्यं लक्षणमाह—

वसिष्ठ उवाच ॥

यथास्थितमिदं यस्य व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ ९० ॥
नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ।
यथाप्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ९१ ॥
यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ९२ ॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ ९३ ॥

यथेति ॥ प्रतिभाससमात्रेण परदृष्ट्या वा व्यवहारवतोऽपि यस्य यथास्थितमिदं जगत्तत्त्वदृष्ट्याऽस्तं गतं व्योम ब्रह्मस्थितं च भवति स जीवन्नेव मुक्त इत्युच्यते ॥ ९० ॥ तस्य परवेद्यमपि लक्षणमाह—नोदेतीति ॥ यथाप्राप्ते व्यवहारे स्थितिर्यस्य स तथोक्तः ॥ ९१ ॥ पुनरपि स्वानुभवगम्यं लक्षणमाचष्टे—यो जागर्तीत्यादिश्लोकत्रयेण ॥ स्वव्यतिरिक्तस्य द्वैतस्य वस्तुतोऽननुभवाज्जीवन्मुक्तः सुषुप्तिस्थो भवति । यथा विषयसंनिधानसदावपि निर्विकारत्वात्सुषुप्तस्तथा द्वैताभासोपलब्धत्वाज्जागर्ति च । अथवा साक्षादनुभूयमानब्रह्मत्वाज्जागर्ति च । तथाचोक्तं सर्वेश्वरेण—'तस्यां जागर्ति संयमी'ति । अस्य जाग्रज्जागरणमज्ञवन्न वर्तते निर्वासनस्तनुवासन इत्यर्थः । सकलवासनाविलये जीवन्मुक्तसंभवात् ॥ ९२ ॥ रागद्वेषभयादीनां प्रारब्धकर्मवेगेनोपस्थितानां रागद्वेषभयाभासादीनामनुरूपमनुगुणं यथा तथा चरन्नपि चेष्टमानोऽपि यो विद्वानतः आत्मस्वरूपो व्योमवदत्यच्छोऽतिनिर्मलो भवति । यथा व्योम निर्मलमेवमेवात्मापि रागादि-

यस्य नाहंकृतो भावो यस्य बुद्धिर्न लिप्यते ।
कुर्वतोऽकुर्वतोऽवापि स जीवन्मुक्त उच्यते ॥ ९४ ॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ ९५ ॥
शान्तसंसारकल्लोलः कलावानपि निष्कलः ।
यः सचिन्तोऽपि निश्चिन्तः स जीवन्मुक्त उच्यते ॥९६॥
यः समस्तार्थजातेषु व्यवहार्यपि शीतलः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ ९७ ॥
जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ९८ ॥

मलरहित इति विजानातीत्यर्थः ॥ ९३ ॥ यस्य विदुषोऽहंकृतोऽहं-कर्तेत्येवंविधो भावो भावना ज्ञानं न भवति इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते नाहम् । अहं तु तद्व्यापारसाक्षी अकर्तेत्येवं पश्यतीत्येतत् । यस्य बुद्धिरन्तःकरणं न लिप्यते नानुशयिनी भवति । अहमिदं निषिद्धं कृतवानिदं विहितं नाकार्षं तस्मान्नरके पतिष्यामीत्येवं यस्य बुद्धिर्न लिप्यते ॥ ९४ ॥ यस्मादित्यादयो निरामयमित्यन्ताः स्पष्टार्थाः । कचित्किंचिद्विविच्यते ॥ ९५ ॥ कलावानपि अविद्यया सावयवोऽपि निष्कलः वस्तुतो निरवयवः । सचिन्तोऽपि चिन्ताभासेन सह वर्तमानोऽपि निश्चिन्तो वस्तुतश्चिन्तारहितः ॥ ९६ ॥ परार्थेषु परस्वामिकवस्तुषु व्यवहारीव शीतलस्तापरहितः खेदरहित इत्यर्थः । उपलक्षणमेतद्धर्षरहितत्वस्य । नहि जीवन्मुक्तस्याभिमानवर्जितस्य समस्तार्थजातस्य साकल्येन वैकल्येन वा हर्षो विषादो वा संभवति ॥ ९७ ॥ ९८ ॥ न सन्नासन्न कार्यं न कारणमित्यर्थः

विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
न सन्नासन्न दूरस्थो न चाहं न च वेतरः ॥ ९९ ॥
ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ १०० ॥
न शून्यं नापि चाकारं न दृश्यं नापि दर्शनम् ।
नच भूतपदार्थौघः सदनन्ततया स्थितम् ॥ १ ॥
किमप्यव्यपदेशात्मा पूर्णात्पूर्णतराकृतिः ।
न सन्नासन्न सदसन्नाभावो भावनं न वा ॥ २ ॥
चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यपर्यन्तं यदनाधि निरामयम् ॥ ३ ॥
द्रष्टृदर्शनदृश्यानां मध्ये यद्दर्शनं स्थितम् ।
साधो तदवधानेन तदेतदवबुध्यसे ॥ ४ ॥

॥ ९९ ॥ १०० ॥ न शून्यं न निराकारमित्यर्थः ॥१॥ किमपि सदनन्ततया स्थितमिति संबन्धः । न सदिति सन्न भवति घटादाविव सत्ताजातेस्तत्रानभ्युपगमात् । सद्बुद्ध्यप्रकाश्यत्वाद्वा असन्न भवति परमार्थस्वरूपत्वात् । सदसन्न भवति विरोधाच्च । अभावोऽभवनम् अचिन्तेत्यर्थः । न भावनं चिन्ता ॥ २ ॥ चेत्यं दृश्यम् । आदिमध्यपर्यन्ता न विद्यन्ते यस्मिंस्तदनादिमध्यपर्यन्तम् । अनाधि मनःपीडारहितम् । निरामयं शरीरपीडारहितम् । यदेवंविधं चिन्मात्रं तद्विदेहमुक्तम् । उच्यत इति शेषः ॥ ३ ॥ एवं विदेहमुक्ताख्यं परमार्थरूपमाख्याय तत्साक्षात्कारोपायमाह—द्रष्टृति ॥ द्रष्टृदर्शनदृश्यानि ज्ञातृज्ञानज्ञेयानि तेषां मध्ये यद्दर्शनं तेषां साक्षितया स्थितं द्रष्टा स्फुरति दर्शनं स्फुरति दृश्यं स्फुरतीत्येवं स्फुरणरूपेण तेष्व-

श्रीराम उवाच ॥

परमार्थस्य किं रूपं तस्यानन्दचिदाकृतेः ।
पुनरेतन्ममाचक्ष्व निपुणं बोधवृद्धये ॥ ५ ॥

वसिष्ठ उवाच ॥

महाप्रलयसंपत्तौ सर्वकारणकारणम् ।
शिष्यते तत्परं ब्रह्म तदिदं वर्ण्यते शृणु ॥ ६ ॥
नाशयित्वा स्वमात्मानं मनसो वृत्तिसंक्षये ।
सद्रूपं यदनाख्येयं तद्रूपं तस्य वस्तुनः ॥ ७ ॥

नुगतं तद्विलक्षणं निर्विकल्पं प्रत्यक्चैतन्यं स्थितमित्यर्थः । तदवधानेन तस्मिंश्चित्तैकाग्र्येण । अथवा तदवधानेन तन्निश्चयेन शोधितत्वंपदार्थसाक्षात्कारेणेत्यर्थः । तदेतदवबुध्यसे । पूर्वोक्तमधुना च प्रतिपादितं परमार्थस्वरूपमवगच्छसीत्यर्थः ॥ ४ ॥ महाप्रलयसंपन्नावित्यादिना यत्परमार्थस्वरूपं प्रतिपादितं पुनश्च विदेहमुक्तरूपतयानन्तरमेव यन्निरूपितं तदिदमिति करतलामलकवद्विज्ञातुं रामः पृच्छति—परमार्थस्येति ॥ ५ ॥ परमार्थस्वरूपं शृङ्गग्राहिकया युक्त्या दर्शयितुमाह—महाप्रलयेति ॥ तदिदं वर्ण्यत इति ॥ तत्परंब्रह्म इदं वर्ण्यते। प्रत्यक्षं वर्ण्यत इत्यर्थः ॥ ६ ॥ तत्र नाशयित्वेत्यादिश्लोकचतुष्टयेन समाध्यवस्थामवलम्ब्य परमार्थस्वरूपमाह । समाध्यवस्थायां मनसो वृत्तयो नश्यन्ति मनो न नश्यतीत्यत आह—मनसो वृत्तिसंक्षय इति ॥ मनसो वृत्तीनां शब्दाद्याकाराणां सम्यक् क्षये सति स्वमात्मानं शरीरत्रयात्मना वर्तमानं नाशयित्वाभिमानमात्रार्पितं शरीरत्रयात्मत्वमात्मनः समाधावभिमाननाशे नश्यति । अत इदमभिधीयते—नाशयित्वा स्वमात्मानमिति । अत्र साध्याहारं

चितेर्जीवस्वभावाया यदचेत्योन्मुखं वपुः ।
चिन्मात्रं विमलं शान्तं तद्रूपं परमात्मनः ॥ ८ ॥
अङ्गलग्नेऽपि वातादौ स्पर्शाद्यनुभवं विना ।
जीवतश्चेतसो रूपं यत्तत्परममात्मनः ॥ ९ ॥
अस्वप्नाया अनन्ताया अजडाया महामते ।
यद्रूपं चिरनिद्रायास्तद्रूपं परमात्मनः ॥ ११० ॥
वेदनस्य प्रकाशस्य दृश्यस्य तमसस्तथा ।
वेदनं यदनाद्यन्तं तद्रूपं परमात्मनः ॥ ११ ॥

योजना । स्वमात्मानं नाशयित्वा अवस्थाने स्वात्मनि जातिगुणक्रियादिरहितत्वादनाख्येयं यत्सद्रूपं वृत्तिसंक्षये साक्षिरूपमस्ति तत्तस्य ब्रह्मवस्तुनो रूपं स्वरूपमुच्यते ॥ ७ ॥ जीवः स्वभावः स्वरूपं यस्याः सा जीवस्वभावा तस्याश्चितेरचेत्योन्मुखमविषयोन्मुखं यद्वपुः स्वरूपमस्ति । कीदृशं तदित्याह—चिन्मात्रं विमलं शान्तमिति ॥ निर्विकल्पं चिदेकरूपं अनाद्यागन्तुकमलद्वयरहितं निर्विकारं च तत्परमात्मनो रूपं स्वरूपमुच्यते ॥ ८ ॥ अङ्गलग्न इति ॥ अवयवसंगतेऽपि वातातपादौ स्पर्शाद्यनुभवं स्पर्शरूपादेरनुभवं विना चेतसश्चेतउपाधिकजीवस्य यद्रूपमस्ति त्यक्तशरीरस्य जीवस्य स्वरूपमङ्गलग्नेऽपि स्पर्शाद्यनुभवरहितं भवति । तदर्थमाह—जीवत इति ॥ तदात्मनः परमं संसारातीतं स्वरूपम् ॥ ९ ॥ अस्वप्नाया इति जागरितमपि दीर्घस्वप्न इति स्वप्नशब्देन गृह्यते । अस्वप्नायाः स्वप्नजागरितरहितायाः । अजडायाः सुषुप्तिरहितायाः । अनन्तवस्तुविषयत्वादनन्तायाश्चिरनिद्रायाश्चिरकालयोगनिद्राया यद्रूपं तद्रूपमित्यादि समम् । एतदुक्तं भवति—तुरीयावस्थानलक्षणयोगनिद्रायां सन्निर्विकल्पचिद्रूपं प्रतीयते तत्परमात्मनः स्वरूपमिति ॥ ११० ॥ विक्षेपदशामवलम्ब्यापि पर-

व्यवहारपरस्यापि यत्पाषाणवदासनम् ।
अव्योम्न एव व्योमत्वं तद्रूपं परमात्मनः ॥ १२ ॥
वेद्यवेदनवेत्तृत्वरूपत्रयमिदं पुरः ।
यत्रोदेत्यस्तमायाति तद्रूपं परमात्मनः ॥ १३ ॥
स्थावराणां हि यद्रूपं तच्चेद्बोधमयं भवेत् ।
मनोबुद्ध्यादिनिर्मुक्तं तत्परेणोपमीयते ॥ १४ ॥
ब्रह्मार्कविष्णुहरशक्रसदाशिवादि
शान्तौ शिवं परममेतदिहैकमास्ते ।

मात्मस्वरूपमाह—वेदनस्येत्यादिश्लोकत्रयेण ॥ वेदनस्यान्तःकरणवृत्तिलक्षणस्य प्रकाशस्यादित्यादिसंबन्धिनः दृश्यस्य शब्दादिवेद्यस्य उपलक्षणमेतत्प्रकाशस्य तमसोऽज्ञानस्य यद्वेदनं साक्षिलक्षणमस्ति तदित्यादि पूर्ववत् ॥ ११ ॥ व्यवहारपरस्येति ॥ भ्रान्त्या व्यवहारपरस्यापि जीवस्य वस्तुवृत्त्या पाषाणवद्यदासनं प्रौढशिलावन्निश्चलतयावस्थानम् । अव्योम्न एव मृषा सप्रपञ्चस्यैव व्योमत्वं वस्तुतो निःप्रपञ्चत्वम् । यद्वा व्योम्न एव लौकिकदृष्ट्याऽनाकाशसदृशस्यैव व्योमत्वं वस्तुत आकाशसदृशत्वं यत्तदित्यादि समानम् ॥ १२ ॥ वेद्यवेदनवेत्तृत्वरूपत्रयं वेद्यत्ववेदनत्ववेत्तृत्वरूपाणां त्रयं पुरः प्रत्यक्षं सत् यत्राधिष्ठाने उदेति उत्पद्यते अस्तमायाति नश्यति च तद्रूपम् ॥ १३ ॥ अभूतोपमानेन परमात्मस्वरूपं प्रतिपादयति—स्थावराणामिति ॥ स्थावराणामचरादीनां स्वभावतो मनोबुद्ध्यादिनिर्मुक्तं हि प्रसिद्धं यद्रूपमस्ति तद्बोधमयं बोधस्वरूपं कदाचिद्भवेच्चेत्तर्हि तत्स्वरूपं परेण परमात्मनोपमीयते । अर्थात्तत्परमात्मन उपमानमित्युक्तं भवति ॥ १४ ॥ उपसंहरति—ब्रह्मेति ॥ ब्रह्मविष्णुहरा रज-

सर्वोपाधिव्ययवशादविकल्परूपं
चैतन्यमात्रमयमुज्झितविश्वसङ्गम् ॥ ११५ ॥

इति श्रीवाल्मीकीये मोक्षोपाये उत्पत्तिप्रकरणार्थदर्शनो नाम प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः

वसिष्ठ उवाच ॥

अत्रेदं मण्डपाख्यानं शृणु श्रवणभूषणम् ।
निःसंदेहो यथैषोऽर्थश्चित्ते विश्रान्तिमेति ते ॥ १ ॥
आसीदस्मिन्महीपीठे कुलपद्मो विकासवान् ।
पद्मो नाम नृपः श्रीमान्बहुपुत्रो विवेकवान् ॥ २ ॥

आदिगुणोपाधयः । सदाशिवो गुणसाम्यसाक्षी । आदिशब्देन गुणसाम्योपाधिर्महेश्वरादिर्गृह्यते । शिवं मङ्गलम् । आनन्दरूपमित्यर्थः। अविकल्परूपं निर्विकल्पस्वरूपम् । तत्र हेतुः—सर्वोपाधिव्ययवशादिति ॥ सर्वोपाधिनाशवशात् चैतन्यमात्रमयं चैतन्यमात्रस्वरूपम् । उज्झितविश्वसङ्गं त्यक्तसर्वसङ्गम् ॥११५॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौ वासिष्ठचन्द्रिकायां उत्पत्तिप्रकरणे आकाशजाख्यानं नाम प्रथमः सर्गः ॥ १ ॥

पूर्वस्मिन्नाकाशजाख्याने चिन्मात्रस्वरूपस्य परमात्मनो मायैव मनो भूत्वा जगत्सृजतीत्युक्तम् । इदानीं मायाया बहुदुर्घटहेतुत्वं जगन्मायिकत्वनिश्चयदार्ढ्याय प्रपञ्चयितुं लीलाख्यानमवतारयति—अत्रेदमिति ॥ तथाच महद्भिरुक्तम्—'पूर्वत्राकाशजाख्याने चिन्मात्रस्य परात्मनः ॥ या माया सा मनो भूत्वा सृजतीत्युपवर्णितम् ॥ लीलाख्यानेन मायाया बहुदुर्घटहेतुता । प्रपञ्च्यते मायिकत्वं जगत्येतत्स्फुटीभवेदि'ति ग्रन्थस्तु चित्ताकाशमित्यतः प्राक्तनः स्पष्टार्थः । क्वचित्किंचिद्विविच्यते ॥१॥ कुलपद्मः कुलालंकारः । पद्मशब्दो वा पुंलिङ्गे भवति । 'वा पुंसि

मर्यादापालनाम्भोधिर्द्विषत्तिमिरभास्करः ।
सरः सद्गुणहंसानां दोषतृण्याहुताशनः ॥ ३ ॥
तस्यासीत्सुभगा भार्या लीला नाम विलासिनी ।
सर्वसौभाग्यवलिता कमलेवोदितावनौ ॥ ४ ॥
उद्विग्ने प्रोद्विग्ना मुदिते मुदिता समाकुलाकुलिते ।
प्रतिविम्बसमाक्रान्ता संक्रुद्धे केवलं भीता ॥ ५ ॥
सैकदा चिन्तयामास शुभसंकल्पशालिनी ।
प्राणेभ्योऽपि प्रियो भर्ता ममैष जगतीपतिः ॥ ६ ॥
यौवनोल्लासवाञ्श्रीमान्कथं स्यादजरामरः ।
भर्त्रानेन कथं साकं रमे युगशतान्यहम् ॥ ७ ॥
ज्ञानवृद्धांस्तपोवृद्धान्विद्यावृद्धानहं द्विजान् ।
पृच्छामि तावन्मरणं कथं न स्यान्नृणामिति ॥ ८ ॥

पद्मं' इत्यमरः । विकासवान् कीर्तिमान् । अथवा मुखविकासवान् नित्यप्रमुदितमुख इति यावत् ॥२॥ मर्यादापालनाम्भोधिः मर्यादापालनेऽम्भोनिधितुल्यः । यथाम्भोधिर्वेलां मर्यादां नातिक्रामति तथा वर्णाश्रममर्यादां नातिक्रामतीत्यर्थः । द्विषत्तिमिरभास्करः शत्र्वन्धकारसूर्यः । सद्गुणाः शोभनगुणास्ते च हंसास्तेषां सरः । दोषतृण्याहुताशनः दोषा एव तृण्या तृणसमूहस्तस्य हुताशनोऽग्निः । 'पाशादिभ्यो य'इति समूहार्थे तृणशब्दाद्यः प्रत्ययः ॥ ३ ॥ शोभनो भगः श्रीर्यस्याः सा सुभगा । कमला लक्ष्मीः उदितोत्पन्ना । अवनिर्भूमिः । अवनावुदिता कमलेवेति संबन्धः ॥ ४ ॥ भर्तर्युद्विग्ने संतप्ते सति प्रोद्विग्ना प्रकर्षेण संतप्ता भवति ॥ ५ ॥ ६ ॥ यौवनोल्लासवान् यौवनोद्रेकवान् ॥ ७ ॥ ज्ञानं ब्रह्मविषयम् । विद्या देवता

इत्यानीयाथ संपूज्य द्विजान्पप्रच्छ सा नता ।
अमरत्वं कथं विप्रा भवेदिति पुनःपुनः ॥ ९ ॥

विप्रा ऊचुः ॥

तपोजपयमैर्देवि समस्ताः सिद्धसिद्धयः ।
संप्राप्यन्तेऽमरत्वं तु न कथंचन लभ्यते ॥ १० ॥
इत्याकर्ण्य द्विजमुखाच्चिन्तयामास सा पुनः ।
इदं स्वप्रज्ञयैवाशु भीता प्रियवियोगतः ॥ ११ ॥
मरणं भर्तुरग्रे मे यदि दैवाद्भविष्यति ।
तत्सर्वदुःखनिर्मुक्ता संस्थास्ये सुखमात्मनि ॥ १२ ॥
अथ वर्षसहस्रेण भर्तादौ चेन्मरिष्यति ।
तत्करिष्ये यथा येन जीवो गेहान्न यास्यति ॥ १३ ॥
तद्भ्रमद्भर्तृजीवेऽस्मिन्निजे शुद्धान्तमण्डपे ।
भर्त्रावलोकिता नित्यं निवत्स्यामि यथासुखम् ॥ १४ ॥
अद्यैवारभ्यैतदर्थं देवीं ज्ञप्तिं सरस्वतीम् ।
जपोपवासनियमैरातोषं पूजयाम्यहम् ॥ १५ ॥

धर्मादिविषया ॥ ८ ॥ इत्यानीयेत्यत्रेतिशब्दस्य चिन्तयामासेति पूर्वेणान्वयः । हे विप्राः, मर्त्यानाममरत्वं कथं भवेदिति पुनःपुनः पप्रच्छेत्यन्वयः ॥ ९ ॥ यमा अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः सिद्धानां सिद्धयोऽणिमादयः सिद्धसिद्धयः ॥ १० ॥ ११ ॥ तत्तर्हि आत्मन्यद्वितीयानन्दस्वरूपे । संस्थास्ये सम्यक्पुनरुन्मज्जनायोग्यतया स्थितिं करिष्ये ॥ १२ ॥ अथेति पक्षान्तरे ॥ १३ ॥ तत्तदा भ्रमद्भर्तृजीवे परिभ्रमत्पतिजीवे । शुद्धान्तमण्डपे अन्तःपुरमण्डपे ॥१४॥ आतोषं तुष्टिपर्यन्तम् ॥ १५ ॥ आस्थिता आश्रिता ॥ १६ ॥

इति निश्चित्य सा नाथमनुक्त्वैव वराङ्गना ।
यथाशास्त्रं चकारोग्रं तपो नियममास्थिता ॥ १६ ॥
त्रिरात्रस्य त्रिरात्रस्य पर्यन्ते कृतपारणा ।
देवद्विजगुरुप्राज्ञविद्वत्पूजापरायणा ॥ १७ ॥
स्नानदानतपोध्याननित्योद्युक्तशरीरका ।
सर्वास्तिक्यसदाचारकारिणी क्लेशहारिणी ॥ १८ ॥
त्रिरात्रशतमेवं सा बाला नियमशालिनी ।
अनारतं तपोनिष्ठामतिष्ठत्कष्टचेष्टया ॥ १९ ॥
त्रिरात्राणां शतेनाथ पूजिता प्रतिमानिता ।
तुष्टा भगवती गौरी वागीशा समुवाच ताम् ॥ २० ॥
निरन्तरेण तपसा भर्तृभक्त्यतिशायिना ।
परितुष्टास्मि ते वत्से गृहाण वरमीप्सितम् ॥ २१ ॥

राज्ञ्युवाच ॥

जय जन्मजराज्वालादाहदोषशशिप्रभे ।
जय हार्दान्धकारौघनिवारणरविप्रभे ॥ २२ ॥

प्राज्ञो धर्माद्यभिज्ञः । विद्वान् ब्रह्मवित् । देवद्विजगुरुप्राज्ञवृद्धपूजापरायणेति क्वचित् ॥ १७ ॥ स्नानदानतपोध्यानेषु नित्यमुद्युक्तं शरीरं यस्याः सा तथोक्ता। सर्वास्तिक्येन सदाचारकारिणी सर्वास्तिक्यसदाचारकारिणी ॥ १८ ॥ अनारतं संततं तपोनिष्ठामवलम्ब्यातिष्ठदित्यध्याहारः । अथवातिष्ठदित्यन्तर्भावितण्यर्थः। अस्थापयदित्यर्थः ॥ १९ ॥ प्रतिमानिता प्रतिपूजिता । आदरातिशयद्योतनाय पूजिता प्रतिमानितेत्युक्तम् । प्रतिमागतेति क्वचित् ॥ २० ॥ भर्तृभक्त्यतिशायिनेति भर्तृभक्त्यतिशयितेन ॥ २१ ॥ जन्मजरा एव ज्वालास्ताभिर्दाह एव दोषस्तच्छामकशशिप्रभे । हृत्संबन्धी हार्दः ॥ २२ ॥ २३ ॥

अम्ब मातर्जगन्मातस्त्रायस्व कृपणामिमाम् ।
इदं वरद्वयं देहि यदिह प्रार्थ्यते मया ॥ २३ ॥
एकं तावद्विदेहस्य भर्तुर्जीवो ममान्तिकात् ।
अस्मादेव हि मा यासीन्निजान्तःपुरमण्डपात् ॥ २४ ॥
द्वितीयं तु महादेवि प्रार्थयेऽहं यदा यदा ।
दर्शनाय वरार्थेन तदा मे देहि दर्शनम् ॥ २५ ॥
इत्याकर्ण्य जगन्माता तथास्त्वेवमिति स्वयम् ।
उक्त्वान्तर्धानमगमत्प्रोत्थायोर्मिरिवार्णवे ॥ २६ ॥
अथ सा राजमहिषी परितुष्टेष्टदेवता ।
पूर्णेवामृतवर्षेण बभूवानन्दधारिणी ॥ २७ ॥
पक्षमासर्तुकटके दिनारे वर्षदण्डके ।
क्षणनाभौ स्पन्दमये कालचक्रे वहत्यथ ।
अन्तर्धिमाजगामास्याः पत्युस्तच्चेतनं तनौ ॥ २८ ॥
मृते तस्मिन्महीपाले शोकसंतापपीडिता ।
निर्जला नलिनीवासौ परां म्लानिमुपाययौ ॥ २९ ॥

विदेहस्य मृतस्य ॥२४॥ वरार्थेन वरप्रयोजनेन हेतुना दर्शनाय यदा त्वां प्रार्थये तदा दर्शनं द्वितीयं वरं मे देहीत्यन्वयः ॥२५॥२६॥२७॥ पक्षमासर्तुकटक इत्यादीनि पञ्च कालचक्रस्य विशेषणानि। पक्षमासर्तवः कटकं नाभिवलयं यस्य तत्तथा। 'भूभृन्नितम्बे वलये चक्रे च कटकोऽस्त्रियामि'त्यमरः। दिनान्यरा यस्य तत्तथा। नाभिमारभ्य नेमिपर्यन्तं परितः समर्पिता अयोविकारा अरा उच्यन्ते। वर्षदण्डके संवत्सराक्षके क्षणः। नाभिः पिण्डिका । स्पन्दमये स्पन्दस्वरूपे । रविगतेः कालव्यञ्जकत्वेनोपचारात्तन्मयत्वमुक्तम् । वहतीति सतिसप्तमी ॥२८॥ इष्टवियोगजं दुःखं शोकः। तापो दुःखमात्रम् । नलिनी पद्मिनी ॥२९॥

क्षिप्रमाक्रन्दिनी क्षिप्रं मौनमूका वियोगिनी ।
बभूव चक्रवाकीव मानिनी मरणोन्मुखी ॥ ३० ॥
अथ तामतिमात्रविह्वलां सकृपाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविह्वलां प्रथमा वृष्टिरिवान्वकम्पत ॥ ३१ ॥

सरस्वत्युवाच ॥

किं स्मृतास्मि त्वया वत्से धत्से किमतिशोकताम् ।
इत्युपेत्य पुरो ज्ञप्तिस्तामुवाच सरस्वती ॥ ३२ ॥
शवीभूतमिमं वत्से भर्तारं पुष्पखण्डके ।
आच्छाद्य स्थापयैनं त्वं पुनर्भर्तारमाप्स्यसि ॥ ३३ ॥
पुष्पाणि म्लानिमेष्यन्ति नो न चैष विनङ्क्ष्यति ।
भूयश्च तव भर्तृत्वमचिरेण करिष्यति ॥ ३४ ॥
एतदीयश्च जीवोऽसावाकाशविशदस्तव ।
न निर्गमिष्यति क्षिप्रमितोऽन्तःपुरमण्डपात् ॥ ३५ ॥
सा दिव्यां भारतीं श्रुत्वा स्थापयित्वा तथा पतिम् ।
दुःखादाह्वाययामास सोवाच समुपेत्य ताम् ॥ ३६ ॥

लीलोवाच ॥

क्व ममावस्थितो भर्ता किं करोत्यथ कीदृशः ।
समीपं नय मां तस्य नैका शक्नोमि जीवितुम् ॥ ३७ ॥

॥ ३० ॥ अतिमात्रविह्वलामत्यर्थपरवशाम् । शफरी मत्स्यावान्तरजातिः । 'प्रोष्ठी तु शफरी द्वयोरि'त्यमरः । क्षुद्रमत्स्य इति केचित् ॥३१॥३२॥ पुष्पखण्डके पुष्पसमूहे ॥ ३३ ॥ ३४ ॥ ३५ ॥ आह्वाययामासेति णिजर्थोऽत्राविवक्षितः । आजुहावेत्यर्थः ॥ ३६ ॥ ३७ ॥

ज्ञप्तिरुवाच ॥

चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं वरानने ॥ ३८ ॥
देशाद्देशान्तरप्राप्तौ संविदो मध्यमेव यत् ।
निमेषेण चिदाकाशं तद्विद्धि वरवर्णिनि ॥ ३९ ॥

ब्रह्मणि विदिते सति तस्मिंश्चित्तवृत्तिनिरोधात्मकाद्योगादयोगिजना- गोचरपदार्थदर्शनसामर्थ्यं संभवति यतस्ततो लीलाया अन्तः- पुरमण्डपाकाशे वर्तमानभर्तृदर्शनसामर्थ्यसिद्ध्यर्थं ब्रह्मस्वरूपं प्रति- पादयति भगवती सरस्वती—चित्ताकाशमित्यादिश्लोकद्वयेन ॥ ननु वक्ष्यमाणविदूरथभार्याभूतलीलाया इव ब्रह्मप्रतिपादनादिकं विनापि लीलायै सृष्ट्यन्तरदर्शनसामर्थ्यं कुतो न ददाति सरस्वती ब्रह्मप्रतिपाद- नादावेव कुतः प्रवर्तते इतिचेदुच्यते । लीलया लीलान्तरवत्सांसारि- कफलाभिलाषेणानाराधितत्वादीश्वर्याः संसारान्मुक्ता भवेयमित्यभि- संधायाराधितत्वाच्च सा तदनुकूलमेव प्रवर्तते । चित्तमेव स्वच्छत्वसू- क्ष्मत्वादिनाकाशकल्पत्वादाकाशं चित्परमात्मैवाकाशं चिदाकाशं आकाशं च महाभूतसंज्ञं तृतीयमस्ति स्वच्छत्वसूक्ष्मत्वादिना जगति प्रसिद्धेषु तेषु त्रिषु यच्चिदाकाशं तद्द्वाभ्यां शून्यतरमत्यन्तशून्यं विद्धि । अथवा आकाशं च तृतीयकमिति व्याकृतमुच्यते द्वाभ्यां शून्यतरमि- त्यनेन ब्रह्मणो निष्प्रपञ्चत्वमुक्तम् । चित्ताव्याकृतातिरिक्तप्रपञ्चाभावात् ॥ ३८ ॥ देशादिति ॥ संविदः चित्तस्य देशाद्देशान्तरप्राप्तौ विषयाद्विषया- न्तरप्राप्तौ सत्यां निमेषेणात्यल्पकालेन प्रतीयमानं यन्मध्यमस्ति तदेव चिदाकाशं विद्धि जानीहि । एतदुक्तं भवति—चित्तस्य पूर्ववृत्तौ नष्टाया- मुत्तरवृत्तौ भवित्र्यां मध्ये यन्निर्विषयं संधिसाक्षिभूतं चैतन्यं स्वयं प्रकाशते, वृत्त्योर्मध्ये प्रतीयमानत्वान्मध्यमित्युच्यमानं तच्चिदाकाशं

तस्मिन्निरस्तनिःशेषसंकल्पस्थितिमेषि चेत्।
सर्वात्मकं पदं शान्तं तदा प्राप्नोष्यसंशयम् ॥ ४० ॥
अत्यन्ताभावसंपत्त्या जगतस्त्वेतदाप्यते।
नान्यथा मद्वरेणाशु त्वं तु प्राप्स्यसि सुन्दरि ॥ ४१ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा सा ययौ देवी दिव्यमात्मीयमास्पदम्।
लीला तु लीलयैवासीन्निर्विकल्पसमाधिभाक् ॥ ४२ ॥
तत्याजाथ निमेषेण सान्तःकरणपञ्जरम्।
स्वदेहं खमिवोड्डीना मुक्तनीडा विहङ्गमी ॥ ४३ ॥

विद्धीति। तथाच सप्तभूमिकानिरूपणावसरे वक्ष्यति—'अर्थादर्थान्तरं चित्ते याति मध्ये तु या स्थितिः। निरस्तमननाकारा स्वरूपस्थितिरुच्यते' इति। उक्तंच महद्भिः—'संधयोऽखिलवृत्तीनामभावाश्चावभासिताः। निर्विकारेण येनासौ कूटस्थ इति गीयते' इति॥३९॥ एवं ब्रह्मात्मकं चिदाकाशं प्रतिपाद्य तद्विषयं योगं तत्फलं चाह—तस्मिन्निति॥ निरस्तो निःशेषो निरवशेषः संकल्पोऽनात्मप्रत्ययलक्षणो यया सा तथोक्ता। एषि गच्छसि। इण्गताविति धातोर्लण्मध्यमपुरुषैकवचनम्। प्राप्नोषि। अवगतिप्राप्तिद्वारा मुच्यस इत्यर्थः। तथाचोक्तम्—'वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि। एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते' इति। 'यदा सर्वाणि भूतानि समाधिस्थो न पश्यति। एकीभूतः परेणासौ तदा भवति केवलः' इति च ॥ ४० ॥ सर्वात्मकपदप्राप्तावुपायमाह—अत्यन्ताभावसंपत्त्येति॥ जगतोऽत्यन्ताभावसंपत्त्या। अत्यन्तासत्त्वनिश्चयेनेतियावत्। एतत्सर्वात्मकं पदम्। मद्वरेणाश्वित्यादिर्यथा पत्युरित्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः। क्वचित्किंचिद्व्याख्यायते ॥ ४१ ॥ ४२ ॥ ४३ ॥

ददर्श खस्थं भर्तारं तस्मिन्नेवाम्बरालये ।
संस्थितं पृथिवीपालमास्थाने बहुराजके ॥ ४४ ॥
सिंहासनसमारूढं जय जीवेति संस्तुतम् ।
पूर्वद्वारस्थितासंख्यमुनिविप्रर्षिमण्डलम् ॥ ४५ ॥
पश्चिमद्वारगाशेषराजराजेशमण्डलम् ।
उत्तरद्वारगासंख्यरथहस्त्यश्वसंकुलम् ॥ ४६ ॥
दक्षिणद्वारगासंख्यललनालोकसंकुलम् ।
पपाताथ महारम्भा सा तां नरपतेः सभाम् ॥ ४७ ॥
तद्देशांस्तत्समाचारांस्तथा तानेव तालकान् ।
अथान्यानप्यपूर्वांश्च पण्डितान्सुहृदस्तथा ॥ ४८ ॥
महानदनदीशैलपुरपत्तनमण्डितान् ।
द्विरष्टवर्षं भूपालं प्राक्तन्या जरसोज्झितम् ॥ ४९ ॥
सर्वमालोक्य सा राज्ञी विस्मयं परमं ययौ ।
अथाभ्युत्थाय सा राज्ञी निजान्तःपुरमागता ॥ ५० ॥
देवीं सस्मार विज्ञप्तिं ददर्श च पुरः स्थिताम् ।
भद्रासनगतां देवीं लीलापृच्छद्भुवि स्थिता ॥ ५१ ॥
यथा पत्युरमूर्तोऽस्मात्सर्गात्सर्गो भ्रमात्मकः ।
जातस्तथा कथय मे जगद्भ्रमनिवृत्तये ॥ ५२ ॥

तस्मिन्नेवाम्बरालये स्व एव गृहाकाश इत्यर्थः ॥ ४४ ॥ जीवेति क्रियापदम् ॥ ४५ ॥ ४६ ॥ पपात जगाम ॥ ४७ ॥ तच्छब्दैर्लीलया प्रागनुभूतदेशादयः परामृश्यन्ते । तालका बन्दिनः ॥४८॥ पुरं शाखानगरम् । पत्तनं मूलनगरम् । राजधानीत्यर्थः ॥४९॥५०॥ भद्रासनगतां सिंहासनगताम् । 'नृपासनं यत्तद्भद्रासनं सिंहासनं च तदि'त्यमरः । शुभासनगतामिति ॥ ५१ ॥ पद्मनृपेण मरणान-

श्रीदेव्युवाच ॥

प्राक्स्मृतेर्भ्रान्तिमात्रात्मा सर्गोऽयमुदितो यथा ।
तथा द्वितीयः पत्युस्ते यथैतत्कथ्यते शृणु ॥ ५३ ॥
अस्ति कश्चिच्चिदाकाशे क्वचित्संसारमण्डपः ।
आकाशविशदः काचदलसंछादिताकृतिः ॥ ५४ ॥
मेरुस्तम्भस्थलोकेशपुरन्ध्रीशालभञ्जिकः ।
कोणस्थभूतवल्मीकव्याप्तपर्वतलोष्टकः ॥ ५५ ॥

न्तरक्षण एव तस्मिन्नेव गृहाकाशे दृष्टस्य प्रपञ्चान्तरस्योत्पन्नावुचितदेशकालसाधनाद्यभावात्स्वप्नप्रपञ्चवन्मिथ्यात्वं निश्चित्य तद्दृष्टान्तेन संभावितस्य जगन्मिथ्यात्वस्य निश्चयाय पत्युः प्रपञ्चान्तरभ्रमकारणं यथेत्यादिश्लोकेन पृच्छति । तद्भ्रमकारणे विदिते तत्कारणकस्य सर्वस्यापि जगतो मिथ्यात्वं निश्चेतुं शक्यत इति । मूर्तो मूर्तिमानवयवः स न भवतीत्यमूर्तः । अमूर्तत्वे हेतुः—भ्रमात्मक इति ॥ तस्मात्सर्गादन्य इत्यध्याहार्यम् ॥ ५२ ॥ सर्वोऽयं प्रपञ्चो भ्रमात्मक एव तत्र पूर्वभ्रमादुत्तरोत्तरभ्रमोत्पत्तिरिति सिद्धान्ते स्थिते त्वत्पत्युर्मरणात्प्राक्तनप्रपञ्चभ्रमो यथा पूर्वजन्मसंचितादुत्पन्नस्तथा मरणानन्तरभाविप्रपञ्चभ्रमोऽपि पूर्वजन्मभावनयोत्पन्न इत्युत्तरमाह—प्रागिति ॥ दृष्टान्त एवासंप्रतिपन्न इत्याशङ्क्याह—यथैतदिति ॥ यथैतत्स्पष्टं भवति तथा कथ्यते ॥ ५३ ॥ पद्मलीलयोः सर्गान्तरे ब्राह्मणदम्पतितया पूर्वमवस्थानादिकं दर्शयितुं तदीयं पूर्वसंसारं जीर्णमण्डपतया वर्णयति हेयत्वाय—अस्ति कश्चिदित्यादिना ॥ संछाद्यतेऽनेनेति संछादनं आकाशमेव नीलत्वात्काचदलात्मकसंछादनं तेनाच्छादिताकृतिसकारो यस्य स तथा ॥ ५४ ॥ मेरुरेव स्तम्भस्तत्स्था या लोकेशा-

अनेकपुत्रजरठप्रजेशब्राह्मणास्पदम् ।
वातमार्गमहावंशस्थितवैमानिकीटकः ॥ ५६ ॥
नभोनिवासिसिद्धौघमशकाहितघुंघुमः ।
सुरासुरादिदुर्बाललीलाकलकलाकुलः ॥ ५७ ॥
तत्र कस्मिंश्चिदेकस्मिन्कोणापवरकोदरे ।
शैललोष्टतलेऽस्त्येको गिरिग्रामकगर्तकः ॥ ५८ ॥

नासिन्द्रादीनां पुरन्ध्र्यः कुटुम्बिन्यस्ता एव शालभञ्जिकाः पुत्तलिका यस्य स तथा । मण्डपश्चिरकालस्थो वल्मीकव्याप्तलोष्टको भवति तथा संसारमण्डपोऽपि कोणस्थभूतवल्मीकव्याप्तपर्वतलोष्टकः । लोष्टं पांशुपिण्डः । पर्वतकोणेषु स्थिताः प्राणिनो भूतशब्देनोच्यन्ते । पर्वता एव लोष्टानि कोणस्थभूतान्येव वल्मीकानि तैर्व्याप्तानि पर्वतलोष्टानि यस्मिन्स तथा । अथवा कोणस्थानिभूतवल्मीकव्याप्तानि पर्वतलोष्टानि यस्य स तथोक्तः ॥ ५५ ॥ जरठो जरायुक्तः । अनेके पुत्रा मरीच्यादयो यस्य सोऽनेकपुत्रः । अनेकपुत्रो जरठश्च यः प्रजेशो ब्राह्मणस्तस्यास्पदं स्थानम् । मण्डपो ह्यूर्ध्वभागे तिर्यगायतमहावंशस्थितकीटको भवति तथा संसारमण्डपोऽपीत्याह—वातेति ॥ मेघमार्गसौरमार्गयोर्मध्ये वातमार्गः प्रसिद्धः । यं मार्गमासाद्य भीमसेनेन प्रक्षिप्ता अनेकसहस्रगजास्तूलायन्तेस्म । वैमानिनो विमानगामिनस्त एव कीटकाः । वातमार्ग एव महावंशस्तस्मिन् स्थिता वैमानिकीटा यस्य स तथा ॥ ५६ ॥ नभोनिवासिसिद्धौघा एव मशकास्तैराहितः कृतो घुंघुमो घुंघुमध्वनिर्यस्मिन्स तथा । सुरादय एव दुर्बाला दुष्टबालास्तेषां लीलाकलकलेन लीलाकोलाहलेनाकुलः ॥ ५७ ॥ तत्र कस्मिंश्चिदित्यादिरेष ते कथित इत्यन्तः प्राक्तनो ग्रन्थसंदर्भः स्पष्टार्थः ।

तस्मिन्नदीशैलवनोपगूढे साग्निः सदारः श्रुतवानरोगः ।
गोक्षीरवान् राजभयानभिज्ञः सर्वातिथिर्धर्मपरो द्विजोऽभूत् ॥५९॥

वित्तवेषवयःकर्मविद्याविभवचेष्टितैः ।
वसिष्ठस्येव सदृशो नतु वासिष्ठचेतनः ॥ ६० ॥
वसिष्ठ इति नाम्नासौ तस्याभूदिन्दुसुन्दरी ।
नाम्ना त्वरुन्धती भार्या भूमौ व्योमन्यरुन्धती ॥ ६१ ॥
वित्तवेषवयःकर्मविद्याविभवचेष्टितैः ।
समैव साप्यरुन्धत्या न तु चैतन्यवत्तया ॥ ६२ ॥
स विप्रस्तस्य शैलस्य सानौ सरलशाद्वले ।
कदाचिदुपविष्टः सन्ददर्शाधो महीपतिम् ॥ ६३ ॥
समग्रपरिवारेण यातमाखेटकेच्छया ।
तमालोक्य महीपालमिदं चिन्तितवानसौ ॥ ६४ ॥

तत्र कानिचित्पदानि विविच्यन्ते । अपवरकं गर्भागारः । शैललोष्टतले पर्वतलोष्टाधः । गिरिग्रामं इति ग्रामनाम । स च ग्रामः पर्वतस्य निम्नप्रदेशस्थ इति दर्शयितुं गर्तकशब्दः ॥ ५८ ॥ उपगूढे आलिङ्गिते ॥ ५९ ॥ वसिष्ठस्येव सदृश इत्यत्रेवशब्दोऽवधारणे । वसिष्ठस्य सदृश एव नतु वासिष्ठचेतनः नैव वसिष्ठसंबन्धी जीवः । प्रसिद्धवसिष्ठादन्य एवेत्यर्थः ॥ ६० ॥ वसिष्ठ इति नाम्नासौ विख्यात इति शेषः ॥ ६१ ॥ ६२ ॥ सरलशाद्वले सरलैः पूतिकाष्ठाख्यवृक्षैः शाद्वले हरिते । 'पीतद्रुः सरलः पूतिकाष्ठं चे'त्यमरः । यद्यपि—'शाद्वलः शादहरित'इति शादेन शष्पेण हरिते नीले देशे शाद्वलशब्दमाहामरः । पाणिनिरपि शादोऽस्त्यस्मिन्प्रदेश इत्येवमर्थे 'नडशादाड्ड्वलच्'इति ड्वलच्प्रत्ययमाह, तथापि तस्यार्थस्यात्रासंभवाच्छाद्वलशब्देन हरितत्वमेव विवक्षितम् ॥ ६३ ॥ आखेटो मृगया ॥६४॥

अहो नु रम्या नृपता सर्वसौभाग्यलालिता ।
कदा स्यां दशदिक्कुञ्जपूरकोऽहं महीपतिः ॥ ६५ ॥
पदातिरथहस्त्यश्वपताकाछत्रचामरैः ।
कदा मे वायवः कुन्दमकरन्दसुगन्धयः ॥ ६६ ॥
यास्यन्त्यन्तःपुरस्त्रीणां सुरतश्रमशीकरान् ।
इत्थं ततःप्रभृत्येव विप्रः संकल्पवानभूत् ॥ ६७ ॥
स्वधर्मनिरतो नित्यं यावज्जीवमतन्द्रितः ।
हिमाशनिरिवाम्भोजं जर्जरीकर्तुमादृतः ॥ ६८ ॥
तं तथा चिन्तयाविष्टं जरा द्विजमुपाययौ ।
आसन्नमरणस्यास्य भार्या म्लानिमुपागता ॥ ६९ ॥
मामप्याराधितवती सा ततस्त्वमिवाङ्गने ।
अमरत्वं सुदुष्प्रापं बुद्ध्वेमं सावृणोद्वरम् ॥ ७० ॥
देवि स्वमण्डपादेव जीवो भर्तुर्मृतस्य मे ।
मा यासीदित्यतस्तस्याः स एवाङ्गीकृतो मया ॥ ७१ ॥
अथ कालवशाद्विप्रः स पञ्चत्वमुपाययौ ।
तस्मिन्नेव गृहाकाशे जीवाकाशतया स्थितः ॥ ७२ ॥
संपन्नः प्राक्तनानल्पसंकल्पवशतः स्वयम् ।
आकाशवपुरेवोर्वीपतिः परमशक्तिमान् ॥ ७३ ॥

॥ ६५ ॥ ६६ ॥ ६७ ॥ हिममेवाम्भोजनाशकत्वादशनिर्हिमाशनिः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ पञ्चत्वं मणरम् । 'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्यय' इत्यमरः । जीवाकाशतया जीव एव स्वच्छत्वसूक्ष्मत्वादिनाकाशकल्पत्वादाकाशस्तस्य भावस्तत्ता तया ॥ ७२ ॥ संपन्न इति स्वयमाकाशवपुरेव सन् प्राक्तनानल्पसंकल्प-

तस्मिन्विप्रे शवीभूते शोकेनात्यन्तकर्शिता ।
सा तस्य ब्राह्मणी भार्या हृदयेन द्विधागमत् ॥ ७४ ॥
भर्त्रा सह शवीभूता देहमुत्सृज्य दूरतः ।
आतिवाहिकदेहेन सा भर्तारमुपाययौ ॥ ७५ ॥
तत्रास्य विप्रस्य सुता गृहाणि भूस्थावरादीनि धनानि सन्ति ।
अद्याष्टमं वासरमाप्य मृत्योर्जीवो गिरिग्रामककन्दरस्थः ॥ ७६ ॥
स ते भर्ताद्य संपन्नो द्विजो भूपत्वमागतः ।
यासावरुन्धतीनाम्ना ब्राह्मणी सा त्वमङ्गने ॥ ७७ ॥
इहेमौ कुरुतो राज्यं तौ भवन्तौ सुदम्पती ।
चक्रवाकाविव नवौ भुवि जातौ शिवाविव ॥ ७८ ॥
एष ते कथितः सर्गः प्राक्तनः संसृतिभ्रमः ।
भ्रान्तिमात्रकमाकाशमेवं सर्गो हि भासते ॥ ७९ ॥

लीलोवाच ॥

देवि त्वद्वचनं मिथ्या कथं संपन्नमीदृशम् ।
क्व विप्रजीवः स्वगृहे क्वामी वयमिह स्थिताः ॥ ८० ॥

वशतः परमशक्तिमानुर्वीपतिः संपन्न इत्यन्वयः ॥ ७३ ॥ ७४ ॥ ॥ ७५ ॥ कन्दरो दरी । 'दरी तु कन्दरो वा स्त्री'त्यमरः ॥ ७६ ॥ स ते भर्तेति ॥ स द्विजो भूपत्वमागतः सन्नद्य ते भर्ता संपन्न इत्यन्वयः ॥ ७७ ॥ शिवौ पार्वतीपरमेश्वरौ ॥ ७८ ॥ तर्ह्यावयोः प्राक्तनः संसारः सत्य इति शङ्कानिरसनेनोपसंहरन्ती फलितमाह— एष इति ॥ भ्रान्तिमात्रकमिति विशेष्यमाकाशमिति विशेषणम् । यः सर्गोऽवभासते स एवमुक्तेन न्यायेनाकाशमर्थशून्यं भ्रान्तिमात्रकं हीत्यन्वयः ॥ ७९ ॥ अनन्वितार्थतयोक्तमाक्षिपति—देवि त्वद्व-

ताद्दग्लोकान्तरं सा भूस्ते शैलास्ता दिशो दश ।
कथं मान्ति गृहस्यान्तर्यत्रामी वयमास्महे ॥ ८१ ॥
मत्त ऐरावणो बद्धः सर्षपाकोणकोटरे ।
मशकेन कृतं युद्धं सिंहौघैरणुकोटरे ॥ ८२ ॥
पद्माक्षे स्थापितो मेरुर्निगीर्णो भृङ्गसूनुना ।
असमञ्जसमेवैतद्यथेदं देवि ताद्दशम् ॥ ८३ ॥

देव्युवाच ॥

नाहं मिथ्या वदामीदं यथावच्छृणु सुन्दरि ।
भेदनं नियतीनां हि क्रियते नास्मदादिभिः ॥ ८४ ॥
स ग्रामद्विजजीवात्मा तस्मिन्नेव स्वसद्मनि ।
व्योमैवेदं मही राष्ट्रं व्योमात्मैव प्रपश्यति ॥ ८५ ॥

चनमित्यादिना ॥ ८० ॥ अमी वयं यत्र देशान्तरादिष्विदानीमा-स्महे ताद्दग्देशान्तरादयो वसिष्ठविप्रगृहस्यान्तः कथं मान्ति । न कथमपीत्यर्थः । वसिष्ठविप्रदेशापेक्षयान्तरशब्दः । कथं मान्ति गृह-स्यान्तर्मद्भर्ता येष्ववस्थितः इति क्वचित् ॥ ८१ ॥ ऐरावण ऐरा-वतः । 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभा' इत्यमरः ॥ ८२ ॥ ॥ ८३ ॥ ईश्वर्या मम परमाप्तत्वात् । परिज्ञानविलसितमिदं चोद्य-मित्यभिप्रायेण परिहरति—नाहं मिथ्या वदामीत्यादिना ॥ निय-तीनां जगन्मर्यादानाम् ॥ ८४ ॥ ग्रामद्विजजीवात्मा गिरिग्रामब्राह्म-णजीवात्मा व्योमात्मा । चित्तशरीरः चित्ताकाशं चिदाकाशमिति हि पूर्वमुक्तम् । अथवा व्योमात्मा निराकारः व्योमैवेदं मही राष्ट्रं निजस्वरूपमेवेदं महीसहितं राष्ट्रं स्वप्नदृगिव प्रपश्यति ॥ ८५ ॥

प्राक्तनी सा स्मृतिर्लुप्ता युवयोरुदितान्यथा।
स्वप्ने जाग्रत्स्मृतिर्यद्वदेतन्मरणमङ्गने ॥ ८६ ॥
इयमन्तःस्थिता भूमिः संकल्पादर्शयोरिव।
तस्य सत्यावभासस्य चिद्व्योम्नः कोशकोटरे ॥ ८७ ॥
परमाणौ सन्ति वत्से जीवे प्रतिचिदात्मनि।
अन्तरन्तर्जगन्तीति प्रतिभासात्मकान्युत ॥ ८८ ॥

ननु तर्ह्यावयोः पूर्वसंसारविषया स्मृतिः कुतो नानुवर्तते कुत इयं तद्विपरीतप्रवृत्तिरुदितेत्यत आह—प्राक्तनीति ॥ जागरेऽनुभूतपदार्थविषया स्मृतिः स्वप्नावस्थायां यथा न जायतेऽन्यथाप्रतीतिश्च जायते तथा पूर्वजन्मन्यनुभूतपदार्थविषया स्मृतिरस्मिञ्जन्मनि लुप्ता भवति नानुवर्तते। पूर्वजन्मनि भावनाविशेषादन्यथा प्रतीतिश्चोत्पद्यतेस्म एतन्मरणं तत्र कारणमिति शेषः। मरणं हि संस्कारलक्षणं स्मृतिबीजं विप्रतिमृद्नाति अतः स्मृतिर्नानुवर्तत इति भावः ॥ ८६ ॥ कथं मान्ति गृहस्यान्तरिति चोद्यपरिहारं विशदयति—इयमिति ॥ सत्यतयावभासो यस्य स सत्यावभासस्तस्य चिद्व्योम्नः परमात्माकाशस्य कोशो जीवत्वोपाधिभूतमन्तःकरणं तस्य कोटरेऽभ्यन्तरे तत्राप्यन्तरियं भूमिः सशैलवनकानना स्थिता। संकल्पशब्देन मनोराज्यं प्रकुर्वतः पुंसः संकल्पो गृह्यते। अथ वान्तःस्थिता मनसि स्थिता अस्मिन्पक्षे तस्येत्यादेरुपरि संबन्धः ॥ ८७ ॥ जगदन्तर्वर्तत इत्येतत्क्वचिदेव सर्वत्रेति न मन्तव्यमित्याह—परमाणाविति ॥ चिदात्मनि ब्रह्मणि परमाणौ जीवे। परमसूक्ष्मान्तःकरणोपहितत्वाज्जीवस्य परमाणुत्वम्। 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेय' इति श्रुतेः। अन्तरन्तःप्रतिभासमात्रकारणानि

लीलोवाच ॥

अष्टमे दिवसे विप्रः स मृतः परमेश्वरि ।
गतो वर्षगणोऽस्माकं मातः कथमिदं भवेत् ॥ ८९ ॥

देव्युवाच ॥

देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथाङ्गने ।
प्रतिभामात्रकादन्यच्चिद्विलासैकरूपिणः ॥ ९० ॥
यथावत्प्रतिभासस्य वत्से क्रममिमं शृणु ।
अनुभूय क्षणं जीवो मिथ्या मरणमूर्च्छनाम् ॥ ९१ ॥
विस्मृत्य प्राक्तनं भावमन्यं पश्यति सुव्रते ।
आधेयोऽहमिहाधारे स्थितोऽहमिति सुन्दरि ॥ ९२ ॥
हस्तपादादिमान्देहो ममायमिति पश्यति ।
एतस्याहं पितुः पुत्रो वर्षाण्येतानि सन्ति मे ॥ ९३ ॥
इमे मे बान्धवा रम्या ममेदं रम्यमास्पदम् ।
इति भ्रान्तिर्जगत्यत्र मृतिमोहादनन्तरम् ॥ ९४ ॥

जगन्त्येवंविधानि जगन्ति सन्ति संसारस्यानादित्वात् । दृष्टेरेव सृष्टित्वात्स्वप्नावस्थायामतिसूक्ष्मनाडीगततयाणुकल्पे जीवेऽन्तरन्तर्जगतां दर्शनाच्च । प्रतिजीवमन्तरन्तर्जगन्ति सन्तीत्युपपन्नमुक्तम् ॥ ८८ ॥ अष्टमे दिवस इत्यादिश्लोकद्वयं स्पष्टार्थम् ॥ ८९ ॥ चिद्विलासैकरूपिणश्चिद्विवर्तैकस्वरूपात् ॥ ९० ॥ कथं तर्हि प्रतिभासशब्दितभ्रान्तिक्रम इति तत्राह—यथावदित्यादि ॥ मरणद्वारमूर्च्छना मरणमूर्च्छना ताम् ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ चिदात्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वपरिज्ञानमात्मन आवेदयन्त्याह—अहो इति ॥ एवमासोक्त्या प्रपञ्चमिथ्यात्वं विज्ञायोक्तार्थं प्रत्यक्षीकरणा-

लीलोवाच ॥

अहो नु परमा दृष्टिर्दर्शिता देवि मे त्वया ।
इदानीमहमेतस्यां यावत्परिणता दृशि ॥ ९५ ॥
नाभ्यासेन विना तावद्भिन्धीदं देवि कौतुकम् ।
सर्गं ब्राह्मणदम्पत्योस्तं मां नय महेश्वरि ॥ ९६ ॥

देव्युवाच ॥

अचेत्यचिद्रूपमयीं परमां पावनीं दृशम् ।
अवलम्ब्येममाकारमवमुच्य भवामला ॥ ९७ ॥
एवं स्थिते तं पश्यावः सह सर्गमनर्गलम् ।
अयं तद्दर्शनद्वारे देहस्तव महार्गलः ॥ ९८ ॥
जगन्तीमान्यमूर्तानि मूर्तिमन्ति मुधाग्रहात् ।
भवद्भिरवबुद्धानि हैमानीवोर्मिकाधिया ॥ ९९ ॥

दिना तद्दार्ढ्यार्थं प्रयतते लीला—इदानीमिति ॥ अभ्यासेन विनैतस्यां दृशि दृष्टाविदानीं यावत्परिणता पक्वा प्रौढा न भविष्यामि ताव-दिदं कौतुकं कुतूहलं भिन्धि विदारय । सृज्यत इति सर्गः प्रपञ्च-स्तं सर्गं नेतुं समर्था त्वमित्याह—महेश्वरीति ॥ ९५ ॥ ९६ ॥ लीलायाः स्थूलशरीरेण सर्गान्तरनयनकारणकर्म पश्यन्ती भगवती ब्रह्मविद्या-दानव्यग्रं तदीयं पुण्यपुञ्जमाकलय्य तदनुरूपमाह—अचेत्येत्यादि ॥ चेत्या दृश्याः शब्दादयो न विद्यन्ते यस्मिंस्तदचेत्यं चिद्रूपं तन्मयीं तत्प्रधानाम् । तद्विषयामिति यावत् । दृशमवगतिम् ॥ ९७ ॥ सह संभूय अनर्गलमबाध्यं अथवानर्गलमप्रतिबन्धकं यथा तथा पश्यावः ॥ ९८ ॥ ननु स्थूलशरीरस्य सर्गान्तरदर्शनद्वारभूतगमनप्रतिबन्धकत्वं कुत इत्याशङ्क्याह—जगन्तीति ॥ अमूर्तानि मूर्च्छितावयवानि न भवन्ती-

तवाभ्यासं विना बाले नाकारो ब्रह्मतां गतः ।
स्थितः कलनरूपात्मा तेन त्वं नानुपश्यसि ॥ २०० ॥
तत्र रूढिमुपायाता य इमे त्वस्मदादयः ।
अभ्यासाद्ब्रह्मसंवित्तेः पश्यामस्ते हि तत्पदम् ॥ १ ॥

त्यमूर्तानीमानि जगन्ति भवद्भिरज्ञैर्जीवैर्मुधाग्रहाद्व्यर्थाभिनिवेशान्मूर्तिमन्त्यवयवमूर्च्छनवन्त्यवबुद्धानि । यथाहुः—'मूर्च्छनं मूर्च्छति च मूर्तिरि'ति । तत्त्वविपरीतग्रहणे दृष्टान्तमाह—हैमानीति ॥ ऊर्मिकाधिया अङ्गुलीयकबुद्ध्या । 'अङ्गुलीयकमूर्मिके' त्यमरः । नहि हैममूर्मिकात्वं निपुणतरं चक्षुषा परिवीक्ष्यमाणं संस्थानविशेषापन्नेभ्यस्तेभ्यो व्यतिरिक्तमुपलभ्यते । अतस्तानि यथोर्मिकाबुद्ध्या मूढैर्विपरीतगृहीतानि । तथा निराकाराण्यपि जगन्ति साकारतया भ्रान्तिगृहीतानि । तस्मान्मूर्तस्य शरीरस्य मूर्त्यन्तरेण प्रतिरोधात् प्रपञ्चान्तरदर्शनद्वारभूतगमनार्गलत्वं युक्तम् ॥ ९९ ॥ न केवलं देहः सर्गान्तरद्वारगमनप्रतिबन्धकस्तत्त्वज्ञानप्रतिबन्धकश्चेत्याह—तवेति ॥ तवाकार आकृतिर्वक्ष्यमाणज्ञानाभ्यासं विना ब्रह्मतामधिष्ठानभूतब्रह्मत्वं न गतः । अधिष्ठानब्रह्मव्यतिरेकेणासन्निति न निश्चित इति यावत् । कलनरूपात्मा स्थितः कलनरूपं कल्पनास्वरूपं तदेवात्मा स्वरूपं यस्य स तथा तेन कारणेन नानुपश्यसि तद्ब्रह्मेति शेषः । तथाचोक्तं बृहद्वासिष्ठे—'यावदभ्यासयोगेन न याता भेदभीस्तव । नूनं तावदतद्रूपा न ब्रह्म परिपश्यसी'ति ॥ २०० ॥ तर्हि भवत्प्रभृतिभिः प्रतिबन्धके शरीरादिभ्रमे स्थिते कथं तद्ब्रह्मानुभूयत इत्याशङ्क्याह—तत्रेति ॥ य इमेऽस्मदादयो ब्रह्मसंवित्तेर्ब्रह्मज्ञानस्याभ्यासात्तत्र ज्ञानाभ्यासे रूढिमुपायाताः प्रसिद्धिमुपागतास्ते वयं हि तस्मा-

आतिवाहिक एवायं त्वादृशैश्चित्तदेहकः ।
आधिभौतिकया बुद्ध्या गृहीतश्चिरभावनात् ॥ २ ॥
वासनातानवं नूनं यदा ते स्थितिमेष्यति ।
तदातिवाहिको भावः पुनरेष्यति देहके ॥ ३ ॥
शुद्धसत्त्वानुपतितं चेतः प्रतनुवासनम् ।
आतिवाहिकतामेति हिमं तापादिवाम्बुताम् ॥ ४ ॥
वासनातानवे तस्मात्कुरु यत्नमनिन्दिते ।
तस्मिन्प्रौढिमुपायाते जीवन्मुक्ता भविष्यसि ॥ ५ ॥

त्तज्ज्ञेयं पश्यामोऽनुभवामः । अयमभिप्रायः—ब्रह्मज्ञानाभ्यासपरिपाकाद्देहाद्यात्मत्वभ्रमकारणभूतवासनालये प्रतिबन्धकाभावादस्मदादिभिर्ब्रह्मात्मतत्त्वं करामलकवदनुभूयत इति ॥ १ ॥ देहस्य कलनरूपत्वमसिद्धमित्याशङ्क्याह—आतिवाहिक इति ॥ अतिवाह्यते तं तं देशमप्रतिहतया गत्या नीयत इत्यातिवाहिकः सूक्ष्मचित्तदेहकः आतिवाहिक एव सूक्ष्म एव । स च तादृशैरज्ञैश्चिरभावनाच्चिरकालविपरीतभावनादाधिभौतिकया आधिभौतिकोऽयमित्येवमाकारया बुद्ध्या गृहीतः ॥ २ ॥ तर्ह्यातिवाहिकता सहजा चित्तदेहं कदा यास्यतीत्यत आह—वासनेति ॥ ज्ञानाभ्यासेन वासना तानवं द्वैतवासनाल्पत्वं यदा ते नूनं स्थितिमेष्यति तदा देहके चित्तदेहके आतिवाहिको भावः । सूक्ष्मभाव इत्यर्थः । पुनरेष्यत्यायास्यति ॥ ३ ॥ उक्तं विशदयति—शुद्धेति ॥ शुद्धसत्त्वानुपतितं रजस्तमोभ्यामनभिभूतं सत्त्वगुणानुगतम् । अयमर्थः—स्वप्नदशायामिव जागरेऽपि शरीरादिप्रपञ्चरूपेण वर्तमानं चित्तं ज्ञानाभ्यासाद्वासनातानवे सति शरीरादिरूपतां विहाय प्रतिभासमात्रात्मकस्वीयसूक्ष्मरूपतामेति । अतएव जीवन्मुक्तिदशायां प्रातिभासिकं जगदित्याचचक्षिरे ॥ ४ ॥ यतो

यावन्न पूरितस्त्वेष शीतलो बोधचन्द्रमाः ।
तावद्देहमवस्थाप्य सर्गान्तरमवेक्ष्यताम् ॥ ६ ॥

लीलोवाच ।

अत्रोपकुरुते ब्रूहि कोऽभ्यासः कीदृशोऽथवा ।
स कथं पोषमायाति पुष्टे तस्मिंश्च किं भवेत् ॥ ७ ॥

देव्युवाच ।

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च तदभ्यासं विदुर्बुधाः ॥ ८ ॥

वासनातानवे सति चेतसः पीनत्वं विलीयते तस्मात्तत्सिद्धये ज्ञानाभ्यासलक्षणो यत्न आस्थेय इत्याह—वासनेति ॥ वासनातानवे प्रभूते सति न केवलं चेतसः पीनत्वं विलीयते किंत्वनुभवपर्यन्तज्ञानोदयाद्बन्धोऽपि लीयत इत्याह—तस्मिन्निति ॥ ५ ॥ एवं ज्ञानपरिपूर्त्युपायमभिधाय तत्परिपूर्तेः प्राक्पूर्वसर्गदर्शनाय यत्कर्तव्यं तत्स्मारयति—यावदिति ॥ ननु बोधो यावन्न पूरितस्तावत् स्थूलदेहमिह संस्थाप्य प्रपञ्चान्तरमवेक्ष्यतामिति वदन्त्या पूरिते बोधे देहस्थापनं विनैव प्रपञ्चान्तरदर्शनमभ्यनुज्ञातमिति प्रतीयते तन्नोपपद्यते पूर्णबोधादाकाशगमनादेरनुदयेन तेनैव शरीरेण सर्गान्तरदर्शनासंभवात्पूर्णज्ञानाया अपि चूडालया 'आकाशगमनादिसिद्ध्यर्थं प्रयत्नान्तरास्थानदर्शनान्नैष दोषः । ज्ञानमार्गे लीलाया आदरातिशयोत्पादनाय तथाभिधानात् ॥ ६ ॥ 'तथाभ्यासं विना बाले नाकारो ब्रह्मतां गत' इत्यादिनोक्तस्य बोधपूरकज्ञानाभ्यासस्य स्वरूपं तत्प्रकारं तत्परिपाकहेतुं तत्परिपाकफलं च क्रमेण पृच्छति—अत्रेति ॥ अत्र बोधपूरणे योऽभ्यास उपकुरुते स क इति योजना ॥ ७ ॥ तत्राभ्यासस्वरूपमाह—तच्चिन्तनमिति ॥ तस्य ब्रह्मणो गुरुतः श्रुतस्य

उदितौदार्यसौन्दर्यवैराग्यरसगर्भिणी ।
आनन्दस्यन्दिनी येषां मतिस्तेऽभ्यासिनः परे ॥ ९ ॥
अत्यन्ताभावसंपत्तौ ज्ञातुर्ज्ञेयस्य वस्तुनः ।
युक्त्या शास्त्रैर्यतन्ते ये ते ब्रह्माभ्यासिनः स्थिराः ॥ २१० ॥
सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा ।
इदं जगदहं चेति बोधाभ्यासं विदुः परे ॥ ११ ॥
दृश्यासंभवबोधेन रागद्वेषादितानवे ।
रतिर्बलोदिता यासौ ब्रह्माभ्यासः स उच्यते ॥ १२ ॥

चिन्तनं युक्तितः पर्यालोचनं तस्यान्यस्मै शिष्याय गुणसंपन्नाय कथनं तत्कथनम् ॥ ८ ॥ एतदेकपरत्वमिति निदिध्यासनमुक्तं, कीदृशोऽभ्यास इति प्रश्नस्योत्तरमभिप्रेत्याह—उदितेति ॥ उदितमौदार्येण महत्त्वेन सौन्दर्यं यस्यां सा उदितौदार्यसौन्दर्या वैराग्यरसो वैराग्यसारो गर्भेऽन्तर्यस्याः सा तथोक्ता उदितौदार्यसौन्दर्या चासौ वैराग्यरसगर्भिणी चेति तथा । आनन्दस्यन्दिनी आनन्दवर्षिणी । परे परमात्मनि ॥ ९ ॥ मन्दमध्यमाधिकारिणोर्ज्ञानाभ्यासं क्रमेण श्लोकद्वयेनाह—अत्यन्तेत्यादिना ॥ अथवा कीदृश इति प्रश्नस्योत्तरमभिप्रेत्यैतदपि श्लोकद्वयमाह—अत्यन्तेति ॥ ज्ञेयस्य वस्तुनो दृश्यपदार्थस्य ॥ २१० ॥ इदं जगदहं च दृश्यं सर्गादौ सृष्ट्यादौ वस्तुत उत्पन्नमेवातस्तद्दृश्यं सदा नास्तीत्यभ्यासं परे परमात्मनि विषये बोधाभ्यासं विदुः । उदितौदार्यसौन्दर्येत्यनेनोक्ता दृढविदितप्रपञ्चमिथ्यात्वान्निःप्रपञ्चब्रह्मानन्दे निमग्नचित्ता उत्तमाः । दृश्यमिथ्यात्वं परिज्ञाय तद्बाध्याय प्रयतमाना मध्यमाः । जगन्मिथ्यात्वं परिज्ञातुं शास्त्रयुक्तिभ्यां प्रयतमाना अधमा इति विवेकः ॥ ११ ॥ स कथं पोषमायातीत्यस्योत्तरमाह—दृश्येति ॥ दृश्यं द्रष्टरि कालत्रयेऽपि न संभवतीति

दृश्यासंभवबोधो हि ज्ञानं ज्ञेयं च कथ्यते।
तदभ्यासेन निर्वाणमित्यभ्यासो महोदयः ॥ १३ ॥

वसिष्ठ उवाच ॥

इति संकथनं कृत्वा तस्यां निशि वराङ्गने।
समाधिस्थानकं गत्वा तस्थतुर्निश्चलाङ्गके ॥ १४ ॥
निर्विकल्पसमाधानाज्जहतुः पूर्वसंविदम्।
तेनैव ज्ञानदेहेन चचार ज्ञप्तिदेवता ॥ १५ ॥
मानुषी मानुषं देहं त्यक्त्वा बभ्राम सा तदा।
देहान्तरं च प्रादेशमात्रमारुह्य संविदा ॥ १६ ॥
बभूवतुश्चिदाकाशरूपिण्यौ व्योमगाकृती ॥ १७ ॥

बोधेन रागद्वेषलोभादीनां तानवे कृशत्वे सति बलोदिताभ्यासबलेनाभिव्यक्ता यासौ रतिर्ब्रह्मानन्दलक्षणा स ब्रह्माभ्यासः परिपक्वब्रह्मज्ञानाभ्यास उच्यत इति यावत् ॥ १२ ॥ दृश्यासंभवबोधस्य परिपाकहेतुं स्तुवन् 'पुष्टे तस्मिंश्च किं भवे'दिति प्रश्नस्योत्तरमाह—दृश्यासंभवबोधो हीति ॥ तदभ्यासेन तस्य दृश्यासंभवबोधस्याभ्यासस्तेन। तत्पूर्वकब्रह्मज्ञानाभ्यासपरिपाकेनेति यावत्। अपरोक्षज्ञानप्राप्त्या निर्वाणं कैवल्यं भवति। महानुदय ऐश्वर्यं ब्रह्मानन्दप्राप्तिलक्षणं यस्मादभ्यासात् स महोदयः ॥ १३ ॥ इति संकथनमित्यादयः एकार्णवमिवोच्छूनमित्यतः प्राक्तनाः श्लोकाः स्पष्टार्थाः क्वचित्किंचिद्विविच्यते ॥ १४ ॥ जहतुः विससर्जतुः। पूर्वसंविदं समाधेः पूर्वकालं ज्ञानमहमित्येवमाकारं। ज्ञानदेहेन ज्ञानप्रधानदेहेन ॥ १५ ॥ संविदा संकल्पेन चिदाकाशरूपिण्यौ व्योमगे आकाशगे आकृती ययोस्ते व्योमगाकृती। चिदाकाशरूपिण्यौ ते संविदा व्योमगाकृती

अथ ते ललने लीलालोले ललितलोचने।
स्वभावाच्चेत्यसंवित्तेर्नभो दूरमितो गते ॥ १८ ॥
दूराद्दूरमभिप्लुत्य यान्त्यौ ददृशतुर्नभः।
एकार्णवमिवोच्छूनं गम्भीरं निर्मलान्तरम् ॥ १९ ॥
कोमलं कोमलमरुदासङ्गसुखभोगदम्।
मनोवेगमहासिद्धजितवातगमागमम् ॥ २२० ॥
पर्यन्तस्थितकूष्माण्डरक्षःपैशाचमण्डलम्।
नृत्यद्भिर्डाकिनीसङ्घैस्तरङ्गितमिव क्वचित् ॥ २१ ॥
प्रवृत्तैर्योगिनीसंघैः श्वकाकोष्ट्रखराननैः।
निरर्थं योजनशतं गत्वागच्छद्भिरावृतम् ॥ २२ ॥

बभूवतुरित्यन्वयः ॥ १६ ॥ १७ ॥ चेत्यसंवित्तेर्दृश्यज्ञानस्य। चेत्यसंवितेः स्वभावादवगतेन चिद्दृष्टस्वभावात् तस्य सर्वव्यापारविमर्दकत्वात् ॥१८॥ परिच्छिन्ने ब्राह्मणदत्तमण्डपाकाशे महान्प्रपञ्चो वर्तत इति तन्मिथ्यात्वनिश्चयाय दर्शयितुं वर्णयति—एकार्णवमित्यादिना ॥ १९ ॥ कोमलमकर्कशम्। कोमलमरुतो मन्दवायोरासमन्तात्सङ्गेनासङ्गेन सुखभोगदं सुखानुभवदं कोमलमरुदासङ्गसुखभोगदम्। मनोवेगैर्महासिद्धैर्जितौ वातगमागमौ वायुगमनागमने यस्मिंस्तत्तथा वातगमागमजये मनोवेगत्वं हेतुः। नभसि हि वातेन सह गन्तुमागन्तुं च प्रवृत्ताः सिद्धा मनोवेगत्वात्पूर्वमेव गच्छन्त्यागच्छन्ति चेत्यर्थः ॥ २२० ॥ पिशाचानामिदं पैशाचं च कूष्माण्डमण्डलं च। कूष्माण्डा भूतविशेषाः। कूष्माण्डाश्च रक्षांसि च पैशाचमण्डलं चेति तथा। पर्यन्ते स्थितानि कूष्माण्डरक्षःपैशाचमण्डलानि यस्मिंस्तत्तथा। डाकिन्यो ग्रहविशेषाः। तरङ्गितं संजाततरङ्गम्। प्रकृष्टं वृत्तं येषु योगिनीसङ्घेषु ते प्रवृत्तास्तैः ॥ २१ ॥ निरर्थं निष्प्रयोजनं

वातस्कन्धनिखातान्तर्वहिस्त्रिपथगाजलम् ।
क्वचिन्निर्भित्ति सदनं गायन्नारदतुम्बुरु ॥ २३ ॥
चित्रन्यस्तसमाकारमूककल्पान्तवारिदम् ।
क्वचिन्निरन्तरोन्मत्तमातृमण्डलमालितम् ॥ २४ ॥
अपि योजनलक्षाणि क्वचिद्दुःप्रापभूतकम् ।
अविनाशितमःपुञ्जैर्दृषद्गर्भोपमं क्वचित् ॥ २५ ॥
अविनाशिबृहत्तेजः क्वचिदर्कानलोपमम् ॥ २६ ॥

आगच्छद्भिरिति शेषः ॥ २२ ॥ वातस्कन्धेति ॥ मेघमार्गसौरमार्गयोर्मध्ये वातमार्गं गच्छति तत्र स्थिता ये वातास्तेषां स्कन्धा अंसास्तदूर्ध्वभागाः । अथवा वातस्कन्धा वायुप्रभेदाः । यथोक्तं कल्पतरौ—'स्कन्धाः प्रभेदा'इति । अथवा वातस्कन्धा वातसमूहाः । तथाच क्षीरस्वामिन आहुः—'स्कन्धः स्कन्धेऽपि वेतसे । व्याकुर्वाणाः समुदये' । यथा सप्त वातस्कन्धाः । अपिशब्दात्सैन्यवाटो यथा—'स्कन्धव्यापारः' वृक्षजपायामंसे राज्ञि समूहे बोधे चेति तेषु निखाता निगर्तास्तेषामन्तर्वहिः त्रिपथगाजलानि अधोमुखतया प्रवहत्सुरनदीजलानि यस्मिंस्तत्तथोक्तम् ॥ २३ ॥ चित्रन्यस्तसमाकारा चित्रार्पिततुल्याकारा मूका निःशब्दाश्च कल्पान्तवारिदाः प्रलयमेघा यस्मिंस्तत्तथा । मातरो ब्राह्म्यादयः । निरन्तरोन्मत्तमातृमण्डलमालितं निरन्तरेण निबिडेनोन्मत्तमातृणां मण्डलेन मालितं संजातमालम् । मालाकारमातृमण्डलयुक्तमित्यर्थः ॥ २४ ॥ क्वचिद्योजनलक्षाणि दुःप्रापाणि भूतानि प्राणिनो यस्मिंस्तत्तथा । क्वचित्सर्वतः प्राणिरहितानेकलक्षयोजनकमित्यर्थः । 'कालाध्वनोरत्यन्तसंयोग'इति सूत्राद्योजनलक्षाणीति द्वितीया । दृषद्गर्भस्य पाषाणाभ्यन्तरस्योपमा यस्मिंस्तद्दृषद्गर्भोपमम् । अविनाशिबृहन्महत्तेजो यस्मिंस्तत्तथा । अतएवार्कानलोपमम्

उदुम्बरोदरमशकक्रमभ्रम-
जगत्त्रयान्तरगतभूतसंचयम् ।
विलङ्घ्य तद्वरललने खमुच्चकै-
र्महीतलं पुनरपि गन्तुमुद्यते ॥ २७ ॥

वसिष्ठ उवाच ॥

इति ते वरवर्णिन्यौ ततो ब्रह्माण्डमण्डलात् ।
निर्गत्यान्यदनुप्राप्ते यत्र तद्ब्राह्मणास्पदम् ॥ २८ ॥
ततो ददृशतुः सर्गे तत्र ते सिद्धयोषितौ ।
अदृश्ये एव लोकस्य मण्डलं ब्राह्मणास्पदम् ॥ २९ ॥
चिन्ताविधुरदासीकं बाष्पक्लिन्नाङ्गनामुखम् ।
विध्वस्तपूर्वसंस्थानं विद्युद्दग्धमिव द्रुमम् ॥ २३० ॥
अथ सा निर्मलज्ञानचिराभ्यासेन सुन्दरी ।
संपन्ना सत्यसंकल्पा सत्यकामा च देववत् ॥ ३१ ॥
चिन्तयामास मामेते देवीं चेमां स्वबान्धवाः ।
पश्यन्तु तावत्सामान्यललनारूपधारिणीम् ॥ ३२ ॥

॥२५॥२६॥उदुम्बरफलोदरस्था मशका उदुम्बरोदरमशकास्तत्क्रमेण तन्न्यायेन भ्रमज्जगत्त्रयान्तर्गतभूतानां संचयः समूहो यस्मिंश्च तत्तथा । विलङ्घ्येत्याद्या अहोनुपरमेत्यन्ताः प्राक्तनाः श्लोकाः स्पष्टार्थाः । क्वचित्किंचिद्विविच्यते ॥२७॥ वरवर्णिन्यौ उत्तमस्त्रियौ ॥२८॥२९॥ चिन्तया विधुरा इष्टार्थवर्जिता दास्यो यस्मिन्मण्डपे स चिन्ताविधुरदासीकस्तम्। बाष्पेणाश्रुणा क्लिन्नान्यार्द्राणि अङ्गनानां मुखानि यस्मिंस्तत्तथोक्तम् । विध्वस्तं विहतं पूर्वस्थानं पूर्वविन्यासो यस्मिंस्तत्तथोक्तम् । विद्युदशनिः ॥ २३० ॥ सा लीला देववत्सत्यसंकल्पा सत्यकामा च संपन्नेत्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ सर्वो

ततो गृहजनस्तत्र संददर्शाङ्गनाद्वयम् ।
लक्ष्मीगौर्योर्युगमिव समुद्भासितमन्दिरम् ॥ ३३ ॥
नमोऽस्तु वनदेवीभ्यामित्युक्त्वा कुसुमाञ्जलिम् ।
तत्याज ज्येष्ठशर्माथ सार्धं गृहजनेन सः ॥ ३४ ॥
देव्यौ च जगतां श्रेष्ठाविह ब्राह्मणदम्पती ।
सर्वातिथी कुलकरौ स्तम्भभूतौ द्विजस्थितेः ॥ ३५ ॥
तावेतौ गृहमुत्सृज्य सपुत्रपशुबान्धवम् ।
स्वर्गं गतौ नः पितरौ तेन शून्यं जगत्त्रयम् ॥ ३६ ॥
तद्देव्यौ क्रियतां तावदस्माकं शोकनाशनम् ।
महतां दर्शनं नाम न कदाचन निष्फलम् ॥ ३७ ॥
इत्युक्तवन्तं सा पुत्रं मूर्ध्नि पस्पर्श पाणिना ।
तस्याः स्पर्शेन तेनासौ दुःखदौर्भाग्यसङ्कटम् ॥ ३८ ॥
जहौ प्रावृड्घनासङ्गाद्ग्रीष्मतापमिवाचलः ।
अथान्योऽपि जनस्तत्र जहौ शोकं सुदुष्करम् ॥ ३९ ॥
तस्मिन्गिरितटे ग्रामे तस्मिन्मण्डपकोटरे ।
अन्तर्धिमापतुर्दृष्ट्वा ततस्ते सिद्धयोपितौ ॥ २४० ॥

देव्युवाच ॥

ज्ञेयं ज्ञातमशेषेण दृष्टा दृष्टान्तसंविदः ।
ईदृशीयं ब्रह्मसत्ता किमन्यद्वद पृच्छसि ॥ ४१ ॥

जनोऽतिथिर्ययोस्तौ सर्वातिथी । कुलकरौ कुलवर्धकौ । द्विजस्थितेर्द्विजमर्यादायाः । यद्वा द्विजस्थितेर्द्विजावस्थानस्य स्तम्भभूतावाधारभूतौ ॥ ३५ ॥ ३६ ॥ नामशब्दः प्रसिद्धौ ॥ ३७ ॥ तेन कारणेन दुःखमेव दौर्भाग्यसङ्कटं दुर्भगत्वसंबाधस्तम् ॥ ३८ ॥ ३९ ॥ ॥ २४० ॥ दृष्टान्तसंविदः प्रपञ्चमिथ्यात्वे दृष्टान्तस्मृतयो दृष्टाः ।

लीलोवाच ॥

मृतस्य भर्तुर्जीवोऽसौ यत्र राज्यं करोति मे ।
तत्राहं किं न तैर्दृष्टा दृष्टासीह सुतेन किम् ॥ ४२ ॥

देव्युवाच ॥

अभ्यासेन विना वत्से तदा ते द्वैतनिश्चयः ।
नूनमस्तं गतो नाभून्निःशेषं वरवर्णिनि ॥ ४३ ॥
लीलास्मीति विनाभ्यासं तव नास्तं गतोऽभवत् ।
यद्वा भावस्तदा सत्यसंकल्पत्वमभून्न ते ॥ ४४ ॥
अद्यासि सत्यसंकल्पा संपन्ना तेन मां सुतः ।
संपश्यत्वित्यभिमतं फलितं तव सुन्दरि ॥ ४५ ॥
इदानीं तस्य भर्तुस्त्वं समीपं यदि गच्छसि ।
तत्तेन व्यवहारस्ते पूर्ववत्संप्रवर्तते ॥ ४६ ॥

लीलोवाच ॥

अहो हन्त जगन्मातर्मया स्मृतमिहाधुना ।
ममेदं राजसं जन्म न तमो न च सात्त्विकम् ॥ ४७ ॥

लब्धा इत्यर्थः । ब्रह्मसत्ता ब्रह्मरूपभूता सत्ता ईदृशी सत्यजगद्रूपा निष्प्रपञ्चा वा ॥ ४१ ॥ ४२ ॥ ४३ ॥ लीलास्मीति ॥ अभ्यासं ज्ञानाभ्यासं विना ते तव लीलास्मीति भावो भावना यदास्तं गतो नाभवत् तदा ते सत्यसंकल्पत्वं नाभूदिति संबन्धः ॥ ४४ ॥ अद्वैते ब्रह्मणि चित्तवृत्तिनिरोधात्मकयोगप्रतिबन्धभूतद्वैतनिश्चयस्य प्रविलयादद्य सत्यसंकल्पा संपन्नासि ॥ ४५ ॥ ४६ ॥ सरस्वतीप्रसादसमासादिता स्पर्शयोगलब्धलौकिकप्रभावा लीलाऽनुस्मृतपूर्वजन्मावलिरुत्पन्नपरमनिर्वेदा संसारस्यात्मना झटिति हेयत्वज्ञापनाय

ब्रह्मणस्त्ववतीर्णाया अष्टौ जन्मशतानि मे ।
नानायोनीन्यतीतानि पश्यामीवाधुना पुनः ॥ ४८ ॥
संसारमण्डले देवि कस्मिंश्चिद्भवं पुरा ।
लोकान्तराब्जभ्रमरी विद्याधरवराङ्गना ॥ ४९ ॥
दुर्वासनाकलुषिता ततोऽहं मानुषी स्थिता ।
संसारमण्डलेऽन्यस्मिन्पन्नगेश्वरकामिनी ॥ २५० ॥
करञ्जकुञ्जजम्बीरकदम्बवनवासिनी ।
पत्राम्बरवती श्यामा शबर्यहमथाभवम् ॥ ५१ ॥
विहङ्ग्या वैरिविन्यस्तवागुराविपिनावनौ ।
क्लेशेन महता छिन्ना अधमा वासना इव ॥ ५२ ॥
कर्णिकाक्रोडशय्यासु विश्रान्तमलिना सह ।
पद्मकुड्मलकोशेषु भुक्तकिञ्जल्कया रहः ॥ ५३ ॥

पूर्वजन्मानि वर्णयति—अहो इत्यादिना॥ हन्तेति खेदे। इदं वर्तमानं जन्म राजसं रजोगुणनिर्वृत्तम् ॥ ४७ ॥ ब्रह्मणः कमलासनादेत-त्कल्पादाववतीर्णायाः ॥४८॥ मनुष्यलोकापेक्षया लोकान्तरं विद्या-धरस्थानं तदेवाब्जं कमलं तस्मिन्भ्रमरी लोकान्तराब्जभ्रमरी विद्या-धरलोकवासिनीत्यर्थः ॥ ४९ ॥ २५० ॥ करञ्जो नक्तमालाख्यो वृक्षः। 'चिरबिल्वो नक्तमालः करजश्च करञ्जक' इत्यमरः ॥५१॥ विहङ्ग्या पक्षिण्या सत्या मया वैरिविन्यस्तवागुरा लुब्धकविन्यस्त-जाला। वागुरा मृगबन्धनीत्युक्तोऽर्थोऽत्रासंभवान्न गृह्यते। विपि-नावनौ अरण्यभूमौ ॥ ५२ ॥ कर्णिका कमलमध्यवर्ती बीजकोशः। कर्णिकानां क्रोडानि मध्यप्रदेशास्तान्येव शय्याः कर्णिकाक्रोडशय्या-स्तासु कुड्मलो मुकुलः। भुक्तकिञ्जल्कया भुक्तकेसरमालिन्या मया

ततोऽस्त्रीफलदातॄणां कर्मणां परिपाकतः ।
राजाहमभवं श्रीमान्सुराष्ट्रेषु समाः शतम् ॥ ५४ ॥
शाद्वलीदलदोलायामान्दोलनदरिद्रताम् ।
मशकस्य मया सद्यः स्थितं मशकया सह ॥ ५५ ॥

योनिष्वनेकविधदुःखशतान्वितासु
भ्रान्तं मया बहुविमर्दसमाकुलासु ।
संसारदीर्घसरितश्चलया लहर्या
दुर्वारवाततरणीसरणक्रमेण ॥ ५६ ॥

वसिष्ठ उवाच ॥

एवमाकथयन्त्यौ ते ललने ललिताकृती ।
उत्पेततुर्नभो दूरं योगचङ्क्रमणक्रमैः ॥ ५७ ॥
विनिर्गत्य ततः सर्गादाप्य सर्गं द्वितीयकम् ।
अन्तःपुरे ददृशतुर्झटितीव विनिर्गते ॥ ५८ ॥

विश्रान्तम् ॥ ५३ ॥ अस्त्रीत्वं पुंस्त्वं तदेव फलं तद्दातॄणाम् । समाः संवत्सरान् ॥ ५४ ॥ शाद्वली शष्पवती भूस्तथा तृणदलदोला शाद्वलीदलदोला तस्या आन्दोलनेन चलनेन दरिद्रता आन्दोलनदरिद्रता ताम् ॥ ५५ ॥ विमर्दो विहतिः । लहर्या ऊर्म्या । अत्र विषयतृष्णासंसारसरितो लहरी विवक्षिता । दुर्वारो वातो यस्याः सा दुर्वारवाता सा चासौ तरणी च नौस्तस्याः सरणं गमनं तत्क्रमेण तन्न्यायेन दीर्घसरितश्चञ्चलोर्म्यातिविषममुह्यमानायाः प्रचण्डवायुमध्यवर्तिनौकाया गमनन्यायेन संसारदीर्घसरितो विषयतृष्णालक्षणया लहर्या योनिष्वावर्ततुल्यासु भ्रान्तमित्यर्थः ॥ ५६ ॥ उत्पेततुर्ब्राह्मणमण्डपादूर्ध्वं जग्मतुः । योगप्रयुक्तं चङ्क्रमणं तत्क्रमैः ॥ ५७ ॥ आप्य प्राप्य । द्वितीयकं पद्मनृपसंबन्धिनम् ॥ ५८ ॥

स्थितं पुष्पभराकीर्णं महाराजं महाशवम् ।
ततः पुनर्विनिर्गत्य योगस्था दिव्ययोगिनी ॥ ५९ ॥
विवेश भर्तृसंसारं लीला ज्ञप्तिसमन्विता ।
एतस्मिन्नन्तरे तस्मिन्मण्डले मण्डितावनौ ॥ २६० ॥
चक्रेऽवस्कन्दनं कश्चित्सामन्तोद्रिक्तभूमिपः ।
कस्मिंचिद्विततारण्ये द्वितीयाकाशभीषणे ॥ ६१ ॥
सेनाद्वितयमक्षुब्धं सौम्याब्धिद्वितयोपमम् ।
महारम्भघनं मध्यस्थितराजद्वयान्वितम् ॥ ६२ ॥
युद्धसज्जं समुन्नद्धमिद्धमग्निमिवाद्भुतम् ।
लीला च ज्ञप्तिदेवी च संददर्श नभःस्थिता ॥ ६३ ॥
अथ प्रवृत्तः प्रसभं प्रलयार्णवरंहसा ।
सेनयोः शस्त्रसंपातः किरन्ननलविद्युतः ॥ ६४ ॥

पुनरपि लीलासरस्वत्योः प्रपञ्चमिथ्यात्वनिश्चयदार्ढ्योपादकप्रवृत्तिप्राप्तिप्रतिपादनाद्यर्थस्ततः पुनरित्यादिराख्यानसमाप्तिपर्यन्तो ग्रन्थसंदर्भः प्रायेण स्पष्टार्थः । तत्र कानिचिद्विविच्यन्ते । विचित्रमहासंरम्भोऽपि संसारो मिथ्येति दर्शयितुं पद्मनृपतिमण्डपाकाशाभ्यन्तर्गतसंसारान्तरे वृत्तस्य साटोपयुद्धस्य वर्णनीयत्वमिति ज्ञेयम् ॥ ५९ ॥ २६० ॥ अवस्कन्दनमागमनं राष्ट्रशोषणं वा । सामन्तैरुद्रिक्तोऽभिवृद्धः सामन्तोद्रिक्तः स चासौ भूमिपश्चेति तथोक्तः ॥६१॥ सौम्यं सुन्दरं महारम्भेण महायुद्धारम्भेण हेतुना घनं निबिडं महारम्भघनम् ॥ ६२ ॥ युद्धार्थं सज्जं सन्नद्धं युद्धसज्जम् । इद्धं दीप्तम् ॥६३॥ रंहसा वेगेन किरन् विक्षिपन् अनलविद्युतः अनला एवायुधसंघट्टजा विद्युदाकारत्वाद्विद्युतः ताः किरन् ॥ ६४ ॥ पतद्भिः समदमातङ्गैः कम्पितायामुर्व्यां

पतत्समदमातङ्गकम्पितोर्वीचलज्जलः ।
यन्त्रपाषाणचक्रौघदूरविद्रुतखेचरः ॥ ६५ ॥
दूरोड्डीनकचत्खङ्गखण्डतारकिताम्बरः ।
वज्रमुष्टिविनिष्पेषपिष्टसङ्कटकङ्कटः ॥ ६६ ॥
नाराचवर्षवरवारिदवीरपूर-
मत्ताभ्रसंभ्रमविनृत्तकबन्धबर्ही ।
कल्पान्तकाल इव वेगविवर्तमान-
मातङ्गशैलवलितो रणसंभ्रमोऽभूत् ॥ ६७ ॥

चलन्ति जलानि यस्मिन् संपाते स तथा । यन्त्रप्रेरितपाषाणैश्चक्राणामोघैश्च दूरं विद्रुताः खेचरा देवादयो यस्मिन्स तथा ॥ ६५ ॥ दूरोड्डीनानि दूरोद्गतानि कचन्ति विकसन्ति च यानि खङ्गखण्डानि तैस्तारकितं संजाततारकमम्बरमाकाशं यस्मिन्स तथा । वज्रमुष्टिभिरिति वज्रसममुष्टिभिर्ये विनिष्पेषाः संपेषणानि तैः पिष्टाश्चूर्णिताः सङ्कटकङ्कटाः साधुभटकवचा यस्मिन्स तथा । 'उरच्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियामि'त्यमरः ॥ ६६ ॥ नाराचानां सर्वलोहमयबाणानां वर्षाण्येव वरवारीणि तानि ददतीति नाराचवर्षवरवारिदानि वीरपूरा वीरसमूहाः त एव मत्ताभ्राणि नाराचवर्षवरवारिदानि च तानि वीरपूरमत्ताभ्राणि च तेषां संभ्रमाद्विनृत्ताः प्रनर्तनाः कबन्धबर्हिणः कबन्धमयूरा यस्मिन् रणसंभ्रमे स तथा । अथवा मत्ताभ्रेभ्यो निमित्तेभ्यः संभ्रमेण विनृत्ताः कबन्धबर्हिणो यस्मिन्स तथा । कबन्धो मूर्धरहितः क्रियायुक्तो देहः । 'कबंधोऽस्त्री क्रियायुक्तमपमूर्धकलेवरमि'त्यमरः । वेगेन विवर्तमानाः भ्रमन्तो ये मातङ्गशैला गजपर्वतास्तैः वलितः संबद्धः ॥ ६७ ॥ त्रिंशद्भागस्य

एवमत्याकुले युद्धे सास्फोटभटसंकटे ।
अष्टभागदशाशेषप्रतापमधुराकृतिः ।
शस्त्रघातहतो वीर इवार्कस्तनुतां ययौ ॥ ६८ ॥
अथ सेनादिनाथाभ्यां विचार्य सह मन्त्रिभिः ।
दूताः परस्परं दत्त्वा युद्धं संह्रियतामिति ॥ ६९ ॥
ततो दुन्दुभयः शेमुः प्रतिध्वनितदिङ्मुखाः ।
विनिर्गन्तुं प्रववृते रणारण्याद्बलद्वयम् ॥ १७० ॥
अथ वीर इवारक्तः कालेनास्तमितो रविः ।
ततो ध्वान्तौघनासीरे निशीथे समुपस्थिते ॥ ७१ ॥
लीलापतिरुदारात्मा किंचित्खिन्नमना इव ।
प्रातःकार्यं विचार्याशु मन्त्रिभिर्मन्त्रकोविदैः ॥ ७२ ॥

दिनस्याष्टौ भागा यस्यासावष्टभागा अष्टभागा दशा शेषो यस्य रवेः सोऽष्टभागदशाशेषः स चासौ प्रकृष्टतापेन मधुराकृतिश्चेति तथोक्तः । यद्वा अष्टभागादशा विशरणावस्था सा शेषो यस्य सोऽष्टभागदशाशेषः स चासौ प्रतापश्च तेन मधुरा दर्शनीयाऽऽकृतिराकारो यस्य स तथोक्तः । वीरपक्षे तु दूरादेव शत्रुभयजनकः प्रभावः प्रतापः । अष्टौ भागा यस्य सोऽष्टभागः दशा मरणदशा शेषो यस्य स दशाशेषः अष्टभागश्चासौ दशाशेषश्चेत्यष्टभागदशाशेषः स चासौ प्रतापमधुराकृतिश्चेति तथोक्तः । अथवा अष्टौ भागा यस्यां दशायां सा शेषो यस्य वीरस्येति विग्रहः । यद्वा अष्टभागादशा विशरणावस्था सा शेषो यस्य प्रतापस्य तेन मधुरा दर्शनीयाऽऽकृतिर्यस्य स तथोक्तः ॥ ६८ ॥ ६९ ॥ शेमुः शान्ताः । शमु उपशमन इति धातोर्लिड्बहुवचनम् ॥ १७० ॥ वीरोऽपि रुधिरोक्षितत्वादारक्तो भवति । ध्वान्तौघोऽन्धकारसमूह एव नासीरं सेनाग्रं यस्य निशीथराजस्य स

निद्रां मुहूर्तमारेभे गृहे शशिकरामले ।
ततस्ते दिव्ययोगिन्यौ राज्ञो विविशतुर्गृहम् ॥ ७३ ॥
कोमलामलसौगन्ध्यमृदुमन्दारमारुतम् ।
तत्प्रभावेण निद्राणं नृपतेरन्तराङ्गनम् ॥ ७४ ॥
तयोर्देहप्रभापूरैः शशिनिष्पन्दशीतलैः ।
आह्लादितोऽसौ बुबुधे राजोक्षित इवामृतैः ॥ ७५ ॥
आसनद्वयविश्रान्तं स ददर्शाङ्गनाद्वयम् ।
स भूपालोऽथ संचिन्त्य सुविस्मितमनाः क्षणात् ॥ ७६ ॥
उत्तस्थौ शयनाच्छेषादिव चक्रगदाधरः ।
पुष्पहार इवोत्फुल्लं जग्राह कुसुमाञ्जलिम् ॥ ७७ ॥
भूमौ विवसने शुद्धे बद्धपद्मासनो नृपः ।
जयतां जनदौस्थित्यदाहदोषशशिप्रभे ॥ ७८ ॥
देव्यौ बाह्यान्तरतमोविद्रावणरविप्रभे ।
तयोरुक्त्वेति तत्याज पादयोः कुसुमाञ्जलिम् ॥ ७९ ॥

तथोक्तः ॥ ७१ ॥ तस्मिन्नुदारात्मा उत्तमचित्तः ॥ ७२ ॥ ॥ ७३ ॥ कोमलेति ॥ मृदुः कोमलो मन्दोऽमलसौगन्ध्यो निर्मलसौरभश्च मृदुश्च मन्दारपुष्पाणां मारुतो यस्मिन् गृहे तत्तथेति विग्रहः ॥ ७४ ॥ निष्पन्दोऽत्र किरणः । आह्लादितः सुखितः ॥ ७५ ॥ ॥ ७६ ॥ पुष्पाणां हारो यस्य पुष्पहारः । पुष्पाधार इति क्वचित् । तत्र मालाकार इत्यर्थः । उत्फुल्लं विकसितम् ॥ ७७ ॥ विवसने विवस्त्रे देशे । वस्त्रास्तरणरहितदेश इत्यर्थः । जनदौस्थित्येति ॥ जनानां दौस्थित्यं जनादिदोषदुष्टचित्तत्वं तेनाग्निना दाह इव दोषः तच्छामकशशिप्रभे ॥ ७८ ॥ बाह्यान्तरेति ॥ बाह्यान्तरपदार्थविष-

लीलायै भूपजन्माथ वक्तुं मन्त्रिणमीश्वरी।
बोधयामास पार्श्वस्थं संकल्पेन सरस्वती ॥ १८० ॥
योगिन्यौ स तु ते दृष्ट्वा प्रणम्य कुसुमाञ्जलिम्।
तयोः पादेषु संत्यज्य विवेश पुरतो नतः ॥ ८१ ॥
उवाच देवी हे राजन्कथं कस्य सुतः कदा।
इह जात इति श्रुत्वा स मन्त्री वाक्यमब्रवीत् ॥ ८२ ॥
देव्यौ युष्मत्प्रसादोऽयं भवत्योरपि यत्पुरः।
वक्तुं शक्नोमि तदिदं श्रूयतां जन्म मत्प्रभोः ॥ ८३ ॥
आसीदिक्ष्वाकुवंशस्थो राजा राजीवलोचनः।
श्रीमान्कुन्दरथो नाम दोश्छायाच्छादितावनिः ॥ ८४ ॥
तस्याभूदिन्दुबिम्बाभः पुत्रो भद्ररथाभिधः।
तस्य विश्वरथः पुत्रस्तस्य पुत्रो मनोरथः ॥ ८५ ॥
तस्य विष्णुरथः पुत्रस्तस्य पुत्रो बृहद्रथः।
तस्य सिन्धुरथः पुत्रस्तस्य शैलरथः सुतः ॥ ८६ ॥
तस्य कामरथः पुत्रस्तस्य पुत्रो महारथः।
अयमस्मत्प्रभुस्तस्य पुत्रः पूर्णामलाकृतिः ॥ ८७ ॥
महद्भिः पुण्यसंभारैर्विदूरथ इति श्रुतः।
जातो मातुः सुमित्राया गौर्या इव गुहोऽपरः ॥ ८८ ॥

याज्ञानान्धकारविद्रावकादित्यप्रभे। तयोः पादयोरिति संबन्धः प्रत्येकाभिप्रायेण ॥ ७९ ॥ १८० ॥ ८१ ॥ ८२ ॥ वक्तुं शक्नोमीति यत् अयं युष्मत्प्रसाद इति संबन्धः ॥ ८३ ॥ दोश्छायाच्छादितावनिर्भुजच्छायासंछादितभूमिः। सम्यग्रक्षितभूमिरित्यर्थः ॥ ८४ ॥ ८५ ॥

पितास्य दशवर्षस्य दत्वा राज्यं वनं ययौ ।
पालयामास भूपीठं ततः प्रभृति धर्मतः ॥ ८९ ॥
इत्युक्त्वा संस्थिते तूष्णीं मन्त्रिण्यथ नृपे तथा ।
कृताञ्जलौ नतमुखे बद्धपद्मासने स्थिते ॥ १९० ॥
राजन्स्मर विवेकेन पूर्वजातिमिति स्वयम् ।
वदन्ती मूर्ध्नि पस्पर्श तं करेण सरस्वती ॥ ९१ ॥
अथ हार्दं तमो माया राज्ञोऽस्य क्षयमाययौ ।
सस्मार पूर्ववृत्तान्तमन्तः स्फुरदिव स्थितम् ॥ ९२ ॥
अन्यदेहैकराजत्वं लीलाविलसितान्वितम् ।
उवाचात्मनि संसारो बत माययमाततता ॥ ९३ ॥
परिज्ञाता प्रसादेन देव्योरिह मयाधुना ।
हे देव्यौ किमिदं नाम दिनमेकं मृतस्य मे ॥ ९४ ॥
गतमद्येह जातानि मम वर्षाणि सप्ततिः ।
स्मराम्यनेककर्माणि मित्रबन्धुपरिच्छदान् ॥ ९५ ॥

ज्ञप्तिरुवाच ॥

राजन्मृतिमहामोहमूर्च्छायाः समनन्तरम् ।
तस्मिँल्लोके तवातीते तस्मिन्नेव मुहूर्तके ॥ ९६ ॥
तस्मिन्नेव गृहे जातः सर्गः स्फारौघविभ्रमः ।
तदैव चेतसि तव निर्मलाकाशनिर्मले ॥ ९७ ॥

॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ १९० ॥ ९१ ॥ तमसो बहुदुर्घटकारित्वदर्शनाय विशेषणम्—मायेति ॥ ९२ ॥ लीलाया भार्याया विलसितैर्विलासैरन्वितं लीलाविलसितान्वितम् । आसमन्तात्तता व्याप्ता आतता ॥ ९३ ॥ ९४ ॥ ९५ ॥ लोक्यत इति लोको देहस्तस्मिन् ॥ ९६ ॥ स्फारो भूरिः । एवकारोक्तमर्थं विशदयति—तदै-

प्रतिभानमिदं जातं व्यवहारभ्रमाततम्
वयसः समतीतानि मम वर्षाणि सप्ततिः ॥ ९८ ॥
यथा स्वप्नमुहूर्ते तु संवत्सरशतभ्रमः ।
तव मायाविलासेन तथायं जगति भ्रमः ॥ ९९ ॥
वस्तुतस्तु न जातोऽसि न मृतोऽसि कदाचन ।
शुद्धविज्ञानरूपस्त्वं शान्त आत्मनि तिष्ठसि ॥ २०० ॥
पश्यस्यथैतदखिलं न च पश्यसि किंचन ।
सर्वात्मकतया नित्यं प्रकचस्यात्मनात्मनि ॥ १ ॥
यस्त्वशुद्धमतिर्मूढो रूढो न वितते पदे ।
वज्रसारमिदं तस्य जगदस्त्यसदेव सत् ॥ २ ॥
यथा बालस्य वेतालो मृतिपर्यन्तदुःखदः ।
असदेव सदाकारं तथा मूढमतेर्जगत् ॥ ३ ॥

वेति ॥ ९७ ॥ व्यवहारभ्रमैराततं व्याप्तं व्यवहारभ्रमाततम् । प्रतिभानमेव लेशतो दर्शयति—वयस इति ॥ 'शतायुर्वै पुरुष' इत्युक्तायुषः संबन्धीनि सप्ततिर्वर्षाणि समतीतानीति प्रतिभानं जातमिति संबन्धः ॥ ९८ ॥ ९९ ॥ किं तर्हि वस्तुवृत्तमित्याकाङ्क्षायां तदाह—वस्तुतस्त्वित्यादिना श्लोकद्वयेन ॥ २०० ॥ तत्त्वदृष्टिमवलम्ब्याह—न च पश्यसीति ॥ प्रकचसि विस्फुरसि ॥ १ ॥ इदानीमुपन्यस्तविद्वद्दृष्टिस्तुत्यर्थं तद्विपरीतदृष्टिपरिहानार्थं च विद्वद्दृष्टिं वर्णयति—यस्त्वशुद्धमतिरित्यादिना दीर्घस्वप्नमित्यतः प्राक्तनग्रन्थसंदर्भेण । वितते संव्याप्ते पदे वस्तुनि न रूढः प्रसिद्धः । वस्तुतोऽसदेव जगत्तस्य मूढस्य दृष्ट्या सत्परमार्थसद्वज्रसारं चास्ति । वज्रस्य सार इव सारः स्थिरांशो यस्मिंस्तत्तथा ॥ २ ॥ वेतालोऽत्र बालेन स्वच्छायायामा-

ताप एव यथा वारि मृगाणां भ्रमतो भवेत् ।
असत्यमेव सत्याभं तथा मूढमतेर्जगत् ॥ ४ ॥

अव्युत्पन्नस्य कनके कानके कटके यथा ।
कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥ ५ ॥

तथा ज्ञस्य पुरागारनगनागेन्द्रभासुरा ।
इयं दृश्यदृगेवास्ति न चान्या परमार्थदृक् ॥ ६ ॥

दीर्घस्वप्नमिदं विश्वं चित्ताहन्तादिसंयुतम् ।
अत्रान्ये स्वप्नपुरुषा यथामी जाग्रतः स्थिताः ॥ ७ ॥

अस्ति सर्वगतं शान्तं परमार्थघनं शुचि ।
अचेत्यचिन्मात्रवपुः परमाकाशमाततम् ॥ ८ ॥

रोपितो विवक्षितः । मृतिपर्यन्तदुःखदो मरणपर्यवसायि दुःखं ददन् यथा स सत्य इवाभाति तथा मूढमतेर्जगत्सत्याभं भवति ॥ ३ ॥ तापो मरुभूमिगतः । भ्रमतो भ्रमात् ॥ ४ ॥ कटककल्पनाया अधिष्ठानभूते कनके हेम्नि विषये अव्युत्पन्नस्यासंजातविज्ञानस्य कानके कनकविकृते कटके कटकज्ञप्तिः कटकोऽयमिति विपरीतज्ञानमेवास्ति मनागपि ईषदपि हेमधीर्नास्ति। नायं कटकः किंतु हेमैवेति प्रमितिर्नास्तीत्यर्थः ॥ ५ ॥ यथायं दृष्टान्तस्तथा ज्ञस्याधिष्ठानब्रह्मानभिज्ञस्येयं दृश्यदृक् दृश्यभ्रान्तिरेवास्ति अन्या परमार्थदृङ्नास्ति । नेदं दृश्यं किंतु ब्रह्मैवेति प्रमितिर्नास्तीत्यर्थः । नगः पर्वतो वृक्षो वा । नागो गजः काद्रवेयो वा ॥ ६ ॥ एवं हेयामज्ञदृष्टिं दर्शयित्वोपादेयां तज्ज्ञदृष्टिं प्रपञ्चयति—दीर्घस्वप्नमित्यादिना ॥ अत्र जगति स्वप्नद्रष्टुरन्ये स्वप्नदृष्टाः पुरुषा यथा मिथ्या तथा जाग्रतः पुंसोऽन्येऽमी पुरुषा मिथ्यैव ॥ ७ ॥ परमार्थश्च तद्घनं निरन्तरं चेति परमार्थघनम् ।

तत्सर्वगं सर्वशक्ति सर्वं सर्वात्मकं स्वयम् ।
यत्र यत्र यथोदेति तथास्ते तत्र तत्र वै ॥ ९ ॥
तदेवमेष राजंस्त्वं लीलार्थमुपवर्णितः ।
स्वस्ति तेऽस्तु गमिष्यावो दृष्टादृष्टान्तसंविदः ॥ २१० ॥

विदूरथ उवाच ॥

ममापि दर्शनं देवि मोघं भवति नार्थिषु ।
महाफलप्रदायास्तु कथं तव भविष्यति ॥ ११ ॥
अहं देहमिमं त्यक्त्वा तं देहं पद्मनामकम् ।
कदा यास्यामि वरदे तन्मे कथय तत्त्वतः ॥ १२ ॥

देव्युवाच ॥

अस्मिन्रणवरे राजन्मर्तव्यं भवताधुना ।
प्राप्तव्यं प्राक्तनं राज्यमेतत्प्रत्यक्षमेव ते ॥ १३ ॥

वसिष्ठ उवाच ॥

प्रस्तुतेतिकथा यावन्मिथो मधुरभाषिणोः ।
तावत्प्रविश्य संभ्रान्तमुवाचोर्ध्वस्थितो नरः ॥ १४ ॥

अचेत्यचिन्मात्रवपुरविषयचिन्मात्रस्वरूपं परमाकाशं परं ब्रह्म सर्वगतम् । निरङ्कुशमिति वक्तुमाततमित्युक्तम् ॥ ८ ॥ सर्वं गच्छति जानातीति सर्वगं तत्सर्वमिति बाधायां सामानाधिकरण्यम् । सर्वात्मकं सर्वेष्वात्मस्वरूपमनुस्यूततया यस्य तत्सर्वात्मकम् ॥ ९ ॥ हे राजन्, एष त्वं लीलार्थं लीलायाः प्रपञ्चमिथ्यात्वे दृष्टान्तसिद्ध्यर्थम् । अथवा लीलार्थं लीलाप्रीत्यर्थमेवमुपवर्णितः । दृष्टान्तदृष्टयः प्रपञ्चमिथ्यात्वे दृष्टान्तनिश्चया दृष्टाः । लब्धा इत्यर्थः ॥ २१० ॥ ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ पट्टिश उभयतोधार आयुधवि-

देव पट्टिशचक्रासिगदापरिघवृष्टिमत् ।
महत्त्वरिबलं प्राप्तमेकार्णव इवोद्धतः ॥ १५ ॥
नगरे नगसंकाशे लग्नोऽग्निर्व्याप्तदिक्तटः ।
दहंश्चटचटास्फोटैः पातयत्युत्तमान्गृहान् ॥ १६ ॥
कल्पाम्बुदघटातुल्या व्योम्नि धूममहाद्रयः ।
बलात्प्रोड्डीयनं कर्तुं प्रवृत्ता गरुडा इव ॥ १७ ॥
ससंभ्रमं वदत्येवं पुरुषे परुषारवः ।
उदभूत्पूरयन्नाशा बहिः कोलाहलो महान् ॥ १८ ॥
बलादाकर्णकृष्टानां धनुषां शरवर्षिणाम् ।
बृंहतामतिमत्तानां कुञ्जराणां तरस्विनाम् ॥ १९ ॥
पुरे चटचटास्फोटैर्ज्वलतां जातवेदसाम् ।
पौराणां दग्धदाराणां महाहलहलारवैः ॥ २२० ॥
अथ वातायनाद्देव्यौ मन्त्री राजा विदूरथः ।
ददृशुः प्रोल्लसन्नादं महानिशि महापुरम् ॥ २१ ॥

शेषः । परिघो मूले निबद्धो लगुडः ॥ १५ ॥ नगः पर्वतः ॥ १६ ॥ कल्पाम्बुदघटातुल्याः प्रलयमेघसमूहतुल्याः । प्रोड्डीयनं प्रकर्षेणोद्गमनमित्यर्थः ॥ १७ ॥ परुषः कर्कशः आसमन्ताद्रवः शब्दो यस्य स परुषारवः उदभूदुद्भूतः । आशा दिशः ॥ १८ ॥ बृंहतां गर्जताम् । तरस्विनां बलवताम् । 'द्रविणं तरःसहोबलवीर्याणि स्थाम शुष्मं च'त्यमरः । यद्वा तरस्विनां जववताम् । 'रंहस्तरसी तु रयः स्यद' इत्यमरः ॥ १९ ॥ चटचटाहलहलेति शब्दानुकारौ । चटचटास्फोटैर्हलहलारवैश्च सह धनुषां कुञ्जराणां कोलाहल उदभूदिति पूर्वेणान्वयः ॥ २२० ॥ वातायनं गवाक्षम् । 'वातायनं गवाक्षोऽस्त्री'त्य-

प्रलयानिलसंक्षुब्धसप्तैकार्णवरंहसा ।
पूर्णं परबलेनोग्रकल्पमेघतरङ्गिणा ॥ २२ ॥
कल्पान्तवह्निविगलन्मेरुमन्दरभासुरम् ।
दह्यमानं महाज्वालाजालैरम्बरपूरकैः ॥ २३ ॥
मुष्टिग्राह्यमहामेघगर्जसंतर्जनोर्जितैः ।
घोरं कलकलारावैर्मांसलैर्दस्युजल्पितैः ॥ २४ ॥
तरदुल्मुकखण्डोग्रतारातरलिताम्बरम् ।
अङ्गारराशिनिपतन्नरनार्युग्ररोदनम् ॥ २५ ॥

मरः ॥ २१ ॥ एकश्चासावर्णवश्चैकार्णवः । सप्त चासावेकार्णवश्च सप्तैकार्णवस्तस्य रंह इव रंहो वेगो यस्य तत्तथा । उग्रा ये कल्पमेघाः प्रलयमेघास्तद्वत्तरङ्गाः तत्तुल्याकारा यस्मिन्परबले तदुग्रकल्पमेघतरङ्गि तेन ॥ २२ ॥ कल्पान्तवह्निविगलन्मेरुमन्दरभासुरं कल्पान्तवह्निना दग्धत्वाद्विगलन्तौ यौ मेरुमन्दरौ तद्वद्भासुरं भासनशीलम् ॥ २३ ॥ मुष्टिग्राह्या ये महामेघास्तेषां गर्जा गर्जनानि तद्वद्यानि संतर्जनानि तैरूर्जितैरभिवृद्धैः । यद्वा मुष्टिग्राह्या महामेघगर्जास्तद्वद्यानि संतर्जनानि तैरूर्जितैः । कलकलारावैः कोलाहलनिस्वनैः । 'कोलाहलः कलकल'इत्यमरः। कलकलेतिशब्दानुकारो वा । मांसलैः । सान्द्रैरित्यर्थः । कलकलारावैः दस्युजल्पितैश्च घोरमिति संबन्धः । अथवा दस्युजल्पितैर्हेतुभिर्मांसलैः कलकलारावैः घोरमित्यन्वयः ॥ २४ ॥ तरदुल्मुकेति ॥ तरन्ति लङ्घयन्ति यान्युल्मुकखण्डानि तान्येवोग्रतारा उग्रनक्षत्राणि ताभिस्तरलितं लुलितं अम्बरमाकाशं यस्मिन्पुरे तत्तथा । यथाहुः क्षीरस्वामिनः—'प्रेङ्खोलितस्तरलितो ललितो लोलितोऽपि चे'ति । अङ्गारराशिषु निपतन्नरनारीणा

एतस्मिन्नन्तरे राजमहिषी मत्तयौवना ।
अनुयाता वयस्याभिर्विवेश भयविह्वला ॥ २६ ॥
अथ तस्या वयस्यैका राजानं तं व्यजिज्ञपत् ।
देव देवी समायाता पलाय्यान्तःपुरान्तरात् ॥ २७ ॥
राजद्वाराहतास्त्वेते बलवद्भिरुदायुधैः ।
अन्तःपुराधिपाः सर्वे पिष्टाः शत्रुभिरुद्धतैः ॥ २८ ॥
दूरेणाशङ्कमायातैः परैर्नः पुरमाहृतम् ।
इत्याकर्ण्य विलोक्यासौ देव्यौ युद्धाय यास्यतः ॥ २९ ॥
रक्षतां मम भार्येयं युष्मत्पादाब्जषट्पदी ।
इत्युक्त्वा निर्ययौ राजा कोपाकुलितलोचनः ॥ २३० ॥
मत्तेभनिर्भिन्नवनकन्दरादिव केसरी ।
लीला लीलां ददर्शाथ स्वाकारसदृशाकृतिम् ॥ ३१ ॥
प्रतिबिम्बमिवायातामादर्शे चारुदर्शनाम् ॥ ३२ ॥

प्रबुद्धलीलोवाच ॥

किमिदं देवि मे ब्रूहि कस्मादियमहं स्थिता ।
या साहमभवं पूर्वं कथं सेयमहं स्थिता ॥ ३३ ॥

मुग्रं रोदनं यस्मिंस्तत्तथा ॥ २५ ॥ वयस्याभिः सखीभिः ॥ २६ ॥ व्यजिज्ञपत् विज्ञापितवती । ज्ञा अवबोधन इति धातोर्लङ् ॥ २७ ॥ पिष्टाश्चूर्णिताः ॥ २८ ॥ न विद्यते शङ्का यस्मिन्कर्मणि तदशङ्कम् । आहृतमपहृतम् । देव्याविति संबोधनम् ॥ २९ ॥ षट्पदी भ्रमरी ॥ २३० ॥ कन्दराद्दर्याः ॥ ३१ ॥ ३२ ॥ इयमहं कस्मात्स्थिता । इयं मत्समा कस्मात्स्थितेति यावत् । नन्वियं योगप्रभावोत्पादिता मानुषशरीरेण त्वया समा न भवतीत्याशङ्क्याह—या सेति ॥ ३३ ॥

ज्ञप्तिरुवाच ॥

याहग्भावो मृतो भर्ता तव तस्मिंस्तदा पुरे ।
ताहग्भावस्तमेवार्थं तथैवायं हि दृष्टवान् ॥ ३४ ॥
अविसंवादिसर्वार्थरूपं यत्तस्य बिम्बितम् ।
तदेव तादृशं चित्तदर्पणे प्रतिबिम्बति ॥ ३५ ॥
स्वप्नो जाग्रत्यसद्रूपः स्वप्ने जाग्रदसद्वपुः ।
मृतिर्जन्मन्यसद्रूपा मृत्यां जन्माप्यसन्मयम् ॥ ३६ ॥
एवं न सन्नासदिदं भ्रान्तिमात्रं विजृम्भते ।
अनुभूतय एतास्तु काश्चित्पूर्वानुभूतितः ॥ ३७ ॥

आत्मान्तरे त्वद्भावनाभावितेन त्वद्भर्त्रा त्वत्सदृशतया कल्पितत्वा-ल्लीला त्वत्समा स्थितेत्युत्तरमभिप्रेत्याह—याद्दगिति ॥ तमेवार्थं तत्स-दृशमेवार्थमित्यर्थः ॥ ३४ ॥ नन्वियं लीला कल्पिता चेत् शुक्ति-रजतादाविवास्यां विसंवादः कथं न जायत इत्याशङ्क्याह—अविसंवा-दीति ॥ अविसंवादिसर्वार्थरूपं व्यवहारदशायां बाधापरपर्यायविसं-वादरहितसर्वपदार्थस्वरूपं तस्य मनसि बिम्बितं त्वद्भर्तुर्मनसि स्फुरितमभूत्, तदेव तादृशं अविसंवादि सत् चित्तदर्पणे काला-न्तरे प्रतिबिम्बति । अविसंवादितया यत्पूर्वमनुभूतं तत्संस्कारात्मना वर्तमानं कालान्तरे चित्तदर्पणे तथैव स्फुरतीत्यर्थः ॥ ३५ ॥ ननु व्यवहारदशायां विसंवादाभावे कल्पितत्वमेवासिद्धमित्याशङ्क्य व्यभिचारित्वेन दृश्यमात्रस्य मिथ्यात्वं साधयति—स्वप्न इत्यादिना ॥ ३६ ॥ जगद्भ्रान्तीनां वैचित्र्यप्रदर्शनपूर्वकमभिनवलीलायाः सदृशभ्रान्तिगृहीतत्वं पूर्वोक्तं च विशदयति—अनुभूतय इत्यादिना ॥ काश्चिदनुभूतयो भ्रान्तयः पूर्वानुभूतितः संस्कारद्वारा जायन्ते

अपूर्वानुभवाः काश्चित्समाश्चैवासमास्तथा ।
त्वच्छीला त्वत्समाचारा त्वत्कुला त्वद्वपुः सती ॥ ३८ ॥
इति लीलेयमाभाति प्रतिभा प्रतिबिम्बजा ।
विदूरथस्तु भर्तैष तनुं त्यक्त्वा तवाङ्गने ॥ ३९ ॥
तदेवान्तःपुरं प्राप्य तादृगात्मा भविष्यति ॥ २४० ॥

वसिष्ठ उवाच ॥

इत्याकर्ण्य वचो देव्या लीला सा तत्पुरास्पदा ।
पुरः प्रह्वा स्थितोवाच वचनं विहिताञ्जलिः ॥ ४१ ॥
देवी भगवती ज्ञप्तिर्नित्यमेवार्चिता मया ।
सा यादृश्येव देवेशि तादृश्येव त्वमम्बिके ॥ ४२ ॥
तन्मे कृपणकारुण्याद्वरं देहि वरानने ।
रणे देहं परित्यज्य यत्र तिष्ठति मे पतिः ॥ ४३ ॥
अनेनैव शरीरेण तत्रस्थाहं तदङ्गना ।
एतदस्त्विति देव्योक्ते पूर्वलीलाब्रवीदथ ॥ ४४ ॥

॥ ३७ ॥ काश्चित्तु अपूर्वानुभवा भवन्ति । पूर्वानुभवाः कारणत्वेन न विद्यन्ते यासां ता अपूर्वानुभवाः काश्चित्समाः सदृशाः । त्वच्छीला त्वत्समानशीला । त्वत्कुला त्वत्समानकुला । त्वद्वपुस्त्वत्समानशरीरा ॥ ३८ ॥ प्रतिबिम्बजा प्रतिबिम्बत्वेन जाता त्वद्भर्तृप्रतिभेयं लीलेत्याभातीति संबन्धः ॥ ३९ ॥ २४० ॥ तत्पुरं विदूरथपुरं आस्पदं स्थानं यस्याः सा तथोक्ता । विहिताञ्जलिः कृताञ्जलिः ॥ ४१ ॥ ४२ ॥ अत्यन्तलोभार्थं बहुवमानं सहते यः स कृपणः कृपणे कारुण्यं कृपणकारुण्यं तस्मात् ॥ ४३ ॥ ४४ ॥ ४५ ॥

पूर्वलीलोवाच ॥

पूर्वेणैव शरीरेण किमर्थं नाहमीश्वरि ।
लोकान्तरमिदं नीता तं गिरिग्रामकं वद ॥ ४५ ॥

देव्युवाच ॥

न किंचित्कस्यचिदहं करोमि वरवर्णिनि ।
सर्वं संपादयत्याशु संकल्पः प्राणिनां स्वतः ॥ ४६ ॥
मां समाराधयन्त्यास्तु संकल्पोऽभूत्तवेदृशः ।
मुक्ता स्यामिति तेन त्वं तैः प्रकारैः प्रबोधिता ॥ ४७ ॥
अनया त्विममेवार्थं याचिता दत्तवत्यहम् ।
एवं फलति संकल्पो नृणामस्मत्प्रसादतः ॥ ४८ ॥

वसिष्ठ उवाच ॥

विदूरथस्तु सदनान्निर्गतः परिवारितः ।
परिवारेण महता महारत्नविभूषितः ॥ ४९ ॥
आलोकयन्वीरगणानारुरोह रथोत्तमम् ।
कूटागारसमाकारं मुक्तामाणिक्यमण्डितम् ॥ २५० ॥
अथोदपतदुद्दामनानाभ्ररवनिर्भरः ।
शैलभित्तिप्रतिध्वानैर्दारुणो दुन्दुभिध्वनिः ॥ ५१ ॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ कूटं गिरिशृङ्गं कूटवत्स्थितमगारं कूटागारं कूटागारेण सम आकारो यस्य स तथोक्तः तम् । यद्वा कूटागारमयोगृहं तत्सम आकारो यस्य तत् ॥ २५० ॥ उदपतत् उत्थितः । उद्दामनानाभ्ररवनिर्भरः उद्दामान्युद्बन्धनानि यानि नानाभ्राणि नानामेघास्तेषां रववन्निर्भरो भरः । सान्द्र इत्यर्थः । शैलभित्तिषु पर्वतपार्श्वभित्तिषु प्रतिध्वानैः प्रतिध्वनिभिर्दारुणो घोरः शैलभित्ति-

किङ्किणीजालनिध्वानैर्हेतिसंघट्टटंकृतैः ।
धनुश्चटचटाशब्दैः शरसीत्कारगीतिभिः ॥ ५२ ॥
परस्परं भटाह्वानैर्बन्दीविक्षुब्धरोदनैः ।
शिलाघनकृताशेषब्रह्माण्डकुहरध्वनिः ॥ ५३ ॥
हस्तग्राह्योऽभवेद्भीमो दशाशाकुञ्जपूरकः ।
अथोत्थितेन रजसा पीनेनाम्बररोधिना ॥ ५४ ॥
मूर्खत्वं यौवनेनैव घनतामाययौ तमः ।
विवेशारिबलं राजा क्षीराब्धिमिव मन्दरः ॥ ५५ ॥
जज्वलुः शस्त्रसंघट्टज्वलना उल्मुका इव ।
जगर्जुः शरधारौघान्वर्षन्तो वीरवारिदाः ॥ ५६ ॥
निपेतुः कङ्कवत्क्रूरा वीराङ्गेषु च हेतयः ।
पेतुः पटपटारावं हेतिनिष्पिष्टयोऽम्बरे ॥ ५७ ॥

प्रतिध्वानदारुणः ॥ ५१ ॥ हेतिसंघट्टटंकृतैः शस्त्रसंघट्टनजनितटंकारैः । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतय' इत्यमरः ॥ ५२ ॥ बन्दी हठापहृतास्त्री । यथाहुः क्षीरस्वामिनः—'बन्दी हठापहृता स्त्री' ति । शिलाघनो निबिडावयवपाषाणः । शिलाघनैः कृतं पूरितं शिलाघनकृतं अशेषब्रह्माण्डकुहरं येन स तथा । कुहरं सुषिरम् । अतिमहता ध्वनिना सर्वतः पूरितं ब्रह्माण्डविवरं शिलाघनपूरितमिवासीदित्यर्थः ॥ ५३ ॥ कुञ्जो लतादिपिहितोदरम् । दशाशा दशदिश एव कुञ्जा जगदुदरस्य तत्पूरको दशाशाकुञ्जपूरकः ॥ ५४ ॥ घनतां सान्द्रताम् ॥ ५५ ॥ जज्वलुः ज्वलनं चक्रुः । ज्वलना अग्नयः । 'कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपा' दित्यमरः । जगर्जुः गर्जनं चक्रुः ॥ ५६ ॥ कङ्को लोहपृष्ठाख्यः पक्षी । 'लोहपृष्ठस्तु कङ्कः

उत्तस्थुर्यमयात्रायां कबन्धनरपङ्क्तयः ।
प्रशेमुः पांसवो रक्तैस्तमांस्यायुधवह्निभिः ॥ ५८ ॥
युद्धैकध्यानतः शब्दभयानि मृतिनिश्चयैः ।
अभवत्केवलं युद्धमपशब्दमसंभ्रमम् ॥ ५९ ॥
समसमरवसंवहच्छरौघं टकिटकितारवसंपतद्भुशुण्डि ।
कणकणरवसंमिलन्महास्त्रं तिमिनिधिवद्रणमास दुस्तरं तत् २६०

वसिष्ठ उवाच ॥

एतस्मिन्वर्तमाने तु घोरे समरसंभ्रमे ।
लीलाद्वयमुवाचेदं देवीं भगवतीं प्रति ॥ ६१ ॥
देवि कस्मादकस्मान्नो भर्ता जयति नो रणे ।
वद त्वय्यपि तुष्टायामस्मिन्विद्रुतवारणे ॥ ६२ ॥

स्यादि'त्यमरः । पेतुः पतनं चक्रुः । पटपटारावमिति क्रियाविशेषणम् । निष्पिष्टयो निष्पेषाः ॥ ५७ ॥ प्रशेमुः प्रशान्ताः । तमांसि शब्दभयानि च क्रमेण आयुधवह्निभी रश्मिभिः ॥ ५८ ॥ युद्धैकध्याना-न्मृतिनिश्चयैश्च प्रशेमुः । अपशब्दं निःशब्दं यथा भवति तथा॥५९॥ समससेति शब्दानुकारः । समससमरवं यथा भवति तथा संवहत्संपतञ्शरौघो यस्मिन्रणे तत्तथा । अथवा समाः समजवाः परस्परं समसमवच्छब्दाः संवहन्तश्च शरौघा यस्मिंस्तत्तथा । यद्वा समंसमसत्यृजु यथा भवति तथा रवेण संवहन्तः शरौघा यस्मिंस्तत्तथा । अथवा समं युगपदेव समरवं यथा तथा संवहन्तः शरौघा यस्मिंस्तत्तथा । टकिटकितेतिशब्दानुकारः कलकलेति वा । भुशुण्डीनामायुधविशेषः । दुस्तरत्वमात्रे दृष्टान्तः तिमिनिधिवत् समुद्रवत् ॥ २६० ॥ ६१ ॥ देवीति ॥ नोऽस्माकम् । नो इत्यभावे । विद्रुतवारणे प्रविलापितगजे

देव्युवाच ॥

चिरमाराधिता तेन विदूरथनृपारिणा ।
अहं पुत्र्यौ जयार्थेन न विदूरथभूभृता ॥ ६३ ॥
तेनासावेव जयति जीयते न विदूरथः ।
अनेन मुक्त एव स्यामहमित्यस्मि भाविता ॥ ६४ ॥
प्रतिभारूपिणी तेन बाले मुक्तिर्भविष्यति ।
एतदीयस्त्वयं शत्रुर्जयी राज्यं करिष्यति ॥ ६५ ॥

वसिष्ठ उवाच ॥

एवं देव्यां वदत्यां तु बलयोर्युद्ध्यमानयोः ।
रविर्द्रष्टुमिवाश्चर्यमाजगामोदयाचलात् ॥ ६६ ॥
भुवनं कज्जलाम्भोधेरिवोद्धृत्तमराजत ।
पेतुः कनकनिष्पन्दसुन्दरा रविरश्मयः ॥ ६७ ॥
एतस्मिन्नन्तरे सेनाः सर्वाः संक्षयमाययुः ।
आसीद्रणाङ्गणं शून्यमिवाल्पोभयसैनिकम् ॥ ६८ ॥
प्राप्य राजा पुरः शत्रुं सिन्धुमुद्धरकन्धरम् ॥
धनुरास्फालयामास परिवादितदिङ्मुखम् ॥ ६९ ॥
कल्पान्तपवनास्फोट इवामरगिरेस्तटम् ।
विससर्जोर्जितो राजा प्रातरर्ककरानिव ॥ २७० ॥

रण इति संबन्धः ॥ ६२ ॥ ६३ ॥ ६४ ॥ प्रतिभारूपिणी मनोमयी ॥ ६५ ॥ युद्ध्यमानयोः सतोः ॥६६॥ कज्जलं मसी । कनकनिष्पन्दाः सुवर्णशलाकाः ॥ ६७ ॥ सैनिकाः सेनायां समवेताः ॥ ६८ ॥ सिन्धुं सिन्धुनामकम् । उद्धरकन्धरं उन्नतग्रीवम् । धनुरास्फालयामास धनुर्ज्यामाततानेत्यर्थः । परिवादितानि परिनादितानि दिङ्मुखानि यस्मिन्कर्मणि तत्तथा ॥६९॥ आस्फोटोऽत्राभिहतिः । अमरगिरिर्मेरुः

तीक्ष्णाः परमदुस्पर्शाः शिलीमुखपरम्पराः ।
सिन्धोरपि तथैवासीन्मुक्तिलाघवमेव च ॥ ७१ ॥
एवं सिन्धुर्महाबाहुश्चिरं समरमूर्धनि ।
क्रीडित्वा पीडयामास शरवर्षैर्विदूरथम् ॥ ७२ ॥
छिन्नध्वजं छिन्नरथं भिन्नाश्वं भिन्नसारथिम् ।
छिन्नकार्मुकवर्माणं छिन्नसर्वाङ्गमाकुलम् ॥ ७३ ॥
हृदि स्फारशिलापट्टदृढपीवरमूर्धनि ।
भित्त्वा वज्रसमैर्बाणैः पातयामास भूतले ॥ ७४ ॥
हतो राजा हतो राजा प्रतिराजेन संयुगे ।
इति शब्दे समुद्भूते राष्ट्रमासीत्समाकुलम् ॥ ७५ ॥
भाण्डोपस्करभारौघविद्रवच्छकटव्रजम् ।
आक्रन्दार्तकलत्रौघविद्रवन्नागरोत्करम् ॥ ७६ ॥
एतस्मिन्नन्तरे लीला तामुवाच सरस्वतीम् ।
श्वासावशेषमालोक्य मूढं भर्तारमग्रतः ॥ ७७ ॥
प्रवृत्तो देहमुत्स्रष्टुं मद्भर्तायमिहाम्बिके ।
भर्तारमनु यास्यामि दयां कुरु महेश्वरि ॥ ७८ ॥

करान्किरणान् ॥ २७० ॥ शिलीमुखाः सायकाः ॥ ७१ ॥ ७२ ॥ कार्मुकं धनुः । वर्म कवचम् ॥ ७३ ॥ स्फारो विपुलो यः शिलापट्टः तद्वद्दृढः पीवरः पीनश्च मूर्धा ऊर्ध्वभागो यस्य हृदस्तत्तथा ॥ ७४ ॥ ७५ ॥ भाण्डोपस्करेति ॥ भाण्डानामुपस्कराणामुपकरणानां भारौघैर्विद्रवत् शकटानां व्रातः समूहो यस्य राष्ट्रस्य तत्तथा । आसमन्तात्क्रन्दो रोदनं आक्रन्दस्तेनार्तो दुःखितः कलत्रौघो यस्य तत्तथा । विद्रवत् प्रधावन् नागराणां नगरभवानामुत्करः पुञ्जो यस्य तत्तथा । 'स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियामि'त्यमरः ॥ ७६ ॥ ७७ ॥ ७८ ॥

इत्युक्त्वा ज्ञप्त्यनुध्यानात्सा सामर्थ्यवती क्षणात् ।
पुप्लुवे पेलवाकारा पक्षिणीव नभस्तले ॥ ७९ ॥
मेघमार्गानथोल्लङ्घ्य वातस्कन्धानथो पुनः ।
सूर्यमार्गाद्विनिर्गत्य तारामार्गमतीत्य च ॥ २८० ॥
ब्रह्मादिस्थानमाक्रम्य प्राप्य ब्रह्माण्डखर्परे ।
ब्रह्माण्डखर्परं भित्त्वा जलाद्यावरणांस्ततः ॥ ८१ ॥
समुल्लङ्घ्य पुरः प्राप महाचिद्गगनान्तरम् ।
अदृष्टपारपर्यन्तमतिवेगेन धावता ॥ ८२ ॥
सर्वतो गरुडेनापि कल्पकोटिशतैरपि ।
तत्र ब्रह्माण्डलक्षाणि सन्त्यसंख्यानि भूरिशः ॥ ८३ ॥
तान्यन्योन्यमदृष्टानि फलानीव महावने ।
तत्रैकस्मिन्पुरःसंस्थे विततावरणान्विते ॥ ८४ ॥
वेधयित्वा विवेशान्तः प्रापयत्पद्मपत्तनम् ।
तत्र तन्मण्डपं प्राप्य देवी शक्त्युपबृंहिता ॥ ८५ ॥
प्रविश्य पुष्पगुप्तस्य शवस्य निकटे स्थिता ।
तं दृष्ट्वा चिन्तयामास चेतसा स्फुरितात्मना ॥ ८६ ॥

पुप्लुवे प्लवनं चक्रे। प्लु गतौ इति धातोर्लिट्। पेलवस्तनुराकारो यस्याः सा पेलवाकारा। 'पेलवं विरलं तन्वि'त्यमरः ॥ ७९ ॥ २८० ॥ ब्रह्माण्डखर्परं ब्रह्माण्डकपालं स्थानम्। 'स्यात्कर्परः कपालोऽस्त्री'त्यमरः ॥ ८१ ॥ महाचिदेव परमात्माख्यगगनं तस्यान्तरं मध्यं महाचिद्गगनान्तरम्। महात्मनोऽपि पृथिव्याद्यावरणवत्परिच्छेदमाशङ्क्याह—अदृष्टेति ॥ ८२ ॥ गरुडेनाप्यदृष्टपारपर्यन्तमिति संबन्धः ॥ ८३ ॥ ८४ ॥ ८५ ॥ स्फुरितात्मना चलितस्वरूपेण। विस्मयो-

एष मे भविता भर्ता नूनं वीरवराग्रणीः ।
अहं देव्याः प्रसादेन ततः प्रथममागता ॥ ८७ ॥
इति संचिन्त्य सा हस्ते गृहीत्वा चारु चामरम् ।
वीजयामास राजेन्द्रं लीला ललितयौवना ॥ ८८ ॥

वसिष्ठ उवाच ॥

एतस्मिन्नन्तरे राज्ञः पतितस्य महीतले ।
जीवं ददृशतुर्देव्यौ दिव्यदृष्ट्या नभोगतम् ॥ ८९ ॥
अथ जीवकला लीला ज्ञप्तिश्चेति त्रयं ततः ।
पुप्लुवे जीवलेखा तु योगिन्यौ ते न पश्यति ॥ २९० ॥
तमेवानुसरन्त्यौ ते सर्गात्सर्गान्तरं गते ।
पद्मराजपुरं प्राप्य लीलान्तःपुरमण्डपम् ॥ ९१ ॥
क्षणाद्विविशतुः स्वैरं जीवलेखाप्यथाग्रगा ।
ततो ददृशतुर्देव्यौ शवशय्यैकपार्श्वगाम् ॥ ९२ ॥
लीलां विदूरथस्याग्रे प्रस्थितां प्रथमागताम् ।
एतस्मिन्नन्तरे ज्ञप्तिर्जीवं वैदूरथं पुनः ॥ ९३ ॥
संकल्पेन रुरोधाथ मनसः स्पन्दनं यथा ।
ततो भगवतीमाह लीला ललितलोचना ॥ ९४ ॥
देवि स प्राक्तनो देहः कथं मम न दृश्यते ॥ ९५ ॥

स्फुलिङ्गस्वरूपेणेति यावत् ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ २९० ॥ ॥ ९१ ॥ ९२ ॥ वैदूरथं विदूरथसंबन्धिनम् ॥ ९३ ॥ अयं जीवः शवशरीरं मा प्रविशतु आकाशे तावत्तिष्ठत्वित्येवंलक्षणेन संकल्पेन रुरोध निरोधं चकार । ललिते सुन्दरे लोचने यस्याः सा तथोक्ता ॥ ९४ ॥ ९५ ॥ महानाशयोऽभिप्रायो यस्याः सा तथोक्ता तत्सं-

ज्ञप्तिरुवाच ॥

शृणु देहस्य किं वृत्तं तव लीले महाशये ।
समाधौ त्वयि लीनायां तदा तव कलेवरम् ॥ ९६ ॥
निर्जीवं पतितं भूमौ संशुष्कमिव पल्लवम् ।
काष्ठकुड्योपमो जातः शवस्तुहिनशीतलः ॥ ९७ ॥
ततो मन्त्रिभिरागत्य मृतोऽयमिति निश्चयैः ।
चितौ संक्षिप्य सघृतं दग्धं चन्दनदारुभिः ॥ ९८ ॥
इदानीं त्वामिहालोक्य सशरीरामुपागताम् ।
परलोकादागतेति महच्चित्रं भविष्यति ॥ ९९ ॥
आतिवाहिकदेहेन प्रतिभामात्ररूपिणा ।
दृश्यसे सांप्रतं त्वं तु योगर्द्धिबलबृंहिता ॥ ३०० ॥
विस्मृतस्तव देहोऽसौ वासनायाः परिक्षयात् ।
रूढातिवाहिकदृशा प्रशाम्यत्याधिभौतिकः ॥ १ ॥
तदेहि यावल्लीलायै लीले संकल्पलीलया ।
आत्मानं दर्शयावोऽस्यै व्यवहारः प्रवर्तताम् ॥ २ ॥

बोधनं हे महाशये ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ आतिवाहिकदेहेन लिङ्गशरीरेण । प्रतिभामात्रं प्रतीतिमात्रं रूपं यस्य स तथा ॥ ३०० ॥ देहः स्थूलः । वासनायाः स्थूलदेहवासनायाः रूढातिवाहिकदृशा । दृढलिङ्गशरीरप्रमायाः स्वप्नदेहवन्मनोऽव्यतिरिक्त आधिभौतिकदेहो नास्तीति दृढप्रमयेत्यर्थः । अतएवाहुः—जीवन्मुक्तस्य शरीरं प्रातिभासिकमिति ॥ १ ॥ संकल्पलीलया संकल्पक्रीडया यावदात्मानं दर्शयावस्तावद्व्यवहारः प्रवर्ततामिति संबन्धः । तावच्छब्दार्थे वा

आवां तावदिमे लीला पश्यत्वित्येव चिन्तिते ।
ज्ञप्तिदेव्या ततस्तत्र लीला चलविलोचना ॥ ३ ॥
गृहमालोकयामास तत्तेजःपुञ्जभासुरम् ।
गृहमालोक्य पुरतो लीलां ज्ञप्तिं विलोक्य च ॥ ४ ॥
उत्थाय संभ्रमवती तयोः पादेषु सापतत् ।
उपाविशद्विष्टरेषु ज्ञप्तिलीले च ते ततः ॥ ५ ॥

ज्ञप्तिरुवाच ॥

हे हंसहारिगामिन्यौ लीले ललितलोचने ।
उत्थापयावो नृपतिं शवतल्पादिमं पुनः ॥ ६ ॥
इत्युक्त्वा मुमुचे जीवमामोदमिव पद्मिनी ।
स समीरलवाकारस्तन्नासानिकटं ययौ ॥ ७ ॥
घ्राणाकाशं विवेशाशु वंशरन्ध्रमिवानिलः ।
अन्तस्थजीववदनं तस्य तत्कान्तिमाययौ ॥ ८ ॥
क्रमादङ्गानि सर्वाणि सरसानि चकाशिरे ।
स्फारयामास सोऽङ्गानि रसवन्ति मृदूनि च ॥ ९ ॥
उन्मीलयामास दृशौ विमलालोककारिणी ।
उत्तस्थौ प्रोल्लसत्कायो विन्ध्याद्रिरिव जङ्गमः ॥ ३१० ॥

यावच्छन्दः ॥ २ ॥ लीलैवेमे आवां तावपश्यत्विति ज्ञप्तिदेव्या चिन्तिते सतीत्यन्वयः ॥ ३ ॥ ४ ॥ ५ ॥ हंसहारिगामिन्यौ हंसवन्मनोहारिगामिन्यौ । लीले ललितलोचने इति च संबोधनप्रथमाद्विवचनम् ॥ ६ ॥ दूरव्याप्त्या मनो हरति यः परिमलः सः । 'आमोदः सोऽतिनिर्हारी'त्यमरः । समीरो वायुः ॥ ७ ॥ ८ ॥ चकाशिरे दीप्तिंचक्रिरे । स्फारयामास बहुलीचकार ॥ ९ ॥ ३१० ॥

उवाच कः स्थित इति घनगम्भीरनिस्वनम् ।
लीलाद्वयमथास्याग्रे प्रोवाचादिश्यतामिति ॥ ११ ॥
का त्वं केयं कुतश्चेयमित्याह स विलोकयन् ।
तस्मै लीलाह हे देव श्रूयतां यद्वदाम्यहम् ॥ १२ ॥
महिला तव लीलाहं प्राक्तनी सहवर्तिनी ।
इयं ते महिला लीला द्वितीया लीलया मया ॥ १३ ॥
उपार्जिता त्वदर्थेन प्रतिबिम्बमयी शुभा ।
शिरोभागोपविष्टेयं येयं हैममहासने ॥ १४ ॥
एषा सरस्वतीदेवी त्रैलोक्यजननी शुभा ।
इत्याकर्ण्य समुत्थाय राजा ज्ञप्तिपदाब्जयोः ॥ १५ ॥
पपात प्रयतो भूत्वा सरस्वति नमोऽस्तु ते ।
इत्युक्तवन्तं हस्तेन स्पृष्ट्वोवाच सरस्वती ॥ १६ ॥
सर्वापदः सकलदुष्कृतदृष्टयश्च
गच्छन्तु वः शिवमनन्तसुखानि सम्यक् ।
आयान्तु नित्यमुदिता जनता भवन्तु
राष्ट्रे स्थिराश्च विलसन्तु सदा महान्तः ॥ १७ ॥

वसिष्ठ उवाच ॥

सरस्वती तथेत्युक्त्वा तत्रैवान्तर्धिमाययौ ।
जयमङ्गलपुण्याहघोषघुंघुमघर्घरः ॥ १८ ॥

घनगम्भीरनिनदं यथा तथा । आदिश्यतामाज्ञाप्यताम् ॥ ११ ॥ ॥ १२ ॥ महिला वनिता । 'प्रतीपदर्शिनी वामा महिला वनिता तथे' त्यमरः ॥ १३ ॥ त्वदर्थेन त्वत्प्रयोजननिमित्तेन ॥ १४ ॥ १५ ॥ १६ ॥ जनता जनसमूहः ॥ १७ ॥ घुंघुमो घर्घर इति च शब्दानुकारः । जयघोषेण मङ्गलपुण्याहघोषेण

हृष्टपुष्टजनाकीर्णं ततोऽभून्नृपमन्दिरम् ।
ततोऽभिषिषिचुर्विप्रा मन्त्रिणो भूभुजश्च तम् ॥ १९ ॥
लीला लीला च राजा च जीवन्मुक्ता महाधियः ।
रेमिरे पूर्ववृत्तान्तकथनैः सुरतैरिव ॥ ३२० ॥
स ज्ञप्तिज्ञानसंबुद्धो राजा लीलाद्वयान्वितः ।
चक्रे वर्षायुतान्यष्टौ तत्र राज्यमनिन्दितम् ॥ २१ ॥
जीवन्मुक्तास्त इत्येवं राज्यं निहतकण्टकम् ।
कृत्वा विदेहमुक्तत्वमासेदुः शुद्धसंविदः ॥ ३२२ ॥

इति श्रीवाल्मीकीये मोक्षोपाये उत्पत्तिप्रकरणे मण्डपोपाख्याने लीलोपाख्यानं नाम द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः

### वसिष्ठ उवाच ॥

एतत्ते कथितं राम दृश्यदोषनिवृत्तये ।
लीलोपाख्यानमनघं घनतां जगतस्त्यज ॥ १ ॥

च घुंघुमध्वनयश्च यस्मिन्स तथा ॥ १८ ॥ १९ ॥ ३२० ॥ ज्ञप्तिज्ञानसंबुद्धः ज्ञप्तिदेव्युपदिष्टज्ञानवाक्यैः सम्यग्बुद्ध इत्यर्थः ॥ २१ ॥ ३२२ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमपूज्यपादशिष्यश्रीमदात्मसुखकृतौ वासिष्ठचन्द्रिकायां उत्पत्तिप्रकरणे लीलोपाख्यानं नाम द्वितीयः सर्गः ॥ २ ॥

आकाशजाख्यानलीलाख्यानाभ्यां विस्तरेण प्रतिपादितमर्थं सुखप्रतिपत्तये संक्षेपेण वक्तुं प्रस्तावयति—एतदिति ॥ दृश्यदोषनिवृत्तये दृश्यमेव सत्यतया प्रतीयमानं दोषस्तस्य निवृत्तये । घनतां सान्द्र-

असदाभासमच्छात्म ब्रह्मास्तीह प्रबृंहितम् ।
बृहच्चिद्भैरववपुरानन्दाभिधमव्ययम् ॥ २ ॥
तस्य यत्सममापूर्णं शुद्धसत्त्वमचिह्नितम् ।
तद्विदामप्यनिर्देश्यं तच्छान्तं परमं पदम् ॥ ३ ॥
ब्रह्मणः स्फुरणं किंचिद्यदवाताम्बुधेरिव ।
दीपस्याथाप्यवातस्य तं जीवं विद्धि राघव ॥ ४ ॥

तान्सत्यतामिति यावत् ॥ १ ॥ असतोऽनिर्वचनीयप्रपञ्चस्याभासः स्फुरणं यस्मात्तदसदाभासम् । यद्वा असन्नविद्यमान आभासो दृश्यो यस्मिंस्तदसदाभासम् । अच्छात्म स्वच्छरूपम् । ब्रह्मशब्दस्यार्थद्वयमाह—प्रबृंहितं मायिकप्रपञ्चेनोपचितं प्रबृंहितम् । बृहन्निरङ्कुशमहत्त्वसंपन्नम् । तत्त्वदृष्टिविपरीतदृष्टिभ्यां बृहत्त्वप्रबृंहितत्वयोर्द्वयोरेकत्राविरोधः । चित् ज्ञप्तिस्वरूपम् । भैरववपुर्भयंकरस्वरूपम् । 'भीषास्माद्वातः पवते। भीषोदेति सूर्य' इति श्रुतेः । 'यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् । अग्निरिद्धः सगिरिभिर्भूर्न मज्जति यद्भयादि'ति भगवद्वचनाच्च ॥ २ ॥ नन्वेवंविधं ब्रह्मास्ति चेत्तर्हीदं तदिति विविच्य निर्दिश्यतामित्यत आह—तस्य यदिति ॥ समं दृश्योत्पत्तिनाशयोरेकरूपम् । यद्वा सर्वेषु भूतेषु समम् । अचिह्नितमलाञ्छितम् । विदां ज्ञानिनामप्यनिर्देश्यमवाच्यं क्षीरमाधुर्यवत् । शान्तं निर्विकारम् । 'तद्विष्णोः परमं पदमि'त्यादिश्रुतिप्रमाणकं तदिति सूचयति—परमं पदमिति ॥ ३ ॥ उक्तं ब्रह्मतत्त्वमध्यारोपापवादाभ्यां विशदयति—ब्रह्मणः स्फुरणमित्यादिभिः सप्तभिः । अथशब्दोऽर्थान्तरोपन्यासे । अपिः समुच्चये । अवाताम्बुधेरिव अवातस्थदीपस्येवापि ब्रह्मणः किंचिद्यत्स्फुरणं चलनमस्ति तं जीवं विद्धि जानीहि ॥ ४ ॥ तदेव तत्स्फु-

तदेव घनसंवित्त्या यात्यहन्तामनुक्रमात् ।
वह्न्यणुस्त्विन्धनाधिक्यात्स्वां प्रकाशकतामिव ॥ ५ ॥
संकल्पोन्मुखतां यातस्त्वहंकारो भवत्युत ।
चित्तं चेतो मनो माया प्रकृतिश्चेति नामभिः ॥ ६ ॥
परस्मात्कारणादेवं मनः प्रथममुत्थितम् ।
मननात्मकमाभोगि तेनेदं तन्यते जगत् ॥ ७ ॥
अपारावारविस्तारसंवित्सलिलवल्गनैः ।
चिदेकार्णव एवायं स्वयमात्मा विजृम्भते ॥ ८ ॥
दीर्घस्वप्नस्थितिं यातः संसाराख्यो मनोवशात् ।
असम्यग्दर्शनात्स्थाणाविव पुंप्रत्ययो दृढः ॥ ९ ॥

रणमेव घनसंवित्त्या सान्द्रसंकल्पेन । निबिडाहंकारभावनयेतिया-वत् । अहन्तामहंकारतां वह्नेरग्नेः सूक्ष्मोंऽशो वह्न्यणुः ॥ ५ ॥ संकल्पोन्मुखतां मनोभावनाभिमुखताम् । अप्यर्थे उतशब्दः । अहंकार उत संकल्पोन्मुखतां यातः सन् चित्तमित्यादिनामभिरुच्य-मानं वस्तु भवतीत्यध्याहृत्य योजनीयम् ॥ ६ ॥ एवमुक्तक्रमेण पर-स्मात्कारणाद्ब्रह्मणः प्रथममुत्थितं मनस्तच्च मननात्मकं संकल्पात्म-कमाभोगि च भवति । आभोगः परिपूर्णतास्यास्तीत्याभोगि स्वका-र्यजगद्व्यापित्वात् ॥ ७ ॥ तस्याभोगित्वमुक्तं विशदयति—अपारेति ॥ पारं परंतीरम् । अवारं अर्वाक्तीरम् । 'पारावारे परार्वाची तीरे' इति वचनात् । अपारावारो विस्तारो येषां तान्यपारावारविस्ताराणि संविद एव संकल्पापरपर्यायाः सलिलानि संवित्सलिलानि अपा-रावाराणि च तानि संवित्सलिलानि च तैश्चिदेकार्णव एवाय-मात्मा मनो भूत्वा अपारावारे विस्तारे संवित्सलिलवल्गनैः स्वयं जगद्रूपेण विजृम्भित इत्यन्वयः ॥ ८ ॥ दीर्घस्वप्नेति

द्वैतं यथा नास्ति चिदात्मजीवयो-
स्तथैव भेदोऽस्ति न जीवचित्तयोः ।
यथैव भेदोऽस्ति न जीवचित्तयो-
स्तथैव भेदोऽस्ति न चित्तसर्गयोः ॥ १० ॥

वसिष्ठ उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
राक्षस्योक्तं महाप्रश्नजालमावलिताखिलम् ॥ ११ ॥
अस्ति कज्जलपङ्काद्रेरिवोग्रा शालभञ्जिका ।
हिमाद्रेरुत्तरे पार्श्वे कर्कटीनाम राक्षसी ॥ १२ ॥
स्थिरविद्युल्लतानेत्रा खर्जूरतरुजानुका ।
वैदूर्यसूर्याग्रनखा स्नाय्वस्थिग्रन्थिदेहिनी ॥ १३ ॥

स्पष्टार्थः । 'वाचारम्भणं विकारो नामधेयमि'त्यादिश्रुतेः ॥ ९ चिदात्मतत्त्वयोर्जीवब्रह्मणोः कार्यकारणयोर्द्वैतं भेदो यथा नास्ति तथा जीवमनसोः कार्यकारणयोर्नास्ति भेदः । एवं मनःप्रपञ्चयोरपि कारणाद्यात्मनोर्न भेदः ॥ १० ॥ उक्तेऽर्थे सूच्युपाख्यानमवतारयति—अत्रैवेति ॥ क्वचिद्धिंसाविहाराणामपि तामसानां कथंचिद्धिंसानभिसंबन्धिपूर्वप्रयत्नातिशयेनापवर्गमार्गः समुदेतीति दर्शनार्थं चेदमाख्यानमिति ज्ञेयम् । आवलिताखिलं क्रोडीकृतसर्वम् ॥ ११ ॥ कज्जलपङ्काद्रेः मषीपङ्कगिरेः उत्तरस्यां दिशि शालभञ्जिकेव पुत्तलिकेव प्रतीयमाना ॥ १२ ॥ स्थिरे ये विद्युल्लते तद्वन्नेत्रे यस्याः सा तथोक्ता । अभूतोपमैषा । खर्जूरतरुस्तृणप्रधानवृक्षविशेषः स च दीर्घो दर्दुरश्च भवति तद्वज्जानुनी यस्याः सा तथोक्ता । वैदूर्यरत्नकृतसूर्यवदग्रनखानि यस्याः सा वैदूर्यसूर्याग्रनखा । वैदूर्यसूर्योग्रनखेति क्वचित् । स्नायवो वस्नसा देहवेष्टनानि स्नायूनामस्थ्नां

तस्या विपुलकायत्वाद्दुर्लभत्वान्निजान्धसः ।
अतृप्तोऽर्णवलेखाया इवाभूज्जाठरोऽनलः ॥ १४ ॥
न कदाचन सा तृप्तिमुपयाति महोदरी ।
वडवानलजिह्वेव चिन्तयामास चैकदा ॥ १५ ॥
जम्बुद्वीपगतान्सर्वान्निगिरामि जनानपि ।
अनारतमनुच्छ्वासं जलराशिमिवार्णवः ॥ १६ ॥
मेघेन मृगतृष्णेव तन्मे क्षुदुपशाम्यति ।
तपः करोमि परममखिन्नेनैव चेतसा ।
इति संचिन्त्य सा सर्वजन्तुजातजिघांसया ॥ १७ ॥
तपोऽर्थमथ ससार पर्वतं भूतदुर्गमम् ।
तत्र गत्वाथ सा स्नात्वा तपः कर्तुं व्यवस्थिता ॥ १८ ॥
अतिष्ठदेकपादेन चन्द्रार्कस्पन्दलोचना ।
क्रमेण दिवसाः पक्षास्तस्या मासास्ततो ययुः ॥ १९ ॥
शीतातपेष्वलीनायाः कृताया इव शैलतः ।
अष्टवर्षसहस्रेण तां पितामह आययौ ॥ २० ॥

च ग्रन्थिभिर्युक्तो देहो यस्याः सा स्नाय्वस्थिग्रन्थिदेहिनी ॥ १३ ॥ निजान्धसः स्वान्नस्य नरमांसादिलक्षणस्य अर्णवलेखाया जठरभवो वडवानल इव तस्य जाठरोऽनल औदर्योऽग्निरतृप्तोऽभूत् ॥ १४ ॥ ॥ १५ ॥ निगिरामि ग्रसामि । अनारतं संततम् ॥ १६ ॥ मेघेनेति ॥ मृगतृष्णा हि मरुमरीचिका मेघेन सेचनेनोच्छाम्यति । तत्तर्हि सर्वजन्तुजातजिघांसया सर्वप्राणिसमूहहननेच्छया ॥ १७ ॥ ॥ १८ ॥ चन्द्रार्कयोः स्पन्देषु गतिषु लोचने यस्याः सा चन्द्रार्कस्पन्दलोचना । चन्द्रर्कदत्तदृष्टितया तद्गत्यनुसारिलोचनेत्यर्थः ॥ १९ ॥ शैलत्त उपादानकारणात्कृतायाा इव स्थितायाः ॥ २० ॥ २१ ॥

दारुणं हि तपः सिद्ध्यै नीचानामपि जायते ।
मनसैव प्रणम्यैनं सा तथैव स्थिता सती ॥ २१ ॥
को वरः क्षुच्छमायालमिति चिन्तापराभवत् ।
आ स्मृतं प्रार्थयिष्येऽहं वरमेकमिमं विभु ॥ २२ ॥
अनायसीवायसीव स्यामहं जीवसूचिका ।
यथाभिमतमेतेन ग्रसेयं सकलं जनम् ॥ २३ ॥
क्रमेण क्षुद्विनाशाय क्षुद्विनाशः परं सुखम् ।
प्राणिनामिह सर्वेषां हृदयं प्रविशाम्यहम् ।
इति संचिन्तयन्तीं तामुवाच कमलालयः ॥ २४ ॥
पुत्रि कर्कटिके रक्षःकुलशैलाभ्रमालिके ।
उत्तिष्ठ तव तुष्टोऽस्मि गृहाणाभिमतं वरम् ॥ २५ ॥

कर्कट्युवाच ॥

भगवन्भूतभव्येश स्यामहं जीवसूचिका ।
अनायसीवायसीव विधे दास्यसि चेद्वरम् ॥ २६ ॥

वसिष्ठ उवाच ॥

एवमस्त्विति तामुक्त्वा पुनराह पितामहः ।
सूचिका सोपसर्गा त्वं भविष्यसि विषूचिका ॥ २७ ॥

अलं शक्तः ॥ आ इति स्मरणे । 'आ प्रगृह्यस्मृतौ वाक्य'इत्यमरः ॥ २२ ॥ अनायसीवायसीव अलोहमय्यपि लोहमयीव । जीवसूचिका जीवानां सीवनी स्याम् । एतेन वरेण जगद्यथाभिमतं क्रमेण क्षुन्नाशाय ग्रसेयमिति संबन्धः ॥ २३ ॥ सह । प्राणैः सहेत्यर्थः । वक्ष्यति–च प्रविश्य हृदयं प्राणैरिति ॥ २४ ॥ रक्षसां कुलमेव शैलस्तस्याभ्रमालिके हे रक्षःकुलशैलाभ्रमालिके ॥ २५ ॥ विधे हे विरिञ्चे ॥ २६ ॥ कर्कट्या प्रार्थितो लोक-

दुर्भोजना दुरारम्भा मूर्खा दुःस्थितयश्च ये ।
दुर्देशवासिनो दुष्टास्तेषां हिंसां करिष्यसि ॥ २८ ॥
प्रविश्य हृदयं प्राणैः पद्मप्लीहादिबाधनात् ।
वातलेखात्मिका व्याधिर्भविष्यसि विषूचिका ॥ २९ ॥
सगुणं निर्गुणं चैव जनमासादयिष्यसि ।
सगुणानां चिकित्सार्थं मन्त्रोऽयं तु मयोच्यते ॥ ३० ॥

ॐ ह्रां ह्रीं श्रीं रां विष्णुशक्तये नमो भगवति विष्णुशक्ति एहि एनां हरहर दहदह हनहन पचपच मथमथ उत्सादयउत्सादय दूरे कुरुकुरुस्वाहा । विषूचिके त्वं हिमवन्तं गच्छगच्छ जीव सारचन्द्रमण्डलं गतोऽसिस्वाहा ।

इति मन्त्री महामन्त्रं न्यस्य वामकरोदरे ।
मार्जयेच्चातुराकारं तेन हस्तेन संयतः ॥ ३१ ॥

सिद्धजीवसूचित्वदानात्सकलजनानामपूर्वदुःखसागरनिमज्जनं मा भूदिति जगति स्वत एव विद्यमानविषूचिकाव्याधिभावमस्यै दातुमिच्छन् प्राप्तकर्मानुसारी भगवान्पुनराह पितामहः—सूचिका सोपसर्गेति ॥ वीत्यनेनोपसर्गेण सह वर्तत इति सोपसर्गा सूचिका भविष्यसि । सोपसर्गसूचिकामेव दर्शयति—विषूचिकेति ॥ २७ ॥ २८ ॥ पद्मेति ॥ पद्मो नाम रोगः प्लीहा गुल्मः पद्मप्लीहादिभिर्बाधनाद्विषूचिकाव्याधिर्भविष्यसि वातलेखेति ॥ २९ ॥ ३० ॥ विष्णुशक्ति हे विष्णुशक्ते । आतुरः संबोध्यते जीवेति । हे जीव, चन्द्रमण्डलमृतमयं गतोऽसिस्वाहा । स्वयमिहागच्छतु मया हूयमानं जीवात्मकं हविश्चन्द्रमण्डलं स्वयं गच्छत्वित्यर्थः । मन्त्री । महामन्त्रं मन्त्राणां मध्ये महामन्त्रम् । वामकरोदरे वामपाण्यन्तःप्रदेशे । तस्य तल इत्यर्थः । न्यस्य न्यासं कृत्वा । मान्त्रिको दक्षिणहस्तेन स्ववामपाणितले मन्त्राक्षराणि लिखित्वेत्यर्थः । आतुराकारं व्याधिताकारम् ।

हिमशैलाभिमुख्येन विधृतां तां विचिन्तयेत् ।
कर्कटीं कर्कशां क्रुद्धां मन्त्रमुद्गरमर्दिताम् ॥ ३२ ॥
आतुरं चिन्तयेच्चन्द्रे रसायनहृदि स्थितम् ।
अजरामरणं मुक्तं सर्वाधिव्याधिविभ्रमैः ॥ ३३ ॥
साधको हि शुचिर्भूत्वा स्वाचान्तः सुसमाहितः ।
क्रमेणानेन सकलाः प्रोच्छिनत्ति विषूचिकाः ॥ ३४ ॥
इत्युक्त्वा भगवान्वेधास्तत्रैवान्तरधीयत ।
अथ प्रादेशमात्राभा ततोऽप्यङ्गुलरूपिणी ॥ ३५ ॥
ततो माषशमीतुल्या ततः सूची बभूव सा ।
कस्यचिद्विवशाङ्गस्य क्षीणस्य विकलस्य च ॥ ३६ ॥
प्रविश्यान्तर्वातसूची भवत्यतिविषूचिका ।
कस्यचित्तनुदेहस्य दुःस्थस्य विकलस्य च ॥ ३७ ॥
प्रविश्य जीवसूचित्वे भवत्यन्तर्विषूचिका ॥ ३८ ॥
एवं बहूनि वर्षाणि प्राणिप्राणैकघातिनी ।
देहद्वयेन बभ्राम व्योम्नि भूमितले तथा ॥ ३९ ॥

संयतो नियतः ॥ ३१ ॥ मन्त्र एव मुद्गरस्तेन मर्दिताम् ॥ ३२ ॥ रसायनहृदि अमृताभ्यन्तरे ॥ ३३ ॥ स्वाचान्तः सम्यक्कृताचमनः ॥३४॥३५॥ माषशमीतुल्या माषशिम्बातुल्या । माषबीजकोशसमेत्यर्थः । 'शमी शिम्बा त्रिषूत्तर'इत्यमरः ॥३६॥ वातसूची वाय्वात्मकसूची सती । अतिविषूचिकातिशयितविषूचिकाव्याधिर्भवति । तनुदेहस्य कृशदेहस्य। विकलस्य। अस्वस्थस्येत्यर्थः॥३७॥ जीवसूचित्व इति निमित्तसप्तमी॥३८॥ देहद्वयेनेति राक्षसीरूपदेहस्य नष्टत्वात्सूचीरूपदेहद्वयेनेत्यर्थः । यथोक्तं बृहद्वासिष्ठे—'अन्या बभूव लघ्वी सा तथा

अथ कालेन महता कर्कटी वनराक्षसी ।
निर्वेदमन्तरगमद्धिक्कष्टं किमिदं कृतम् ॥ ४० ॥
किमहं सूचिका जाता सूच्यां किमिव यास्यति ।
सूचीयं रक्तमांसानां कणमात्रेण पूर्यते ॥ ४१ ॥
ममान्तरनिशं हन्त तृष्णासूची सुदुर्भरा ।
क्व मे तानि विशालानि गतान्यङ्गानि दुर्धियः ॥ ४२ ॥
कालमेघविशालानि सुविशीर्णानि पर्णवत् ।
सूच्यामपि हताशायां मनागपि न मान्ति हि ॥ ४३ ॥
स्वादुमांसरसग्रासो वसा वा रक्तमेव च ।
इति संचिन्त्य चित्तस्थं संहृत्य जनमारणम् ।
तदेव हिमवच्छृङ्गं जगाम तपसे पुनः ॥ ४४ ॥
सर्वतश्चित्तमाहृत्य निर्वेदरसगर्भिणी ।
सूचीदेहेन सोद्विग्ना तेपेऽतिकठिनं तपः ॥ ४५ ॥

जीवविषूचिका । व्योमात्मिका निराहारा व्योमवृत्तिशरीरका । एवमस्यास्तनुर्जाता सूचिद्वयमपीह सा । नीहारांशुककार्पासं कार्पासांशुकपेलवा । तनुद्वयेन तेनासौ प्रविश्य हृदयं नृणाम् । बाधयन्ती ततः क्रूरा प्रबभ्राम दिशो दशे'ति ॥ ३९ ॥ निर्वेदं वैराग्यम् । धिगिति निन्दायाम् । 'धिङ्निर्भर्त्सननिन्दयोरि'त्यमरः ॥ ४० ॥ किमिवेतीवशब्दो वाक्यालंकारार्थः । यास्यति अन्तर्भविष्यति ॥ ४१ ॥ हन्तेति विषादे । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरि'त्यमरः । तृष्णेव सूची दुःखदत्वात्तृष्णासूची ॥४२॥ मनागीषत् । 'ईषन्मनागि'त्यमरः ॥४३॥ स्वादुमांसस्य रसोमेतो ग्रासः स्वादुमांसरसग्रासः । वसा वपा । 'हृन्मेदस्तु वपावसे'त्यमरः । जनमारणं जनमारणाभिप्रायम् ॥४४॥ निर्वेदरसो वैराग्यसारो गर्भेऽन्तर्यस्याः सा निर्वेदरसगर्भिणी ।

निःसंकल्पा निराहारा निस्तरङ्गमनोमयी ।
अथ वर्षसहस्रान्ते सा प्राप परमां दशाम् ॥ ४६ ॥
बभूव निर्मला सूची तपसा क्षीणकल्मषा ।
जाता विदितवेद्या सा स्वयमेव तया धिया ॥ ४७ ॥
ततो वर्षसहस्राणि निःसंकल्पतया तया ।
तस्थौ निखिलसंसारहेयतां हृदि कुर्वती ॥ ४८ ॥
तां वेधास्तादृशीं ज्ञात्वा पदं परमसाश्रिताम् ।
उपेत्योवाच भगवान्पुत्रि कर्कटिराक्षसि ॥ ४९ ॥
तामेव तनुमासाद्य सुखिनी भुवने चर ।
जीवन्मुक्तासि हे वत्से हार्दं ते गलितं तमः ॥ ५० ॥
ये मूढा ये दुरारम्भा मूर्खा दुःस्थितयश्च ये ।
दुर्देशवासिनो ये च ते ते ग्रासाय सुस्थिताः ॥ ५१ ॥
इत्युक्त्वान्तर्दधे वेधाः साभूत्तदनु राक्षसी ।
अन्तः संचिन्मयी जाता बाह्यकल्लोलवर्जिता
चिरं तदनु सा तस्थौ निर्विकल्पसमाधिना ॥ ५२ ॥
अथ कालेन महता चित्तस्पन्दनमेत्य सा ।
बहिर्वृत्तिमयी जाता तां सस्मार पुनः क्षुधाम् ॥ ५३ ॥

उद्विग्ना संतप्ता । तेपे तपश्चक्र इत्यर्थः ॥ ४५ ॥ निस्तरङ्गमनोमयी निर्विकारमनःप्रधाना ॥ ४६ ॥ निर्मला रागादिरहिता । तत्र हेतुः क्षीणकल्मषेति । विदितं वेद्यं ब्रह्मात्मैक्यं यया सा विदितवेद्या । तया प्रसिद्धया ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ मूढा अब्रह्मविदः । मूर्खा हिताहितविवेकरहिताः ॥ ५१ ॥ तदनु तदनन्तरम् । बाह्यकल्लोलवर्जिता बाह्येष्वनात्मसु प्रवृत्ता या अन्तःकरणसंबन्धिन्यस्ता एव

यावत्सत्त्वं हि देहस्य स्वभावो नापवर्तते ।
तत्र सा चिन्तयामास ग्रासो जात्युचितो मम ॥ ५४ ॥
वेधसा कल्पितो मूढो जनस्तान्विचिनोम्यहम् ।
इति संचिन्त्य सा तस्मादुत्थाय गिरिशृङ्गतः ॥ ५५ ॥
विवेश शैलपादस्थं किरातजनमण्डलम् ।
तत्र क्वापि महाटव्यां निवासमकरोत्तदा ॥ ५६ ॥
एतस्मिन्नन्तरे तत्र किरातजनमण्डले ।
हस्तहार्यतमःपिण्डा बभूवासितयामिनी ॥ ५७ ॥
तस्यां रजन्यां भीमायां मन्त्रिणा सह भूपतिः ।
अटवीं विक्रमोदारः प्राविशद्वीरचर्यया ॥ ५८ ॥
अटव्यां कर्कटी सा तौ चरन्तौ राजमन्त्रिणौ ।
अपश्यद्धृतधैर्याथ वेतालालोकनोन्मुखौ ॥ ५९ ॥
अथ सा चिन्तयामास लब्धो भक्ष्यो ह्यहो मया ।
मूढावेतावनात्मज्ञौ भारो देहः किलानयोः ॥ ६० ॥

कल्लोला महोर्मयः तैर्वर्जिता ॥ ५२ ॥ ५३ ॥ यावत्सत्त्वं यावत्प्राणम् । 'द्रव्यासुव्यवसायेऽपि सत्त्वमस्त्री तु जन्तुष्वि'त्यमरः । ग्रस्यते इति ग्रास आहारः ॥५४॥ वेधसा मूढो ग्रासः कल्पित इत्यन्वयः । विचिनोम्यन्वेषयामि ॥ ५५ ॥ शैलस्य पादे प्रत्यन्तपर्वते तिष्ठतीति शैलपादस्थम् । 'पादाः प्रत्यन्तपर्वता' इत्यमरः । अथवा शैलपादस्थं पर्वतमूलदेशस्थम् ॥ ५६ ॥ असितयामिनी कालरात्रिः ॥ ५७ ॥ ॥ ५८ ॥ धृतं धैर्यं यया सा धृतधैर्या ॥ ५९ ॥ अनयोरनात्मज्ञयोः । आत्मतया गृहीतदेहस्यावश्यं रक्षणीयत्वात् । तस्य च सर्वतः सोपद्रवतया रक्षणस्य दुष्करत्वाद्देहो भारः । भारवद्दुःखकृदित्यर्थः

इहामुत्र च नाशाय मूढो दुःखाय जीवति ।
तस्माद्विनाशनीयोऽसौ पापसंपत्तिहेतुतः ॥ ६१ ॥
आदिसर्गे च नियमः कृतः पङ्कजजन्मना ।
हिंस्राणां भोजनायास्तु मूढात्मा नात्मवानिति ॥ ६२ ॥
तस्मादेतौ मयैवाद्य भोक्तव्यौ भोज्यतां गतौ ।
अभव्य एव निर्दोषं प्राप्तमर्थमुपेक्षते ॥ ६३ ॥
न कदाचिदिमौ स्यातां गुणयुक्तौ महाशयौ ।
तादृग्रूपविनाशो हि स्वभावान्मे न रोचते ॥ ६४ ॥
तदेतौ संपरीक्ष्येऽहं यदि तादृग्गुणान्वितौ ।
तद्भक्ष्यं न करोम्येतौ न हिंस्ये गुणिनः क्वचित् ॥ ६५ ॥
अकृत्रिमं सुखं कीर्तिमायुश्चैवाभिवाञ्छता ।
सर्वाभिमतदानेन पूजनीया गुणान्विताः ॥ ६६ ॥
अपि नङ्क्ष्यामि देहेन नैव भोक्ष्ये गुणान्वितम् ।
सुखयन्ति हि चेतांसि जीवितादपि साधवः ॥ ६७ ॥
अपि जीवितदानेन गुणिनं परिपालयेत् ।
गुणवत्संगमौषध्या मृत्युरप्येति मित्रताम् ॥ ६८ ॥
यत्राहमपि रक्षामि राक्षसी गुणशालिनम् ।
तत्रान्यः को न कुर्यात्तं हृदि हारमिवामलम् ॥ ६९ ॥

॥ ६० ॥ नाशाय पुरुषार्थभ्रंशाय ; सुखानाप्तय इति यावत् ॥ ६१ ॥ हिंस्राणां हिंसनशीलानाम् । अनात्मवान् अजितमनाः ॥ ६२ ॥ भव्याः योग्याः । यथाहुः क्षीरस्वामिनः—'भव्यो योग्य' इति । अभव्यस्तद्विलक्षणः ॥ ६३ ॥ न कदाचिदिति ॥ अत्र यदीत्यध्याहार्यम् । इमौ यदि कदाचिदपि गुणयुक्तौ महाशयौ च न स्यातां तर्हि मया भोक्तव्याविति शेषः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

उदारगुणयुक्ता ये विहरन्तीह देहिनः ।
धरातलेन्दवः सज्ज्ञाङ्कशं शीतलयन्ति ते ॥ ७० ॥
मृतिर्गुणितिरस्कारो जीवितं गुणिसंश्रयः ।
फलं स्वर्गापवर्गादि जीविताद्गुणिसंश्रयात् ॥ ७१ ॥
तस्मादिमौ परीक्ष्येऽहं कयाचित्प्रश्नलीलया ।
किंमात्रज्ञानकावेताविति तामरसेक्षणौ ॥ ७२ ॥

वसिष्ठ उवाच ॥

अथ सा राक्षसी रक्षःकुलकाननमञ्जरी ।
तमस्येवाभ्रलेखेव गम्भीरं विननाद ह ॥ ७३ ॥
नादान्ते समुवाचेदं हुंकारपरुषं वचः ।
गर्जितानन्तरं जातकरकाशनिशब्दवत् ॥ ७४ ॥
भोभो घोराटवीव्योमपदवीशशिभास्करौ ।
महामायातमःपीठशिलाकोटरकीटकौ ॥ ७५ ॥

गुणिनोऽमानित्वादिगुणवतो ब्रह्मविदः तिरस्कारो गुणितिरस्कारः स एव मृतिर्मरणं जीवनफलनाशकत्वात् । गुणिनः सम्यगापद्येत संश्रयं गुणिसंश्रयः स एव जीवितं सकलपुरुषार्थमूलत्वात् । गुणिनः संश्रयः समाश्रयो यस्य तस्माज्जीवितात्स्वर्गादिफलं भवति ॥ ७१ ॥ का मात्रा परिमाणमस्येति किंमात्रं ज्ञानं ययोस्तौ तथोक्तौ ॥ ७२ ॥ रक्षसां कुलमेव काननमरण्यं तस्य मञ्जरी ॥ ७३ ॥ हुंकारेण परुषं कठोरं हुंकारपरुषम् ॥ गर्जितेति ॥ करका वर्षोपलाः । करका-एवाशनिः गर्जनानन्तरं जातो यः करकाशनेः शब्दस्तद्वत्प्रतीयमानं वचः॥७४॥घोराटव्येव व्योमपदवी नभोमार्गः तस्याः शशिभास्करौ। महामायैव तमःपीठशिलान्धकारस्थपीठात्मकशिला तस्याः कोटरं छिद्रं तत्कीटकौ हे महामायातमःपीठशिलाकोटरकीटकौ ॥ ७५ ॥

कौ भवन्तौ महाबुद्धी दुर्बुद्धी वा समागतौ ।
मद्ग्रासपदमापन्नौ क्षणान्मरणकोचितौ ॥ ७६ ॥

राजोवाच ॥

भोभो भूतक किं स्थास्त्वं क्व तिष्ठसि च देहकम् ।
दर्शयास्यास्तव गिरः को बिभेत्यलिनीध्वनेः ॥ ७७ ॥
राज्ञेत्युक्ते रम्यमुक्तमिति संचिन्त्य सा तयोः ।
प्रकाशायाप्यधैर्याय ननाद सुजहास च ॥ ७८ ॥
ततो ददृशतुस्तां तौ शब्दपूरितदिङ्मुखीम् ।
तादृग्घासप्रभापूरदूरप्रकटिताकृतिम् ॥ ७९ ॥
कल्पान्ताशनिकाशेन घुष्टामद्रितटीमिव ।
तामवेक्ष्य महावीरौ तथैवाक्षुभितौ स्थितौ ॥ ८० ॥

मन्त्र्युवाच ॥

महाराक्षसि संरम्भः किमयं तव निष्फलः ।
लाघवं ह्यथवा कार्यं लाघवेऽप्यतिसंभ्रमः ॥ ८१ ॥
त्यज संरम्भमारम्भो नायं तव विराजते ।
विषये हि प्रवर्तन्ते धीमन्तः स्वार्थसाधकाः ॥ ८२ ॥

मद्ग्रासपदं मद्ग्रासस्थानम् ॥ ७६ ॥ अलिनीध्वनेः भ्रमरीध्वनेः तत्समाया इत्यर्थः ॥ ७७ ॥ ७८ ॥ तादृग्घासस्य प्रचण्डहासस्य प्रभापूरेण दूरात्प्रकटिता आकृतिर्यस्याः सा तथोक्ता । हासे क्रियमाणे हि दन्तप्रभाः प्रसरन्ति यतः अतोऽभिधीयते हासप्रभेति ॥ ७९ ॥ कल्पान्ताशनिकाशेन प्रलयाशनिनिभेन । घुष्टां शब्दिताम् ॥ ८० ॥ ८१ ॥ त्यज संहर । संरम्भं आडम्बरं कोपं वा । विषये साधयितुं योग्येऽर्थे । हिशब्दो हेतौ ॥ ८२ ॥

त्वादृशीनां सहस्राणि मशकानामिवाबले ।
अस्माकं धीरतावात्याव्यूढानि तृणपर्णवत् ॥ ८३ ॥
संरम्भज्वरमुत्सृज्य समया स्वच्छया धिया ।
युक्त्या च व्यवहारिण्या स्वार्थः प्राज्ञेन साध्यते ॥ ८४ ॥
कथयाभिमतं किं ते किमर्थयसि चार्थिनी ।
अर्थी स्वप्नेऽपि नास्माकमप्राप्तार्थः पुरो गतः ॥ ८५ ॥
इत्युक्ता सा तदा तेन चिन्तयामास राक्षसी ।
अहो नु विमलाचारं सत्त्वं पुरुषसिंहयोः ॥ ८६ ॥
न सामान्याविमौ मन्ये विचित्रेयं चमत्कृतिः ।
वचोवक्त्रेक्षणान्येव वदन्त्यन्तर्विनिश्चयम् ॥ ८७ ॥
वचोवक्त्रेक्षणद्वारैर्धर्मिताम् आशया मिथः ।
एकीभवन्ति सरितां पयांसि चलनैरिव ॥ ८८ ॥
आभ्यां प्रायः परिज्ञातो मम भावोऽनयोर्मया ।
न विनाश्यौ मयैतौ च स्वयमेवाविनाशिनौ ॥ ८९ ॥
तदेतौ परिपृच्छामि किंचित्संदेहमुत्थितम् ।
प्राज्ञं प्राप्य न पृच्छन्ति संदेहं ते नराधमाः ॥ ९० ॥

धीरतावात्याव्यूढानि धीरतैव वात्या चक्रवातस्तया विशेषेणोढानि धूतानि॥ ८३ ॥ व्यवहरतीति व्यवहारिणी तया। व्यवहारानुकूलयेति यावत् ॥ ८४ ॥ ८५ ॥ सत्त्वं बुद्धिः ॥ ८६ ॥ ८७ ॥ चलनैर्विवर्तनैः ॥ ८८ ॥ आशयानामभिप्रायाणां मिथ एकीभावमेव स्वाभिमतं दर्शयति—आभ्यामिति ॥ स्वयमेवाविनाशिनौ अविनाशिब्रह्मरूपत्वात् ॥ ८९ ॥ तत्तस्मात्किंचित्संदेहमित्यत्र किंचिदित्यव्ययम्। 'किंचिदीषन्मनागि'त्यव्ययवर्गपठितत्वात्। संदिहत इति

इति संचिन्त्य पृच्छायै तत्त्वानां वचनं ततः।
अकालकल्पाभ्ररवं हासं संयम्य साब्रवीत् ॥ ९१ ॥
कौ भवन्तौ नरौ धीरौ कथ्यतामिति मेऽनघौ ॥ ९२ ॥

मन्त्र्युवाच ॥

अयं राजा किरातानामस्याहं मन्त्रितां गतः।
उद्यतौ रात्रिचारेण त्वादृग्जनविनिग्रहे ॥ ९३ ॥
राज्ञां रात्रंदिवं धर्मो दुष्टभूतविनिग्रहः ॥ ९४ ॥

राक्षस्युवाच ॥

राजंस्त्वमसि सन्मन्त्री दुर्मन्त्री न नृपो भवेत्।
सन्नृपश्च भवेन्मन्त्री राजा सन्मन्त्रिणा भवेत् ॥ ९५ ॥
राजैवादौ विवेकेन योजनीयः सुमन्त्रिणा।
तेनार्यतामुपायाति यथा राजा तथा प्रजा ॥ ९६ ॥
प्रभुत्वं समदृष्टित्वं राज्ञः स्याद्राजविद्यया।
तामेव यो न जानाति नासौ मन्त्री न वा नृपः ॥ ९७ ॥

संदेहस्तम् ॥ ९० ॥ अकालकल्पाभ्रं अकालप्रलयमेघः तस्य रव इव रवो यस्मिंस्तं तथोक्तम् ॥ ९१ ॥ ९२ ॥ त्वादृग्जनविनिग्रहे उद्यताविति संबन्धः ॥ ९३ ॥ रात्रंदिवमित्यव्ययम्। अहोरात्रं दुष्टभूतविनिग्रहो राज्ञां धर्म इत्यन्वयः॥ ९४ ॥ दुष्टो मन्त्री यस्य स दुष्टमन्त्री नृपो दुर्मन्त्री न भवेत्। साधु नृपो यस्य स सन्नृपः मन्त्री च सन्नृपो भवेदित्यन्वयः। सन्मन्त्रिणा भवेत्संयुक्त इति शेषः ॥ ९५ ॥ राज्ञः सन्मन्त्रियुक्तत्वं विशेषत एव द्रष्टव्यमित्यभिप्रेत्याह—राजैवेति ॥ योजनीयो वृद्धैः॥ ९६ ॥ राजविद्यया राजनीतिपरिज्ञानेन। अथवा विद्यानां राजा राजविद्या ब्रह्मविद्या तया। 'राजविद्या राजगुह्य-

भवन्तौ तद्विदौ साधू यदि तच्छ्रेय आप्स्यथः ।
नोचेदनर्थदोषः स्यात्प्रकृतेरद्भ्यहं युवाम् ॥ ९८ ॥
एकोपायेन मत्पार्श्वाद्बालकावुत्तरिष्यथः ।
मत्प्रश्नपञ्जरं सारं चेद्धि धारयथो धिया ॥ ९९ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा राक्षसी प्रश्नान्सा वक्तुमुपचक्रमे ।
कथ्यतामिति राज्ञोक्ते तानिमाञ्शृणु राघव ॥ १०० ॥

राक्षस्युवाच ॥

एकस्यानेकसंख्यस्य कस्याणोरम्बुधेरिव ।
अन्तर्ब्रह्माण्डलक्षाणि लीयन्ते बुद्बुदा इव ॥ १ ॥
किमाकाशमनाकाशं न किंचित्किंचिदेव किम् ।
गच्छन्न गच्छति च कः कोऽतिष्ठन्नेव तिष्ठति ॥ २ ॥
कश्चेतनोऽपि पाषाणः कश्च व्योमनि चित्रकृत् ।
अणौ जगन्ति तिष्ठन्ति कस्मिन्बीज इव द्रुमः ॥ ३ ॥

मि'ति स्मरणात् । अयमेवार्थोऽस्येति बृहद्वासिष्ठपद्यात्स्पष्टं प्रतीयते— 'समस्तगुणजालानामध्यात्मज्ञानमुत्तमम् । तद्विद्राजा भवेद्राजा तद्विन्मन्त्री च मन्त्रवि'दिति ॥९७॥९८॥ तत्तर्हि । बालकाविति संबोधनद्वयम् ॥ ९९ ॥ १०० ॥ एकस्येति ॥ अम्बुधेरन्तर्बुद्बुदा अम्बुस्फोटा इव ब्रह्माण्डलक्षाणि कस्याणोरन्तर्लीयन्ते लयं गच्छन्ति । अणुं विशिनष्टि— एकस्यानेकसंख्यस्येति किम् ॥ १ ॥ किं वस्त्वाकाशं भवत्याकाशं न भवति च । किं वस्तु किंचिन्न भवति किंचिद्भवति च । कोऽतिष्ठन्नेव तिष्ठति । असन्नेव तिष्ठतीत्यर्थः ॥२॥ अस्य प्रश्नवाक्यस्यायमेवार्थ इत्युत्तरमवगम्यते । पाषाणः पाषाणसदृशः । अचेतन इत्यर्थः । एकस्मिन्वृक्षे तादात्म्येनावस्थाने दृष्टान्तो बीज इव द्रुम इति । कारणे तावत्कार्यमुत्पत्तेः

कस्मान्न किंचिच्च पृथक्कम्पादीव महाम्भसः ।
द्वैतमप्यपृथक्कस्माद्वर्तते च महाम्भसः ॥ ४ ॥
यद्येतान्सपदि धिया विचारयन्तौ
मत्प्रश्नान्न खलु विगाहितुं समर्थौ ।
तद्भक्ष्यो जठरहुताशनेन्धनत्वं
निर्विघ्नं झटिति गमिष्यथः क्षणेन ॥ ५ ॥

वसिष्ठ उवाच ॥

महानिशि महारण्ये महाराक्षसकन्यया ।
इति प्रोक्ते महाप्रश्ने महामन्त्री गिरं ददौ ॥ ६ ॥

मन्त्र्युवाच ॥

भवत्या परमात्मैष कथितः कमलेक्षणे ।
अनयैव वचोभङ्ग्या ब्रह्मविद्बोधयोग्यया ॥ ७ ॥
अनाख्यत्वादगम्यत्वान्मनःषष्ठेन्द्रियस्थितेः ।
चिन्मात्रमेवमात्माणुराकाशादपि सूक्ष्मकः ॥ ८ ॥

प्राक्सूक्ष्मरूपेण वर्तत इत्यभ्युपगन्तव्यम् । तत्र तदभावे तस्मादेव तदुत्पत्तिरिति नियमादर्शनप्रसङ्गात् । दृश्यते च तिलेभ्य एव तैलमुत्पद्यते न सिकताभ्यः क्षीरादेव सर्पिर्मृद एव घट इत्युत्पत्तिनियमः । तथाचैकस्मिन्नेव बीजे स्वकुक्षिनिक्षिप्तानेकवृक्षोऽस्तीति बीज एव द्रुम इत्युपपन्नमुक्तम् ॥ ३ ॥ किंचिदपि कस्मात्पृथङ्ग न भवतीति भेदिनमादाय पृष्ट्वा भेदमादाय पृच्छति—द्वैतमिति ॥ ४ ॥ विरुद्धार्थतया प्रश्नानामसाधुत्वं व्युदस्यति—मत्प्रश्नानिति ॥ तत्तर्हि जठरमुदरम् । जठराग्नेरिन्धनत्वं झटिति गमिष्यथः । क्षणेनेति शेषः ॥ ५ ॥ ६ ॥ सर्वेषां प्रश्नानां सामान्येनोत्तरमाह—भवत्येति ॥ भङ्गोविच्छित्तिः । भाग इत्यर्थः ॥ ७ ॥ 'एकमेवाद्वितीयमि'ति श्रुते-

चिदर्णोः परमस्यान्तः कोटिब्रह्माण्डबुद्बुदाः।
उद्भूय स्थितिमभ्यस्य लीयन्ते शक्तिपर्ययात् ॥ ९ ॥
आकाशं बाह्यशून्यत्वादनाकाशं च चित्त्वतः।
अकिंचिदित्यनिर्देश्यं वस्तुसत्तेति किंचन ॥ ११० ॥
चेतनोऽसौ प्रकाशात्मा वेद्याभावाच्छिलोपमः।
आत्मनि व्योमनि स्वच्छे जगदुन्मेषचित्रकृत् ॥ ११ ॥

वास्तवमेकत्वम्। 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेर्मायिकमनेकत्वं च परमात्मनः सुवचमित्यभिप्रेत्याद्यप्रश्नभागस्योत्तरमाह—अनाख्यत्वादिति श्लोकद्वयेन ॥ अनाख्यत्वाद्वाचकाख्यानरहितत्वान्मनः षष्ठमिन्द्रियं येषां तेषां श्रोत्रादीनां स्थितेर्मर्यादाया असाङ्कर्येण पदार्थप्रकाशनसामर्थ्यस्येति यावत्। एवमुक्तोपपत्तित आत्मा अणुवत् अणुर्निरवयवत्वाच्च आकाशवदित्याह—आकाशादिति ॥ शक्तिपर्ययात् स्थितिशक्तेरतिक्रमात्। 'पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः' इत्यमरः। एतेनाष्टमप्रश्नोऽपि दत्तोत्तरो वेदितव्यः ॥ ८ ॥ ॥ ९ ॥ द्वितीयं प्रश्नं प्रत्याह—आकाशमिति ॥ बाह्यशून्यत्वात्स्वबहिर्भूतवस्तुशून्यत्वाच्चित्त्वतश्चिद्रूपत्वादनाकाशं भूताकाशं न भवति। तृतीयं प्रश्नं प्रत्याह-अकिंचिदिति ॥ यद्यस्माद्ब्रह्मवस्त्वनिर्देश्यमनभिधेयं तस्मादकिंचित्किंचिन्न भवति। सत्तेति। किंचन परमार्थसत्तामात्रात्मकमिति किंचिद्भवति तदित्यर्थः ॥ ११० ॥ षष्ठं प्रश्नं प्रत्याह—चेतनोऽसाविति ॥ व्युत्क्रमेणोत्तरं तु राक्षसीबुद्धिपरीक्षार्थम्। असौ परमात्मा यतश्चैतन्यप्रकाशात्मा अतश्चेतनो भवति। वेद्याभावाद्वस्तुतो ज्ञेयाभावात्कल्पितवेद्यसंनिधावपि निर्विकारत्वाच्च शिलोपमो भवति। सप्तमं प्रश्नं प्रत्याह—आत्मनीति ॥ उन्मेषोऽभिव्यक्तिः

तद्भावमात्रमिदं विश्वमिति न स्यात्ततः पृथक् ।
जगद्भेदोऽपि तद्भानमिति भेदोऽपि तन्मयः ॥ १२ ॥
सर्वगः सर्वसंबद्धो गत्यभावान्न गच्छति ।
नास्त्यसावाश्रयाभावात्सद्रूपत्वादथास्ति च ॥ १३ ॥
श्रुत्वैतन्मन्त्रिणो वाक्यं राक्षसी वाक्यमाददे ।
अथो नु परमार्थोक्तिः पावनी तव मन्त्रिणः ॥ १४ ॥
राजा राजीवपत्राक्ष इदानीमेष भाषताम् ॥ १५ ॥

राजोवाच ॥

जाग्रतः प्रत्ययाभावाद्यस्याहुः प्रत्ययं परम् ।

॥ ११ ॥ नवमप्रश्नस्योत्तरमाह—तद्भावमात्रमिति ॥ इदं सर्वं जगत्तद्भावमात्रं ब्रह्मचैतन्यमात्रं तद्ब्रह्म चैतन्यव्यतिरेकेणासंभावितसत्त्वमिति यावत् । अथवा तद्भावमात्रं तस्याधिष्ठानस्यान्यथाप्रतीतिमात्रमिति हेतोस्ततस्तस्मात्पृथक् न स्यात् । दशमप्रश्नस्योत्तरमाह—जगदिति ॥ तन्मयस्तत्स्वरूपो न ततः पृथगस्तीत्यर्थः ॥ १२ ॥ चतुर्थस्योत्तरमाह—सर्वग इति ॥ गम्यसंबन्धो हि गमनफलम् । परमात्मा च सर्वेण गम्येन संबद्धः अतः सर्वगो भवति । गत्यभावाद्विभुत्वेनासंभावितगतित्वाद्वस्तुतो गन्तव्याभावाच्च न गच्छति च । पञ्चमस्योत्तरमाह—नास्त्यसाविति ॥ जगति योऽस्ति स हि प्रकाश्यो भवति संश्रयो भवति। असौ परमात्मान्याप्रकाश्यत्वात् निराश्रयत्वान्नास्तीत्युच्यते । अथ अथापि सद्रूपत्वात्परमार्थस्वरूपत्वादस्ति च ॥ १३ ॥ श्रुत्वेति सार्धश्लोकः स्पष्टार्थः ॥ १४ ॥ १५ ॥ प्रश्नरीत्यनुसारेण मन्त्रिणैवोत्तरस्य दत्तत्वात्तामुपेक्ष्य रीत्यन्तरमाश्रित्याह—जाग्रत इति ॥ यस्य ब्रह्मणः परं परमपुरुषार्थसाधनत्वात् ।

सर्वसंकल्पसंन्यासश्चेतसा यत्परिग्रहः ॥ १६ ॥
यत्संकोचविकासाभ्यां जगत्प्रलयसृष्टयः ।
निष्ठा वेदान्तवाक्यानामथ वाचामगोचरः ॥ १७ ॥
कोटिद्वयान्तरालस्थमथ कोटिद्वयीमयम् ।
यस्य चित्तमयी लीला जगदेतच्चराचरम् ॥ १८ ॥

प्रत्ययं ज्ञानम् । जाग्रतः विवेकिनः पुरुषस्य प्रत्ययाभावाद्वास्तवद्वैतप्रत्ययाभावाज्जायमानमाहुः । द्वैतं वस्तुसदिति प्रत्ययस्याद्वैतज्ञानप्रतिबन्धकत्वात् । जाग्रतोऽपि विवेकिनस्तद्भावादद्वैतज्ञानस्य जायमानत्वं युक्तम् । जाग्रतः प्रत्ययाभाव इति कचित् तत्रायमर्थः । जाग्रतो विवेकिनो यः प्रत्ययाभावो वास्तवद्वैतप्रत्ययाभावोऽस्ति तं यस्य प्रत्ययमाहुः तत्कारणत्वात् । अथवा जाग्रतः साक्षादीक्षमाणस्यापि यस्य द्वैतविषयप्रत्ययाभावो भवति । नहि द्वैतप्रत्ययरूपेण साक्षी परिणमते कूटस्थत्वात् । यस्याहुः प्रत्ययं परमिति पूर्ववत् । यद्वा यस्य प्रत्ययं स्वरूपचैतन्यं परं संसारातीतमाहुः । अत्र यच्छब्दस्तच्छब्दाध्याहारेण कथ्यत इति वक्ष्यमाणेन संबन्धः । एवमुत्तरत्रापि यच्छब्दसंबन्धो ज्ञेयः । चेतसान्तःकरणेन सर्वसंकल्पसंन्यासः सर्वद्वैतप्रत्ययसङ्गत्यागो निर्विकल्पसमाधिरित्येतत् यत्परिग्रहो यस्य परमात्मनः स्वीकारो भवति तद्धेतुत्वात् ॥ १६ ॥ यत्संकोचविकासाभ्याम् । यस्य संकल्पविकल्पलयोदयाभ्यामित्यर्थः । वेदान्तवाक्यानां निष्ठा लक्षणावृत्त्या पर्यवसानभूमिर्भवति । अथ अथापि शब्दप्रवृत्तिहेतूनां जात्यादीनां अभावाद्वाचामगोचरश्च भवति । अथवा वाक्यजन्यवृत्तिव्याप्यत्वात्तद्गोचरत्वं तज्जन्यफलाव्यापकत्वात्तदगोचरत्वम् ॥ १७ ॥ कोटिद्वयेति ॥ द्वैताद्वैतकोट्यन्तरालस्थं ब्रह्म द्वैताद्वैतकोटिभ्यां परस्परापेक्षसिद्धत्वेन कल्पिताभ्यां विलक्षणं

यस्य विश्वात्मकत्वेऽपि खण्ड्यते नैकपिण्डता।
सन्मात्रं तत्त्वया भद्रे कथ्यते ब्रह्म शाश्वतम् ॥ १९ ॥

वसिष्ठ उवाच ॥

इति राजमुखाच्छ्रुत्वा कर्कटी वनमर्कटी।
अवबुद्धपदा तस्थौ जहौ मत्सरचापलम् ॥ १२० ॥
अन्तःशीतलतामेत्य सा विश्रान्तिमवाप ताम्।
प्राप्ता प्रावृण्मयूरीव सज्योत्स्नेव कुमुद्वती ॥ २१ ॥

राक्षस्युवाच ॥

अहो बत पवित्रेयं भवतोर्भाति शेमुषी।
अनस्तमितसारेण प्रबोधार्केण भासिता ॥ २२ ॥

अधिष्ठानतया तयोर्मध्यस्थं भवति। अथवा सदसत्कोट्यन्तरालस्थम्। 'न सत्तन्नासदुच्यते' इति भगवद्वचनात्। कार्यकारणकोट्यन्तरालस्थं वा द्रष्टृदृश्यकोट्यन्तरालस्थं वा विम्बप्रतिबिम्बकोट्यन्तरालस्थं वा। यद्वा बन्धमुक्तिकोट्यन्तरालस्थं वा नियम्यनियामककोट्यन्तरालस्थं वा सर्वेषामप्येतेषां कल्पितत्वाद्ब्रह्मणस्तेभ्यो विलक्षणतया तदन्तरालस्थत्वमुपपन्नम्। अथ कोटिद्वयीमयं अथापि माययोक्तकोटिद्वयीस्वरूपं भवति जगद्यस्याधिष्ठानस्य विवर्तभूतचित्तमयी लीला भवति ॥ १८ ॥ यस्य विश्वात्मकत्वेऽपि सर्वात्मकत्वेऽप्येकपिण्डता एकस्वरूपता न खण्ड्यते। मायिकेनानेकरससर्वतादात्म्येन वास्तवत्वमेकरसत्वं न विहन्यत इत्यर्थः। कथ्यते त्वयेत्यर्थः ॥ १९ ॥ ब्रह्मात्मतावगतिः प्रत्यक्षफलेति दर्शयितुं इति राजमुखादित्यादि श्लोकद्वयं स्पष्टार्थम् ॥ १२० ॥ २१ ॥ उत्पन्नविज्ञानस्य कर्मलोपाभावेऽप्यादेहपातं सन्मार्ग एव रुचिर्भवतीति दर्शयितुं अहो बतेत्यादिनाऽऽख्यान-

विवेकिनो जगत्पूज्याः सेव्या मन्ये भवादृशाः ।
महतामेव संसर्गात्पुनर्दुःखं न बाधते ॥ २३ ॥
को हि दीपशिखाहस्तस्तमसा परिभूयते ।
मयैतौ जाङ्गलं प्राप्तौ भवन्तौ भूमिभास्करौ ॥ २४ ॥
पूजनीयावतः शीघ्रमीहितं कथ्यतां शुभौ ॥ २५ ॥

राजोवाच ॥

प्रार्थये त्वामहं रक्षःकुलकाननमञ्जरि ।
भूयो भवत्या यत्प्राणा हिंसनीया न कस्यचित् ॥ २६ ॥
प्रीतार्था राक्षसी प्राह कर्कटी वनमर्कटी ।
बाढमेवं करोम्यद्यप्रभृत्यवितथं प्रभो ॥ २७ ॥
सर्वमेव न किंचिद्धि हिंसनीयं मयाधुना ॥ २८ ॥

राजोवाच ॥

यद्येवं फुल्लपद्माक्षि परदेहैकभोजने ।
किं स्याच्छरीरभृत्यै ते स्थिताया मत्समीहिते ॥ २९ ॥

समाप्तिपर्यन्तो ग्रन्थसंदर्भः । सोऽपि स्पष्टार्थः । तत्र कानिचित्पदानि व्याक्रियन्ते । बतेति संतोषे । शेमुषी बुद्धिः । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मति'रित्यमरः । अनस्तमितसारेणानष्टसामर्थ्येन ॥ २२ ॥ २३ ॥ जाङ्गलं मरुभूमिवनम् ॥ २४ ॥ २५ ॥ रक्षः-कुलमेव काननं वनं तस्य मञ्जरी । हे रक्षःकुलकाननमञ्जरि, भवत्या कस्यचिदपि प्राणा भूयो न हिंसनीया इति यत्तत्त्वां प्रार्थय इति पूर्वेण संबन्धः ॥ २६ ॥ न विद्यते वितथमनृतं यस्मिन्कर्मणि तदवि-तथम् । 'वितथं त्वनृतं वच' इत्यमरः ॥ २७ ॥ २८ ॥ फुल्लं विकासि ।

राक्षस्युवाच ॥

कालेन बहुना राजन्प्रबुद्धायाः समाधितः ।
जाता भोजनवाञ्छा मे न तां तु गणयाम्यहम् ॥ १३० ॥
इदानीं शिखरं गत्वा प्राक्तनध्याननिश्चला ।
यावदिच्छं सुखेनासे सजीवा शालभञ्जिका ॥ ३१ ॥
आमृतिं धारणां बध्वा धारयामि शरीरकम् ।
यथेष्टमतिकालेन त्यजामीति मतिर्मम ॥ ३२ ॥
आशरीरपरित्यागमिदानीं न मया नृप ।
हिंसनीयाः परप्राणाः पश्यन्त्या सर्वगं शिवम् ॥ ३३ ॥
इति संजातसौहार्दा तौ विसृज्य निशाचरी ।
यदा गन्तुं प्रवृत्तासौ तदा राजाऽब्रवीद्वचः ॥ ३४ ॥
नासत्प्रणयसौहार्दं वितथीकर्तुमर्हसि ।
सौहार्दं सुजनानां हि दर्शनादेव वर्धते ॥ ३५ ॥
लघु सौभाग्यसंयुक्तं कृत्वाकारं मनोहरम् ।
आगच्छास्मद्गृहं भद्रे तत्र तिष्ठ यथासुखम् ॥ ३६ ॥

राक्षस्युवाच ॥

मुग्धस्त्रीरूपधारिण्यै दातुं शक्तोऽसि भोजनम् ।
संतर्पयसि मां केन राक्षसीजातिधारिणीम् ॥ ३७ ॥

भृत्यै भरणाय। मत्समीहिते मदिष्टे ॥ २९ ॥ १३० ॥ आसे उपवेशनं कुर्वे। शालभञ्जिका पुत्तलिका तत्सदृशीत्यर्थः ॥ ३१ ॥ आमृतिमित्यार्षम् । आमृतिं मृतिपर्यन्तम् । आमृतेरिति वा पाठः ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥ सौहार्दं सुहृद्भावम् । वितथीकर्तुं अनृतीकर्तुम् । व्यर्थीकर्तुमित्यर्थः ॥ ३५ ॥ ३६ ॥ संतर्पयसि संप्रीणयसि ॥ ३७ ॥

रक्षोघ्नमेव मे तुष्ट्यै न सामान्यजनाशनम् ।
पूर्वसिद्धस्वभावोऽयमादेहं नो निवर्तते ॥ ३८ ॥

राजोवाच ॥

हेमस्रग्दामवलिता दिनानि कतिचिन्मम ।
गृहे स्त्रीरूपिणी तिष्ठ यावदिच्छाम्यनिन्दिते ॥ ३९ ॥
ततो दुष्कृतिनश्चौरान्वध्याञ्शतसहस्रशः ।
मण्डलेभ्यः समाहृत्य ददे तुभ्यं सुभोजनम् ॥ १४० ॥
कान्तारूपं परित्यज्य गृहीत्वा तानशेषतः ।
नयस्व हिमवच्छृङ्गं तत्र भुङ्क्ष्व यथासुखम् ॥ ४१ ॥
महाशनानामेकान्ते भोजनं हि सुखायते ।
तृप्तिं निद्रां मनाक्कृत्वा भव भूयः समाधिभाक् ॥ ४२ ॥
समाधिविरता भूयोऽप्यागत्य पुनरन्यदा ।
नयस्वान्यान्वध्यतरान्हिंसा नैषां हि धर्मतः ॥ ४३ ॥
स्वधर्मेण च हिंसैव महाकरुणया समा ।
त्वं समेष्यसि वावश्यं मां समाधिविरागिणी ।
असतामपि संरूढं सौहार्दं न निवर्तते ॥ ४४ ॥

राक्षस्युवाच ॥

युक्तमुक्तं त्वया राजन्करोम्येवमहं सखे ।
सौहार्देन प्रवृत्तस्य को वाक्यं नाभिनन्दति ॥ ४५ ॥

॥३८॥ हेमस्रग्भिः हेममालाभिः दामभिर्हेमसूत्रैश्च वलिता वेष्टिता हेमस्रग्दामवलिता ॥ ३९ ॥ १४० ॥ ४१ ॥ मनागीषत् ॥ ४२ ॥ धर्मतः क्रियमाणेति शेषः । यद्वा धर्मतो धर्मशास्त्रतः ॥ ४३ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा राक्षसी तत्र संपन्ना सा विलासिनी ।
राजन्नागच्छ गच्छाम इत्युक्त्वा नृपमन्त्रिणौ ॥ ४६ ॥
आश्रमं स्वं प्रवृत्तौ तौ रात्रावनुससार सा ।
अथ ते पार्थिवगृहं प्राप्य तां रजनीं मिथः ॥ ४७ ॥
कथयैव गृहे रम्ये क्षपयामासुरादृताः ।
प्रभातेऽन्तःपुरे तस्थौ पुरन्ध्रीजनलीलया ॥ ४८ ॥
राक्षसी मन्त्रिराजानौ स्वव्यापारौ बभूवतुः ।
ततो दिवसषट्केन संचितानि महीभृता ॥ ४९ ॥
नृपान्तरपुरेभ्योऽपि स्वमण्डलगणात्तदा ।
त्रीणि वध्यसहस्राणि तानि तस्यै तदा ददौ ॥ १५० ॥
सा बभूव निशाकाले सैवोग्रा कृष्णराक्षसी ।
तानि वध्यसहस्राणि जग्राह भुजमण्डले ॥ ५१ ॥
ययौ राजानमापृच्छ्य तदैव हिमवच्छिरः ।
ततःप्रभृति साद्यापि किरातजनमण्डले ॥ ५२ ॥
वध्यानागत्य गृह्णाति समाधेर्व्युत्थिता सती ॥ १५३ ॥

इति श्रीमोक्षोपाये उत्पत्तिप्रकरणे सूच्युपाख्यानं
नाम तृतीयः सर्गः ॥ ३ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ रजनीं रात्रिम् । रजनीं क्षपयामासुरिति संबन्धः । मिथोऽन्योन्यम् ॥ ४७ ॥ पुरन्ध्री कुटुम्बिनी ॥ ४८ ॥ ॥ ४९ ॥ १५० ॥ ५१ ॥ ५२ ॥ १५३ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौ वासिष्ठचन्द्रिकायां मोक्षोपाये सूच्युपाख्यानं नाम तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः

### वसिष्ठ उवाच ॥

एतत्ते सर्वमाख्यातं सूचीवृत्तान्तकीर्तनात् ।
आत्मैवास्ति परं सत्यं नान्याः संसारदृष्टयः ॥ १ ॥
सर्वं हि मन एवेदमित्थं स्फुरति सृष्टिषु ।
अत्रेदमैन्दवाख्यानं शृणु श्रवणभूषणम् ॥ २ ॥
राम ते कथयिष्यामि तदाख्यानमनिन्दितम् ।
चितिशक्तिसमुल्लासं निश्चिनोषि जगद्यतः ॥ ३ ॥
चित्तबालो जगद्यक्षं मिथ्या पश्यत्यबोधितः ।
बोधितोऽसौ परं रूपं स्वं पश्यति निरामयम् ॥ ४ ॥

प्रवृत्तानुवादपूर्वकं जगतो मनोविलसितत्वप्रपञ्चनायाख्यानान्तरमवतारयति—एतत्ते सर्वमाख्यातमित्यादिना ॥ किं ब्रह्मणोऽन्य आत्मैवास्ति नेत्याह—परं सत्यमिति ॥ सत्यं ब्रह्म । संसारदृष्टयः संसारभ्रान्तयः ॥ १ ॥ कुतः संसारदृष्टयो न सन्तीत्यत आह—सर्वं हीति ॥ हिशब्दो हेतौ । इदं मन एव सृष्टिषु कर्तव्यासु इत्थमेवंप्रकारेण सर्वं सर्वजगदात्मकं सत्स्फुरति हि । अत्र जगतो मनोविवर्तत्वे ऐन्दवाख्यानं इन्दुनामकब्राह्मणापत्यानां ऐन्दवानामाख्यानम् ॥ २ ॥ यत ऐन्दवाख्यानाच्छ्रुताज्जगच्चितिशक्तिसमुल्लासं निश्चिनोषि चितेः परमात्मनः शक्तिर्माया तस्या मनोभावमापन्नायाः समुल्लासं विजृम्भणम् । विवर्त इत्यर्थः । अथवा चितौ ज्ञाने शक्तिर्यस्य तच्चितिशक्तीति मन उच्यते ॥ ३ ॥ आख्यानतात्पर्यं श्लोकद्वयेनाह—चित्तबाल इत्यादिना ॥ चित्तमेव बालः चित्तबालः । जगदेव यक्षो जगद्यक्षस्तम् । यथा बालोऽबोधितः सन् आत्म-

चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥ ५ ॥
कदाचिदखिलं सर्गं संहृत्य दिवसक्षये ।
एकाग्रो भगवान्वेधाः सुप्तस्तामनयन्निशाम् ॥ ६ ॥
निशान्ते संप्रबुद्धात्मा कृत्वा संध्यां यथाविधि ।
प्रजाः स्रष्टुं दृशौ स्फारे व्योम्नि योजितवानजः ॥ ७ ॥
अथासौ दृष्टवांस्तत्र मनसा विततेऽम्बरे ।
पृथक्स्थितान्महारम्भान्सर्गान्स्थितिनिरर्गलान् ॥ ८ ॥
तानालोक्य विशुद्धेन परेण स्वेन तेजसा ।
भृशं विस्मयमापन्नः किमेतत्कथमित्युत ॥ ९ ॥
अथालोक्य चिरं कालं मनसैव तदाम्बरे ।
सूर्यं तस्माज्जगज्जालादेकमानीय पृष्टवान् ॥ १० ॥
कस्त्वं कथमिदं जातं जगज्जालं महाद्युते ।
यदि जानासि भगवंस्तदेतत्कथयानघ ॥ ११ ॥

च्छायां मिथ्यायक्षं पश्यति तथा चिदाभासविशिष्टं चित्तम् । अबोधितं सन्मिथ्या जगत्पश्यति । बोधितं तु निरुपद्रवमधिष्ठानं समीक्षत इत्यर्थः ॥ ४ ॥ भवान्तः संसारान्त इति तत्साधनत्वात्कथ्यते ॥ ५ ॥ कदाचिदखिलं सर्गमित्यादिराख्यानसमाप्तिपर्यन्तो ग्रन्थसंदर्भः स्पष्टार्थः । तत्र कानिचित्पदानि विविच्यन्ते । नैमित्तिकप्रलये महर्लोकादेरवस्थानादखिलशब्दः कतिपयविषयः ॥६॥ स्फारे महती ॥ ७ ॥ महानारम्भो व्यापारो येषु ते तथोक्ताः । सृज्यन्त इति सर्गाः प्रपञ्चास्तान्स्थितौ निरर्गलान्निर्बाधान्स्थितिनिरर्गलान् । 'अबाधं तु निरर्गलमि'त्यमरः ॥ ८ ॥ अथार्थे उतशब्दः ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ मदुत्पत्तिमित्युपलक्षणं जगज्जालोत्पत्ते-

इत्युक्तो वेधसा भानुर्भक्तिप्रह्वेण चेतसा ।
नमस्कृत्वाऽभ्युवाचेदमनिन्द्यपदया गिरा ॥ १२ ॥
अस्य दृश्यप्रपञ्चस्य नित्यं कारणतामसि ।
गतस्तस्मान्न जानीषे किं मामीश्वर पृच्छसि ॥ १३ ॥
अथ मद्वाक्यसंदर्भैर्लीला चेत्तव सर्वग ।
अचिन्तितां मदुत्पत्तिं तच्छृणु त्वं वदाम्यहम् ॥ १४ ॥
तले कैलासशैलस्य जम्बुद्वीपैककोणके ।
सुवर्णतटनाम्नाथ त्वत्पुत्रैर्जनितप्रभैः ॥ १५ ॥
मण्डलं कल्पितं श्रीमदनल्पसुखसुन्दरम् ।
तत्राभूदतिधर्मात्मा ब्राह्मणो ब्रह्मवित्तमः ॥ १६ ॥
इन्दुनामातिशान्तात्मा कश्यपस्य कुलोद्भवः ।
तस्य प्राणसमा भार्या काचित्तस्यां महात्मनः ॥ १७ ॥
न बभूवात्मजस्तस्य मरुभूमौ तरुर्यथा ।
तौ ततो दम्पती खिन्नौ पुत्रार्थं तपसे गिरेः ॥ १८ ॥
कैलासस्य समारूढौ शुचिव्रतपरायणौ ।
भूतैरनावृते शून्ये तस्मिन्कैलासकुञ्जके ॥ १९ ॥
तेपतुस्तौ तपो घोरं जलाहारौ तरुस्थिती ।
ततस्तुष्टोऽभवद्देवस्तयोः शशिकलाधरः ॥ २० ॥
आजगामाथ तं देशं यत्र तौ विप्रदम्पती ।
वरं विप्र गृहाणाशु तुष्टोऽस्मि तमुवाच ह ॥ २१ ॥

रपि ॥ १४ ॥ त्वत्पुत्रैर्मरीच्यादिभिः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ तरुवत्स्थितिर्ययोस्तौ तरुस्थिती । जलाहारत्वं तरौ प्रसिद्धमेव ॥ २० ॥ २१ ॥ भव्या योग्याः । येन दशपुत्रभवनेन शोको

विप्र उवाच ॥

भगवन्देवदेवेश दश पुत्रा महाधियः ।
भव्या भवन्तु मे भूयः शोको येन न बाधते ॥ २२ ॥
अथैवमस्त्विति प्रोच्य जगामान्तर्धिमीश्वरः ।
ततस्तौ दम्पती तुष्टौ वरं लब्ध्वा गृहं गतौ ॥ २३ ॥
ततः कालेन सुषुवे दशपुत्राननिन्दितान् ।
ब्राह्मणी दश ते बालाः क्रमेण प्रौढिमाययुः ॥ २४ ॥
अथ कालेन महता तेषां तौ पितरौ तदा ।
संजग्मतुस्तनुं त्यक्त्वा स्वां गतिं गतिकोविदौ ।
मातापितृभ्यां रहितास्ततस्ते ब्राह्मणा दश ॥ २५ ॥
ययुः कैलासशिखरं गृहं संत्यज्य खेदिनः ।
तत्र संचिन्तयामासुरुद्विग्नास्ते विबान्धवाः ॥ २६ ॥
किं स्यादिह परं श्रेयः किमिह स्याददुःखदम् ।
कियदेतज्जनैश्वर्यं सामन्तो हि महेश्वरः ॥ २७ ॥
सामन्तसंपत्किंनाम राजानो हि महेश्वराः ।
का नाम संपद्भूपानां संम्राडिह महेश्वरः ॥ २८ ॥
किं नाम संपत्साम्राज्यमिन्द्रस्तेषां महेश्वरः ।
किं नाम तन्महेन्द्रत्वं यन्मुहूर्तं प्रजापतेः ॥ २९ ॥

मां भूयो न बाधते तदस्त्वित्यध्याहारः । यद्वा येनेति एकत्वमविवक्षितम् । यैः पुत्रैः ॥२२॥२३॥२४॥२५॥ खेदिनो दुःखिनः । उद्विग्ना उद्वेगयुक्ताः । विबान्धवा विगतबान्धवाः ॥२६॥२७॥ राजानो मण्डलेश्वराः ।य आज्ञया राज्ञः शास्ति स सम्राडित्युच्यते । 'शास्ति यश्चाज्ञया राज्ञः स सम्राडि'त्यमरः ॥२८॥ साम्राज्यं किंनाम संपदिति संबन्धः ।

विनश्यति च यत्कल्पे किं तत्स्यादिह शोभनम् ॥ ३० ॥

ज्येष्ठ उवाच ॥

ऐश्वर्याणां हि सर्वेषामाकल्पान्ताविनाशि यत् ।
रोचते भ्रातरस्तन्मे ब्रह्मत्वमिह नेतरत् ॥ ३१ ॥

इतरे ऊचुः ॥

युक्तमुक्तं त्वया तात सर्वदुःखापमार्जनम् ।
शाधि तत्त्वं गतिर्नोऽद्य विरिञ्चित्वमवाप्नुमः ॥ ३२ ॥

ज्येष्ठ उवाच ॥

पद्मासनगतो भास्वान्ब्रह्माहमिति तेजसा ।
सृजामि संहरामीति ध्यानमस्तु चिराय वः ॥ ३३ ॥
अग्रजेनेति कथिता बाढं कृत्वा त उत्तमाः ।
ध्यानाधीनधियस्तत्र लिपिकर्मार्पितोपमाः ॥ ३४ ॥
अन्तःस्थेनैव मनसा चिन्तयामासुरादृताः ।
ब्रह्माहं जगतः स्रष्टा कर्ता भोक्ता महेश्वरः ॥ ३५ ॥
लोकपालपुरैः सार्धं भुवनानि चतुर्दश ।
निर्मितानि मयैतानि तेषामन्तरहं स्थितः ॥ ३६ ॥

यन्महेन्द्रत्वं प्रजापतेर्मुहूर्तं वर्तते । प्रजापतेर्हि दिने चतुर्दश इन्द्रा भवन्ति । तत्रैकैको मुहूर्तमात्रं त्रैलोक्यं शास्ति ॥ २९ ॥ ३० ॥ भ्रातर इति संबोधनम् । मे मह्यम् ॥ ३१ ॥ तातेति पितृसमत्वाज्ज्येष्ठः संबोध्यते । सर्वदुःखापमार्जनं सर्वदुःखशमकम् । शाधि अनुशासनं कुरु ॥ ३२ ॥ भास्वान् दीप्तिमान् । तेजसा प्रभावेण 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु'त्यमरः ॥ ३३ ॥ बाढमित्यव्ययमभ्युपगमे । लिपिकर्म चित्रकर्म ॥ ३४ ॥ ३५ ॥ ३६ ॥

अथ ते ब्राह्मणा एवं बद्धब्रह्मात्मभावनाः ।
देहान्विससृजुः पूर्वान्पूर्वभावनयार्पितान् ॥ ३७ ॥
अथ ते देहकाः सर्वे पवनैरातपेन च ।
कालेन शोषमभ्येत्य गलिताः शीर्णपर्णवत् ॥ ३८ ॥
स तेषां दशधा सर्गप्रतिभासोऽयमुत्थितः ।
भावनापरिपाकेन दश ते ब्रह्मतां गताः ॥ ३९ ॥
त एते दश संस्कारा मनोव्योमनि संस्थिताः ।
एषामन्यतमस्याहं भास्करोऽहर्निशाकरः ॥ ४० ॥
इत्युक्त्वा वेधसं भानुर्जगाम निजमन्दिरम् ।
विरञ्चिरपि देवेशः स्वव्यापारपरोऽभवत् ॥ ४१ ॥

इति श्रीयोगवासिष्ठे मोक्षोपाय उत्पत्तिप्रकरणे ऐन्दवोपाख्यानं नाम चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः

### वसिष्ठ उवाच ॥

मनो हि जगतां कर्तृ मनो हि पुरुषः परः ।
मनःकृतं कृतं लोके न शरीरकृतं कृतम् ॥ १ ॥

विससृजुर्विसृज्यमाणांश्चक्रुः । अर्पितान् । विषयीकृतानिति यावत् । अथवा अर्पितान् समर्पितान् । दत्तानित्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ स्वकृत्यमाह—अहर्निशाकरः भास्करो हि मेरुपर्वतेनाव्यवहितोऽहः करोति । तद्व्यवहितस्तु निशां करोति । उक्तं च बृहद्वासिष्ठे—'अर्कः कुर्वन्नहोरात्रे दर्शयत्याकृतिं यथा । चितिः सदसती कुर्वन्दर्शयत्याकृतिं तथा' इति ॥ ४० ॥ ४१ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौ वासिष्ठचन्द्रिकायां उत्पत्तिप्रकरणे ऐन्दवोपाख्यानं नाम चतुर्थः सर्गः ॥ ४ ॥

अतीतेनाख्यानेन तात्पर्यतः प्रतिपादितमर्थं दर्शयति—मनो हीत्या-

सामान्या ब्राह्मणा भूत्वा मनोभावनया किल ।
ऐन्दवा ब्रह्मतां याता मनसः पश्य शक्तिताम् ॥ २ ॥
मनसा भाव्यमानो हि देहितां याति देहकः ।
देहभावनया मुक्तो देहधर्मैर्न बाध्यते ॥ ३ ॥
नान्तर्मुखतया योगी देहे वेत्ति प्रियाप्रिये ।
इन्द्रस्याहल्यया सार्धमुदन्तोऽत्र निदर्शनम् ॥ ४ ॥

श्रीराम उवाच ॥

काहल्या भगवन्निन्द्रस्तत्र को वात्र संमतः ।
ययोरुदन्तश्रवणे पावनी दृष्टिरेति माम् ॥ ५ ॥

द्विश्लोकद्वयेन । मनःकृतं मनसा कृतं सम्यकृतं मन्ये । मनःकृतमेव सार्थकं जाने इत्यर्थः ॥ १ ॥ २ ॥ ननु शरीरकृतकर्मणां फलवत्त्वस्य प्रत्यक्षादिसिद्धत्वाच्छरीरकृतं सार्थकं न भवतीत्युक्तमनुपपन्नमित्याशङ्क्याह—मनसेति ॥ हि यस्माद्देहको मनसा भाव्यमानः सन् देहितां याति देहोचितकार्यकारी भवतीति । अन्वयमुक्त्वा व्यतिरेकमाह—देहभावनयेति ॥ देहभावनया मुक्तः पुरुषो देहधर्मैः शीतोष्णमानावमानादिभिर्न बाध्यत इत्यर्थः ॥ ३ ॥ कुत्रैतदुपलभ्यत इत्यत आह—नान्तर्मुखतयेति ॥ अयमर्थः—मनोभावनायां सत्यां शरीरे फलपर्यवसायिभोजनादिकार्यदर्शनादसत्यां तस्यां निर्विकल्पकसमाध्यवस्थायां तददर्शनात्स्वप्नावस्थायां मनोमात्रात्मकशरीरकृतस्य तृप्त्यादिफलपर्यवसायिनो भोजनादेर्दर्शनाच्च प्राप्ताप्राप्तविवेकेन शरीरकृततयोपलभ्यमानं फलवत्कार्यं स्वप्नशरीरकृतकार्यवन्मनःकृतमेवेति । मन एव प्रियाप्रियकृन्न देह इत्येतमर्थं तन्निग्रहे प्रयत्नातिशयविधानायाख्यानान्तरेण स्फुटीकर्तुमाह—इन्द्रस्येति ॥ इत ऊर्ध्वमाख्यानसमाप्तिपर्यन्तो ग्रन्थसंदर्भः स्पष्टार्थः । तत्र कानिचित्प-

वसिष्ठ उवाच ॥

श्रूयते हि पुरा राम मागधेषु महीपतिः ।
इन्द्रद्युम्न इति ख्यात इन्द्रद्युम्न इवापरः ॥ ६ ॥
तस्येन्दुबिम्बप्रतिमा भार्या कमललोचना ।
अहल्या नाम तत्रासीच्छशाङ्कस्येव रोहिणी ॥ ७ ॥
तस्मिन्नेव पुरे षिङ्गः षिङ्गप्रकरशेखरः ।
इन्द्रनामाऽपरः कश्चिन्नागरीणां प्रियोऽवसत् ॥ ८ ॥
साहल्याहल्यया सार्धमिन्द्रस्य यद्भूत्पुरा ।
तदाकर्ण्येतिहासेभ्यस्तस्मिन्निन्द्रेऽन्वरज्यत ॥ ९ ॥
तयोर्घनतरस्नेहनिरावरणचेष्टयोः ।
स दुर्विनयवृत्तान्तो राजान्तिकमुपाययौ ॥ १० ॥
एवमन्योन्यमासक्तं भावमालोक्य भूपतिः ।
चकार बहुभिर्भेदैः स तयोरनुशासनम् ॥ ११ ॥
तावुभावपि संत्यक्तौ दुर्मती सलिलाशये ।
तुष्टौ जहसतुस्तत्र न खेदमुपजग्मतुः ॥ १२ ॥
ग्रथितौ गजपादेषु न तौ श्रममुपागतौ ।
कशाभिस्ताड्यमानाङ्गौ नापतुः कामपि व्यथाम् ॥ १३ ॥

दानि विविच्यन्ते । उदन्तो वृत्तान्तः ॥ ४ ॥ ५ ॥ इन्द्रद्युम्न इतीति ॥ 'स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः । इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायण' इति पुराणप्रसिद्ध एकोऽस्ति इन्द्रद्युम्नः । अयं तु अपर इन्द्रद्युम्न इव स्थितः ॥ ६ ॥ ७ ॥ षिङ्गप्रकरशेखरः विटसमूहोत्तंसः ॥ ८ ॥ अन्वरज्यत अनुरागमकुरुत ॥९॥१०॥ ११ ॥१२॥ भेदैः प्रकारैः । ग्रथितौ बद्धौ ॥ १३ ॥ अस भुवीति धातोर्लेण्मध्य-

ज्वालानिर्दह्यमानौ तौ स्थितौ हिमशिलास्विव ।
अपृच्छत ततो राजा खिन्नौ स्थो न तु दुर्मती ॥ १४ ॥
अथ तौ धरणीपालमूचतुर्मुदिताशयौ ।
संस्मृत्यावामिहान्योन्यं मुखकान्तिमनिन्दिताम् ॥ १५ ॥
आत्मानं न विजानीवो जातावन्योन्यतन्मयौ ।
मुह्यावो न महीपाल स्वाङ्गैरपि विकर्तितैः ॥ १६ ॥
इष्टेऽर्थे चिरमाविष्टं क्वापि धीरं मनःकृतम् ।
भावं भावाः शरीरोत्था नृप शक्ता न बाधितुम् ॥ १७ ॥
आवां तन्न विजानीवो जातावन्योन्यतन्मयौ ।
भावितं तीव्रवेगेन मनसा यन्महीपते ॥ १८ ॥
तदेव पश्यत्यखिलं न शरीरविचेष्टितम् ।
न काश्चन क्रिया राजन्मुनिशापादिका अपि ॥ १९ ॥
तीव्रवेगेन संपन्नं शक्ताश्चालयितुं मनः ।
एककार्ये निविष्टं हि मनो धीरस्य भूपते ॥ २० ॥
न चाल्यते मेरुरिव प्रतिघातशतैरपि ॥ २१ ॥
राजञ्शरीरकलनानि वृथोत्थितानि
चेतो हि कारणममीषु शरीरकेषु ।
वारीव सर्ववनखण्डलतारसेषु
मुख्यं शरीरमिह विद्धि मनो महात्मन् ॥ २२ ॥

मपुरुषद्विवचनं स्थ इति । दुर्मती इति संबोधनम् ॥ १४ ॥ आशयोऽत्र चित्तम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ शरीरकलनानि शरीरकल्पनानि । सर्ववनखण्डलतारसेषु सर्वे च ते वनखण्डलतानां वनभागलतानां रसाश्च तेषु वारीवामीषु स्थूलश-

देहेऽक्षते विविधदेहगणं करोति
स्वप्नावनाविव नवं नवमाशु चेतः ।
चित्तेऽक्षते तु न करोति हि किंचिदेव
देहस्ततः समनुपालय चित्तरत्नम् ॥ २३ ॥

वसिष्ठ उवाच ॥

ताभ्यां तथैवमुक्तोऽसौ राजा राजीवलोचनः ।
मुनिं भरतनामानं पार्श्वस्थं समुवाच ह ॥ २४ ॥
भगवन्सर्वधर्मज्ञ परमार्थरसस्पृशः ।
रमयन्त्येव चेतांसि गिरः कामान्धयोरपि ॥ २५ ॥
शासितौ च यथाशास्त्रमेतौ निर्वासयाम्यहम् ।
इत्युक्त्वा राजशार्दूलस्तावुभौ निरवासयत् ॥ २६ ॥

इति श्रीमोक्षोपाये उत्पत्तिप्रकरणे इन्द्रोपाख्यानं
नाम पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः

वसिष्ठ उवाच ॥

एतत्ते कथितं राम मयाख्यानकलीलया ।
सर्व एव जगत्यस्मिन्द्विशरीराः शरीरिणः ॥ १ ॥

रीरकेषु चेत उपादानकारणं हि ॥ २२ ॥ ननु शरीरकेषु चेतः कारणमिति कुतः वैपरीत्यं किं न स्यादित्यत आह—देहेऽक्षत इति ॥ स्वप्नावनौ स्वप्नभूमौ ॥ २३ ॥ २४ ॥ परमार्थरसस्पृशः परमार्थसारविषयाः ॥ २५ ॥ निर्वासयामि निष्कासयामि । निरवासयत् निष्कासितवान् ॥ २६ ॥ इति श्रीवासिष्ठचन्द्रिकायां उत्पत्तिप्रकरणे इन्द्रोपाख्यानं नाम पञ्चमः सर्गः ॥ ५ ॥

अतीतेनाख्यानेन विस्तरेण प्रतिपादितमर्थं संक्षिप्याह—एतत्ते

एकं मनःशरीरं तु क्षिप्रकारि चलं सदा ।
अकिंचित्करमन्यच्च शरीरं मांसनिर्मितम् ॥ २ ॥

श्रीराम उवाच ॥

विस्तरेण मम ब्रह्मञ्जडस्यास्य निराकृतेः ।
रूपमारूढसंकल्पं मनसो वक्तुमर्हसि ॥ ३ ॥

वसिष्ठ उवाच ॥

अनन्तस्यात्मतत्त्वस्य सर्वशक्तेर्महात्मनः ।
संकल्पशक्तिखचितं यद्रूपं तन्मनो विदुः ॥ ४ ॥
भावः सदसतोर्मध्ये नृणां चलति यश्चलः ।
कलनोन्मुखतां यातस्तद्रूपं मनसो विदुः ॥ ५ ॥

कथितमित्यादिना ॥ १ ॥ २ ॥ सम्यग्विदिते हि संसाररोगनिदाने मनसि तच्चिकित्सा सुकरेति मन्वानो रामः पृच्छति—विस्तरेणेति ॥ निराकृतेर्वस्तुतो निःस्वरूपस्य । तत्र हेतुः—जडस्येति ॥ जडत्वं साधयति—अस्येति ॥ दृश्यस्येत्यर्थः । आरूढः संकल्पो येन तदारूढसंकल्पम् । संकल्पप्रधानमित्यर्थः । यद्वा आरूढः संकल्पो यस्य तत्तथा ॥ ३ ॥ अनिर्वाच्यं मनःस्वरूपं दर्शयंस्तन्मन आसुप्तेरामृतेस्तच्चिन्तनादिलक्षणं मोक्षोपायप्रवणं कुर्यादित्याह—अनन्तस्येत्यादिश्लोकत्रयेण ॥ सर्वशक्तेः सर्वकारणभूता माया शक्तिर्यस्य । यद्वा सर्वाः शक्तयः सर्वपदार्थनिष्ठतया प्रतीयमाना यस्मिंस्तत्तथोक्तम् । तस्य संकल्पशक्तिसंश्लिष्टं यत्कल्पितं रूपं तन्मनो विदुः ॥ ४ ॥ भावः पदार्थः । यद्वा भावशब्देनाभिप्रायवाचिनाभिप्रायकारणं लक्ष्यते । चलः स्वभावतो लोलो नृणां यो भावः स कलनोन्मुखतां संकल्पाभिमुखतां यातः सन् सदसतोर्मध्ये चलति

यतःकुतश्चिदुत्पन्नं चित्तं यत्किंचिदेव हि ।
नित्यमात्मविमोक्षाय योजयेन्मुक्तियुक्तिषु ॥ ६ ॥
अत्रेदं चित्तमाख्यानं कथयामि तवानघ ।
यदाख्यातं भगवता पुरा पङ्कजजन्मना ॥ ७ ॥
अस्ति रामाटवी स्फारा शून्याऽशान्तातिभीषणा ।
योजनानि शतं यस्यां लक्ष्यते कोणमात्रकम् ॥ ८ ॥
अस्यामेको हि पुरुषः सहस्रकरलोचनः ।
पर्याकुलमतिर्भीमः संस्थितो विकृताकृतिः ॥ ९ ॥

आत्मानात्मनोर्मध्ये दोलायते। अनेकत्वधुरं दधानः मनोदर्पणमधिरूढो ह्यात्मानात्मनोर्द्रष्टृदृश्यभावं भजते । मनोलये सुषुप्तावात्मानात्मनोर्द्रष्टृदृश्यभावादर्शनात् ॥ ५ ॥ यतःकुतश्चिदविचारितरमणीयात्कारणादुत्पन्नमतएव यत्किंचिदेवाविचारितरमणीयमेव । विचार्यमाणं तु छायाकल्पितवेतालवद्विशीर्यते । हिशब्दो विद्वत्प्रसिद्धिद्योतनार्थः । मुक्तियुक्तिषु मोक्षोपपत्तिषु तच्चिन्तनादिलक्षणमोक्षोपायेषु तद्योजयेत् । एवमविचारितरमणीयं विचाराद्विशरारु मन एव संसारकारणं तन्निवृत्तये तदेव मोक्षयुक्तिषु योजनीयमित्युक्तम् ॥ ६ ॥ इदानीमेतमेवार्थं चित्ताख्यानमवतार्य प्रपञ्चयति—अत्रेदमिति ॥ ७ ॥ अस्ति रामाटवी स्फारेति ॥ गूढार्थपद्यानि भगवान्वसिष्ठः स्वयमेव व्याकरिष्यति तथापि बुद्धिसौकर्यार्थं व्याकुर्मः । अटन्त्यस्यां जीवा इत्यटवी संसारपदवी । स्फारा विस्तीर्णा । शून्या सर्वपदार्थवर्जिता । मायिकत्वात्तत्र पदार्थानाम् । अशान्तेति पदच्छेदः । अथवा तामसत्वं दर्शयितुं शून्येत्युक्तम् । सात्त्विकत्वं दर्शयितुं शान्तेति । राजसत्वं ज्ञापयितुमतिभीषणेति ॥८॥ पुरि शरीरे

स सहस्रेण बाहूनामादाय परिघान्बहून् ।
प्रहरन्नात्मनः पृष्ठे स्वात्मनैव पलायते ॥ १० ॥
दृढप्रहारैः प्रहरन्स्वयमेवात्मनात्मनि ।
प्रविद्रवति भीमात्मा स योजनशतान्यपि ॥ ११ ॥
क्रन्दन्पलायमानोऽसौ गत्वा दूरमितस्ततः ।
श्रमवान्विवशाकारो विशीर्णचरणाङ्गकः ॥ १२ ॥
पतितोऽवश एवाशु महत्यन्धोऽन्धकूपके ।
कृष्णरात्रितमोभीमे नभोगम्भीरकोटरे ॥ १३ ॥
ततः कालेन बहुना सोऽन्धकूपात्समुत्थितः ।
पुनः प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनि ॥ १४ ॥
पुनर्दूरतरं गत्वा करञ्जवनगुल्मकम् ।
प्रविष्टः कण्टकव्यासं शलभः पावकं यथा ॥ १५ ॥

शेते पुरु बहु सीदत्यवसीदतीति वा पुरुषो मनः सहस्रकरलोचनोऽनन्तहस्तनयनः । अत्रानन्ता विषयाकारवृत्तयः करलोचनतया विवक्षिताः । यथोक्तं बृहद्वासिष्ठे 'सहस्रनेत्रहस्तत्वं यत्पुंसः परिवर्णितम् । तदनन्ताकृतित्वं हि चेतसः परिदर्शितम्' इति ॥ ९ ॥ वाहयन्ति नानायोनीः प्रापयन्तीति बाहवः कुकल्पनानि तेषां सहस्रेण । परितो घ्नन्तीति परिघास्तानाध्यात्मिकादिदुःखहेतूनादायात्मनः स्वस्य पृष्ठे प्रहरति । भ्रान्तिपरिगृहीतैराध्यात्मिकादिदुःखहेतुभिरात्मानं क्लेशयतीत्यर्थः । पलायते कुकल्पनाप्रापितदुःखहेतुभ्यो बिभेतीत्यर्थः ॥ १० ॥ ॥ ११ ॥ १२ ॥ अन्धो विवेकरहितः । अन्धकूपे गहननरके । कुत्सितानि दुःखान्युप्यन्तेऽस्मिन्निति कूपशब्दव्युत्पत्तेर्नभोवद्गम्भीरमपरिच्छेद्यं कोटरं छिद्रं अभ्यन्तरावकाशो यस्मिन्स तथोक्तः ॥ १३ ॥ १४ ॥ तस्मिन्करञ्जवनगुल्मकमिति मनुष्यजन्म विवक्षितम् । नक्तमालापरपर्याय-

तस्मात्करञ्जगहनाद्विनिष्क्रम्य क्षणादिव ।
पुनः प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनि ॥ १६ ॥
पुनर्दूरतरं गत्वा शशाङ्ककरशीतलम् ॥ १७ ॥
कदलीकाननं कान्तं संप्रविष्टो हसन्निव ।
कदलीखण्डकात्तस्माद्विनिष्क्रम्य क्षणात्पुनः ॥ १८ ॥
स्वयं प्रहारैः प्रहरन्विद्रवत्यात्मनात्मनि ।
पुनर्दूरतरं गत्वा तमेवान्धोऽन्धकूपकम् ॥ १९ ॥
स संप्रविष्टस्त्वरया विशीर्णावयवाकृतिः ।
अन्धकूपात्समुत्थाय प्रविष्टः कदलीवनम् ॥ २० ॥
कदलीकाननाच्छुभ्रं करञ्जवनगुल्मकम् ।
करञ्जकाननात्कूपं कूपाद्रम्भावनान्तरम् ॥ २१ ॥
प्रविष्टः प्रहरंश्चैव स्वयमेवात्मनि स्थितः ।
एवंरूपनिजाचारं समालोक्य चिरं मया ॥ २२ ॥
अवष्टभ्य बलादेव मुहूर्तं प्रतिबोधितः ।
पृष्टश्च कस्त्वं किमिदं केनार्थेन करोषि च ॥ २३ ॥
किं च वाभिमतं ते स्यात्किं मुधा परिधावसि ।
इति पृष्टेन कथितं तेन मे रघुनन्दन ॥ २४ ॥

करजवनगतगुल्मशब्दितक्षुद्रोद्भिज्जत्वस्यासुखकरत्वात्कण्टकव्याप्तं दुःखपरिवृतमित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ कदलीकाननं स्वर्गस्तद्धदापातरमणीयत्वात् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ वसिष्ठशब्देन तेज उच्यते । अत्यन्तं च तेजःस्वरूपो वसिष्ठ इति वसिष्ठशब्दव्युत्पत्तेर्वसिष्ठवाचिना मयेति शब्देन परमो विवेको विवक्षितः ॥ २२ ॥ विवेकेन बलाच्चित्तं झटित्याक्रान्तमितीममर्थमाह—अवष्टभ्य बलादेव मुहूर्तं प्रतिबोधित इति ॥ २३ ॥ मुधा वृथा ॥ २४ ॥

नाहं कश्चिन्न चैवेदं मुने किंचित्करोम्यहम् ।
त्वयाहमवभग्नोऽस्मि त्वं मे शत्रुरहो बत ॥ २५ ॥
त्वया दृष्टोऽस्मि नष्टोऽस्मि दुःखाय च सुखाय च ।
इत्युक्त्वा विक्लवान्यङ्गान्यालोक्य स्वान्यतुष्टिमान् ॥ २६ ॥
रुरोदातिरवं दीनो मेघो वर्षन्निवारवी ।
क्षणमात्रेण तत्रासावुपसंहृत्य रोदनम् ।
स्वान्यङ्गानि समालोक्य जहास प्रसभं चिरम् ॥ २७ ॥
अथाट्टहासपर्यन्ते संभ्रमात्पुरतो मम ।
क्रमेण तानि तत्याज स्वान्यङ्गानि समन्ततः ॥ २८ ॥
प्रथमं पतितं तस्य शिरः परमदारुणम् ।
ततस्ते बाहवः पश्चाद्वक्षस्तदनु चोदरम् ॥ २९ ॥

विवेकं प्रति चित्तेन कथितमेव दर्शयति—नाहमित्यादिना ॥ हे मुने, विवेक, अविचारितरमणीयं हि चित्तं तत्कार्यादिकं विवेकमृदितमसदेव भवतीत्यर्थः ॥ २५ ॥ त्वया विवेकेन दृष्टो वशीकृतोऽहं दुःखाय सुखाय च नष्टोऽस्मि । सुखदुःखोत्पादनासमर्थोऽस्मीत्यर्थः ॥२६॥ अर्धप्राप्तविवेकत्वाद्भोगांस्त्यक्तुमशक्नुवच्चित्तं संतापांश्चकारेत्येतमर्थमाह—रुरोदेति ॥ आसमन्ताद्रवः शब्दो यस्य स आरवी पूर्णविवेकेन स्वान्यङ्गान्यहंकारममकारलक्षणानि बाधितान्यालोक्य प्राप्तपरमानन्दतया चित्तं संतोषं चकारेत्याह—स्वान्यङ्गानि समालोक्येति ॥ २७ ॥ पूर्णविवेकोदये सति सवृत्तिकं चित्तविलयक्रमं श्लोकद्वयेनाह—अथाट्टहासपर्यन्त इत्यादिना ॥ मम पुरतो विवेकस्य समक्षमित्यर्थः ॥ २८ ॥ तस्य चित्तस्य शिरोऽहंकारलक्षणं तच्च परमदारुणमतिभयंकरम् । ततोऽनन्तरं बाहवः कुकल्पनालक्षणाः पतिताः

अथ क्षणेन स पुमान्स्वान्यङ्गानि यथायथम् ।
संत्यज्य नियतेः शक्त्या क्वापि गन्तुमुपस्थितः ॥ ३० ॥
दृष्टवानहमेकान्ते पुनरन्यं तथा नरम् ।
प्रहरं तं भ्रमन्तं च पर्याकुलतरान्तरम् ॥ ३१ ॥
स मया संमुखीकृत्य परिपृष्टस्तथैव हि ।
तेनैवासौ क्रमेणैव रुदित्वा संप्रहस्य च ॥ ३२ ॥
अङ्गैर्विशीर्णतामेत्य ययावलमलक्ष्यताम् ।
दृष्टवानहमेकान्ते तथैवान्यः क्वचिन्नरः ॥ ३३ ॥
पलायमानः पतितो ह्यत्यन्तान्धोऽन्धकूपके ।
तत्राहं सुचिरं कालमवसंस्तत्प्रतीक्षकः ॥ ३४ ॥
अथासौ सुचिरेणापि कूपान्नाभ्युत्थितः शठः ।
दृष्टवान्पुनरन्यं च प्रपतन्तमितस्ततः ॥ ३५ ॥

पश्चादर्थाशालक्षणं वक्षआदिकं पतितम् । तथाचोक्तं बृहद्वासिष्ठे— 'यदङ्गानि विशीर्णानि गतान्यन्तर्धिमग्रतः । तत्किं तेन विनार्थाशा शाम्यतीति प्रदर्शितम्' इति । अत्रार्थाशाहंकारकुकल्पनयोरुपलक्षणानि ॥ २९ ॥ यथायथं यथापूर्वं समन्तत इत्यभिधानादिदानीं यथायथमित्यभिधानाद्वायमर्थोऽवगम्यते—स्वान्यङ्गानि यथास्वं पूर्वादिदिग्भ्यो बलिं विधाय गन्तुं समुद्यत इत्येवं कथासौन्दर्यार्थमुक्तमिति ज्ञेयम् । नियतेर्दैवस्य शक्त्या विज्ञानाकारेणाभिव्यक्तयेत्यर्थः । गन्तुं समुद्यतो न गत इत्यभिधानाज्जीवन्मुक्तत्वं सूचितम् ॥ ३० ॥ पर्याकुलतरान्तरं अत्यन्तं पर्याकुलमन्तरमभ्यन्तरं यस्य स तथोक्तस्तम् ॥ ३१ ॥ ३२ ॥ अलमत्यर्थम् । अलक्ष्यतामदृश्यतां ययावित्युक्तं विदेहमुक्तत्वमावेदितम् ॥ ३३ ॥ ३४ ॥ अथासौ सुचिरेणेति ॥ महापातकयुक्तं हि मनोऽन्धकूपशब्दिते नरके पतितं सच्च-

अवष्टभ्य तथैवाशु तस्य प्रोक्तं चिरं मया ।
दुर्मतिर्मामसौ मूढ नैव जानासि किंचन ।
अपैहि दुर्मतेऽत्युक्त्वा स्वव्यापारपरोऽभवत् ॥ ३६ ॥

एवं तस्मिन्महारण्ये बहवस्तादृशा नराः ।
परिभ्रमन्तस्तिष्ठन्ति विद्यतेऽद्यापि साटवी ॥ ३७ ॥

सा भीषणा विविधकण्टकसङ्कटाङ्गी
घोराटवी घनतमोगहनापि लोकैः ।
आगत्य निर्वृतिमनाप्तनिजावबोधै-
रासेव्यते कुसुमगुल्मकवाटिकेव ॥ ३८ ॥

श्रीराम उवाच ॥

कासौ महाटवी ब्रह्मन्कुत्र वा दृश्यतेऽनघ ।
के च ते पुरुषास्तत्र किं वा कर्तुं कृतोद्यमाः ॥ ३९ ॥

स्मात्कूपादतिदीर्घेणापि कालेन न निर्गतमित्यर्थः ॥ ३५ ॥ शुद्धिले-शरहितमनात्मज्ञमन्यन्मनः स्वविवेकं तिरश्चकारेत्याह—दुर्मतिरिति ॥ दुर्मतिरसौ मामित्युक्त्वा स्वव्यापारपरोऽभवदित्यन्वयः । इतिशब्द-परामृष्टमाह—मूढेत्यादिना ॥ हे मूढ दुर्द्विज, किंचिन्न जानास्येव । अपैहि अपसर मत्सकाशात् ॥ ३६ ॥ ३७ ॥ सा भीषणेति ॥ विविधः कण्टकानां दुःखलक्षणानां सङ्कटः संबाधो येष्वङ्गेषु तान्य-ङ्गानि यस्याः सा तथोक्ता । घनतमसा निबिडाज्ञानेन गहना दुःप्रवे-शा । घनतमोगहनापि अनाप्तनिजावबोधैरलब्धात्मज्ञानैर्लोकैः प्राणि-भिर्निर्वृतिमवाप्य सुखं लब्ध्वा आसमन्तात्सेव्यते । गुल्मकानि क्षुद्रो-द्भिद्विशेषाः ॥ ३८ ॥ कासौ महाटवीत्यादिना सर्गसमाप्तेर्ग्रन्थस-

वसिष्ठ उवाच ॥

रघुनाथ महाबाहो शृणु वक्ष्यामि तेऽखिलम् ।
न सा महाटवी राम दूरे नैव च ते नराः ॥ ४० ॥
सेयं संभारपदवी गम्भीरापारकोटरा ।
तां त्वं शून्यविकाराढ्यां विद्धि राम महाटवीम् ॥ ४१ ॥
तत्र ते तु महाकाराः पुरुषाः प्रभ्रमन्ति हि ।
मनांसि तानि विद्धि त्वं दुःखे निपतितान्यलम् ॥ ४२ ॥
द्रष्टा योऽयमहं तेषां साविवेको महामते ।
मया तान्यवबोध्यन्ते विवेकेन मनांसि हि ॥ ४३ ॥
परं बोधं समासाद्य मत्प्रसादान्महामते ।
मनांसि कानिचित्तानि गतान्युपशमं परम् ॥ ४४ ॥
कानिचिन्नाभिनन्दन्ति मां विवेकं विमोहिताः ।
मत्तिरस्कारवशतः कूपेष्वेव पतन्त्यधः ॥ ४५ ॥
ये तेऽन्धकूपा गहना नरकास्ते रघूद्वह ।
कदलीकाननं स्वर्गः करञ्जो मर्त्यमण्डलम् ॥ ४६ ॥
प्रविष्टान्यन्धकूपान्तर्निर्गतानि भयानि तु ।
महापातकयुक्तानि नरके तानि सर्वदा ॥ ४७ ॥
यत्तत्करञ्जगहनं तत्कलत्ररसाविलम् ।
दुःखं कण्टकसंबाधं मानुष्यं विविधैषणम् ॥ ४८ ॥

न्दर्भः स्पष्टार्थः । कचित्किंचिद्विविच्यते ॥ ३९ ॥ नैव च ते नरा दूर इत्यनुवर्तते ॥ ४० ॥ शून्यविकाराढ्यामसत्कार्याढ्याम् ॥ ४१ ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ करञ्जो मर्त्यमण्डलमिति ॥ ४६ ॥ ॥ ४७ ॥ उक्तं विवृणोति—यत्तत्करञ्जगहनमिति ॥ कलत्ररसाविलं

यैरहं पुंभिरबुधैर्दुर्द्विजेति तिरस्कृतः।
तैर्मनोभिरनात्मज्ञैः स्वविवेकस्तिरस्कृतः ॥ ४९ ॥
त्वया दृष्टोऽस्मि नष्टोऽस्मि शत्रुर्मे त्वमिति द्रुतम्।
यदुक्तं तद्विचित्तेन समतापरिदेवितम् ॥ ५० ॥
रुदितं यन्महाक्रन्दं नराणां तत्र राघव।
तद्भोगजालं त्यजता मनसा रोदनं कृतम् ॥ ५१ ॥
अर्धप्राप्तविवेकस्य न प्राप्तस्यामलं पदम्।
मनसस्त्यजतो भोगान्परितापो हि जायते ॥ ५२ ॥
हसितं तु यदानन्दि पुंसां तदवबोधतः।
परिप्राप्तविवेकेन संतोषश्चेतसा कृतः ॥ ५३ ॥
परिप्राप्तविवेकस्य त्यक्तसंसारसंस्थितेः।
चेतसस्त्यजतो रूपमानन्दो हि विवर्धते ॥ ५४ ॥
यदासौ समवष्टभ्य मया दृष्टः प्रयत्नतः।
तद्विवेको बलाच्चित्तमादत्त इति दर्शितम् ॥ ५५ ॥
यदात्मनि प्रहारौघैः पुमान्प्रहरति स्वयम्।
तत्र तत्कल्पनाघातैः प्रहरत्यात्मना मनः ॥ ५६ ॥
पलायते यत्पुरुषः स्वात्मानं प्रहरन्स्वयम्।
स्ववासनाप्रहारेभ्यस्तत्र तत्र मनः स्वयम् ॥ ५७ ॥

स्त्रीरागकलुषम् ॥ ४८ ॥ ४९ ॥ विचित्तेन विषयचित्तेन ॥ ५० ॥ ॥ ५१ ॥ ५२ ॥ तदवबोधत इति पदद्वयम्। अवबोधतोऽवबोधनादित्यर्थः। पुंसामानन्दि यद्धसितं तदवबोधतः परिप्राप्तविवेकेन चेतसा संतोषः कृत इति यत्तदेवेत्यन्वयः ॥ ५३ ॥ रूपं विक्रियां संकल्पविकल्पलक्षणाम् ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

संकल्पवासनाजालैः स्वैरेवायाति बन्धनम् ।
मनो लीलामयैर्बन्धैः कोशकारकृमिर्यथा ॥ ५८ ॥
एतत्ते कथितं राम चित्तोपाख्यानमुत्तमम् ।
चित्तेनैवेदमालोक्य चित्तत्यागे स्थिरो भव ॥ ५९ ॥

इति श्रीयोगवासिष्ठसारे मोक्षोपाये चित्तोपाख्यानं
नाम षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः

### वसिष्ठ उवाच ॥

प्रबुद्धानां मनो राम ब्रह्मैवेदं हि नेतरत् ।
सर्वशक्ति परंब्रह्म नित्यमापूर्णमव्ययम् ॥ १ ॥

अतीतप्रकरणघटकतात्पर्यार्थमाह—संकल्पवासनाजालैरिति ॥ संकल्पा एव वासनामूलत्वाद्वासनास्तासां जालैः स्वैः स्वीयैः । कोशकारकृमिर्हि कपित्थवृक्षादिसंलग्नः सन्नात्मनोऽवस्थानाय कोशं कृत्वा निर्गमनद्वारस्यापि पिधानं कुर्वाणो लीलामयैर्बन्धैर्यथा बध्यते तथेत्यर्थः ॥५८॥ ॥ ५९ ॥ इति श्रीवासिष्ठचन्द्रिकायां उत्पत्तिप्रकरणे चित्तोपाख्यानं नाम षष्ठः सर्गः ॥ ६ ॥

अतीतसर्गान्ते 'मनोबन्धनमायाति कोशकारकृमिर्यथे'ति दृष्टान्तोपादानान्मनसस्त्यक्तव्याभिधानाच्चासतस्त्यागायोगात्तस्य सत्यत्वं प्राप्तं, तत्सत्यत्वे च तद्विकारस्य जगतः सत्यत्वमिति सर्वस्य द्वैतस्य सत्यत्वमाशङ्क्य तस्य बालकाख्यानच्छलेन तुच्छत्वं प्रदिपादयितुं प्रस्तावयति—प्रबुद्धानामित्यादिना ॥प्रबुद्धानां ब्रह्मविदां इदं जगदाकारेण विजृम्भमाणं मनो ब्रह्मैव न ततोऽन्यदनन्यद्वा, किं तर्हि तुच्छमेवेत्यर्थः । मनो ब्रह्मेति बाधायां सामानाधिकरण्यम् । हिशब्दः शून्यादिप्रसिद्धिद्योतनार्थः । कुतो मनआदेर्ब्रह्मतावन्मात्रत्वमित्या-

न तदस्ति न तस्मिन्यद्विद्यते विततात्मनि ।
यथोल्लसति शक्त्यासौ प्रकाशं सोऽधिगच्छति ॥ २ ॥
चिच्छक्तिर्ब्रह्मणो राम शरीरेषूपलभ्यते ।
स्पन्दशक्तिश्च वातेषु दार्ढ्यशक्तिस्तथोपले ॥ ३ ॥
द्रवशक्तिरथोऽम्भःसु दाहशक्तिस्तथानले ।
शून्यशक्तिस्तथाकाशे नाशशक्तिर्विनाशिनि ॥ ४ ॥
यथाण्डान्तर्जले बर्हिः सर्वोऽस्तीदं तथात्मनि ।
फलपत्रलतापुष्पशाखाविटपमूलवान् ।
वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ॥ ५ ॥

शङ्क्य तत्कारणत्वात्तस्य तन्मात्रत्वं युक्तमित्याह—सर्वशक्तीति ॥ सर्वस्मिन्मनआदौ कार्ये शक्तिर्मायाख्या यस्य तत्तथोक्तम् । सर्वाः शक्तयः सर्वकार्यविषया यस्मिन्निति वा । अव्ययमपक्षयरहितम् ॥ १ ॥ ननु विचित्रपदार्थानां मध्ये कस्यचिदब्रह्मकार्यस्यापि संभवात्कथं सर्वस्य ब्रह्मतावन्मात्रत्वमित्यत आह—न तदस्तीति ॥ विततात्मनि तस्मिन्नधिष्ठाने यत्कार्यं न विद्यते तन्न सर्वशक्ति परंब्रह्मेत्यत्र याः सर्वाः शक्तयो ब्रह्मनिष्ठतयाभिहितास्तास्तत्कार्येष्वस्पष्टमुपलभ्यन्त इत्याह—यथोल्लसति शक्त्येत्यादिना ॥ असौ परमात्मा स्वाश्रयाणामनेकशक्तीनां मध्ये यया शक्त्योल्लसति विवर्तते ॥ २ ॥ सा शक्तिः कुत्रोपलभ्यत इत्यत आह—चिच्छक्तिरित्यादिना ॥ उपले पाषाणे ॥ ३ ॥ शून्यशक्तिरमूर्तनिष्पादनशक्तिः ॥ ४ ॥ सर्वं द्वैतजातं प्रलयकालेऽनभिव्यक्तनामरूपतया ब्रह्मण्येव वर्तते । उत्पत्तिकाले प्राप्ते अण्डान्तर्जलाद्बर्हिरिव तस्मादेव मायाविनः क्रमेण विजृम्भते । तत्रापि दृष्टेरेव सृष्टित्वान्मनआदिक्रमेणैव विजृम्भते । तच्च मनआदिकं द्वैतमविचार-

क्वचित्क्वचित्कदाचिच्च तस्मादुद्यन्ति शक्तयः ।
देशकालविचित्रत्वात्क्ष्मातलादिव शालयः ॥ ६ ॥
स आत्मा सर्वगो राम नित्योदितमहावपुः ।
यन्मनाङ्मननीं शक्तिं धत्ते तन्मन उच्यते ॥ ७ ॥
आदौ मनस्तदनु बन्धविमोक्षदृष्टी
पश्चात्प्रपञ्चरचना भुवनाभिधाना ।
इत्यादिका स्थितिरियं हि गता प्रतिष्ठा-
माख्यायिका सुभगबालजनोदितेव ॥ ८ ॥

दशायां बालकोपलालनायोक्तोऽसमञ्जसकथार्थ इव सत्यवत्प्रतीयमानमपि तत्त्वनिरूपणे तुच्छमेवेत्येतदर्थजातमाह—फलपत्रेत्यादिना ॥ लता कोमलशाखा। अत्र विटपशब्देनापुनरुक्ततायै वृक्षस्कन्धो गृह्यते ॥ ५ ॥ क्वचिदिति ॥ तस्माद्ब्रह्मण उद्यन्ति कार्यरूपेण प्रकाशन्त इत्यर्थः । क्ष्मातलाद्भूतलात् ॥ ६ ॥ स आत्मा सर्वगो रामेति ॥ नित्योदितमहावपुः सर्वदा स्वयं भाति पूर्ण आत्मा यद्यदा मनागीषन्मननीं मननवतीं शक्तिं धत्ते । विवर्तमानमननाच्छक्त्यवच्छिन्नो भवतीति यावत् । तत्तदा मन इत्युच्यते ॥ ७ ॥ आदौ मन इति समष्टिरूपं विवक्षितम् । तदनु तदनन्तरं बन्धविमोक्षदृष्टी बन्धमुक्तिज्ञाने उत्पद्येते। तयोरनुत्पत्तौ भोगापवर्गार्थं सृष्ट्यसंभवप्रसङ्गात् । स्मर्यते भोगापवर्गार्थे सृष्टिः—'बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजद्विभुः । मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च' इति । आदिशब्देन चित्तादिर्गृह्यते। सुभगेति संबोधनम्, एकं पदं वा । सुभगबालजनाय सुश्रीकबालजनायोदिताख्यायिकावदित्यादिका द्वैतस्थितिः प्रतिष्ठामचलतयावस्थितिं गता । अविचारकारणा-

श्रीराम उवाच ॥

किमुच्यते मुनिश्रेष्ठ बालकाख्यायिकाक्रमः ।
क्रमेण कथयैतन्मे मनोवर्णनकारणम् ॥ ९ ॥

वसिष्ठ उवाच ॥

कोऽपि मुग्धमतिर्बालो धात्रीं पृच्छति राघव ।
कांचिद्विनोदिनीं वार्तां धात्रि संकथयाशु मे ॥ १० ॥
सा बालस्य विनोदाय धात्री तस्य महामते ।
अख्यायिकां कथयति प्रसन्नमधुराक्षराम् ॥ ११ ॥
क्वचित्सन्ति महात्मानो राजपुत्रास्त्रयः शुभाः ।
धार्मिकाः शौर्यमुदिता अत्यन्तासति पत्तने ॥ १२ ॥
द्वौ न जातौ तथैकस्तु गर्भ एव हि न स्थितः ।
अथाप्युत्तमलाभार्थमेकदा ते शुभास्त्रयः ॥ १३ ॥
स्वकीयाच्छून्यनगरान्निर्गता विमलाशयाः ।
गच्छन्तो गगने वृक्षान्ददृशुः फलशालिनः ॥ १४ ॥
तेषु विश्रम्य विश्रम्य भुक्त्वा स्वादु च तत्फलम् ।
ययुः सुखं विलासेन ते त्रयो राजसूनवः ॥ १५ ॥

दृढसत्यबुद्धिविषयतां प्राप्तेत्यर्थः ॥ ८ ॥ किमुच्यत इत्यादय आसर्गसमाप्तेः श्लोकाः स्पष्टार्थाः । क्वचिंकिंचिद्विविच्यते—मनोवर्णनकारणमिति ॥ सविलासं मनः तुच्छमपि विचारोज्झितचेतसां सत्यवत्प्रतीयत इत्येवंविधस्य मनोवर्णनस्य मनःस्वरूपबोधनस्य कारणम् ॥ ९ ॥ धात्रीं उपमातरम् । कथय वद ॥ १० ॥ ११ ॥ असमञ्जससमत्वसिद्ध्यर्थं पत्तनं विशिनष्टि। अत्यन्तासति तुच्छ इत्यर्थः॥१२॥ ॥१३॥ आशयोऽभिप्रायः ॥ १४ ॥ १५ ॥ आसेदुराजग्मुः । कल्लोला

सरित्त्रितयमासेदुस्ततः कल्लोलमालितम् ।
तत्रैका परिशुष्कैव मनागप्यम्बु न द्वयोः ॥ १६ ॥
परिशुष्का भृशं यासौ तस्यां ते सस्नुरादृताः ।
चिरं कृत्वा जलक्रीडां पीत्वा क्षीरोपमं पयः ॥ १७ ॥
अथासेदुर्दिनस्यान्ते भविष्यन्नगरं त्रयः ।
दूरश्रुतसमुल्लापं खेलन्नागरमण्डलम् ॥ १८ ॥
ददृशुस्तत्र रम्याणि त्रीण्यथो भवनानि ते ।
एकं निर्भित्ति निस्तम्भमनुत्पन्नं गृहद्वयम् ॥ १९ ॥
अभित्ति मन्दिरं चारु प्रविष्टास्ते नृपात्मजाः ।
प्रापुः स्थालीत्रयं तत्र तप्तकाञ्चनकल्पितम् ॥ २० ॥
तत्र खर्परतां याते द्वे एका चूर्णतां गता ।
जगृहुश्चूर्णतां यातां स्थालीं ते शुद्धबुद्धयः ॥ २१ ॥
तस्यां द्रोणत्रयं पक्वं न्यूनं द्रोणत्रयेण तु ।
अन्धस्ततो द्विजैर्भुक्तं निर्मुखैर्बहुभोजिभिः ॥ २२ ॥

ऊर्मयस्तैर्मालितं संजातमालम् । मालाकारैः कल्लोलैर्युक्तमित्यर्थः । मनागीषदपि ॥ १६ ॥ सस्नुः स्नातवन्तः । पयो जलम् ॥ १७ ॥ समुल्लापो मिथ उच्चैर्भाषणम् । दूराच्छ्रुतः समुल्लापो यस्य तत्तथा दूरश्रुतसमुल्लापम् । खेलन्नागरमण्डलं क्रीडन्नगरभवप्राणिजातं तादृशं मण्डलजातं यस्मिन्नगरे तत्तथोक्तम् ॥ १८ ॥ १९ ॥ २० ॥ खर्परतां कपालताम् ॥ २१ ॥ अष्टाढको द्रोण इत्युच्यते । तथाचोक्तम्—'पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् । चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ॥ अष्टाढको भवेद्द्रोणो द्विद्रोणः शूर्प उच्यते' इति । क्वचिद्देशे चतुराढको द्रोण इति व्यवहारः । राजपुत्रैर्यद्द्रोण-

विप्रभुक्तावशेषं तु भुक्तमन्धो नृपात्मजैः ।
भविष्यन्नगरे तस्मिन्राजपुत्रास्त्रयो हि ते ॥ २३ ॥
सुखमेव स्थिताः पुत्र मृगयाव्यवहारिणः ।
धात्र्येति कथिता राम बालकाख्यायिका शुभा ॥ २४ ॥
निश्चयं स ययौ बालो निर्विचारणया धिया ।
एषा हि कथिता राम बालकाख्यायिका तव ॥ २५ ॥
इयं संसाररचना विचारोज्झितचेतसाम् ।
बालकाख्यायिका चेत्थमवस्थितिमुपागता ॥ २६ ॥
संकल्पजालकलनैव जगत्समग्रं
संकल्पजालकलनात्तु मनोविलासः ।
संकल्पमात्रमलमुत्सृज निर्विकल्प-
माश्रित्य निश्चयमवाप्नुहि राम शान्तिम् ॥ २७ ॥

इति श्रीयोगवासिष्ठसारे मोक्षोपाय उत्पत्तिप्रकरणे बालकाख्यायिकोपाख्यानं नाम सप्तमः सर्गः ॥ ७ ॥

---

त्रयं पक्वं तद्द्रोणत्रयेणैव न्यूनम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ बालकाख्यायिका चेत्थमिति ॥ इत्थं बालकाख्यायिका चेति संबन्धः ॥ २६ ॥ संकल्पेति ॥ समग्रं जगत्संकल्पजालकलनैव । संकल्पपुञ्जभ्रान्तिरेवेत्यर्थः । संकल्पजालकलनेति किमुच्यते तत्राह—संकल्पजालकलनात्त्विति ॥ फलितमाह—संकल्पमात्रमिति निर्विकल्पवस्त्वाकारम् । यद्वा निर्विकल्पं निःसंशयं निश्चयं ब्रह्मात्मविषयम् । शान्तिं संसारोपरतिम् ॥ २७ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौ वासिष्ठचन्द्रिकायां उत्पत्तिप्रकरणे बालकाख्यानं नाम सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः

वसिष्ठ उवाच ॥

स्वसंकल्पवशान्मूढो मोहमेति न पण्डितः ।
धिया विचारधर्मिण्या मोहसंरम्भहीनया ।
विचारय धिया सत्यमसत्यं हि परित्यज ॥ १ ॥
अबद्धो बद्ध इत्युक्त्वा किं मुधा परिशोचसि ।
अनन्तस्यात्मतत्त्वस्य किं कथं केन बध्यते ॥ २ ॥
अनन्ते चिद्घनानन्दे निर्विकल्पैकरूपिणि ।
स्थिते द्वितीयस्याभावात्को बद्धः कश्च मुच्यते ॥ ३ ॥
तस्मादुल्लासमात्रं तु मनसो बन्धतां गतम् ।
मनःप्रशमने राम मोक्ष एवावशिष्यते ॥ ४ ॥
गोष्पदं योजनव्यूहः स्वासु लीलासु चेतसः ।
कल्पं क्षणीकरोत्यन्तः क्षणं नयति कल्पताम् ॥ ५ ॥

पूर्वस्मिन्सर्गान्तेऽभिहितनिर्विकल्पनिश्चयाश्रयणाय किं कर्तव्यमित्याशङ्क्य सत्यादिलक्षणब्रह्मविचारः कर्तव्य इति सोपपत्तिकमाह—स्वसंकल्पवशादित्यादिना सार्धेन ॥ विचार एव धर्मो धर्मवत्सदानुष्ठेयो यस्यास्तया मोहसंरम्भहीनया मोहाडम्बरहीनया धिया पण्डितो मोहं नैति ॥१॥ ननु बद्धोऽहं पाशबद्धशकुन्त इव किं कुर्यामित्यत आह—अबद्ध इत्यादिना ॥ मुधा वृथा ॥ २ ॥ ३ ॥ वस्तुतो बन्धासंभवे फलितमाह—तस्मादिति ॥ मनस उल्लासमात्रं विजृम्भणमात्रम् ॥ ४ ॥ ननु वस्तुतो बन्धरहितत्वे बन्धहेतुत्वं मनसः कथं संभवतीत्याशङ्क्य तदर्थं तस्य दुर्घटकारितामाह—गोष्पदमिति ॥ स्वासु संबन्धिनीषु लीलासु प्रवर्तमानस्य चेतसो योजनव्यूहो गोष्पदं

अत्र ते शृणु वक्ष्यामि वृत्तान्तमिममुत्तमम् ।
जागती हीन्द्रजालश्रीश्चित्तस्यान्तः स्थिता यथा ॥ ६ ॥
अस्त्यस्मिन्वसुधापीठे नानावनसमाकुलः ।
उत्तरःपाण्डवो नाम स्फीतो जनपदो महान् ॥ ७ ॥
तत्रास्ति लवणो नाम राजा परमधार्मिकः ।
हरिश्चन्द्रकुलोद्भूतो भूमाविव दिवाकरः ॥ ८ ॥
यद्यशःकुसुमोत्तंसपाण्डुरस्कन्धमण्डलाः ।
सर्वे शैला विराजन्ते हाराः प्रोद्धूलिता इव ॥ ९ ॥
जिह्मतां यो न जानाति न दृष्टा येन गृध्नुता ।
उदारता येन धृता वाचकेन यथाभिधा ॥ १० ॥

भवति । योजनसमूहोऽपि गोष्पदवत्स्फुरतीत्यर्थः । गोष्पदमपि योजनव्यूहो भवतीति द्रष्टव्यम् । दृश्यते हि स्वप्नादौ देशकालदैर्घ्यादिविभ्रमः ॥ ५ ॥ अघटमानमपि घटयति मायामयं मन इत्युक्तमर्थमाख्यानमवतार्य विशदयति—अत्र ते शृण्वित्यादिना ॥ जागती जगत्संबन्धिनी चित्तस्यान्तर्यथा येन प्रकारेण संस्थिता तथा ज्ञास्यसीति शेषः ॥ ६ ॥ स्फीतः समृद्धो जनपदो देशः ॥ ७ ॥ ८ ॥ उत्तंसः शेखरः । यथाहुः क्षीरस्वामिनः—'शेते शिरसि शेखरः । उत्तंसोऽपी'ति । यस्य लवणस्य यशांस्येव कुसुमोत्तंसास्तैः पाण्डुराणि शुभ्राणि स्कन्धमण्डलानि येषां ते यद्यशःकुसुमोत्तंसपाण्डुरस्कन्धमण्डलाः । प्रसिद्धं हि लोके कुसुमोत्तंसैः परागपतनात्स्कन्धमण्डलानि पाण्डुराणि भवन्तीति । प्रोद्धूलिता विमलीकृताः । दिगन्तव्याप्तकीर्तिरिति तात्पर्यार्थः ॥ ९ ॥ जिह्मतां कापट्यम् । गृध्नुरभिकाङ्क्षाशीलस्तस्य भावो गृध्नुता । गृधु अभिकाङ्क्षायामिति धातोः 'त्रसिगृधी'त्यादिना क्नुः । उदारता दातृता वा । महत्त्वं वा वाचकेन वक्त्रा

स कदाचित्सभास्थाने सिंहासनगतोऽभवत् ।
सुखोपविष्टे तत्रास्मिन्राजनीतिविदांवरे ॥ ११ ॥
सभां विवेश साटोपं कश्चिन्नामेन्द्रजालिकः ।
स ननाम महीपालं शिखरोदारकन्धरम् ॥ १२ ॥
उवाचोत्कन्धरं भूपं स पद्ममिव षट्पदः ।
विलोकय विभो तावदेकामिह खरोलिकाम् ।
पीठस्थ एव साश्चर्यं चन्द्रोदयमिवावनौ ॥ १३ ॥
इत्युक्त्वा पिच्छिका तेन भ्रामिता भ्रमदायिनी ।
नानाविरचनाबीजं मायेव परमात्मनः ॥ १४ ॥
तां ददर्श महीपालस्तेजोरेणुविराजिताम् ।
सभां सैन्धवसामन्तो विवेशास्मिन्क्षणे ततः ॥ १५ ॥
तं चैवानुजगामाश्वः सौम्यः परमवेगवान् ।
सामन्तोऽश्वमुपादाय पार्थिवं समुवाच ह ॥ १६ ॥
इदमुच्चैश्रवप्रख्यं हयरत्नं महीपते ।
प्रभुणा मम भूचक्रप्रभोः संप्रहितं तव ॥ १७ ॥

अभिधा अभिधानं अभिधाख्यो व्यापारो वा ॥ १० ॥ ११ ॥ साटोपं ससंभ्रमम्। शिखरं शृङ्गं तद्वदुदारा उत्तमा कन्धरा ग्रीवा यस्य स तथोक्तः तम् ॥ १२ ॥ उत्कन्धरं उद्गतग्रीवम्। एकां प्रधानाम्। खरोलिकामित्यत्र इन्द्रजालविद्याभ्यासो विवक्षितः ॥ १३ ॥ पिच्छिकात्र मयूरपत्रभारः । नानाविरचनाबीजं नानानिर्माणकारणम् ॥ १४ ॥ ततः पिच्छिकादर्शनादनन्तरं अस्मिन्नेव क्षणे सैन्धवसामन्तः सिन्धुदेशीयनृपसामन्तः सभां विवेश ॥ १५ ॥ तं सामन्तमश्वश्चानुजगामेति राज्ञो भ्रान्तिर्बभूवेत्यर्थः । एवमुत्तरत्रापि ज्ञेयम् ॥ १६ ॥ उच्चैश्रवा इन्द्रस्याश्वस्तत्प्रख्यं तत्संकाशम् । प्रहितं

राजते हि पदार्थश्रीर्महतामर्पणाच्छुभा ।
इत्युक्तवति तस्मिन्स प्रत्युवाचेन्द्रजालिकः ॥ १८ ॥
सदश्वमेनमारुह्य भुवनं विहर प्रभो ।
अश्वमालोकयामास तेनोक्त इति भूपतिः ॥ १९ ॥
अथानिमेषया दृष्ट्या राजा चित्रोपमाकृतिः ।
बभूवालोकयन्नश्वं लिपिकर्मार्पितो यथा ॥ २० ॥
तस्थौ मुहूर्तयुग्मं तु ध्यानासक्त इवात्मनि ।
ततस्ते विस्मयापन्ना ययुश्चिन्तां सभासदः ॥ २१ ॥
संदेहसागरे मग्नाः स्थितास्तत्र च मन्त्रिणः ।
प्रशशाम सभास्थाने जनकोलाहलो महान् ॥ २२ ॥
विततविस्मितजिह्मितया तया
जनतया भयमोहविषण्णया ।
स्तिमितचक्षुषि भूमिपतौ स्थिते
मुकुलिताब्जवनस्य धृता द्युतिः ॥ २३ ॥

वसिष्ठ उवाच ॥

मुहूर्तद्वितयेनाथ प्रबुबोध महीपतिः ।
बभूवाथ प्रबुद्धोऽसावासनोपरि कम्पितः ॥ २४ ॥

संप्रेषितम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ युग्मं युगलम् । सभासदः सभायां वर्तमानाः ॥ २१ ॥ २२ ॥ विततं विस्मितं महान्विस्मयो यस्यां जिह्मतायां ऐन्द्रजालिककुटिलतायां सा विततविस्मितजिह्मिता तया हेतुभूतया भूमिपतौ स्तिमितचक्षुषि स्थिते सति भयमोहाभ्यां विषण्णया दुःखितया जनतया जनसमूहेन मुकुलिताब्जवनस्य द्युतिः शोभा धृता ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

पुरोगैर्धार्यमाणोऽथ पर्याकुलमतिर्नृपः ।
अथैनं परिपप्रच्छुः सदस्या मन्त्रिणस्तदा ॥ २५ ॥
सम्यक्प्राप्तप्रबोधं तु सादरं विनयान्विताः ।
मनस्ते निर्मलं कस्मात्संभ्रमेषु निमज्जति ॥ २६ ॥
मनो मोहमुपादत्ते न महत्त्वविजृम्भितम् ।
अथ राजाह साश्चर्यमुन्मीलितविलोचनः ॥ २७ ॥
इदमाश्चर्यमाख्यानं शृणुताद्य सभासदः ।
पिच्छिकामहमालोक्य जाल्मेन भ्रामितामिमाम् ॥ २८ ॥
अश्वमारूढवानेनमात्मना भ्रान्तचेतसा ।
गन्तुं प्रवृत्तो मृगयामेकोऽहमतिरंहसा ॥ २९ ॥
अनेनातिविलोलेन दूरे नीतोऽस्मि वाजिना ।
भोगाभ्यासजडेनाज्ञो मुग्धः स्वमनसा यथा ॥ ३० ॥
ततः प्रलयनिर्दग्धजगदास्पन्दभीषणम् ।
निःपक्षि स्फारनीहारं निर्वृक्षमजलं महत् ।
संप्राप्तोऽहमपर्यन्तमरण्यं श्रान्तवाहनः ॥ ३१ ॥
तदरण्यमथासाद्य मतिर्मे खेदमागता ।
आसूर्यान्तं दिनं तत्र प्रक्रान्तं सीदता मया ॥ ३२ ॥

॥ २७ ॥ जाल्मेनासमीक्ष्यकारिणा । 'जाल्मोऽसमीक्ष्यकारी स्यादि'त्यमरः ॥ २८ ॥ अतिरंहसा अतिवेगेन ॥ २९ ॥ भोगाभ्यासेन वैषयिकसुखानुभववृत्त्या जडं ततोऽन्यपुरुषार्थानभिज्ञं भोगाभ्यासजडं तेनाज्ञोऽनात्मज्ञः । मुग्धः पशुवल्लौकिकप्रज्ञयापि हीनः ॥ ३० ॥ स्फारो भूरिर्नीहारस्तुषारो यस्मिन्नरण्ये तत्तथोक्तम् ॥ ३१ ॥ आसूर्यान्तम् सूर्यास्तमयपर्यन्तमित्यर्थः । प्रक्रान्तं प्रकर्षेणाटितम् ॥ ३२ ॥

तदरण्यमथातीतमतिकृच्छ्रेण खेदिना ।
विवेकिनेव संसारं प्राप्तवानथ जाङ्गलम् ॥ ३३ ॥
जम्बूकदम्बप्रायेषु कलालापाः पतत्रिणः ।
यत्र स्फुरन्ति खण्डेषु पान्थानामिव बान्धवाः ॥ ३४ ॥
तत्र जम्बीरखण्डस्य तलं संप्राप्तवानहम् ।
आलम्बिता मया तत्र स्कन्धसंसर्गिणी लता ॥ ३५ ॥
मयि प्रलम्बमानेऽस्यां प्रयातः स तुरंगमः ।
गङ्गावलम्बिनि नरे यथा दुष्कृतसंचयः ॥ ३६ ॥
चिरदीर्घाध्वगः खिन्नस्तत्र विश्रान्तवानहम् ।
तत्र कल्पसमा रात्रिर्मोहमग्नस्य मे गता ॥ ३७ ॥
न स्नातवान्नार्चितवान्न तदा भुक्तवानहम् ।
केवलं तु गता रात्रिः सापदां धुरि तिष्ठतः ॥ ३८ ॥
सह शीतार्तमद्दन्तपङ्क्तिटाङ्कारशीत्कृतैः ।
सार्धं तिमिरसंघातैः सा व्यतीयाय शर्वरी ॥ ३९ ॥
प्रवृत्तस्तामहं स्फारां संप्रवृत्तस्ततः स्थलीम् ।
न किंचिद्दृश्यते तत्र भूतं जरठजङ्गले ॥ ४० ॥

जाङ्गलं वनविशेषः ॥ ३३ ॥ ३४ ॥ जम्बीरो दन्तशठाख्यो वृक्षः । लता शाखा । 'लता शाखा च शाखिनामि'त्यभियुक्तवचनात् ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ सा रात्रिः । सापदामित्येकं पदं वा । धुरि भारे ॥ ३८ ॥ शीतार्तमद्दन्तपङ्क्तिटाङ्कारशीत्कृतैः शीतार्तस्य मम दन्तपङ्क्तौ ये टाङ्काराः यानि च शीत्कृतानि सीत्कारास्तैः सह तिमिरसंघातैश्च सार्धं शर्वरी रात्रिर्व्यतीयाय व्यतिक्रान्ताभूत् ॥ ३९ ॥ भूतं प्राणिजातम् । जरठजङ्गले जीर्णवनविशेषे ॥ ४० ॥ खण्डभ्र-

अभिजातो गुणलवो यथा मूर्खशरीरके ।
केवलं विगताशङ्कं खण्डभ्रमणचञ्चलाः ॥ ४१ ॥
चीचीकुचीति वचना विहरन्ति विहंगमाः ।
अथाष्टभागमापन्ने व्योम्नो दिवसनायके ॥ ४२ ॥
दृष्टा मया प्रभ्रमता दारिकौदनधारिणी ।
तरतारकनेत्रां तां श्यामामधवलाम्बराम् ॥ ४३ ॥
अहमभ्यागतस्तत्र शर्वरीमिव चन्द्रमाः ।
मह्यमोदनमाश्वेतद्बाले बलवदापदि ॥ ४४ ॥
देहि दीनार्तिहारिण्यः स्फारितां यान्ति संपदः ।
क्षुदन्तर्महतीयं मे बाले वृद्धिमुपेयुषी ॥ ४५ ॥
याञ्चयापि तया मह्यमित्थं दत्तं न किंचन ।
यत्नप्रार्थितया लक्ष्म्या यथा दुष्कृतिने धनम् ॥ ४६ ॥
केवलं चिरकालेन मय्यत्यन्तानुगामिनी ।
खण्डात्खण्डे निपतति छायाभूते पुरः स्थिते ॥ ४७ ॥
तयोक्तं हारकेयूरीं चण्डालीं विद्धि मामिति ।
राजन्याचनमात्रेण मत्तो नाप्नोषि भोजनम् ॥ ४८ ॥

भ्रणमसकलभ्रमणम् ॥ ४१ ॥ चीचीकुचीति शब्दानुकारः । त्रिंशद्भागस्य व्योम्नोऽष्टभागं देशं दिवसनायके रवावापन्ने प्राप्ते सतीत्यर्थः ॥ ४२ ॥ दारिका बालिका तारकाकनीनिका नेत्रमध्यस्थकृष्णमणुलक्षणम् तरतारके परिभ्रमत्कनीनिके नेत्रे यस्याः सा तथोक्ता ॥ ४३ ॥ ४४ ॥ स्फारितां भूरिताम् उपेयुषी उपगता ॥ ४५ ॥ ॥ ४६ ॥ खण्डाद्वृक्षादीनां समूहादन्यखण्डे निपततीति सप्तमी ॥ ४७ ॥ हारकेयूरीति नाम ॥ ४८ ॥ कुञ्जकेषु निकुञ्जकेषु फला-

इत्युक्तवत्या गच्छन्त्या चलन्त्या च पदे पदे ।
कुञ्जकेषु निषज्जन्त्या लीलावनितयोदितम् ॥ ४९ ॥
ददामि भोजनमिदं भर्ता भवसि चेन्मम ।
वाहयत्यत्र मे दान्तावुद्दाले पुक्कसः पिता ॥ ५० ॥
तस्येदमन्नं भवति भर्तृत्वे दीयते स्थिते ।
प्राणैरपि हि संपूज्या वल्लभाः पुरुषा यतः ॥ ५१ ॥
अथोक्ता सा मया भर्ता भवामि तव सुव्रते ।
केनापदि विचार्यन्ते वर्णजातिकुलक्रमाः ॥ ५२ ॥
ततस्तयोदनादर्धं मह्यमेकं समर्पितम् ।
जम्बूफलरसः पीतः स भुक्तः पक्कणौदनः ॥ ५३ ॥
विश्रान्तं च मया तत्र मोहापहृतचेतसा ।
मां हस्तेनाथ सादाय प्राणं बहिरिव स्थितम् ॥ ५४ ॥
दुराकृतिं दुराचारमाससाद भयप्रदम् ।
पितरं पीवराकारमवीचिमिव यातनाम् ॥ ५५ ॥
तयाहमनुषङ्गिण्या मातङ्गाय निवेदितः ।
अयं मम भवेद्भर्ता तात हे तव रोचताम् ॥ ५६ ॥

दिजिघृक्षया निषज्जन्त्या नितरां सङ्गं कुर्वन्त्या । गुञ्जकेष्विति क्वचित् । तत्र स्वकण्ठगतेषु बाह्येषु वा गुञ्जाफलेष्वित्यर्थः ॥ ४९ ॥ दान्तौ दमयुक्तौ शिक्षितौ बलीवर्दौ । उद्दाले हलेनाकृष्टे क्षेत्रे भवतीति सप्तमी ॥ ५० ॥ ५१ ॥ ५२ ॥ पक्कणशब्देन शबरालयवाचिना पुक्कसगृहं लक्ष्यते ॥ ५३ ॥ ५४ ॥ पीवराकारं पीनाकृतिम् । अवीचिर्नरकविशेषः ॥ ५५ ॥ मातङ्गश्चण्डालः । 'चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः ॥ ५६ ॥ बाढमित्यव्ययमङ्गीकारे

स तथा बाढमित्युक्त्वा दिनान्ते समुपस्थिते ।
मुमोच दान्तावाबद्धौ कृतान्तः किंकराविव ॥ ५७ ॥
नीहाराभ्रकडारासु दिक्षु प्रोद्धूलितास्विव ।
वेतालबन्धनात्तस्माद्दिनान्ते चलिता वयम् ॥ ५८ ॥
क्षणेन पक्कणं प्राप्ताः संध्यायां दीर्घजङ्गलात् ।
विकर्तितवराहाश्वकपिकुक्कुटवायसम् ।
शोषार्थप्रसृताद्रान्त्रतन्त्रीजालपतत्खगम् ॥ ५९ ॥
बालहस्तस्थितक्रव्यपिण्डक्वणितमक्षिकम् ।
संभ्रमोपहितानल्पकदलीदलखण्डकम् ॥ ६० ॥
अहमास्थितवांस्तत्र नवे श्वशुरमन्दिरे ।
श्वश्र्वा मे केकराक्ष्या तु तेनासृङ्मयचक्षुषा ॥ ६१ ॥

॥ ५७ ॥ नीहाराभ्रकडारासु नीहाराभ्राणि तुषारवर्षाणि संध्याभ्राणि तैः कडारासु कपिलासु । 'कडारः कपिलः पिङ्ग' इत्यमरः । दिक्षु प्रोद्धूलितास्विव सतीषु चलिता इति संबन्धः । वेताला बध्यन्तेऽस्मिन्निति वेतालबन्धनं वेतालस्थानं वनं तस्मात् ॥ ५८ ॥ जङ्गलं वनविशेषः । पक्कणस्य लक्षणया पुक्कसालयस्य त्रीणि विशेषणानि विकर्तितेत्यादीनि । विकर्तिता विविधं छेदिता वराहादयो यस्मिन्स तथोक्तस्तम् । आन्त्राण्यत्र शिराः । शोषणार्थं प्रसृतानि प्रकीर्णानि यानि आर्द्रान्त्राणि तान्येव तन्त्र्यः शोषार्थं प्रसृताद्रान्त्रतन्त्र्यस्तासां जाले पतन्तः खगाः पक्षिणो यस्मिन्स तथोक्तस्तम् ॥ ५९ ॥ क्रव्यमामिषम् । 'पललं क्रव्यमामिषमि'त्यमरः । बालहस्तस्थितेषु क्रव्यपिण्डेषु क्वणिता ध्वनिता मक्षिका यस्मिन्स तथोक्तस्तम् ॥ ६० ॥ उपहितं उपक्षिप्तम् । केकराक्षीति नाम ॥ ६१ ॥

जामातायमिति प्रोक्तं तया तदभिनन्दितम् ।
बहुनात्र किमुक्तेन कस्मिंश्चिद्दिवसे ततः ॥ ६२ ॥
दत्ता च तेन सा मह्यं कुमारी भयदायिनी ।
सुकृष्णा कृष्णवर्णेन दुष्कृतेनेव यातना ॥ ६३ ॥
सरभसमभितो विनेदुरत्र
　प्रसृतमहामदिरासवाः श्वपाकाः ।
हतपटुपटहा विलासवन्तः
　स्वयमिव दुष्कृतराशयो महान्तः ॥ ६४ ॥

राजोवाच ॥

ततः प्रभृति तत्राहं संपन्नः पुष्टपुक्कसः ।
सप्तरात्रोत्सवस्यान्ते क्रमान्मासाष्टकं गतम् ॥ ६५ ॥
पुष्पिता सापि संपन्ना स्थिता गर्भवती ततः ।
प्रासूत दुःखदां कन्यां विपद्दुःखक्रियामिव ॥ ६६ ॥
सा कन्या ववृधे शीघ्रं मूर्खे चिन्तेव पीवरी ।
पुनः प्रसूता सा वर्षैस्त्रिभिः पुत्रमशोभनम् ॥ ६७ ॥
अनर्थमिव दुर्बुद्धिराशापाशविधायकम् ।
पुक्कसी सा प्रसूताथ पुनरप्यर्भकं ततः ॥ ६८ ॥

॥ ६२ ॥ कृष्णवर्णेन तेनेति पूर्वेणान्वयः ॥६३॥ सरभसं ससंभ्रमं सवेगं वा । अभितः उभयतः । विनेदुः विशिष्टं नादं चक्रुः । मदिरा च आसवाश्च मदिरासवाः प्रसृताः आस्याद्विगलिता महान्तो मदिरासवा येषां ते तथोक्ताः । आसवाः सुरामदिराः । अन्नस्वादुरसा सुरा । यथाहुः क्षीरस्वामिनः—'स्वादुरसा मदिरे'ति । श्वपाकाः श्वपचाः ॥ ६४ ॥ ६५ ॥ पुष्पिता संपन्ना रजस्वला जाता ॥ ६६ ॥ पीवरी पीना ॥ ६७ ॥ दुष्टा चासौ बुद्धिश्चेति दुर्बुद्धिः आशा एव

तया सह समास्तत्र मम बह्वयोऽतिवाहिताः।
शीतवातातपक्लेशविवशेन दशान्तरे ॥ ६९ ॥
कलत्रचिन्ताहतया धिया संदह्यमानया।
दृष्टाः कष्टसमारम्भा दिशः प्रज्वलिता इव ॥ ७० ॥
अथ गच्छति काले तु जराजर्जरितायुषि।
तृणोत्थदहनज्वालासमश्मश्रुधरे मयि ॥ ७१ ॥
तत्र दुर्भिक्षमासीच्च परिशुष्कतृणं महत्।
अकाण्डमरणोड्डीनचण्डचण्डालमण्डलम् ॥ ७२ ॥
निरन्नतृणपत्राम्बु विन्ध्यकक्षं तदा ययौ।
न वर्षति घनव्राते दृष्टनष्टे क्वचिज्जने ॥ ७३ ॥
प्रौढाङ्गारगणे व्योम्नि गतौ वहति मारुते।
अकाण्डमभवद्भीममुद्दामदवपावकम् ॥ ७४ ॥

पाशा बन्धनहेतुत्वात्तेषां विधायकमुत्पादकं आशापाशविधायकम् ॥ ६८ ॥ समाः संवत्सरान्। दशान्तरे कालावस्थाभेदे। दशान्तरे शीतवातातपक्लेशविवशेनेति संबन्धः ॥ ६९ ॥ ७० ॥ तृणोत्थेति ॥ तृणोत्पन्नाग्निज्वाला हि श्वेता भवति ॥ ७१ ॥ अकाण्डमनवसरो दुर्भिक्षकालस्तत्प्रयुक्तं मरणं काण्डमरणं तस्मान्निमित्तात् उड्डीनमुद्गतं चण्डमतिकोपनम्। 'चण्डस्त्वत्यन्तकोपन'इत्यमरः। अकाण्डमरणोड्डीनं च तच्चण्डचण्डालमण्डलं चेति विग्रहः ॥ ७२ ॥ विन्ध्यकक्षं विन्ध्यपर्वतस्योदकबहुलप्रदेशम्। 'उदप्रायमनूपं स्यात्पुंसि कच्छस्तथाविध'इत्यमरः ॥ ७३ ॥ अकाण्डमनवसरो दुर्भिक्षकालः। कीदृशं तदकाण्डमित्यत आह—भीममित्यादि ॥ उद्दामो विबन्धनो दवपावको वनाग्निर्यस्मिंस्तदुद्दामदवपावकम् ॥ ७४ ॥ उलपं

शोषिताशेषगहनं भस्मशेषतृणोलपम् ।
तस्मिंस्तदा वर्तमाने कष्टे विधिविपर्यये ॥ ७५ ॥
जनाः केचिद्विनिष्क्रम्य गतास्ते ससुहृज्जनाः ।
शीर्णाः केचन तत्रैव प्रविष्टा अनलं परे ।
केचिच्छ्वभ्रेषु पतिताः केऽपि जाता मुमूर्षवः ॥ ७६ ॥
अहं कलत्रमादाय कृच्छ्रात्तस्माद्विनिर्गतः ।
सार्धं त्रिभिरपत्यैस्तु तया च सहितः शनैः ॥ ७७ ॥
प्राप्य तद्देशपर्यन्तं तत्र तालतरोस्तले ।
अवरोप्य सुतान्स्कन्धात्ताननर्थानिवोल्बणान् ॥ ७८ ॥
विश्रान्तोऽस्मि ततस्तत्र रौरवादिव निर्गतः ।
अथ चण्डालकन्यायां विश्रान्तायां तरोस्तले ॥ ७९ ॥
सुप्तायां शीतलच्छाये द्वौ समालिङ्ग्य दारकौ ।
पृच्छको नाम तनयो ममैष पुरतःस्थितः ॥ ८० ॥
अत्यन्तं वल्लभोऽस्माकं कनीयान्मुग्धवागिति ।
स मामुवाच दीनात्मा बाष्पपूरितलोचनः ॥ ८१ ॥
तात देह्याशु मे मांसं पातुं च रुधिरं क्षणात् ।
पुनः पुनर्वदन्नेवं स बालस्तनयो मम ॥ ८२ ॥
प्राणान्तिकीं दशां प्राप्तः साक्रन्दो हि पुनः पुनः ।
तस्य तामार्तिमालोक्य मया दुःखातिभारिणा ॥ ८३ ॥

लता । 'लता प्रतानिनी वीरुद्गुल्मिन्युलपमित्यपी'त्यमरः । भस्मशेषाणि तृणोलपानि यस्मिंस्तत्तथोक्तम् । विधिविपर्यये भाग्यवैपरीत्ये ॥ ७५ ॥ श्वभ्रेषु विवरेषु ॥ ७६ ॥ कृच्छ्रादायासात् ॥ ७७ ॥ उल्बणान्प्रव्यक्तान् । 'स्फुटं प्रव्यक्तमुल्बणमि'त्यमरः ॥ ७८ ॥ ॥ ७९ ॥ दारकौ बालकौ । 'दारकौ बालभेदकावि'त्यमरः ॥ ८० ॥

सोढुं तामापदं तीव्रामशक्तेन हतात्मना ।
मरणायातिमित्राय कृतोऽन्तर्निश्चयो मया ॥ ८४ ॥
तत्र काष्ठानि संचित्य चितामाचितवानहम् ।
चिता चटचटास्फोटैः स्थिता मदभिकाङ्क्षिणी ॥ ८५ ॥
तस्यां तु यावदात्मानं चितायां निक्षिपाम्यहम् ।
चलितोऽस्मि जवात्तावदस्मात्सिंहासनान्नृपः ।
ततस्तूर्यनिनादेन जयशब्देन बोधितः ॥ ८६ ॥
इति शाम्बरिकेणायं मोह उत्पादितो मम ।
अज्ञानेनेव जीवस्य दशाशतसमन्वितः ॥ ८७ ॥
इत्युक्तवति राजेन्द्रे लवणे भूरितेजसि ।
अन्तर्धानं जगामासौ तत्र शाम्बरिकः क्षणात् ॥ ८८ ॥
अत्रेदमूचुस्ते सभ्या विस्मयोत्फुल्ललोचनाः ।
नायं शाम्बरिको देव यस्य नास्ति धनैषणा ॥ ८९ ॥
दैवी काचन मायेयं संसारस्थितिबोधिनी ।
मनोविवर्तः संसार इति यस्यां प्रतीयते ।
सर्वशक्तेरनन्तस्य विलासो हि मनो जगत् ॥ ९० ॥

इति श्रीयोगवासिष्ठे मोक्षोपाये शाम्बरिकोपाख्यानं
नाम अष्टमः सर्गः ॥ ८ ॥

---

॥ ८१ ॥ ८२ ॥ ८३ ॥ अतिमित्राय कालोचितबन्धवे ॥ ८४ ॥ ॥ ८५ ॥ ८६ ॥ शाम्बरिकेण ऐन्द्रजालिकेन ॥ ८७ ॥ ८८ ॥ ॥ ८९ ॥ मनोविवर्तत्वाज्जगतो मनो जगदिति सामानाधिकरण्यमुपपन्नम् ॥ ९० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादश्रीमदात्मसुखकृतौ वासिष्ठचन्द्रिकायां उत्पत्तिप्रकरणे शाम्बरिकाख्यानं नाम अष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः

वसिष्ठ उवाच ॥

यत्कृतं मनसा नाम तत्कृतं विद्धि राघव ।
यत्त्यक्तं मनसा तावत्तत्त्यक्तं विद्धि राघव ॥ १ ॥
यस्याचपलतां यातं मनो मननवर्जितम् ।
अनुत्तमपदेनासौ ध्यानेनानुगतोऽनघ ॥ २ ॥
संयमान्मनसः शान्तिमेति संसारविभ्रमः ।
मन्दरेऽस्पन्दतां याते यथा क्षीरमहार्णवः ॥ ३ ॥
मनसो वृत्तयो या या भोगसंकल्पविभ्रमाः ।
संसारविषवृक्षाणां ता एवाङ्कुरपङ्क्तयः ॥ ४ ॥

एवं नानाख्यानैः परमात्माश्रयमायाविवर्तभूतमनोविलासात्मकं द्वैतानर्थजातं मिथ्या तदधिष्ठानं ब्रह्मात्मतत्त्वमेव सत्यमिति प्रतिपादितम् । इदानीमेवं प्रतिपादनादुत्पन्नापि ब्रह्मात्मतत्त्वप्रतीतिश्चित्तैकाग्र्याभावादनुभवपर्यवसायिनी न भवति यतोऽतस्तदैकाग्र्यसिद्ध्यर्थं तस्य बाह्यवृत्तिनिरोधः कर्तव्य इति तत्र तत्र प्रतिपादितमपीह विशेषतः प्रतिपादयितुमाह—यत्कृतमिति ॥ नामशब्दः प्रसिद्धौ ॥ १ ॥ अचपलतामचञ्चलताम् । अचपलतायास्तत्त्वमेवाह—मननवर्जितमिति । संकल्पादिवर्जितमित्यर्थः । असौ पुमाननुत्तमपदेन सर्वोत्तमोपायेन ध्यानेन चित्तस्य चिन्मात्रशेषतालक्षणेनानुगतोऽन्वितो भवति । अतो महाफलत्वान्मनसोऽचापल्यं संपादनीयमित्यर्थः ॥ २ ॥ ननु ध्यानफलेनापि मनसश्चापल्येन संसारान्मुमुक्षोः किं भवेत्तत्राह—संयमादिति ॥ अस्पन्दतामिति छेदः ॥ ३ ॥ शब्दाद्याकाराणां चित्तवृत्तीनां सांसारिकदेहशतहेतुताप्रदर्शनपूर्वकं

अस्य चित्तमहाव्याधेश्चिकित्सायां परौषधम् ।
स्वायत्तं शृणु वक्ष्यामि सुसाध्यं स्वादु निश्चितम् ॥ ५ ॥
त्यजन्नभिमतं वस्तु यस्तिष्ठति निरामयः ।
जितमेव मनस्तेन बाह्यं प्रसरमुज्झता ॥ ६ ॥
स्वायत्तमेकान्तहितं स्वेप्सितत्यागवेदनम् ।
यस्य दुष्करतां यातं धिक्तं पुरुषकीटकम् ॥ ७ ॥
शास्त्रसंगमतीक्ष्णेन चिन्तातप्तमतापिना ।
छिन्धि त्वमायसेनायो मनसैव मुने मनः ॥ ८ ॥

तन्निरोधोपायमाह—मनसो वृत्तय इत्यादिश्लोकत्रयेण ॥ भोगा विषयसंकल्पा एव विभ्रमाः भोगसंकल्पविभ्रमास्तैर्हेतुभिर्जायमाना या मनसो वृत्तयः शब्दादिवृत्तयः शब्दादिविषयास्ता एवेत्यन्वयः ॥ ४ ॥ औषधस्य परत्वमेव साधयति—स्वायत्तमित्यादिना ॥ लोके किंचिदौषधं सहायं विना स्वेनैव साध्यं न भवति । नेदं तथेत्याह—स्वायत्तं स्वाधीनम्। स्वेनैव साध्यमिति यावत्। स्वाधीनमपि किंचिद्दुःसंपादमस्ति, नेदं तथेत्याह—सुसाध्यमिति ॥ स्वायत्तं सुसाध्यमप्युपयोगकाले किंचिदौषधं सुस्वादु न भवति नेदं तथेत्याह—स्वाद्विति। एवंविधमपि किंचिदौषधमनैकान्तिकफलं नेदं तथेत्याह—निश्चितमिति । फलतो निर्णीतमित्यर्थः ॥ ५ ॥ अभिमतमिष्टं वस्तु त्यजन्निरामयः पश्चात्तापरहित इत्यर्थः। बाह्यं प्रसरं मनसो बाह्यविषयेषु संचारमुज्झता त्यजता ॥ ६ ॥ इष्टविषयत्यागे प्रोत्साहजननाय तमकुर्वाणं निन्दति—स्वायत्तमिति ॥ एकान्तहितं नियमेन हितम् । कदाचिदप्यहितं न भवतीत्यर्थः । स्वेप्सितत्यागः स्वेष्टविषयत्यागः स एव वेदनं वेदनोपायत्वात् ॥ ७ ॥ इष्टवस्तुत्यागो नाम जयोपायश्चेत्तर्हि तत्त्यागस्य क उपाय इत्यत आह—शास्त्रेति ॥ शास्त्रसं-

स्वपौरुषैकसाध्येन स्वेप्सितत्यागरूपिणा ।
मनःप्रशममात्रेण विना नास्ति शुभा गतिः ॥ ९ ॥
सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ।
असंकल्पनशस्त्रेण छिन्नं चित्तं गतं यदा ॥ १० ॥
तां महापदवीमेकां कामप्यधिवसंश्चिरम् ।
चित्तं चिद्भक्षितं कृत्वा चित्तादपि परो भव ॥ ११ ॥
भव भावनया मुक्तो युक्तः परमया धिया ।
धारयात्मानमव्यग्रो ग्रस्तं चित्तं ततः परम् ॥ १२ ॥

गमोऽध्यात्मशास्त्रश्रवणादिः । यद्वा संगमः साधुसंगतिः । यथा लोहकारोऽग्नितप्तमयस्तद्विपरीतेन शस्त्रसंबन्धी घर्षणपाषाणादिस्तत्संगमेनाधारेण छेदनदक्षेण आयसा छिनत्ति तद्वद्योगक्षेमचिन्ताभिस्तप्तमविवेकिमनोऽतापिना चिन्ताभिरसंक्षुब्धेन विवेकशालिमनसा छिन्धि ॥ ८ ॥ मनोनिग्रहं विनापि पुरुषार्थप्राप्तिमाशङ्क्याह—स्वेति ॥ स्वेप्सितत्यागसाध्यत्वादुपचारात्स्वेप्सितत्यागरूपिणा ॥ ९ ॥ कासौ शुभा गतिरित्यत आह—सर्वमिति ॥ संकल्पनं शोभनाशोभनाध्यासलक्षणं तदभावोऽसंकल्पनं तदेव शस्त्रं तेन संकल्पशब्दितशोभनाशोभनाध्यासाभ्यां हि रागद्वेषावुत्पद्येते तत्त्यागे तयोरनुदयाच्चित्तं जितमेव भवतीत्यसंकल्पनमेव शस्त्रमित्युक्तम् ॥ १० ॥ मनोनिग्रहं विना शुभगतेरभावे तदर्थं तन्निग्रहः कार्य इत्याह—तां महापदवीमित्यादिश्लोकत्रयेण ॥ महापदवीति ब्रह्मोच्यते । सा हि महापदवी यस्यामनन्ता जीवा युगपदेवासंबाधं संचरन्ति । कामप्यतर्क्यामित्यर्थः । अधिवसन्नधिरुह्य वसन् । तस्यां मनो धारयन्नित्यर्थः । चिद्भक्षितं चिन्ताग्रस्तं चित्तं चिन्मात्रशेषं कृत्वेत्यर्थः ॥ ११ ॥ आत्मानं चित्तं धारय ब्रह्मणि ततः परं चित्तं चिन्ताग्रस्तं भवति

परं पौरुषमाश्रित्य नीत्वा चित्तमचित्तताम् ।
तां महापदवीमेहि यत्र नासि न चेतरत् ॥ १३ ॥
अनुद्वेगः श्रियो मूलमनुद्वेगात्प्रवर्तते ।
जन्तोर्मनोजयो येन त्रिलोकीविजयस्तृणम् ॥ १४ ॥
ध्यानतो हृदयाकाशे चितिचिच्चक्रधारया ।
मनो मारय निःशङ्कं ततो बध्नन्ति नाधयः ॥ १५ ॥
यदि रम्यमरम्यत्वे त्वया संविदितं विदा ।
छिन्नान्येव तदङ्गानि चित्तस्येति मतिर्मम ॥ १६ ॥

॥ १२ ॥ मनुष्योऽहममुष्य पुत्रः कर्ता भोक्तेत्यभिमन्यमानस्त्वं यत्र नासि यस्यां पदव्यां न भवसि त्वदितरज्जगच्च नास्ति तामद्वितीयां ब्रह्माभिधानमहापदवीमेवैहि गच्छ ॥ १३ ॥ अद्यापि मनोजयो न सिद्ध्येद्विक्षेपस्य तज्जयविघातकत्वात्स न कर्तव्यो मनोजये प्रवृत्तेनेत्याह—अनुद्वेग इति ॥ तथाचोक्तं भगवता—'स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा' इति । येन मनोजयेन त्रिलोकीविजयस्तृणम् । त्रैलोक्यविजयोऽपि तृणवत्प्रतिभातीत्यर्थः ॥ १४ ॥ पुनरपि मनोनिग्रहोपायमाह—ध्यानत इति ॥ हृदयाकाशेऽन्तःकरणवृत्तीनां भावाभावयोः संधेश्च साक्षितया प्रतीयमानायां चिति विषये ध्यानतः प्रवृत्तया चिच्चक्रधारया ज्ञानचक्रधारया ॥ १५ ॥ ननु चित्तस्य स्वभावतो बाह्यप्रवणत्वादात्मध्यानमेव न संभवतीत्यत आह—यदीति ॥ विदा विवेकिना त्वया रम्यं रमणीयं वस्तु अरम्यत्वेऽरमणीयतया मम्नतया संविदितं यदि । रमणीयता बुद्धिगृहीतमरमणीयतया विज्ञातं यदीत्यर्थः । तत्तर्हि रागमूलस्य विषयेषु रमणीयताध्यासस्य निवृत्त्या रागनिवृत्तेः चित्तस्याङ्गानि वृत्तय-

अयं सोऽहमिदं तन्मे एतावन्मात्रकं मनः ।
तद्भावनमात्रेण दात्रेणेव विलूयते ॥ १७ ॥
छिन्नाभ्रमण्डलं व्योम्नि यथा शरदि धूयते ।
वातेनाकल्पनेनैवं तथान्तर्धूयते मनः ॥ १८ ॥
कल्पान्तपवना वान्तु यान्तु चैकत्वमर्णवाः ।
तपन्तु द्वादशादित्या नास्ति निर्मनसः क्षतिः ॥ १९ ॥
असंकल्पनमात्रैकसाध्ये सकलसिद्धिदे ।
असंकल्पातिसाम्राज्ये तिष्ठावष्टब्धतत्पदः ॥ २० ॥
संकल्पमात्रविभवेन मनोरिणा त्वं
निर्जीयसे विविधवस्तुनिदर्शनेन ।
संतोषमात्रविभवेन मनो विजित्य
नित्योदितेन सुखमेहि निरीप्सितेन ॥ २१ ॥

श्छिन्नान्येव भवन्ति ॥ १६ ॥ असंकल्पनशस्त्रेण छिन्नमिति यदुक्तं तन्मनःस्वरूपकथनपूर्वकं प्रपञ्चयति—अयमित्यादिना ॥ अयमहमस्मि सोऽहमस्मीत्यभिज्ञाप्रत्यभिज्ञे । इदं संनिहितं वस्तु एतद्व्यवहितं वस्तु एतदिदं वस्तु ममेत्यादि योजनीयम् । एतावन्मात्रकं एतावत्परिमाणं तद्भावनामात्रेणासंकल्पमात्रेण । संकल्पत्यागेनेतियावत् । दात्रेण लवित्रेण छेदनसाधनेन विलूयते संछिद्यते ॥ १७ ॥ अकल्पनेनासंकल्पेन ॥ १८ ॥ कल्पान्तेत्यादयः प्रायेण स्पष्टार्थाः ॥ १९ ॥ असंकल्पातिसाम्राज्ये असंकल्पो निर्विकल्पसमाधिः स एवातिसाम्राज्यमतिशयितसाम्राज्यं तस्मिन्नवष्टब्धतत्पदोऽवलम्बितब्रह्मस्वरूपः ॥ २० ॥ संतोषमात्रविभवेन मनसा मनो विजित्य नित्योदितेन स्वयंप्रकाशत्वात्सर्वदा भातेन तुर्येणेत्यर्थः । तस्य विशेषणं

परमपावनया हिमशीतया
समतया मतयात्मविदामपि ।
शमितया मितयान्तरहन्तया
यदवशिष्टमजं पदमस्तु तत् ॥ २२ ॥

वसिष्ठ उवाच ॥

नहि चञ्चलताहीनं मनः क्वचन विद्यते ।
चञ्चलत्वं मनोधर्मो वह्नेर्धर्मो यथोष्णता ॥ २३ ॥
यैषा हि चञ्चला स्पन्दशक्तिश्चित्तत्त्वसंस्थिता ।
तां विद्धि मानसीं शक्तिं जगदाडम्बरात्मिकाम् ॥ २४ ॥
यत्तु चञ्चलताहीनं तन्मनोऽमृतमुच्यते ।
तदेव च तपः शास्त्रं सिद्धान्तो मोक्ष उच्यते ॥ २५ ॥
तस्य चञ्चलता यैषा त्वविद्या राम सोच्यते ।
वासनापरनाम्नीं तां विचारेण विनाशय ॥ २६ ॥

निरीप्सितेनेति निरभिलषितेन ॥ २१ ॥ संतोषवत्समताया अपि मनोनिग्रहाङ्गतां दर्शयन्नुपसंहरति—परमपावनयेति ॥ आत्मविदां मतया संमतया इष्टानिष्टप्राप्तौ हर्षविषादरहिततालक्षणसमतया । तत्पूर्वकध्यानाभ्यासेनेत्यर्थः । मितया परिच्छिन्नया अहन्तया अहंभावेन शमितया हेतुना मितया सत्यया यदवशिष्टं पदं तदस्त्वित्यन्वयः । समतापूर्वकध्यानाभ्यासेनाहंकारे शमिते यदनिदंरूपं तुरीयाख्यमवशिष्टं भवति तत्तवास्त्वित्यर्थः ॥ २२ ॥ नहि चञ्चलताहीनमित्यादयो यत्तत्सदसतोर्मध्यमित्यतः प्राक्तनाः श्लोकाः प्रायेण स्पष्टार्थाः ॥ २३ ॥ २४ ॥ तदेव मनसोऽमृतत्वमेव शास्त्रं शास्त्रश्रवणं तत्फलत्वात्प्रामाणिकत्वेनोरीकृतोऽर्थः सिद्धान्तः । स एव मोक्ष उच्यते तदुपायत्वात् ॥ २५ ॥ अविद्याकार्यत्वादविद्योच्यते ।

अविद्यया वासनया तयान्तश्चित्तसत्तया ।
विलीनया त्यागवशात्परं श्रेयोऽधिगम्यते ॥ २७ ॥
यत्तत्सदसतोर्मध्यं यन्मध्यं चित्तजाड्ययोः ।
तन्मनः प्रोच्यते राम द्वयदोलायिताकृति ॥ २८ ॥
जाड्यानुसंधानहृतं जाड्यात्मकतयेद्धया ।
चेतो जडत्वमायाति दृढाभ्यासवशेन हि ॥ २९ ॥
विबोधैकानुसंधानाच्चिदंशात्मतया मनः ।
चिदेकतामुपायाति दृढाभ्यासवशादिह ॥ ३० ॥

वासनामूलत्वाद्वासनापरनाम्नीम् ॥ २६ ॥ त्यागवशादभिमतवस्तुत्यागवशाद्विलीनया। उक्तं च पूर्वम्—'त्यजन्नभिमतं वस्तु यस्तिष्ठति निरामयः । जितमेव मनस्तेन बाह्यं प्रसरमुज्झता' इति ॥ २७ ॥ ज्ञानाभ्यासेनैव मनसो मारणीयतां वक्ष्यंस्तस्य स्वरूपकथनपूर्वकं यथाभ्यासं निष्पद्यमानरूपतामाह—यत्तत्सदसतोरित्यादिश्लोकचतुष्टयेन ॥ सदसतोरात्मानात्मनोर्मध्यं मध्यस्थं यथा लोके मध्यस्थमुभयानुकूलं भवत्येवं मन आत्मानात्मानुकूलं भवति अत उपायविशेषेण जेतव्यमित्यभिप्रायः । आत्मानात्मधर्मयोरपि चैतन्यजाड्ययोरनुकूलं मन इत्याह—यन्मध्यं चित्तजाड्ययोरिति । द्वयदोलायिताकृति अहमिदंवृत्तिद्वयात्मना परिणामशीलत्वादुक्तद्वये दोलायिता आकृतिराकारो यस्य तत्तथा ॥ २८ ॥ जाड्यानुसंधानहृतं जडचिन्तापरवशीकृतं चेतो दृढाभ्यासवशेनेद्धया दीप्तयाभिवृद्धया जाड्यात्मकतया जडत्वमायाति जडभावं प्राप्नोति। जडदेहादिप्रधानं भवतीत्यर्थः । उपलभ्यते हि प्राकृतानां मनस्तादृशम् ॥ २९ ॥ विशिष्टो बोधो विबोधः साक्षी तस्मिन्नेकस्मिन्नेवानुसंधानं विबोधै-

पौरुषेण प्रयत्नेन तस्मिन्नेव पदे मनः।
योज्यते तत्पदं प्राप्य भवत्यभ्यासतो हि यत् ॥ ३१ ॥
अतः पौरुषमाश्रित्य चित्तमाक्रम्य चेतसा।
विशोकं पदमालम्ब्य निरातङ्कः स्थिरो भव ॥ ३२ ॥
मन एव समर्थं हि मनसो दृढनिग्रहे।
अराजा किं समर्थः स्याद्राज्ञो राघव निग्रहे ॥ ३३ ॥
तृष्णाग्राहगृहीतानां संसारार्णवपातिनाम्।
आवर्तैरूह्यमानानां दूरे स्वं मन एव नौः ॥ ३४ ॥
मनसैव मनश्छित्त्वा पाशं परमबन्धनम्।
भवादुत्तारयात्मानं नासावन्येन तार्यते ॥ ३५ ॥
यथोदेति मनोनाम्नी वासनावासितान्तरा।
तां तां परिहरेत्प्राज्ञस्ततोऽविद्याक्षयो भवेत् ॥ ३६ ॥

कानुसंधानं तस्माच्चिदंशेतिविशेषणमत्राप्याकर्षणीयम्। चिदंशोऽनिदमंश आत्मा स्वरूपं यस्य मनसस्तच्चिदंशात्म तस्य भावस्तत्ता तयाहं ब्रह्मास्मीति निरन्तरानुसंधानान्मनश्चिदाकारं सच्चितो भेदेनाविभाव्यमानस्वरूपमवतिष्ठत इत्यर्थः ॥ ३० ॥ उक्तं विशदयति—पौरुषेणेति ॥ पदे वस्तुनि ॥ ३१ ॥ फलितमाह—अत इति ॥ चेतसा विवेकिना चित्तेन। निरातङ्को निरामयः। निरुपद्रव इत्यर्थः ॥ ३२ ॥ चित्तादन्येनापि चित्तस्याक्रमणाशङ्कायामाह—मन एवेत्यादि ॥ ३३ ॥ ग्राहो नक्रः आवर्तैर्दाराद्यावर्तैर्दूरमूह्यमानानामिति संबन्धः ॥ ३४ ॥ ३५ ॥ मनसा मनश्छेदप्रकारमेव संक्षेपविस्तराभ्यामाह—यथोदेतीत्यादिश्लोकद्वयेन ॥ वासनेति वासनामूला वृत्तिर्गृह्यते। वासितं संस्कृतमन्तरं मनःप्रदेशो यया सा वासितान्तरा। वृत्त्या हि नष्टयान्तःकरणे संस्कारो जन्यत इति वेदान्तिन

भोगैकवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् ।
भावाभावौ ततस्त्यक्त्वा निर्विकल्पः सुखी भव ॥ ३७ ॥
एष एव मनोनाशस्त्वविद्यानाश एव च ।
यद्यत्संविदितं किंचित्तत्रास्थाः परिवर्जनम् ॥ ३८ ॥
अनास्थैव हि निर्वाणं दुःखमास्थापरिग्रहः ।
अनेनैव प्रयत्नेन ब्रह्म संपद्यते क्षणात् ॥ ३९ ॥
अविद्याऽविद्यमानैव नष्टप्रज्ञेषु विद्यते ।
नाम्नैवाङ्गीकृताकारा सम्यक्प्रज्ञस्य सा कुतः ॥ ४० ॥

श्रीराम उवाच ॥

अविद्याविभवप्रोत्थं निविडं पुरुषस्य हि ।
नश्यत्यान्ध्यं कथमिदं भूयोऽपि भगवन्वद ॥ ४१ ॥

वसिष्ठ उवाच ॥

तावत्संसारभृगुषु स्वात्मना सह देहिनाम् ।
आन्दोलयति नीरन्ध्रदुःखकण्टकशाखिषु ॥ ४२ ॥

आचक्षते । तार्किकास्तु वृत्त्यैव ज्ञानाख्ययेति । ततो भेदबुद्धित्यागात् अन्तरं भावाभावौ भेदिनौ त्यक्त्वा । तद्विषयविकल्पौ त्यक्त्वेत्यर्थः ॥ ३६ ॥ ३७ ॥ एष एवेत्यादिद्वयं स्पष्टार्थम् । प्रयत्नेन । विषयेषु रमणीयताध्यासत्यागविषयेणेत्यर्थः ॥ ३८ ॥ ३९ ॥ नन्वविद्याया विद्यमानत्वान्मन इव ज्ञानेन निवृत्त्यसंभवात्तन्निवर्तकज्ञानलाभाय मनोनिरोधतदुपायोपन्यासो व्यर्थ इत्याशङ्क्याह—अविद्येति ॥ अविद्यमानेति पदच्छेदः । नाम्नैवाविद्यानाम्नैवाभाव एव हि नाम्नो मुख्योऽर्थः ॥ ४० ॥ सम्यक्प्रज्ञस्य सा कुत इत्युक्तमर्थं तावत्संसारभृगुष्वित्यादिना प्रपञ्चयितुं रामस्य प्रश्नमुत्थापयति—अविद्याविभवप्रोत्थमिति ॥ अज्ञानैश्वर्योद्भूतम् ॥ ४१ ॥ दुःखान्येव कण्ट-

अविद्या यावदस्यास्तु नोत्पन्ना क्षयकारिणी ।
स्वयमात्मावलोकेच्छा मोहसंक्षयदायिनी ॥ ४३ ॥
अस्याः परं प्रपश्यन्त्याः स्वात्मनाशः प्रजायते ।
दृष्टे सर्वगते बोधे स्वयं ह्येषा विलीयते ॥ ४४ ॥
इच्छामात्रमविद्येयं तन्नाशो मोक्ष उच्यते ।
स चासंकल्पशस्त्रेण सिद्धो भवति राघव ॥ ४५ ॥
मनागपि मनोव्योम्नि वासनारजनीक्षये ।
कालिका तनुतामेति चिदादित्यप्रकाशनात् ॥ ४६ ॥

श्रीराम उवाच ॥

यावत्किंचिदिदं दृश्यं साविद्या क्षीयते च सा ।
आत्मभावनया ब्रह्मन्नात्मासौ कीदृशः स्मृतः ॥ ४७ ॥

कशाखिनः कण्टकवृक्षा नीरन्ध्राः कण्टकशाखिनो येषु ते तथोक्तास्तेषु संसारशृङ्गेषु संसारसानुष्वान्दोलयति ॥ ४२ ॥ ४३ ॥ अस्याः शिष्टरूपेण स्थिताया अविद्याया इत्यतः परं परमात्मानम् । पूर्वार्धोक्तं विशदयति—दृष्ट इति ॥ ४४ ॥ सर्वगतबोधशब्दितब्रह्मणो दर्शनस्य क उपाय इत्याशङ्क्य विषयेष्विच्छायां सत्यां श्रवणादेरपि वैयर्थ्यात्तेषु वैतृष्ण्यमेव तदुपाय इत्याशयेनाह—इच्छामात्रमिति ॥ इच्छानाशस्तर्हि केन सिद्ध्यतीत्यत आह—स चेति ॥ विषयेषु रमणीयताध्यासः संकल्पस्तदभावोऽसंकल्पः स एव शस्त्रं तेन ॥ ४५ ॥ ईषद्वैराग्यमपि फलाय संकल्पते किमु वक्तव्यं पूर्णवैराग्यमित्याशयेनाह—मनागिति ॥ मनाक्किंचिद्वासनात्र विषयेच्छा तत्प्रकरणात् । कालिका तिमिरसंहतिः । वासनैव रजनी रात्रिस्तस्या मनागपि क्षये सति चिदेवादित्यस्तस्य प्रकाशनात् अविद्याकालिका तनुतां कृशतामेति ॥ ४६ ॥ यावत्किं-

वसिष्ठ उवाच ॥

चेत्यानुपातरहितं सामान्येन च सर्वगम् ।
यच्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः ॥ ४८ ॥
सर्वं च खल्विदं ब्रह्म नित्यं चिद्धनमव्ययम् ।
कल्पनान्या मनोनाम्नी विद्यते नहि काचन ॥ ४९ ॥
न जायते न म्रियते किंचिदत्र जगत्त्रये ।
नच भावविकाराणां सत्ता क्वचन विद्यते ॥ ५० ॥
केवलं केवलाभासं सर्वसामान्यमक्षयम् ।
चेत्यानुपातरहितं चिन्मात्रमिह विद्यते ॥ ॥ ५१ ॥

चिदिति स्पष्टार्थः ॥ ४७ ॥ चेत्यानुपातरहितं ज्ञेयानुगतिशून्यं यथान्तःकरणं शब्दादीञ्ज्ञेयाननुगच्छति नैवं चित्तत्त्वं ताननुगच्छतीत्यर्थः । सामान्येन समतयैव न्यूनाधिकभावं विनैव सर्वगं चितस्तत्त्वमबाधितं रूपं चित्तत्त्वं सर्वस्याभावादेव सर्वगमित्यप्यनाख्येयम् । यद्वा शब्दप्रवृत्तिनिमित्ताभावादनाख्येयम् । विषयसंनिधावपि निर्विकारम्। अशेषविशेषरहितं परिपूर्णं सत्यं यच्चैतन्यं तदात्मेत्यर्थः । तस्य च ब्रह्मणः सकाशाद्भेदं व्युदस्यति—परमेश्वर इति ॥ ४८ ॥ तस्य वस्तुपरिच्छेदं कालपरिच्छेदं च व्युदस्यति—सर्वं च खल्विति ॥ अव्ययमित्यपक्षयं वारयति । सर्वमिदं ब्रह्मेति बाधायां सामानाधिकरण्यमभूदत एवाह—कल्पनान्येति ॥ सर्वापि कल्पना मनोविलास एवेति मनोनाम्नीत्युक्तम् ॥ ४९ ॥ नन्वसतो वन्ध्यापुत्रादेर्जन्माद्यदर्शनाज्जन्मादिषड्भावविकारवत्तयोपलभ्यमानं जगत्कथं तत्र विद्यत इत्यत आह—न जायत इति ॥ यस्माज्जगज्जन्मादिनिरूपणानर्हं तस्मात्सत्ता न विद्यत इति युक्तमुक्तम् ॥ ५० ॥ उपसंहरति—केवलमिति ॥ केवलमद्वितीयं केवलाभासं केवलं प्रमा-

तस्मिन्नित्ये तते शुद्धे चिन्मात्रे निरुपद्रवे।
शान्ते समसमाभोगे निर्विकारोदितात्मनि ॥ ५२ ॥
यैषा स्वभावातिगतं स्वयं संकल्प्य धावति।
चिच्चेत्यं स्वयमम्लाना मननान्मन उच्यते ॥ ५३ ॥
एतस्मात्सर्वगाद्देवात्सर्वशक्तेर्महात्मनः।
विभागकल्पनाशक्तिर्लहरीवोत्थिताम्भसः ॥ ५४ ॥
अतः संकल्पसिद्धेयं संकल्पेनैव नश्यति।
येनैव जाता तेनैव वह्निज्वालेव वायुना ॥ ५५ ॥

णव्यापारं विनैवाभासते प्रकाशत इति केवलाभासम्। स्वयंप्रकाशमित्यर्थः। सर्वसामान्यं सममेव सामान्यम्। ब्रह्मादिस्तम्बपर्यन्तेष्वन्यूनाधिकतयावस्थितमित्यर्थः। चेत्यानुपातरहितं चेत्येषु ज्ञेयेषु शब्दादिष्वनुपातस्तदाकारपरिणामस्तेन शून्यम् ॥ ५१ ॥ उक्तस्वरूपमनूद्य तस्मिन्नधिष्ठाने तद्विपरीतद्वैतानर्थकल्पकमाह—तस्मिन्नित्यादिना त्रयेण ॥ तते व्याप्ते समसमोऽत्यन्तं सम आभोगः परिपूर्णता यस्य तत्समसमाभोगम्। तस्मिन्निर्विकारतयोदितो भात आत्मा स्वरूपं यस्य तन्निर्विकारोदितात्म तस्मिन् ॥ ५२ ॥ यैषेति ॥ स्वभावं सत्यज्ञानादिस्वरूपमतिगतमतिक्रान्तं स्वभावातिगतं स्वभावविपरीतं जडादिरूपं चेत्यं दृश्यं संकल्प्य या चिज्जडाजडलक्षणा स्वसंकल्पितं चेत्यमेवानुधावति नाधिष्ठानचिन्मात्रं सा स्वयमम्लाना स्वतो ब्रह्मरूपत्वान्म्लानिरहिताप्युपद्रवरहिताप्युपाधिसंश्लेषान्म्लानेव प्रतीयमाना मन एवोच्यते। तदुपाधित्वात्। 'मन्वानो मन' इतिश्रुतेः॥५३॥ विभागकल्पनाशक्तिः भेदकल्पनाशक्तिरुत्थिता साम्भसो मनोरूपेणोद्गता लहरीवोर्मिरिव ॥ ५४ ॥ एवं द्वैतानर्थमूलं प्रदर्श्य तन्ना-

नाहं ब्रह्मेति संकल्पात्सुदृढाद्बध्यते मनः ।
सर्वं ब्रह्मेति संकल्पात्सुदृढान्मुच्यते मनः ॥ ५६ ॥
कृशोऽतिदुःखी बद्धोऽहं हस्तपादादिमानहम् ।
इति भावानुरूपेण व्यवहारेण बध्यते ॥ ५७ ॥
नाहं दुःखी न मे देहो बन्धः कस्यात्मनः स्थितः ।
इति भावानुरूपेण व्यवहारेण मुच्यते ॥ ५८ ॥
नाहं मांसं न वास्थीनि देहादन्यः परोऽस्म्यहम् ।
इति निश्चयवानन्तः क्षीणाविद्यो विमुच्यते ॥ ५९ ॥
कल्पितैवमविद्येयमनात्मन्यात्मभावना ।
पुरुषेणाप्रबुद्धेन न प्रबुद्धेन राघव ॥ ६० ॥
मनो यदनुसंधत्ते तत्सर्वेन्द्रियवृत्तयः ।
क्षणात्संपादयन्त्येता राजाज्ञामिव मन्त्रिणः ॥ ६१ ॥
परं पौरुषमाश्रित्य यत्नात्परमया धिया ।
भोगाशाभावनां चित्तात्समूलामेवमुद्धरेत् ॥ ६२ ॥

शोपायमाह—अत इति ॥ यत इयं मनोनाम्नी विभागकल्पनाशक्तिरुचितकारणरहिता नहि ब्रह्म निर्विकारं वस्तु तदुचितं कारणं भवितुमर्हति, अतः संकल्पसिद्धा प्रतिभाससिद्धा सा च संकल्पेनैव वक्ष्यमाणेन सर्वं ब्रह्मेत्येवंरूपेण नश्यति । येनैवेत्यादयो मनो यदनुसंधत्त इत्यतः प्राक्तनाः श्लोकाः स्पष्टार्थाः ॥ ५५ ॥ ५६ ॥ ५७ ॥ ॥ ५८ ॥ ५९ ॥ ६० ॥ न केवलं संकल्पितेन मनसो बन्धकत्वं संकल्पितार्थेष्विन्द्रियप्रवर्तकतयापीत्याह—मनो यदन्विति ॥ ६१ ॥ यतः सत्यायामेव रागवासनायां मनसोऽपि बन्धकत्वं नासत्यायामतः सा त्याज्येत्याह—परं पौरुषमिति ॥ भोगाशाभावनां भोगवासनां मूले-

मम पुत्रा मम धनमयं सोऽहमिदं मम ।
इतीयमिन्द्रजालेन वासनैवाधिवल्गति ॥ ६३ ॥
माभवाज्ञो भव ज्ञस्त्वं जहि संसारवासनाम् ।
अनात्मन्यात्मभावेन किमज्ञ इव रोदिषि ॥ ६४ ॥
कस्तवायं जडो मूको देहो भवति राघव ।
यदर्थं सुखदुःखाभ्यामवशः परिभूयसे ॥ ६५ ॥
अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् ।
यदसत्यमविद्याख्यं तत्पुरः परिवल्गति ॥ ६६ ॥
तिष्ठतस्तव कार्येषु मास्तु रागानुरञ्जना ।
स्फटिकस्येव चित्राणि प्रतिबिम्बानि गृह्णतः ॥ ६७ ॥

वाल्मीकिरुवाच ॥

एवमुक्तो भगवता वसिष्ठेन महात्मना ।
विकासितान्तःकरणो रामो गिरमथाददे ॥ ६८ ॥

श्रीराम उवाच ॥

अहो विचित्रं पद्मोत्थैर्बद्धास्तन्तुभिरद्रयः ।
अविद्यमाना या विद्या तया विश्वं खिलीकृतम् ॥ ६९ ॥

नाध्यासलक्षणेन सह वर्तत इति समूला ताम् ॥६२॥ तर्ह्यध्यासलक्षण-मूलोद्धरणार्थं किं कार्यमित्याशङ्क्य तन्मूलवासनोद्धरणं कार्यमित्याह—मम पुत्रा इति॥ इन्द्रजालेनेतीत्थंभावे तृतीया। इन्द्रजालस्वरूपकथनं मम पुत्रा इत्यर्धेन ॥ ६३ ॥ ६४ ॥ कस्तवेति स्पष्टार्थः ॥ ६५ ॥ अनुक्रोशव्याजेनाविद्यानिरासाय प्रोत्साहयति—अहो न्विति ॥६६॥ अविद्यानिरासाय प्रयतमानेन अवर्जनीयानि भुक्त्यादिकार्याणि कुर्वे-तापि न तत्र रागः कार्य इत्याह—तिष्ठत इति॥ रागानुरञ्जना रागानुषङ्गः ॥ ६७ ॥ ६८ ॥ पद्मोत्थतन्तुभिरद्रिबन्धनतुल्यं किमत्राश्चर्यं दृष्टं

इदं तद्वज्रतां यातं तृणमत्र जगत्त्रये ।
अविद्ययापि यन्नाम सर्गो निगडबन्धनः ॥ ७० ॥
अन्यच्च संशयोऽयं मे महात्मन्हृदि वर्तते ।
लवणोऽसौ महाभागः किंनामा पदमाप्तवान् ॥ ७१ ॥

वसिष्ठ उवाच ॥

अत्र ते शृणु वक्ष्यामि वृत्तान्तमिममद्भुतम् ।
लवणोऽसौ यथा जातश्चण्डालत्वं मनोभ्रमात् ॥ ७२ ॥
मनः कर्तृ फलं भुङ्क्ते न शरीरं क्रियाफलम् ।
येनैतद्बुध्यसे नूनं तदाकर्णय राघव ॥ ७३ ॥
हरिश्चन्द्रकुलोत्थेन लवणेन पुरानघ ।
एकान्तैकोपविष्टेन चिन्तितं मनसा चिरम् ॥ ७४ ॥
पितामहो मे सुमहान् राजसूयस्य याजकः ।
अहं तस्य कुले जातस्तं यजे मनसा मखम् ॥ ७५ ॥
इति संचिन्त्य मनसा कृत्वा संभारमग्रतः ।
राजसूयस्य दीक्षायां प्रविवेश महीपतिः ॥ ७६ ॥

तत्राह—अविद्यमानेत्यादि ॥ खिलीकृतं रिक्तीकृतम् । पुरुषार्थरहितं कृतमित्यर्थः ॥६९॥ सर्गः प्रपञ्चः । अपिशब्दो नामशब्दश्च कुत्सने । अविद्ययापि सर्गो निगडबन्धन इति यन्नाम तस्मात्तृणमात्रं तदिदं जगत्त्रयं वज्रतां प्राप्तमित्यन्वयः ॥ ७० ॥ अन्यच्च प्रष्टव्यमस्तीति शेषः ॥ ७१ ॥ ७२ ॥ वक्ष्यमाणवृत्तान्तकथनफलमाह—मन इति ॥ साभासं मन एव कर्तृ तदेव च फलं क्रियाफलं भुङ्क्ते न शरीरं येन वृत्तेन तद्वृत्तमाकर्णय शृणु ॥ ७३ ॥ ७४ ॥ मखं क्रतुं यजे कुर्वे इत्यन्वयः ॥ ७५ ॥ मनसेति पदं दीक्षायामित्यनेनापि संब-

ऋत्विजश्चाह्वयामास सन्मुखीकृत्य देवताः ।
देवानामन्त्रयामास ज्वालयामास पावकम् ॥ ७७ ॥

तस्येत्थं यजमानस्य मनसोपवनान्तरे ।
ययौ संवत्सरः साग्रो देवर्षिद्विजपूजया ॥ ७८ ॥

भूतेभ्यो द्विजपूर्वेभ्यो दत्त्वा सर्वस्वदाक्षिणाम् ।
व्यबुध्यत दिनस्यान्ते स एवोपवने नृपः ७९ ॥

एवं स लवणो राजा राजसूयमवाप्तवान् ।
मनसैव हि जुष्टेन युक्तस्तस्य फलेन च ॥ ८० ॥

अतश्चित्तं परं विद्धि भोक्तारं सुखदुःखयोः ।
जन्मनः पावनोपाये सत्ये योजय राघव ॥ ८१ ॥

शृणु शाम्बरिकस्याथ वृत्तान्तं रघुनन्दन ।
यदा शाम्बरिकः काले संप्राप्तो लावणीं सभाम् ॥ ८२ ॥

तदाहमवसं तत्र तत्प्रत्यक्षेण दृष्टवान् ।
अहं सभ्यैस्ततस्तत्र गते शाम्बरकारिणि ॥ ८३ ॥

किमेतदिति यत्तेन पृष्टेन पृथिवीभुजा ।
चिन्तयित्वा मया दृष्टा तत्र तत्कथितं वचः ॥ ८४ ॥

ध्यते । सप्तमी द्वितीयार्थे ॥ ७६ ॥ ७७ ॥ अग्रेणाधिकेन सह वर्तत इति साग्रः । ईषदधिकः संवत्सरो गत इति । तस्य मनसि प्रतिभातं न वस्तुतः । साग्रः संवत्सरो गतः व्यबुध्यत दिनस्यान्त इति वक्ष्यमाणविरोधात् ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ शाम्बरिक ऐन्द्रजालिकः । लावणीं लवणराजसंबन्धिनीम् ॥ ८२ ॥ शम्बरस्यासुरस्येदं शाम्बरमिन्द्रजालं तत्कारिणि ॥ ८३ ॥ ८४ ॥ तत्

शृणु तत्ते प्रवक्ष्यामि राम शाम्बरिकेहितम् ।
राजसूयस्य कर्तारो ये हि ते द्वादशाब्दिकम् ॥ ८५ ॥
अतिदुःखं प्राप्नुवन्ति नानाकारदशामयम् ।
अतः शक्रेण गगनाद्दुःखाय लवणस्य सः ॥ ८६ ॥
प्रहितो देवदूतो हि राम शाम्बरिकाकृतिः ।
राजसूयक्रियाकर्तुस्तस्य दत्त्वा महापदम् ॥ ८७ ॥
प्रहितो देवदूतो हि राम शाम्बरिकाकृतिः ।
अगमत्स नभोमार्गं सुरसिद्धनिषेवितम् ॥ ८८ ॥

वसिष्ठ उवाच ॥

अतः परं प्रवक्ष्यामि शृणु राम यथातथम् ।
अज्ञानभूः सप्तपदा ज्ञभूः सप्तपदैव हि ॥ ८९ ॥

कारणम् । ईहितं चेष्टितम् । नानाकारदशामयं नानाकारावस्थाप्रचुरं द्वादशाब्दिकम् । दुःखमपि प्राप्नुवन्तीति यदुक्तं न तद्राजसूयस्य पुरुषहितैकप्रवृत्तवेदविहितस्य फलम् ॥ ८५ ॥ ८६ ॥ किंतु तदानीमुद्बुद्धपूर्वदुरितस्यैवेत्यवगन्तव्यम् । महती चासावापच्च महापत्ताम् ॥ ८७ ॥ ८८ ॥ एवं किंनामापदमाप्तवानिति प्रासङ्गिकप्रश्नस्योत्तरमाख्यायेदानीम्—'अविद्या विद्यमानैव नष्टप्रज्ञेषु विद्यते । नाम्नैवाङ्गीकृताकारा सम्यक्प्रज्ञस्य सा कुतः' इत्यत्रोक्ता हेया विद्या । योपादेया विद्या तां प्रज्ञानापरपर्यायविद्यां चोदितां संक्षेपविस्ताराभ्यामवस्थाकथनादिना प्रपञ्चयति—अज्ञानभूः सप्तपदेत्यादिना । अज्ञानमेव भूः भूमिः । यथा लोके भूः स्वामिने स्वानुकूलं फलं ददाति तथाऽज्ञानमपि भूः सा च सप्त पदानि यस्यां सन्तीति सप्तपदा । सप्तावस्थोपेतेत्यर्थः । ज्ञभूर्ज्ञानभूमिरित्यर्थः । ज्ञस्य भूर्ज्ञभूरिति पक्षेऽपि स एवार्थः । हिशब्दो विद्वत्प्रसिद्धौ ॥ ८९ ॥ पदान्तराण्यवान्तराव-

पदान्तराण्यसंख्यानि भवन्त्यन्योन्यमेतयोः ।
एते प्रतिपदं बद्धमूले स्वं फलतः फलम् ॥ ९० ॥
स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोऽहन्त्ववेदनम् ।
एतत्संक्षिप्य तत्प्रोक्तं तज्ज्ञात्वा ज्ञत्वलक्षणम् ॥ ९१ ॥
शुद्धसन्मात्रसंवित्तेः स्वरूपान्न चलन्ति ये ।
रागद्वेषादयो भावास्तेषां नाज्ञत्वसंभवः ॥ ९२ ॥
यत्स्वरूपपरिभ्रंशश्चेत्यार्थचितिमज्जनम् ।
एतस्मादपरो मोहो न भूतो न भविष्यति ॥ ९३ ॥
अर्थादर्थान्तरं चित्ते याति मध्ये तु या स्थितिः ।
निरस्तमननाकारा स्वरूपस्थितिरुच्यते ॥ ९४ ॥

स्था इत्यर्थः । वक्ष्यति च—एकैका शतशाखात्र नानाविभवरूपिणी'ति । एतयोर्भूम्योः सप्तापि पदानि पृथक्पृथक्फलं प्रयच्छन्ति तानि च प्ररूढमूलान्येव न प्रशिथिलमूलानि फलं प्रयच्छन्तीत्याह—एते इति ॥ प्रतिपदमित्येतत्फलत इति क्रियापदेनापि संबध्यते ॥ ९० ॥ भूम्योः स्वामिनौ लक्षयति—स्वरूपेति ॥ तद्भ्रंशः स्वरूपावस्थितिलक्षणमुक्तेः सकाशाद्भ्रंशः । तत्स्वरूपमेवाह—अहन्त्ववेदनमिति ॥ अहम्भावज्ञानम् । अहमिति भ्रान्तिरित्यर्थः ॥ ९१ ॥ न केवलं मुक्तिशाली तज्ज्ञोऽहङ्कारादिबन्धशाल्यज्ञ इति तयोर्लक्षणे रागादिराहित्यतत्साहित्ये अपि तयोर्लक्षणे इत्याह—शुद्धेत्यादिना ॥ ९२ ॥ चेत्यार्थोऽहमादिर्ज्ञेयपदार्थः तद्विषया चिच्चेत्यार्थचिदहमादिज्ञेयपदार्थभ्रान्तिः तस्यां मज्जनं नाम तत्परत्वम् । मोहशब्देन मोहकार्यं गृह्यते । अहङ्काराद्यध्यासपरत्वादन्यदतिशयितं मोहकार्यं न भूतं न भविष्यति । इदमेव परमं मोहकार्यं रागद्वेषादिसकलदोषनिदानत्वादित्यर्थः ॥ ९३ ॥ चित्ते अर्थादर्थान्तरं विषयाद्विषयान्तरं याति

संशान्तसर्वसंकल्पा या शिलावदवस्थितिः ।
जाड्यनिद्राविनिर्मुक्ता सा स्वरूपस्थितिः स्मृता ॥ ९५ ॥
अहन्तांशेक्षते शान्ते भेदे निष्पन्दचित्तता ।
अजडा या प्रकचति तत्स्वरूपमिति स्थितम् ॥ ९६ ॥
बीजजाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च ।
जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत्सुषुप्तकम् ॥ ९७ ॥
इति सप्तविधो मोहः पुनरेव परस्परम् ।
श्लिष्टो भवत्यनेकाख्यः शृणु तस्य च लक्षणम् ॥ ९८ ॥

गच्छति सति मध्ये वृत्त्योः संधौ या द्रष्टुः स्थितिः। कीदृशी सेत्यत आह—निरस्तमननाकारा निरस्तविकल्पा । अयमर्थः—वृत्तिसंधिसाक्षितया यन्निर्विकल्पकं चैतन्यमस्ति तदेव स्वरूपं तदात्मनावस्थितिः स्वरूपस्थितिरिति ॥ ९४ ॥ संशान्तसर्वसंकल्पेति जागरितमोहार्थोदित्यादिस्वरूपावस्थितिर्मुक्तिरित्युक्तं तत्र कासौ स्वरूपावस्थितिरित्यत आह—संशान्तेति ॥ जागरितं व्युदस्यति—जाड्यनिद्राविनिर्मुक्तेति ॥ सुषुप्तिस्वप्नौ शिलावत् । प्रकटपाषाणवदित्यर्थः । अवस्थात्रयमतीत्य तुरीयतयाऽवस्थानं स्वरूपस्थितिरित्यर्थः ॥ ९५ ॥ अथ या निष्पन्दचित्तता निश्चलचित्तता तत्साक्षिभूतेत्यर्थः । प्रकचति प्रकाशते तत्स्वरूपमिति स्थितम् ॥ ९६ ॥ ९७ ॥ वेदान्तेषु अज्ञानभूः सप्तपदेत्युक्तं विवृणोति—बीजजाग्रदित्यादिना नानाविभवरूपिणीत्यन्तेन ॥ सप्तविधः सप्तप्रकारः । सप्तावस्थो मोहोऽज्ञानापरपर्यायः परस्परं श्लिष्टः संबद्धः सन् पुनरप्यनेकाख्यो भवति । सप्तानामवस्थानां यथासंभवं संभेदविशेषेण मोहः पुनरप्यनेकावस्थो भवतीत्यर्थः । तथाहि द्वयोरवस्थयोस्तिसृणां चतसृणां पञ्चानां षण्णां

प्रथमं चेतनं यत्स्यादनाख्यं निर्मलं चितः ।
भविष्यच्चितिजीवादिनामशब्दार्थभाजनम् ॥ ९९ ॥
बीजरूपं स्थितं जाग्रद्बीजजाग्रत्तदुच्यते ।
एषा ज्ञप्तेर्नवावस्था त्वं जाग्रत्संस्थितिं शृणु ॥ १०० ॥
नवप्रसूतस्य परादयं चाहमिदं मम ।
इति यः प्रत्ययः स्वच्छस्तज्जाग्रत्प्रागभावनात् ॥ १ ॥

सप्तानां वा क्षणे क्षणे व्यत्ययेन उत्पादे सति पुनरप्यनेकावस्थो भवति ॥ ९८ ॥ प्रथममिति ॥ सुषुप्तेरुत्थाने प्रथमं चितो विश्वरूपायाः संबन्धि यच्चेतनं प्रतिबिम्बलक्षणं तद्बीजं जाग्रदित्युच्यत इत्यन्वयः । चेतनं विशिनष्टि—अनाख्यमित्यादिना ॥ अनाख्यं जीवाद्याख्यया तदानीमनुल्लेख्यं भविष्यच्चितिजीवादिनामशब्दार्थभाजनं भविष्यतां चितिजीवचेतनादिनामात्मकशब्दानां तदर्थानां च चित्तत्वप्राणभृत्त्वज्ञानकर्तृत्वादिलक्षणानां भाजनं पात्रमालम्बनमित्यर्थः ॥ ९९ ॥ बीजजाग्रच्छब्दं विगृह्णाति—बीजरूपमिति ॥ उत्तरावस्थानां बीजरूपेण स्थितं च तज्जाग्रच्चेति बीजजाग्रदिति । एषेति बीजजाग्रत्परामृश्यते । विधेयावस्थानुरोधेन तस्य स्त्रीलिङ्गता । ज्ञप्तेर्जीवस्य नवा नूतनावस्था वृक्षस्याङ्कुरावस्थेव ॥ १०० ॥ परात्परमात्मनो बिम्बात् नवप्रसूतस्याभिनवजातस्य जीवस्येति यः प्रत्ययस्तज्जाग्रदिति संबन्धः । इतिशब्दपरामृष्टमाह—य इति ॥ तत्रायं कार्यकारणसंघातोऽहमस्मीदं गृहादिकं ममेत्येवंरूपो यः प्रत्ययो जाग्रन्नामावस्थान्तरं न बीजजाग्रत् । कुतः अङ्कुरावस्थानन्तरभावी द्विदलावस्थेव । नापि महाजाग्रत् प्रागभावनात्पूर्वानुभवाभावात् पूर्वानुभवसंस्कारमपेक्ष्य हि प्रत्यभिज्ञारूपं महाजाग्रज्जायते

अयं सोऽहमिदं तन्म इति जन्मान्तरोदितः ।
पीवरः प्रत्ययः प्रोक्तो महाजाग्रदिति स्फुरन् ॥ २ ॥
अरूढमथवा रूढं सर्वथा तन्मयात्मकम् ।
यज्जाग्रतो मनोराज्यं जाग्रत्स्वप्नः स उच्यते ॥ ३ ॥
द्विचन्द्रशुक्तिकारूप्यमृगतृष्णादिभेदतः ।
अभ्यासं जाग्रतः प्राप्य स्वप्नोऽनेकविधो भवेत् ॥ ४ ॥
अल्पकालं मया दृष्टमेतन्नो वेति यत्र हि ।
परामर्शः प्रबुद्धस्य स स्वप्न इति कथ्यते ॥ ५ ॥
चिरसंदर्शनाभावादप्रफुल्लबृहद्वपुः ।
चिरकालानुवृत्तश्च स्वप्नो जाग्रदिवोदितः ॥ ६ ॥

॥ १ ॥ जातिस्मरे पुरुषे महाजाग्रद्दर्शयति—अयं सोऽहमिति ॥ सोऽहमिति जन्मान्तरानुभवसंस्कारादुत्पन्न इति यावत्। यद्वा पूर्वजन्मापेक्षया वर्तमानजन्मैव जन्मान्तरं तस्मिन्प्राक्संस्कारादुदितः पीवरः पीनो दृढ इत्यर्थः। अस्य च महाजाग्रत्त्वं महाकालस्पर्शितत्वात्पीवरत्वाच्चेति ज्ञेयम्। केचित्तु जन्मान्तरोदितो वान्तरोदित इति व्याचक्षाणाः सर्वसाधारणास्तादृशप्रत्ययो महाजाग्रदिति मन्यन्ते ॥२॥अरूढमिति॥ अरूढं अदृष्टं निष्पन्नं रूढं दृष्टं निष्पन्नं तन्मयात्मकं तन्मयस्वरूपम्। विषयस्वरूपमित्यर्थः। मनोराज्यशब्देनात्र प्रमारूपस्मृतिविलक्षणः सर्वोऽपि प्रत्ययो गृह्यते ॥ ३ ॥ अत एवाह—द्विचन्द्रेति ॥ पूर्वं कदाचिदपि विषयाननुभवे तद्विपर्यासायोगादभ्यासं प्राप्येत्युक्तम् ॥ ४ ॥ अल्पकालमिति ॥ प्रबुद्धस्य स्वप्नादुत्थितस्य परामर्शो यत्र यस्मिन्काले भवति तदा स स्वप्न इति कथ्यत इति संबन्धः। इतिशब्दपरामृष्टमाह—अल्पेति ॥ एतन्नो वेति संशयः कथमत आह ॥ ५ ॥ चिरसंदर्शनाभावाति ॥ अप्रफुल्लबृहद्वपुः

स्वप्नजाग्रदिति प्रोक्तो जाग्रत्यपि परिस्फुरन्।
षडवस्थापरित्यागे जडा जीवस्य या स्थितिः ॥ ७ ॥
भविष्यद्दुःखबोधाढ्या सौषुप्ती सोच्यते गतिः।
जगत्तस्यामवस्थायामन्धे तमसि लीयते ॥ ८ ॥
स्वप्नावस्था इति प्रोक्ता मया ज्ञानस्य राघव।
एकैका शतसंख्यात्र नानाविभवरूपिणी ॥ ९ ॥

वसिष्ठ उवाच ॥

इमां सप्तपदां ज्ञानभूमिमाकर्णयानघ।
नानया ज्ञातया भूयो मोहपङ्के निमज्जति ॥ ११० ॥
वदन्ति बहुभेदेन ज्ञानिनो योगभूमिकाः।
मम त्वभिमता नूनमिमा एव सुखप्रदाः ॥ ११ ॥
अवबोधं विदुर्ज्ञानं तदिदं साप्तभूमिकम्।
मुक्तिस्तु ज्ञेयमित्युक्ता भूमिका भूमिकान्तरे ॥ १२ ॥
ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता।
विचारणा द्वितीया तु तृतीया तनुमानसा ॥ १३ ॥

अप्रफुल्लमविस्पष्टं बृहद्वपुः स्थूलं स्वरूपं यस्य स तथोक्तः। जाग्रदिवोदितः जागरितमिव विस्पष्टमुदितः ॥ ६ ॥ जाग्रत्यपि परिस्फुरन् जागरेऽतिस्फुरणारूढतया स्पष्टं प्रकाशमान इत्यर्थः ॥ ७ ॥ भविष्यद्दुःखबोधाढ्या जाग्रत्स्वप्नयोर्भाविदुःखस्य बोधोऽनुभवः तदाढ्या तद्बीजवासनोपेतत्वात्तद्दार्ढ्यत्वम्। गतिरवस्था तमस्यज्ञानेऽन्तर्लीयते संस्कारशेषमिति शेषः ॥ ८ ॥ नानाविभवरूपिणी। विविधकार्यात्मिकेत्यर्थः ॥ ९ ॥ ज्ञभूः सप्तपदैव हीत्युक्तं विवृणोति—इमां सप्तपदामित्यादिना ॥ ११० ॥ ११ ॥ अवबोधोऽवगतिः साक्षादनुभवः। साप्तभूमिकं सप्तभूमिषु भवम्। सप्ता-

सत्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ १४ ॥
आसामन्ते स्थिता मुक्तिस्तस्यां भूयो न शोचति ।
एतासां भूमिकानां त्वमिदं निर्वचनं शृणु ॥ १५ ॥
किं मूढ इव तिष्ठामि प्रेक्षेऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ १६ ॥
शास्त्रसज्जनसंपर्को वैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ १७ ॥
विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वरक्तता ।
यत्र सा तनुताभावात्प्रोच्यते तनुमानसा ॥ १८ ॥

वस्थोपेतमित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ निर्वचनं निरुक्तिः निरुक्ष्यकथनम् ॥ १५ ॥ अहं मूढ एव किमर्थं स्थितोऽस्मि । शास्त्रसज्जनैरुपायैः आत्मतत्त्वं प्रेक्षे । प्रकर्षेणेक्ष इत्यर्थः । इच्छा वैराग्यपूर्विका शुभेच्छेत्युच्यते । इयं च प्रथमा भूमिका पुण्यकर्मफलभूतप्रत्यग्विविदिषारूपा । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति श्रुत्यादौ प्रसिद्धा । तथाच श्रुतिः—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति । तथाच वार्तिकम्—'प्रत्यग्विविदिषां बुद्धेः कर्माण्युत्पाद्य शुद्धितः । कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इवे'ति ॥ १६ ॥ अध्यात्मशास्त्रविचारः सदाचारप्रवृत्तिर्विचारणाप्रधानत्वाद्विचारणेत्युच्यते इति निर्वचनमभिप्रेत्याह—शास्त्रेति ॥ शास्त्रसंपर्कोऽध्यात्मशास्त्रविचारणा सज्जनसंपर्को ब्रह्मनिष्ठसेवा । शास्त्रसज्जनसंपर्कैरुपायैर्वैराग्याभ्यासो नाम वैराग्यहेतुभूतदृश्यमिथ्यात्वदोषदर्शनाभ्यासः । एषा च द्वितीया भूमिका ॥ १७ ॥ 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'

भूमिकात्रितयाभ्यासाच्चित्ताऽर्थविरतेर्वशात् ।
सत्वात्मनि स्थितिः शुद्धे सत्वापत्तिरुदाहृता ॥ १९ ॥

इति श्रुत्युक्तश्रवणमननरूपां निदिध्यासनात्मिकां तृतीयां भूमिकां निर्वक्ति—विचारणेति ॥ यत्र यस्यामवस्थायां पूर्वभूमिकाभ्यां विचारणाशुभेच्छाभ्यां हेतुभ्यां इन्द्रियार्थेष्वनात्मपदार्थेष्वरक्तता विरक्ततोदिता सावस्था तनुमानसोच्यते । तनु मानसं यस्यां सा तत्र हेतुस्तनुताभावात् । स्थौल्यकारणरागनिवृत्त्या मानसस्य तनुत्वसद्भावाद्भूमिकाया निदिध्यासनरूपतां वक्ष्यति भगवान्वसिष्ठः—'अनास्थयेति भावानां पदभावनमान्तरम् । लक्ष्यार्थलग्नमनसः सामान्योऽसावसंगमः ॥ संसाराम्बुनिधेः पारे सारे परमकारणे । यन्मौनमाश्रितं शान्तं तच्छ्रेष्ठासङ्ग उच्यते ॥ श्रेष्ठासंगमता ह्येषा तृतीया भूमिकाऽत्र हि । भवति प्रोज्झिताशेषसंकल्पकलनः पुमानि'ति । एतच्च भूमिकात्रयं ब्रह्मज्ञानसाधनमेव नतु ज्ञानकोटावन्तर्भवति भेदसत्यताबुद्धेरविनष्टत्वात् । अतएवैतज्जागरणमिति वक्ष्यति वसिष्ठः—'भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्मृतम् । यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यत'इति । 'भूमिकात्रितयं जाग्रच्चतुर्थी स्वप्न उच्यते' इति च । तथा महद्भिरप्युक्तम्—'अत्र भूमिकात्रितयं ब्रह्मविद्यायाः साधनमेव नतु विद्याकोटावन्तर्भवति । भेदसत्यत्वबुद्धेरनिवर्त्यत्वात् । अतएवैतज्जागरणमिति व्यपदिश्यत'इति ॥ १८ ॥ भूमिकेति ॥ त्रितयस्य ज्ञानभूमिकात्वं तु सत्वात्मनि तत्साधनत्वेनोपचारादिति ज्ञेयम् । अर्थविरतिरनात्मपदार्थेष्वरुचिः । चित्ते निष्पन्नाया अर्थविरतेर्वशात्सत्त्वात्मनि स्थितिः सत्तामात्रस्वरूपे ब्रह्मण्यवस्थितिः । तथाच वक्ष्यति—'सत्तावशेष एवास्ते चतुर्थी भूमिकां

दशाचतुष्टयाभ्यासादसंसर्गफलाय च ।
रूढसत्त्वचमत्कारा प्रोक्ता संसक्तिनामिका ॥ १२० ॥
भूमिकापञ्चकाभ्यासात्स्वात्मारामतया दृढम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥ २१ ॥

गत'इति । यच्च स्वप्नाख्या चतुर्थी भूमिरपरोक्षज्ञानमेव न साधनकोटावन्तर्भवति । यतो वक्ष्यति—'सम्यग्ज्ञानोदये चित्ते पूर्णचन्द्रोदयोपमे । निर्विभागमनाद्यन्तं योगिनो युक्तचेतसः ॥ समं सर्वं प्रपश्यन्ति चतुर्थीं भूमिकां गता'इति । पञ्चम्यादिभूमिकात्रये तु जीवन्मुक्तेस्तारतम्यं भवति । तत्र सप्तमी भूमिर्विदेहमुक्तिसदृशी । तथाचोक्तम्—'जीवन्मुक्तेस्तारतम्यं शिष्टे भूमित्रये भवेत् । विदेहमुक्तिसदृशी सप्तमी भूमिरुच्यत'इति । तास्तिस्रोऽसंप्रज्ञातसमाध्यभ्यासकृतेन चित्तोपरतितारतम्येन सिध्यन्ति । तदप्युक्तम्—पञ्चम्यादयस्तिस्रो भूमयो निर्विकल्पसमाध्यभ्यासकृतेन चित्तविश्रान्तितारतम्येन संपद्यन्त'इति ॥ १९ ॥ दशेति ॥ दशाचतुष्टयाभ्यासादिति प्रागुक्तावस्थाचतुष्टयस्याभ्यासात्कारणात् रूढसत्त्वचमत्कारा रूढः दृढनिष्पन्नः सत्त्वस्यान्तःकरणस्य चमत्कारः परमसूक्ष्मब्रह्मानन्दग्रहणवैदग्ध्यं यस्यां भूमिकायां सा तथोक्ता । यद्वा सत्त्वशब्देन सत्त्वगुणो गृह्यते । प्रवृद्धसत्त्वगुणचातुरी हि पञ्चमी भूमिका भवति । किमर्थं रूढसत्त्वचमत्कारेत्यत आह—असंसर्गफलायासंसक्तिफलाय प्रातिभासिकविषयेऽपि रागाभासस्यापि वृत्तिफलायेत्यर्थः । निरतिशयानन्दानुभवफलाय चेति चकारार्थः । इयं च पञ्चमी भूमिः सुषुप्तिरित्युच्यते । तथाच वक्ष्यति—'पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् । शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रकः' इति । अत्र समाधेः स्वयमेव व्युत्तिष्ठति ॥ १२० ॥ भूमिकापञ्चकाभ्यासा-

परप्रयुक्तेन चिरं प्रयत्नेनावबोधनम् ।
पदार्थभावनी नाम षष्ठी संजायते गतिः ॥ २२ ॥
भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भनः ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ २३ ॥

दिति । दृढमिति पदं आत्मारामतयाऽभावनादिति च पदद्वयेन संबध्यते । उक्तपञ्चमभूमौ निर्विकल्पात्तदा स्वयमेवोत्तिष्ठति अभावनादनुपलम्भात् परप्रयुक्तेनान्यकृतेनावबोधेन समाधेः सकाशात्स्वव्युत्थापनं अनात्मपदार्थस्य समाधौ विस्मृतस्य परप्रयत्नेन भावना पदार्थभावना सा यस्याः सा पदार्थभावनी गतिरवस्था दृढं स्वात्मारामतया हेतुनाभ्यन्तराणां सुखदुःखादीनां बाह्यानां घटादीनां पदार्थानां दृढमभावनात् ॥ २१ ॥ परप्रयुक्तेनेति ॥ चिरं परप्रयुक्तेन प्रयत्नेनावबोधनं यदा भवति तदा षष्ठी गतिः संजायते इत्यन्वयः । केचित्तु साक्षात्कारो विशुद्धपदार्थज्ञानसाध्यो महावाक्यार्थविषयः तेन पदार्थभावनीयमवस्था आदरणीयेति वदन्तः षष्ठीं भूमिकां ब्रह्मविद्यासाधनकोटिस्थां मन्यन्ते तत्र निर्वाणप्रकरणवचनविरोधात् । 'भूमिकायां विवासनः । षष्ठीं गाढसुषुप्ताख्यां क्रमात्पतति भूमिकाम् ॥ यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः । केवलं क्षीणमनन आस्तेऽद्वैतैक्यनिर्गतः ॥ निर्ग्रन्थिः शान्तसंदेहो जीवन्मुक्तो विभावनः । अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थित'इति । किंच 'शुद्धसंविन्मयानन्दभूयो भवति पञ्चमी । अर्धसुप्तप्रबुद्धाभो जीवन्मुक्तोऽत्र तिष्ठती'ति ॥ २२ ॥ षष्ठीभूमिकापेक्षया निकृष्टां पञ्चमीं भूमिकां प्राप्तस्य जीवन्मुक्ततामभिदधता । तत उत्कृष्टायाः षष्ठीभूमिकाया विद्याकोटिनिविष्टस्य स्वस्य सुतरामभ्युपगतत्वाच्च स्वभावैकनिष्ठत्वमिति । स्वो भावः स्वभावः स्वभावरूपस्तस्मिन्नेकस्मिन्नेव

एषा हि जीवन्मुक्तेषु तुर्यावस्थेह विद्यते ।
विदेहमुक्तविषयं तुर्यातीतमतः परम् ॥ २४ ॥
ये हि राम महाभागाः सप्तमीं भूमिकां गताः ।
आत्मारामा महात्मानस्ते महत्पदमागताः ॥ २५ ॥
जीवन्मुक्ता न सज्जन्ति सुखदुःखरसस्थितौ ।
प्राकृतेनार्थकार्येण किंचित्कुर्वन्ति वा न वा ॥ २६ ॥

नितरां स्वतः परतो वा पुनरुत्थानं विनैव तिष्ठतीति स्वभावैकनिष्ठस्तस्य भावस्तत्त्वम् । 'सप्तमी सा परिप्रौढा विषयोऽस्यां न जीवितादि'ति निर्वाणप्रकरणवचनात् । सप्तमभूमिकां प्राप्तस्य योगिनः स्वतः परतो वा पुनर्व्युत्थानमेव नास्तीति गम्यते । तथा महद्भिरप्युक्तम्—'तुरीयाभिधां सप्तमभूमिं प्राप्तस्य योगिनः स्वतः परतो वा व्युत्थानमेव नास्तीति' मुमुक्षुषु वर्तमानमवस्थात्रयात्मकं जागरितं चतुर्थभूम्यात्मकं स्वप्नं पञ्चमषष्ठभूमिकात्मिकां सुषुप्तिं चापेक्ष्य स्वरूपमेव तुर्यं चतुर्थं तद्गच्छतीति तुर्यगा गतिरवस्था तुरीयावस्थेत्यर्थः ॥ २३ एषा सप्तमभूमिरूपा तुरीयावस्था जगति क्वचिदपि नास्त्येवेत्यत आह—एषा हीति ॥ जीवन्मुक्तेषु शुकादिषु विदेहमुक्तविषयं विदेहमुक्तगम्यम् ॥ २४ ॥ सप्तमीभूमिका सर्वोद्योगेन पुरुषधौरेयैः संपाद्येति ज्ञापयितुं तां प्राप्तां स्तौति—ये हीति ॥ महत्पदमागताः महास्थानं प्राप्ताः । महात्मतायाः पर्यवसानभूमिं प्राप्ता इत्यर्थः । महात्मपदं गता इति क्वचित् तत्रापि स एवार्थः ॥ २५ ॥ सप्तमीं भूमिकां प्राप्तादन्ये जीवन्मुक्ता विक्षेपदशायां कथं व्यवहरन्तीत्यत आह—जीवन्मुक्ता इत्यादि ॥ सुखदुःखरसस्थितौ सुखदुःखानुभवस्थितौ न सज्जन्ति आसक्तिं न कुर्वन्ति । हर्षविषादौ

पार्श्वस्थबोधिताः सन्तः पूर्वाचारक्रमागतम् ।
आचारमाचरन्त्येव सुप्तबुद्धवदक्षताः ॥ २७ ॥
भूमिकासप्तकं त्वेतद्धीमतामेव गोचरम् ।
प्राप्ताज्ञानदशामेतां पशुम्लेच्छादयोऽपि ये ।
सदेहा वा विदेहा वा ते मुक्ता नात्र संशयः ॥ २८ ॥
ज्ञप्तिर्हि ग्रन्थिविच्छेदस्तस्मिन्सति हि मुक्तता ।
मृगतृष्णाम्बुबुद्ध्यादिशान्तिमात्रात्मकस्त्वसौ ॥ २९ ॥
ये तु मोहार्णवात्तीर्णास्ते प्राप्ताः परमं पदम् ।
ते स्थिता भूमिकास्वासु स्वात्मलाभपरायणाः ॥ १३० ॥

न कुर्वन्तीत्यर्थः । यद्वा आसक्तिस्तत्राभिमानस्तं न कुर्वन्तीत्यर्थः । अर्थकार्येण लोकसंग्रहलक्षणप्रयोजनमर्थः स एव कार्यं तेन हेतुना किंचित्कुर्वन्ति वा न वा कुर्वन्ति । आर्यकार्येणेति क्वचित्तत्रार्यकार्येण विद्वत्कार्येण । अनिषिद्धकार्येणेत्यर्थः ॥ २६ ॥ २७ ॥ ॥ २८ ॥ ननु ज्ञानदशाप्राप्तानां सदेहत्वे कथं मुक्ततेत्यत आह—ज्ञप्तिर्हीति ॥ ज्ञप्तिरत्र ज्ञानदशा स एव पक्वो ग्रन्थिस्तस्य विच्छेदो हि अहंकारलक्षणग्रन्थेः सकारणस्य विनाशः । स हि अहंकाराध्यासस्य सकारणस्य निवृत्तिं विना ज्ञानदशाया एव पक्वाया अयोगात् । ततः किं तत्राह—तस्मिन्निति ॥ तस्मिन्ग्रन्थिविच्छेदे सति मुक्तिर्हि सकारणग्रन्थिविच्छेदः । तर्हि सद्वा सदसदात्मा वा सदसद्विलक्षणो वा सर्वथाप्यनुपपत्तिरित्यत आह—मृगतृष्णेति ॥ यथा मरीचिकोदकाध्यासनिवृत्तिरधिष्ठानमात्रं तथासौ ग्रन्थिविच्छेदोऽपीत्यर्थः ॥ २९ ॥ ये तु मोहादित्यादिसार्धत्रयं स्पष्टार्थम् ॥ १३० ॥

एतासु भूमिषु जयन्ति हि ये महान्तो
वन्द्यास्त एव हि जितेन्द्रियशत्रवस्ते ।
सम्राट् स्वराडपि च यत्र तृणायते त-
त्सारं पदं जगति ते समवाप्नुवन्ति ॥ ३१ ॥

वसिष्ठ उवाच ॥

मनःप्रशमनोपायो योग इत्यभिधीयते ।
सप्तभूमिः स विज्ञेयः कथितास्ताश्च भूमिकाः ॥ ३२ ॥
एतासां भूमिकानां तु गम्यं ब्रह्माभिधं परम् ।
त्वत्ताहन्तात्मता यत्र परता नास्ति काचन ।
न क्वचिद्भेदकलना न भावाभावरञ्जना ॥ ३३ ॥
सर्वं शान्तं निरालम्बं व्योमस्थं शाश्वतं शिवम् ।
अनामयमनाभासमनात्मकमकारणम् ॥ ३४ ॥
न सन्नासन्न मध्यान्तं न सर्वं सर्वमेव च ।
मनोवचोभिरग्राह्यं शून्याच्छून्यं सुखात्सुखम् ॥ ३५ ॥

जयन्ति सर्वोत्कृष्टतया वर्तन्ते । सम्राट् मण्डलेश्वराणां शास्ता । स्वराडिन्द्रः ॥ ३१ ॥ ३२ ॥ कीदृशं तद्ब्रह्माभिधं परं वस्तु तत्राह— त्वत्तेति ॥ त्वत्ताहन्ते त्वमहंभावौ । आत्मतापरते आत्मभावपर-भावौ । भेदकलना भेदज्ञानम् । भावाभावरञ्जना भावाभावाभिनि-वेश इत्यादि यत्र नास्ति तत्परं ब्रह्मेत्यर्थः ॥ ३३ ॥ सर्वमिति ॥ सर्वं तद्व्यतिरिक्तस्याभावात् । शान्तमविद्यारागादिमलरहितम् । निरा-लम्बमाधाररहितम् । सर्वाधारमित्यर्थः । तदपि माययेत्यर्थः । व्योमस्थं स्वमहिमस्थम् । आधारानपेक्षितमित्यर्थः । शिवं मङ्गलम् । अनामयं निरुपद्रवम् । अनाभासं अप्रतिबिम्बम् ॥ ३४ ॥ नेति ॥ अम-ध्यान्तं मध्यान्तरहितम् । न सर्वं मिथ्याभूतात्सर्वस्माद्विलक्षणम् ।

असंवेदनमाशान्तमात्मवेदनमाततम् ॥ ३६ ॥

वसिष्ठ उवाच ॥

एतत्ते कथितं राम ज्ञानं वै साप्तभूमिकम् ।
त्वं माहात्म्यमविद्यायाः पुनः शृणु रघूद्वह ॥ ३७ ॥
लवणोऽसौ महीपालस्तत्र दृष्ट्वा तथा भ्रमम् ।
द्वितीये दिवसे गन्तुं प्रवृत्तस्तां महाटवीम् ॥ ३८ ॥
यत्र दृष्टं मया दुःखमरण्यानीं स्मरामि ताम् ।
चित्तादर्शगतां विन्ध्ये कदाचिल्लभ्यतेऽपि सा ॥ ३९ ॥
इति निश्चित्य सचिवैः प्रययौ दक्षिणापथम् ।
पुनर्दिग्विजयायैव प्राप्य विन्ध्यमहीधरम् ॥ १४० ॥
पूर्वदक्षिणपाश्चात्त्यमहावनतटस्थलीम् ।
बभ्राम कौतुकात्सर्वां व्योमवीथीमिवोष्णगुः ॥ ४१ ॥

तर्हि वस्तुतः परिच्छेदः स्यादित्यत आह—सर्वमिति ॥ मनोवचोभिरग्राह्यत्वे हेतुः—शून्याच्छून्यमिति ॥ अत्यन्तनिराकारमित्यर्थः । शून्यादपि शून्यं चेत्तर्हि पुरुषार्थबहिर्भूतं तदित्यत आह—सुखात्सुखं परमानन्दरूपत्वात् ॥ ३५ ॥ तर्हि वेद्यं तदित्यत आह—असंवेदनमिति ॥ आसमन्ताच्छान्तं आशान्तम्। आत्मवेदनं स्वयंप्रकाशम्। आसमन्तात्तं व्याप्तमाततम् ॥ ३६ ॥ एतत्ते कथितमित्यादयः काकतालीयवदित्यतः प्राक्तनाः श्लोकाः प्रायेण स्पष्टार्थाः। रघूद्वह रघूणां श्रेष्ठ ॥ ३७ ॥ ॥ ३८ ॥ अरण्यानीं महारण्यम् । 'महारण्यमरण्यानी गृहारामास्तु निष्कुटा' इत्यमरः । आदर्शो दर्पणम्। लभ्यतेऽपीत्यपिशब्दः शङ्कायाम्। 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपी'त्यमरः ॥ ३९ ॥ ४० ॥ कौतुकात् कुतूहलात्। 'कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले । कामे

अथैकस्मिन्प्रदेशे तां चिन्तामिव पुरोगताम्।
ददर्शोग्रामरण्यानीं परलोकमहीमिव ॥ ४२ ॥
स तत्र विहरंस्तां तु स्ववृत्तान्सकलानपि।
दृष्टवान्पृष्टवांश्चैव ज्ञातवांश्च विसिस्मये ॥ ४३ ॥
तत्परिज्ञातवांश्चापि व्याधान्पुक्कसजान्पुनः।
विस्मयाकुलया बुद्ध्या भूयो बभ्राम संभ्रमी ॥ ४४ ॥
अथ प्राप महाटव्याः पर्यन्ते धूमधूसरम्।
तमेव ग्रामकं यस्मिन्सोऽभवत्पुष्टपुक्कसः ॥ ४५ ॥
तत्रापश्यज्जनांस्तांस्तान्स्त्रियस्तास्ताः कुटीरिकाः ॥ ४६ ॥
अन्यासु वृद्धासु सबाष्पनेत्रा स्वभर्तृयुक्तासु च वर्णयन्ती।
वृद्धातिकान्तारविशीर्णबन्धुस्तत्रातिदीना परिरोदितीदम् ॥ ४७ ॥
हा पुत्रकाः कुत्र गताः स्थ दीना दृष्टेर्ममोत्सङ्गमपास्य दूरम्।
हा पुत्रि गुञ्जाफलदामहारे नीतासि मे दुर्विधिनातिदूरम् ॥ ४८ ॥
हा राजपुत्रेन्दुसमानकान्त संत्यज्य शुद्धान्तविलासिनीस्ताः।
रतिं प्रयातोऽसि ममात्मजायां न सापि ते सुस्थिरतामुपेता ॥ ४९ ॥
संसारनद्या स्वतरङ्गभङ्गक्रियाविलासैर्विहितोपहासैः।
किं नाम तुच्छं न कृतं नृपेशो यद्योजितः पुक्कसकन्यकायाम् ५०

ख्याते मङ्गले चे'ति यादवप्रकाशः। उष्णगुः सूर्यः ॥ ४१ ॥ ४२ ॥ विसिस्मये विस्मयंचक्रे ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ कान्तारं दुर्गममार्गः। 'कान्तारं वर्त्म दुर्गममि'त्यमरः ॥ ४७ ॥ अस भुवीति धातोर्लण्मध्यमपुरुषबहुवचनम्। स्थ भवथ। गुञ्जाफलदामभिर्हारो यस्याः सा तथोक्ता। दामशब्देन मालोच्यते। दुर्विधिना दुर्दैवेन ॥ ४८ ॥ शुद्धान्तविलासिनीरन्तःपुराङ्गनाः ॥ ४९ ॥ संसारेति ॥ तुच्छमत्रासमञ्जसम्। संसारनद्या किंनाम तुच्छं न कृतमिति संबन्धः।

एवं लपन्तीमवलोक्य वृद्धां दासीभिराश्वास्य नृपो निजाभिः।
पप्रच्छ वृत्तं किमिहासि का त्वं का ते सुता के च सुतास्तवेति॥५१॥
उवाच सा बाष्पविलोचनाथ ग्रामस्त्वयं पुक्कसपोषनामा।
इहाभवत्पुक्कसपः पतिर्मे बभूव तस्येन्दुसमा सुतैका॥ ५२॥
सा दैवयोगात्पतिमिन्द्रतुल्यमिहागतं प्राप धरातलेन्द्रम्।
सा तेन सार्धं सुचिरं सुखानि भुक्त्वा प्रसूता तनयां सुतौ च॥५३॥

केनचित्त्वथ कालेन ग्रामकेऽस्मिञ्जनेश्वर।
अवृष्टिदुःखमभवद्भीषणं भग्नमानवम्॥ ५४॥
महता तेन दुःखेन सर्वे ते ग्रामका जनाः।
विनिर्गत्य गता दूरं सर्वे पञ्चत्वमागताः॥ ५५॥
तेनेमा दुःखभागिन्यः शून्ये वयमिह स्थिताः।
शोच्यांस्ताननुशोचन्त्यस्तिष्ठामो दुःखजीविताः॥ ५६॥
इत्याकर्ण्याङ्गनावक्राद्राजा विस्मयमागतः।
मन्त्रिणां मुखमालोक्य चित्रार्पित इवाभवत्॥ ५७॥
तेषां समुदितैर्दानैः संमानैर्दुःखसंक्षयम्।
कृत्वा करुणयाविष्टो दृष्टलोकपरावरः॥ ५८॥
आजगाम गृहं पौरैर्मुदितः प्रविवेश ह।
ज्ञाताविद्यास्वभावोऽसौ नीतो बोधं मया ततः॥ ५९॥

कैः साधनैः स्वतरङ्गभङ्गक्रियाविलासैः स्वीयतरङ्गखण्डरूपैः कर्मविलासैर्विहितोपहासैरेकस्मिन्नेव जन्मनि राजत्वपुक्कसत्वे हेतुत्वेन विवेकिभिर्विहित उपहासो येषु ते तथोक्तास्तैः। यदिति हेतौ॥५०॥ लपन्तीं विलपन्तीम्॥५१॥५२॥५३॥५४॥ पञ्चत्वं मरणम्॥५५॥ ॥ ५६ ॥ ५७॥ समुदितैः। सुभाषितैः दानसंमानैः दानसत्कारैः। दृष्टा लोके परावरे उच्चावचा भावा येन स दृष्टलोकपरावरः

इत्येवं राघवाविद्या महती भ्रमदायिनी ।
असत्सत्तां नयत्याशु सच्चासत्तां नयत्यलम् ॥ ६० ॥

राम उवाच ॥

कथमेतद्वद ब्रह्मन्स्वप्नः सत्यत्वमागतः ।
संशयो भगवन्सोऽयं न मे गलति चेतसः ॥ ६१ ॥

वसिष्ठ उवाच ॥

सर्वमेतदविद्यायां संभवत्येव राघव ।
एतत्ते गाधिवृत्तान्ते स्फुटमग्रे भविष्यति ॥ ६२ ॥
काकतालीयवच्चेतोवासनावशतः स्वतः ।
समुदन्ति महारम्भा व्यवहाराः परस्परम् ॥ ६३ ॥

॥५८॥५९॥६०॥ ६१ ॥ मुहूर्तद्वयेन द्वादशवार्षिको लवणस्य विभ्रमः स्वप्न इत्युच्यते—'दुर्घटत्वमविद्याया भूषणं न तु दूषणम् । कथंचिद्घटमानत्वे ह्यविद्यात्वं न सिद्ध्यती'ति न्यायात् अघटमानघटनापटीयस्यामविद्यायां नासंभावितमेतदिति परिहरति—सर्वमिति॥ सिंहासन एवासीनस्य लवणराजस्य मुहूर्तद्वितयेन द्वादशवार्षिकभ्रमः कालान्तरे तस्य च भ्रमस्याविसंवादित्वं लवणप्रतिभायाः सर्वपुक्कसप्रतिभानां च परस्परं संरम्भ इत्येवमादिकं सर्वशब्दार्थः । गाधिनामा ब्राह्मणः ॥ ६२ ॥ यद्यप्यविद्यायां संभवत्येवैतत्सर्वं तथापि काचिदुपपत्तिर्वक्तव्येत्यत आह—काकतालीयवदित्यादि ॥ काकस्य तालतरुसंयोगसमय एव दैवात्तत्फलपतनं काकतालीयम् । चेतोवासनावशतश्चित्तस्य सदृशं भ्रमोत्पादकसंस्कारवशतः स्वतः स्वभावान्निमित्तान्तरं विनैव व्यवहाराऽभिज्ञालक्षणाः । समुदन्ति संवादं कुर्वन्ति । समानार्थभाजो भवन्तीत्यर्थः । आरभ्यत इत्यारम्भः

दृष्टं यत्पक्कणे राज्ञा तत्र शाम्बरिकेहया।
तत्र योल्लसिता विद्या सैवान्येद्युरिति ध्रुवम् ॥ ६४ ॥
तत्काले लवणेनाशु दृष्टो यः स्वप्नविभ्रमः।
स एव संविदं प्राप्तो विन्ध्यपुक्कसचेतसाम् ॥ ६५ ॥
लावणी प्रतिभा रूढा विन्ध्यपुक्कसचेतसि।
विन्ध्यपुक्कससंविद्धा रूढा पार्थिवचेतसि ॥ ६६ ॥
व्यवहारगतेस्तस्याः सत्तास्ति प्रतिभानतः।
सत्ता सर्वपदार्थानां नान्या संवेदनादृते ॥ ६७ ॥

कार्यम्। महानारम्भो येषां व्यवहाराणां ते महारम्भाः। स्मर्यते च भारते—'युद्धे मृतानां वीराणां नानालोकान्प्राप्तानां धृतराष्ट्रादिशोकापनोदनार्थं भगवता व्यासेन तपःप्रभावात्तत्तल्लोकेभ्यः समाकृष्टानां दुर्योधनादीनां धृतराष्ट्रेण पाण्डवैः स्त्रीभिश्च संगतानां महारम्भा व्यवहाराः संवादिनो जायन्ते' इति ॥ ६३ ॥ दृष्टमिति ॥ तत्र सदसि स्थितेन राज्ञा शाम्बरिकेहया ऐन्द्रजालिकचेष्टया यद्यदा पक्कणे शवरालये दृष्टं तत्र तदा या याऽविद्योल्लासिता विवर्तते सा सैवान्येद्युरप्युल्लसिता ॥ ६४ ॥ विन्ध्यपुक्कसचेतसां संविदं प्राप्तः। विन्ध्यपुक्कसचेतोभिः संविदित इत्यर्थः ॥ ६५ ॥ लावणी लवणराजसंबन्धिनी प्रतिभा विन्ध्यपुक्कसचेतस्यारूढा। लवणस्य चेतसि यत्प्रतिभातं तादृशमेव विन्ध्यपर्वतस्थपुक्कसचेतस्सु प्रतिभातमित्यर्थः। विपरीतं किं न स्यादित्यत आह—विन्ध्येति ॥ ६६ ॥ भ्रमव्यवहारस्य कथं तर्हि सत्यत्वमित्यत आह—व्यवहारगतेरिति ॥ न केवलमस्यैव व्यवहारस्वरूपस्य प्रातिभासिकं सत्त्वं सर्वस्यापि जगतस्तथेत्याह—सत्तेति ॥ स्वप्नपदार्थानामिव जागरितेऽपि

संबन्धे द्रष्टृदृश्यानां मध्ये द्रष्टुर्हि यद्वपुः ।
द्रष्टृदर्शनदृश्यादिवर्जितं तदिदं परम् ॥ ६८ ॥
देशाद्देशं गते चित्ते मध्ये यच्चेतसो वपुः ।
अजाड्यसंविन्मननं तन्मयो भव सर्वदा ॥ ६९ ॥
अजाग्रत्स्वप्ननिद्रस्य यत्ते रूपं सनातनम् ।
अचेतनं चाजडं च तन्मयो भव सर्वदा ॥ १७० ॥

सर्वपदार्थानां संवेदनात्प्रतिभासादृतेऽन्या सत्ता नास्ति। संवेदनमेव सत्ता। संवेदनदशायामेव सत्तेत्यर्थः । यद्वा प्रतिभानतः संवेदनादिति वाधिष्ठानचैतन्यमुच्यते। तथाच कल्पितानामधिष्ठानमेव सत्तेत्यर्थः ॥ ६७ ॥ प्रकरणार्थं बुद्धिसौकर्यार्थमन्ते संक्षिप्याह—संबन्ध इति ॥ संबन्धे द्रष्टृदृश्यानां द्रष्टुः शब्दादिदृश्यानां च संबन्धे द्रष्टुः दृश्यभावलक्षणे जातानामनेकेषां मध्ये द्रष्टृदृश्यदर्शनानामन्तः कुसुमेषु सूत्रमिवानुगतस्य द्रष्टुर्यद्वपुः साक्षिणो यत्स्वरूपमस्ति । किंभूतम्। द्रष्टृदर्शनदृश्यादिवर्जितम् । दृश्याद्यभावेऽपि सुषुप्तिसमाध्योस्तत्साक्षिणो विद्यमानत्वात् । द्रष्टृदर्शनदृश्यफलवर्जितं तदिदं शोधितत्वंपदार्थरूपं तत्पदलक्ष्यं परमेव । यद्वा द्रष्टृदृश्यानां च पूर्वोक्तसंबन्धे भाविनि मध्ये पूर्वोत्तरवृत्त्योः संधौ द्रष्टुर्यद्वपुः जीवस्य यत्स्वरूपमस्ति तच्च द्रष्टृत्वेन दर्शनादिना च वर्जितं तदित्यादि समानम् ॥ ६८ ॥ देशाद्देशमिति ॥ चित्ते देशाद्देशं गते विषयाद्विषयान्तरं गते सति मध्ये पूर्वोत्तरविषयज्ञानयोरन्तराले चेतसस्तदुपाधिकस्य जीवस्येत्यर्थः। वपुः स्वरूपम्। किंभूतम्। अजाड्यसंविन्मननं शब्दितसुषुप्तिस्वप्नजागरितवर्जितं तन्मयो भव तदात्मनिष्ठो भव ॥ ६९ ॥ अजाग्रत्स्वप्ननिद्रस्येत्यत्र निद्राशब्देन सुषुप्तिर्गृह्यते। अचेतनं चेतनधर्मभूता-

जडतां वर्जयित्वैकां शिलाया हृदयं हि यत् ।
अमनस्कं महाबाहो तन्मयो भव सर्वदा ॥ ७१ ॥
चित्तं दूरे परित्यज्य योऽसि सोऽसि स्थिरो भव ।
भव भावनया मुक्तो युक्त्या परमयान्वितः ॥ ७२ ॥
संसारोग्रारघट्टेऽस्मिन्या दृढा यन्त्रवाहिनी ।
रज्जुस्तां वासनामेतां छिन्धि राघव यत्नतः ॥ ७३ ॥
पूर्वं मनः समुदितं परमात्मतत्त्वा-
त्तेनाततं जगदिदं स्वविकल्पजालैः ।
शून्येन शून्यमपि तेन यथाम्बरेण
नीलत्वमुल्लसति चारुतराभिधानम् ॥ ७४ ॥

वस्थात्रयरहितत्वात् । अजडं प्रज्ञानघनत्वान्निर्विकारतासर्ववस्त्ववभासकत्वाच्च ॥ १७० ॥ जडतामिति ॥ अमनस्कं स्वभावतो मनोरहितं यच्छिलाया हृदयं पाषाणस्याभ्यन्तरस्वरूपं तज्जडतामेकां वर्जयित्वा विहाय कदाचित्तत्स्थास्यति चेत्तर्हि तन्मयो भव तन्निष्ठो भव । तत्सदृशस्वरूपनिष्ठो भवेत्यर्थः । शिलाया बाह्यस्वरूपं पदार्थान्तरसङ्गित्वादसङ्गात्मस्वरूपस्य दृष्टान्तो न भवति तदुपेक्ष्य तस्या हृदयं गृहीतम् ॥ ७१ ॥ यस्मादविवेकात्संसारस्तस्माद्विवेक एव यत्नः कर्तव्य इत्याह—चित्तं दूर इति ॥ भव भावनया मुक्तः संसारभावनया मुक्तः । युक्त्या श्रुत्यनुकूलया परमया । अत्यन्तदृढयेत्यर्थः ॥ ७२ ॥ संसारेति ॥ संसारोग्रारघट्टयन्त्ररज्जुवासनां छिन्धीत्यर्थः ॥ ७३ ॥ पूर्वमिति ॥ शून्येनाल्पेन परमात्मतत्त्वेनानिर्वचनीयेन मनसा शून्यमनिर्वचनीयं जगदाततम् कल्पितमित्यर्थः ॥ ७४ ॥

संकल्पसंक्षयवशाद्गलिते तु चित्ते
संसारमोहमिहिका गलिता भवन्ति ।
स्वच्छं विभाति शरदीव खमागतायां
चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥ १७५ ॥

इति श्रीवाल्मीकीये मोक्षोपाय उत्पत्तिप्रकरणे लवणोपाख्यानं नाम नवमः सर्गः ॥ ९ ॥

संकल्पेति ॥ मिहिका धूमाकारमेघाः शरद्यागतायां खमिव स्वच्छं चिन्मात्रं भातीत्यन्वयः ॥ १७५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्योत्तमसुखपूज्यपादशिष्यश्रीमदात्मसुखकृतौ वासिष्ठचन्द्रिकायां उत्पत्तिप्रकरणं नाम नवमः सर्गः ॥ ९ ॥

उत्पत्तिप्रकरणं समाप्तम् ॥

# स्थितिप्रकरणम्-

वसिष्ठ उवाच ॥

अकर्तृकमरङ्गं च गगने चित्रमुत्थितम् ।
अद्रष्टृकं स्वानुभवमनिद्रं स्वप्नदर्शनम् ॥ १ ॥
साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि ।
निरर्थं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा ॥ २ ॥

पूर्वस्मिन्प्रकरणे जगन्मनोविलासादुत्पन्नं योगेन च मनोविलासशान्तौ शाम्यतीत्युक्तम् । अस्मिंस्तु प्रकरणे मनस उत्पन्नं जगन्मनस्येव तिष्ठति । तच्च मनः स्वकारणे आत्मनि तिष्ठतीति प्रतिपाद्यते ॥ अत्र पञ्चाख्यानानि—शुक्रो दामादयो भीमादयो दाशूर उपदेशश्चेति । तत्र तावन्मनोमयस्य दृश्यस्य मनसा सहात्मन्यवस्थितत्वादाधारत्वेनात्मानं निरूपयितुमाधेयं दृश्यमाह—अकर्तृकमिति ॥ चित्रं हि केनचित्कर्त्रा कैश्चिद्रङ्गै रञ्जनद्रव्यैः कस्मिंश्चिद्भित्त्यादौ मूर्ते वस्तुनि क्रियते। इदं तु जगद्रूपं चित्रमकर्तृकं आत्मनो निष्क्रियत्वेनाकर्तृत्वात्। अरङ्गं चात्मनोऽद्वितीयत्वेन रञ्जकस्य द्रव्यान्तरस्याभावात्। गगने चिदाकाशे उत्थितं मूर्तस्य कस्यचिदधिकरणस्याभावात्। किंच अद्रष्टृकं स्वानुभवं यत्खल्वनुभूयते तत्सत्ये स्वव्यतिरिक्ते द्रष्टरि। इदं तु न तथा द्रष्टृदृश्ययोर्भेदाभावात् । किंच अनिद्रं स्वप्नदर्शनम् । स्वप्नदर्शनं हि सत्यां निद्रायां भवति । इदं तु न तथा जाग्रत्येव प्रतीयमानत्वात् ॥ १ ॥ साक्षीति ॥ साक्षादीक्षत इति साक्षी । दृग्रूपत्वात्साक्षिभूते समे परिपूर्णे स्वच्छे निर्मले निर्विकल्पे भेदशून्ये चिदात्मनि जगन्ति मुकुरे यथा दर्पणवन्निरर्थं प्रयोजनमन्तरेणैव

एतत्ते राम वक्ष्यामि कार्यकारणतां विना ।
स्थिता ब्रह्मणि विश्वश्रीः प्रतिभामात्ररूपिणी ॥ ३ ॥
एकं ब्रह्मचिदाकाशं सर्वात्मकमखण्डितम् ।
इति भावय यत्नेन चेतश्चाञ्चल्यशान्तये ॥ ४ ॥
रेखोपरेखावलिता यथैका पीवरी शिला ।
तथा त्रैलोक्यवलितं ब्रह्मैकमिति दृश्यताम् ॥ ५ ॥
द्वितीयकारणाभावादनुत्पन्नमिदं जगत् ।
तिष्ठति ब्रह्मणि स्फारे प्रतिभामात्ररूपधृक् ॥ ६ ॥
अत्र भार्गववृत्तान्तं कथयामि तवानघ ।
अनुत्पन्नमिदं विश्वं येन चेतसि पश्यसि ॥ ७ ॥

प्रतिबिम्बन्ति प्रतिफलन्ति। निरिच्छमिति पाठे इच्छामन्तरेणेत्यर्थः। तत्र जगतां जडत्वादात्मनश्चासङ्गोदासीनत्वान्निरिच्छत्वं वेदितव्यम् ॥ २ ॥ एतदिति॥ विश्वश्रीः कार्यकारणभावमन्तरेणैव प्रतिभासात्ररूपेण ब्रह्मणि तिष्ठतीत्येतद्रहस्यमिति भावः ॥ ३ ॥ एकं ब्रह्म भावयेत्युक्तम् ॥ ४ ॥ भेदे प्रतीयमाने कथमैक्यमित्यत्राह—रेखेति ॥ तथाहि काचित्पीवरी गरीयसी गिरिशिला रेखोपरेखाभिर्वलिता व्याप्ता करितुरङ्गनरादिचित्रविचित्रदेवालयादिरूपेण प्रतीयमानतया सत्यपि भेदस्फुरणे वस्तुत एकैव तथा त्रैलोक्यवलितं त्रैलोक्यात्मना विवृतमपि ब्रह्म एकमेवेति दृश्यतां निश्चीयताम् ॥ ५ ॥ द्वितीयेति ॥ इदं जगद्द्वितीयकारणाभावाद्ब्रह्मव्यतिरिक्तस्य द्वितीयस्य कारणस्याभावात् भावरूपकार्यारम्भकाणां समवाय्यसमवायिनिमित्तानामसंभवाद्धेतोरनुत्पन्नमेव । कथं तर्हि प्रतीयत इत्याह—स्फारे ब्रह्मणि प्रतिभामात्ररूपधृक्तिष्ठति । ब्रह्मण्यध्यस्ततया मरुमरीचिकायां तरङ्गिणीव प्रातिभासिकतया तिष्ठतीत्यर्थः ॥ ६ ॥ विश्वस्य प्रतिभामा-

पुरा मन्दरशैलस्य सानौ कुसुमसंकुले।
अतप्यत तपो घोरं कस्मिंश्चिद्भगवान्भृगुः ॥ ८ ॥
तमुपास्ते स तेजस्वी बालः पुत्रो महामतिः।
शुक्रः सकलचन्द्राभः प्रकाशेनेव भास्करः ॥ ९ ॥
विद्याविद्यादृशोर्मध्ये शुक्रोऽप्राप्तमहापदः।
त्रिशङ्कुरिव रोदस्योरवर्तत तदा किल ॥ १० ॥
निर्विकल्पसमाधिस्थे स कदाचित्पितर्यथ।
अव्यग्रोऽभवदेकान्ते जितारिरिव भूमिपः ॥ ११ ॥
ददर्शाप्सरसं तत्र गच्छन्तीं नभसः पथा।
मन्दारमालावलितां मन्दानिलचलालकाम् ॥ १२ ॥
कान्तामालोक्य तस्याभूदुल्लासतरलं मनः।
अथ तां मनसा ध्यायंस्तत्रैवामीलितेक्षणः ॥ १३ ॥
आरब्धवान्मनोराज्यमिदमेव किलोशनाः।
एषा हि ललना व्योम्नि सहस्रनयनालये ॥ १४ ॥
संप्राप्तोऽयमहं स्वर्गमालोलसुरसुन्दरम्।
मन्दमन्मथमातङ्ग्य इमास्ताः सुरयोषितः ॥ १५ ॥

त्ररूपत्वे भार्गववृत्तान्तं निदर्शयन्नाह—अत्रेत्यादिना ॥ ७ ॥ ८ ॥ ॥ ९ ॥ विद्येति ॥ तथाहि त्रिशङ्कुर्नाम राजा विश्वामित्रमहिम्ना चण्डालदेहेनैव स्वर्गं गच्छन्देवैर्निराकृतो रोदस्योर्द्यावापृथिव्योरन्तर्मध्य एव वर्तते। तथा शुक्रोऽप्यप्राप्तमहापदत्वादनधिगतब्रह्मभावत्वाद्विद्यादृष्टेरविद्यादृष्टेश्चान्तरालेऽवर्तत ॥ १० ॥ ११ ॥ १२ ॥ अथेति ॥ तामप्सरसम् ॥ १३ ॥ आरब्धवान्मनोराज्यमिति ॥ इतः परं वक्ष्यमाणः शुक्रवृत्तान्तो मानस एवेत्यर्थः ॥ १४ ॥ १५ ॥

देवेश्वरं निषेवन्ते वनं वनलता यथा ।
इह तावदिमं शक्रमहमास्थानसुस्थितम् ॥ १६ ॥
द्वितीयमिव त्रैलोक्यस्रष्टारमभिवादये ।
इति संचिन्त्य शुक्रेण मनसैव शचीपतिः ॥ १७ ॥
तेनाभिवादितस्तत्र द्वितीय इव खे भृगुः ।
अथ सादरमुत्थाय शुक्रः शक्रेण पूजितः १८ ॥
स्वर्गे विहर्तुमारेभे स्वर्वासिपरिमोदितः ।
तत्र तां मृगशावाक्षीं कान्तामध्यगतामसौ ॥ १९ ॥
ददर्श सापि तं राम दृष्ट्वा परवशाभवत् ।
रसाद्विकसतोर्नूनमन्योन्यमनुरक्तयोः ।
प्रातरर्कनलिन्योर्या शोभा सैव तयोरभूत् ॥ २० ॥
अथ तां तादृशीं दृष्ट्वा शुक्रः संकल्पितार्थभाक् ।
तमः संकल्पयामास संहारमिव भूतभुक् ॥ २१ ॥
अथ सर्वेषु भूतेषु गतेष्वभिमतां दिशम् ।
आजगाम भृगोः पुत्रं सा मयूरीव वारिदम् ॥ २२ ॥
ततः कल्पलताकुञ्जे तौ विशश्रमतुः क्वचित् ।
अथ चित्तविलासेन चिरसुप्रेक्षितैः श्रुतैः ॥ २३ ॥
प्रणयैर्भार्गवस्यासीत्तुष्टये स समागमः ।
अथावसदसौ शुक्रः पुरन्दरपुरे तया ॥ २४ ॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अथेति ॥ तामप्सरसं तादृशीमात्मानुरक्तां ज्ञात्वा संकल्पितार्थभाक्तया सह संभोगः संकल्पितोऽर्थः तं प्राप्तुमुद्यतः संस्तद्भोग्यकालकल्पनाय तमःसंकल्पयामास । भूतभुक् रुद्रः संहारमिव ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

सुखं चतुर्युगान्यष्टौ हरिणेक्षणया सह।
पुण्यक्षयानुसंधानात्पपातावनिमण्डले ॥ २५ ॥
पतितस्यावनौ तस्य स्वपुरी स्मृतिमागता।
जीवश्चान्द्रमसं ज्योतिर्भृगुसूतो विवेशह ॥ २६ ॥
प्रालेयतामुपेत्याशु शालितामगमत्ततः।
शालींस्तान्भुक्तवान्पक्वान्दशार्णेषु द्विजोत्तमः ॥ २७ ॥
स शुक्रः शुक्रतामेत्य तद्भार्यातनयोऽभवत्।
ततो मुनीनां संसर्गात्तपस्युग्रे व्यवस्थितः ॥ २८ ॥
अवसन्मेरुगहने मन्वन्तरमनिन्दितः।
तत्र तस्य समुत्पन्नो मृग्यां पुत्रो नराकृतिः ॥ २९ ॥
तत्स्नेहेन परं मोहं पुनरप्याययौ क्षणात्।
पुत्रस्यास्य धनं मेऽस्तु गुणाश्चायुश्च शाश्वतम् ॥ ३० ॥
इत्यनारतचिन्ताभिर्जहौ सत्यामवस्थितिम्।
धर्मचिन्तापरिभ्रंशात्पुत्रार्थं भोगचिन्तया ॥ ३१ ॥
क्षीणायुषं तमहरन्मृत्युः सर्प इवानिलम्।
भोगैकचिन्तया सार्धं स समुत्क्रान्तचेतनः ॥ ३२ ॥
प्राप्य मद्रेशपुत्रत्वमासीन्मद्रमहीपतिः।
अथान्यान्यपि जन्मानि समुपेत्य बहून्यपि ॥ ३३ ॥
जातः स गङ्गातीरस्थतपस्वितनयो मुनिः।
अथ कालेन महता पवनातपजर्जरः ॥ ३४ ॥
कायस्तस्य पपातोर्व्यां भृगुशुक्रसमुद्भवः।
रागद्वेषविहीनत्वात्तस्य पुण्याश्रमस्य तु ॥ ३५ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

महातपस्त्वाच्च भृगोर्न भुक्तो मृगपक्षिभिः ।
अथ वर्षसहस्रेण दिव्येन परमेश्वरः ॥ ३६ ॥
भृगुः परमसंबोधाद्विरराम समाधितः ।
नापश्यदग्रे तनयं विनयावनताननम् ॥ ३७ ॥
सीमान्ते गुणसीमायाः पुण्यं मूर्तमिव स्थितम् ।
अपश्यत्केवलं कायकङ्कालं पुरतो महत् ॥ ३८ ॥
देहयुक्तमिवाभाग्यं दारिद्र्यमिव मूर्तिमत् ॥ ३९ ॥
तापशुष्कवपुः कृत्तिरन्ध्रस्फुरिततित्तिरिम् ।
संशुष्कान्तोदरगुहाच्छायाविश्रान्तदर्दुरम् ॥ ४० ॥
प्रेक्ष्य तच्छुष्ककङ्कालमालानं दुःखदन्तिनः ।
पूर्वापरपरामर्शमकुर्वन्भृगुरुत्थितः ॥ ४१ ॥
आलोक्य समकालं हि ज्ञात्वा पुत्रं मृतं भृगुः ।
कालं प्रति चकाराशु कोपं परमदारुणम् ॥ ४२ ॥
अकाल एव मत्पुत्रो नीतः किमिति कोपतः ।
कालाय शापमुत्स्रष्टुं भगवानुपचक्रमे ॥ ४३ ॥
अथाकलितरूपोऽसौ कालः कवलितप्रजः ।
आधिभौतिकमास्थाय वपुर्मुनिमुपाययौ ॥ ४४ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ अपश्यदिति श्लोकद्वयवाक्यम् । कायकङ्कालं शरीरास्थिपञ्जरम् ॥३९॥ तापेति ॥ तापेनातपेन शुष्का या वपुःकृत्तिर्देहस्य कृत्तिस्तस्या रन्ध्रेषु स्फुरितास्तित्तिरयः पक्षिविशेषा यस्मिन् । संशुष्का अन्ताः पर्यन्ता यस्यास्तस्या उदरगुहायाश्छायायां विश्रान्ता दर्दुरा मण्डूका यस्मिन् ॥४०॥ प्रेक्ष्येति ॥ आलानं बन्धनस्तम्भम् ॥४१॥४२॥४३॥४४॥४५॥४६॥४७॥

खड्गपाशधरः श्रीमान्कुण्डली कवचान्वितः ।
षड्भुजः षण्मुखो बाह्या वृतः किंकरसेनया ॥ ४५ ॥
स उपेत्य महाबाहो कुपितं तं महामुनिम् ।
कल्पक्षुब्धाब्धिगम्भीरं सान्त्वपूर्वमुवाच ह ॥ ४६ ॥
त्वमनन्ततपा विप्रो वयं नियतिपालकाः ।
तेन संपूज्यसे पूज्य साधो नेतरयेक्षया ॥ ४७ ॥
मा तपः क्षपयाबुद्धे कल्पकालमहानलैः ।
यो न दग्धोऽसि मे तस्य किं त्वं शापेन धक्ष्यसि ॥ ४८ ॥
ब्रह्माण्डावलयो ग्रस्ता निगीर्णा रुद्रकोटयः ।
भुक्तानि विष्णुवृन्दानि क न शक्ता वयं मुने ॥ ४९ ॥
भोक्तारो हि वयं ब्रह्मन्भोजनं युष्मदादयः ।
स्वयं नियतिरेषा हि नावयोरेतदीहितम् ॥ ५० ॥
नेह कर्ता न भोक्तास्ति दृष्ट्या नष्टकलङ्कया ।
बहवश्चेह कर्तारो दृष्ट्या दृष्टकलङ्कया ॥ ५१ ॥
पुष्पाणि तरुखण्डेषु भूतानि भुवनेषु च ।
कर्मणायान्ति यान्तीह कल्पान्ते हेतुना विधेः ॥ ५२ ॥

॥ ४८ ॥ ४९ ॥ ५० ॥ नेहेति ॥ नष्टकलङ्कया दृष्ट्या विशुद्धेन ज्ञानेन इह जगति कर्ता भोक्ता च नास्ति । आत्मनो निर्विकारतया कर्तृभोक्तृत्वासंभवाद्दृष्टकलङ्कया दृष्ट्या भ्रान्तिदर्शनेन तु जगति बहवः कर्तारो भोक्तारश्च कर्त्रादिभेदस्याविद्यापरिकल्पितत्वेन भ्रान्तत्वात् ॥५१॥ पुष्पाणीति ॥ तरुखण्डेषु पुष्पाणीव भुवनेषु भूतानि प्राणिनः स्वकर्मणा आयान्ति यान्ति च । कल्पान्ते तु विधेर्ब्रह्मणोऽपि यो हेतुः प्रवृत्तिनिवृत्तिहेतुः काल ईश्वरेच्छा च तेन यान्त्यायान्ति चेत्यर्थः

क्वासौ ज्ञानमयी दृष्टिः क्व महत्त्वं क्व धीरता ।
मार्गे सर्वप्रसिद्धेऽपि किमन्ध इव मुह्यसि ॥ ५३ ॥
स्वकर्मपरिपाकोत्थामविचार्य दशां मुने ।
किं मूर्ख इव सर्वज्ञ मुधा मां शप्तुमिच्छसि ॥ ५४ ॥
चित्तमेवेह पुरुषस्तत्कृतं कृतमुच्यते ।
मनो हि जीवनाज्जीवो निश्चायकतया तु धीः ।
अहंकारोऽभिमन्तृत्वान्नानातां स्वयमेति हि ॥ ५५ ॥
तन्मनस्तव पुत्रस्य समाधौ त्वयि संस्थिते ।
प्रयातं वैबुधं सद्म संत्यज्यौशनसं वपुः ॥ ५६ ॥
असेवत मुने तत्र विश्वाचीं देवसुन्दरीम् ।
अथ विप्रो दशार्णेषु कोसलेषु महीपतिः ॥ ५७ ॥
धीवरोऽथ महाटव्यां हंसस्त्रिपथगातटे ।
सूर्यवंशे नृपः पौण्ड्रः शौरः शाल्वेषु देशिकः ॥ ५८ ॥

॥ ५२ ॥ ५३ ॥ ५४ ॥ भृगोः पुत्रस्य चित्तमयं संसारं निरूपयितुं कालश्चित्तस्य महिमानं तावदाह सार्धेन श्लोकेन—चित्तमेवेति ॥ पुरुषो जीवः । कथं जीव इत्यत्राह—मनो हीति ॥ मन एव जीवनात्प्राणधारणाज्जीव इत्युच्यते । निश्चायकतया निश्चयहेतुत्वात् धीर्बुद्धिः । निश्चयात्मिका बुद्धिरिति लक्षणात् । अभिमन्तृत्वादहंममाभिमानहेतुत्वादहंकारोऽपि ॥ ५५ ॥ ५६ ॥ अथेत्यादिना सार्धश्लोकपञ्चकेन स्वर्गभोगानन्तरभाविनो जन्मभेदानाह—तत्र प्रथमान्तानि पदानि जन्मभेदपराणि सप्तम्यन्तानि तु देशभेदपराणीति द्रष्टव्यम् ॥ ५७ ॥ धीवरो मत्स्यादिघातकः । देशिक आचार्यः

कल्पं विद्याधरः श्रीमान्धीमानथ मुनेः सुतः ।
सौवीरेषु च सामन्तस्त्रिगर्तें शैवदेशिकः ॥ ५९ ॥
वंशगुल्मः किरातेषु हरिणश्रीश्च जाङ्गले ।
सरीसृपस्तालतले तमाले वनकुक्कुटः ॥ ६० ॥
अन्यास्वपि विचित्रासु वासनावशतः स्वतः ।
विषमास्वेव पुत्रस्ते चचारान्तरयोनिषु ॥ ६१ ॥
वासुदेवाभिधानोऽसौ मुने विप्रकुमारकः ।
तपश्चरति ते पुत्रः समङ्गासरितस्तटे ॥ ६२ ॥
जटावानक्षवलयी जितसर्वेन्द्रियभ्रमः ।
तत्र वर्षशतान्यष्टौ संस्थितस्तपसि स्थिरे ॥ ६३ ॥
यदीच्छसि मुने द्रष्टुं तं स्वप्नाभं मनोभ्रमम् ।
तत्समुन्मीलय ज्ञाननेत्रमाशु विलोकय ॥ ६४ ॥
इत्युक्ते जगदीशेन कालेन समदृष्टिना ।
मुनिः स चिन्तयामास ज्ञानाच्चत्तनयेहितम् ॥ ६५ ॥
ददर्श च मुहूर्तेन प्रतिभानवशादसौ ।
पुत्रोदन्तमशेषेण बुद्धिदर्पणबिम्बितम् ॥ ६६ ॥
पुनर्मन्दरसानुस्थां कालाकाराग्रसंस्थिताम् ।
समङ्गायास्तटादेत्य विवेश स्वतनुं भृगुः ॥ ६७ ॥

॥ ५८ ॥ सामन्तो मण्डलेश्वरः ॥ ५९ ॥ वंशगुल्मो वेणुस्तम्बः । हरिणश्रीः हरिणरूपः । सरीसृपः सर्पः ॥ ६० ॥ ६१ ॥ ६२ ॥ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ पुनरिति ॥ कालाकाराग्रसंस्थितां कालशरीरपुरोभागवर्तिनीम् । भृगुर्ध्यानदृष्ट्या समङ्गातटं गत्वा पुन-

विस्मयस्मेरया दृष्ट्या कालमालोक्य कान्तया ।
वीतरागमुवाचेदं वीतरागो मुनिर्वचः ॥ ६८ ॥
भगवन्भूतभव्येश बाला वयमनुज्ज्वलाः ।
त्वादृशामेव धीर्देव त्रिकालामलदर्शिनी ॥ ६९ ॥
इत्युक्तो भगवान्कालो हसन्निव जगद्गतिः ।
हस्तं हस्तेन जग्राह भृगुमिन्दुमिवांशुमान् ॥ ७० ॥
अथ कालभृगू देवौ मन्दराचलकन्दरात् ।
गन्तुं प्रवृत्तावबनौ समङ्गासरितस्तटे ॥ ७१ ॥
क्षणादेवापतुस्तत्र तौ समङ्गां तरङ्गिणीम् ।
ददर्शाथ तटे तस्याः कस्मिंश्चित्तनयं भृगुः ॥ ७२ ॥
शान्तेन्द्रियं समाधिस्थमचञ्चलमनोमृगम् ।
समालोक्य भृगोः पुत्रं कालः संकल्पवानभूत् ॥ ७३ ॥
विबुध्यतामयमिति समाधेर्विरराम सः ।
उन्मील्य नेत्रे सोऽपश्यदग्रे कालभृगू प्रभू ॥ ७४ ॥
कदम्बलतिकापीठादथोत्थाय ननाम तौ ।
मिथः कृतसमाचाराः शिलायां समुपाविशन् ॥ ७५ ॥
अथोवाच वचः शान्तं स समङ्गातटे द्विजः ।
भवतोर्दर्शनेनाहमद्य निर्वृतिमागतः ॥ ७६ ॥
यो न शास्त्रेण तपसा न ज्ञानेन न विद्यया ।
विनष्टो मे मनोमोहः क्षीणोऽसौ दर्शनेन वाम् ॥ ७७ ॥
न तथा सुखयन्त्यन्तर्निर्मलामृतदृष्टयः ।
यथा प्रहर्षयन्त्येता महतामेव दृष्टयः ॥ ७८ ॥

रेत्य स्वतनुं विवेशेत्यन्वयः ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

चरणाभ्यामिमं देशं भवन्तौ भूरितेजसौ ।
कौ पवित्रितवन्तौ नः शशाङ्कार्काविवाम्बरम् ॥ ७९ ॥

इत्युक्तवन्तं प्रोवाच भृगुर्जन्मान्तरात्मजम् ।
स्मरात्मानं प्रबुद्धोऽसि नाज्ञोऽसीति रघूद्वह ॥ ८० ॥

प्रबोधितोऽसौ भृगुणा जन्मान्तरदशां निजाम् ।
मुहूर्तमात्रात्सस्मार ध्यानोन्मीलितलोचनः ॥ ८१ ॥

अथासौ विस्मयस्मेरमुखो मुदितमानसः ।
वितर्कमन्थरां वाचमुवाच वदतांवरः ॥ ८२ ॥

अहो भ्रममयी दृष्टिर्जृम्भते कापि चेतसि ।
यद्वशादिदमाभोगि जगज्जालं प्रवर्तते ॥ ८३ ॥

ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमक्षतम् ।
विश्रान्तोऽस्मि चिरं श्रान्तश्चिन्मात्रान्नास्ति किंचन ॥ ८४ ॥

उत्तिष्ठ तात गच्छामः पश्यामो मन्दरस्थिताम् ।
तां तनुं नियतेर्द्रष्टुं कौतुकं विहराम्यहम् ।
न समीहितमस्तीह नासमीहितमस्ति मे ॥ ८५ ॥

वसिष्ठ उवाच ॥

विचारयन्तस्तत्त्वज्ञा इति ते जागतीर्गतीः ॥ ८६ ॥

समज्ञायास्त्रयः प्रापुः क्षणान्मन्दरकन्दरम् ।
ददर्श भार्गवस्तत्र पूर्वजन्मोद्भवां तनुम् ॥ ८७ ॥

॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ उत्तिष्ठेति सार्धश्लोको वाक्यम् । नियतेर्दैवगतेः कौतुकं विलासं द्रष्टुं विहरामि गच्छामि । मे समीहितं इष्टं मेऽसमीहितमनिष्टं च नास्ति ॥ ८५ ॥ ८६ ॥

उवाच चेदं हे तात शुष्का तनुरियं हि सा ।
या त्वया सुखसंभोगैः पुरा समभिलालिता ॥ ८८ ॥
पश्य विश्रान्तसंदेहं विगताशेषकौतुकम् ।
निरस्तकल्पनाजालं कथं शेते सुखं वने ॥ ८९ ॥
सर्वाशाज्वरसंमोहमिहिकाशरदागमे ।
विचित्तत्वं विना नान्यच्छ्रेयः पश्यामि जन्तुषु ॥ ९० ॥
त एव सुखसंभोगसीमानं समुपागताः ।
महाधियः प्राप्तधियो ये याता विमनस्कताम् ॥ ९१ ॥
सर्वदुःखदशामुक्तां संस्थितां विगतज्वराम् ।
दिष्ट्या पश्याम्यमननां वने तनुमिमामहम् ॥ ९२ ॥
अथाक्षिप्य वचस्तस्य कालः प्रोवाच भार्गवम् ।
प्रविशेमां तनुं साधो नगरीमिव पार्थिवः ॥ ९३ ॥
गुरुत्वमसुरेन्द्राणां कर्तव्यमनया त्वया ।
कल्याणमस्तु वां यामो वयं त्वभिमतां दिशम् ॥ ९४ ॥
इत्युक्त्वा मुञ्चतोर्बाष्पं तयोः सोऽन्तरधीयत ।
गते तस्मिन्भगवति भार्गवो नियतेर्वशः ॥ ९५ ॥
विवेश तां तनुं हित्वा समङ्गाद्विजभावनाम् ।
तस्यां प्रविष्टजीवायां पुत्रतन्वां महामुनिः ॥ ९६ ॥
चकाराप्यायनं मन्त्रैः स कमण्डलुवारिभिः ।
सर्वा नाड्यस्ततस्तन्व्यस्तस्याः पूर्णा विरेजिरे ॥ ९७ ॥

॥ ८७ ॥ ८८ ॥ ८९ ॥ सर्वेति ॥ सर्वेषामाशानिमित्तानां ज्वरसंमोहानां दुःखसंमोहानामेव मिहिकानां प्रालेयानां शरदागमं निवर्तकम् । विचित्तत्वं विमनस्कत्वम् ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥

अथ शुकः समुत्तस्थौ वहत्प्राणसमीरणः ।
पुरोऽभिवादयामास पितरं पावनाकृतिम् ॥ ९८ ॥
ततस्तौ कानने तस्मिन्पावने भृगुभार्गवौ ।
संस्थितौ मननोन्मुक्तौ निस्तरङ्गाविव ह्रदौ ॥ ९९ ॥
एवं ते भार्गवाख्यानं वर्णितं रघुनन्दन ।
विचार्य सुदृढं चित्ते यथेच्छसि तथा कुरु ॥ १०० ॥

इति श्रीयोगवासिष्ठसारे मोक्षोपाये स्थितिप्रकरणे भार्गवोपाख्यानं नाम प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः

### वसिष्ठ उवाच ॥

जन्तोः कृतविचारस्य विगलद्वृत्तिचेतसः ।
मननं त्यजतो नित्यं किंचित्परिणतात्मनः ॥ १ ॥
दृश्यं संत्यजतो हेयमुपादेयमुपेयुषः ।
द्रष्टारं पश्यतो नित्यमद्रष्टारमपश्यतः ॥ २ ॥

॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ इति संसारतरणीनाम्नि वासिष्ठविवरणस्थितिप्रकरणे शुक्रोपाख्यानं नाम प्रथमः सर्गः ॥ १ ॥

पूर्वं भार्गवाख्याने चित्तमयः संसार इति दर्शितम् । अत्र तु दामाद्युपाख्याने स चित्तमयः संसारो विवेकेन चित्तशान्तौ शाम्यति विवेकाभावे तु वर्धते इति प्रतिपाद्यते । तत्र चित्तप्रसादे सामग्री-मुपदर्शयितुमाह—जन्तोरिति सार्धेन श्लोकपञ्चकेन ॥ विगलद्वृत्तिचे-तसः विगलन्त्यो मलिना वृत्तयो यस्माच्चेतसस्तादृशं चेतो यस्य तस्य । मननं संकल्पम् ॥ १ ॥ उपादेयं दृङ्मात्रम् । द्रष्टारमात्मानम्

निज्ञातव्ये परे तत्त्वे जागरूकस्य जीवतः ।
सुप्तस्य घनसंमोहमये संसारवर्त्मनि ॥ ३ ॥
अत्यन्तपक्ववैराग्यादरसेषु रसेष्वपि ।
संसारवासनाजाले खगजाल इवाखुना ।
त्रोटिते हृदयग्रन्थौ श्लथे वैराग्यरंहसा ॥ ४ ॥
कातकं फलमासाद्य यथा वारि प्रसीदति ।
तथा विज्ञानवशतः स्वभावः संप्रसीदति ॥ ५ ॥
नीरागं निरुपासङ्गं निर्द्वन्द्वं निरुपाश्रयम् ।
विनिर्याति मनो मोहाद्विहगः पञ्जरादिव ॥ ६ ॥
शान्तसंदेहदौरात्म्यं गतकौतुकविभ्रमम् ।
परिपूर्णान्तरं चेतः पूर्णेन्दुरिव राजते ॥ ७ ॥

॥ २ ॥ सुप्तस्य अनुसन्धानरहितस्य ॥ ३ ॥ सुप्तत्वे हेतुः—अत्यन्तपक्ववैराग्यादिति ॥ अरसेषु अल्पसुखास्वादेषु ऐहिकविषयेषु रसेषु सुखास्वादभूयिष्ठेषु पारलौकिकविषयेषु आखुना मूषिकेण खगानां जाले वागुरायामिव वैराग्यरंहसा संसारवासनाजाले त्रोटिते छेदिते सति हृदयग्रन्थौ अहंकाररूपेण पर्वणि च श्लथे सति ॥ ४ ॥ कातकं फलमासाद्य वारीव विज्ञानवशतः स्वभावः स्वरूपं संप्रसीदतीत्यन्वयः । यद्रजःसंपर्कात्कलुषं जलं प्रसन्नं भवति तत्कातकं फलम् ॥ ५ ॥ नीरागमिति ॥ राग इच्छाविशेषस्तद्रहितं नीरागम् । अतएव निरुपासङ्गं विषयासङ्गरहितम् । अतश्च निर्द्वन्द्वं सुखदुःखभेदानुसंधानविरतम् । ततश्च निरुपाश्रयं निरालम्बनं सन्मनो मोहादज्ञानबन्धान्निर्याति । विहगः पञ्जरादिवेति ॥ ६ ॥ शान्तेति ॥ शान्तं संदेहानां दौरात्म्यं दुष्टता यस्य । गतः कौतुकानां संकल्पानां विभ्रमो विलासो

विचारेण परिज्ञातस्वभावस्योदितात्मनः ।
अनुकम्प्या भवन्तीह ब्रह्मविष्ण्विन्द्रशंकराः ॥ ८ ॥
कोऽहं कथमिदं चेति यावन्नान्तर्विचारितम् ।
संसाराडम्बरं तावदन्धकारोपमं स्थितम् ॥ ९ ॥
आत्मानमितरं चैव दृशा नित्याविभिन्नया ।
सर्वं चिज्ज्योतिरेवेति यः पश्यति स पश्यति ॥ १० ॥
सर्वशक्तिरनन्तात्मा सर्वभावान्तरस्थितः ।
अद्वितीयश्चिदित्यन्तर्यः पश्यति स पश्यति ॥ ११ ॥
नाहं न चान्यदस्तीति ब्रह्मैवास्ति निरामयम् ।
इत्थं सदसतोर्मध्यं यः पश्यति स पश्यति ॥ १२ ॥

यस्मात् ॥ ७ ॥ विचारेणेति ॥ परिज्ञातस्वभावस्य साक्षात्कृतात्मतत्त्वस्य अतएवोदितात्मनः परिपूर्णस्वरूपस्य ब्रह्मादयोऽप्यनुकम्प्या भवन्ति। हन्त संततमेते दुःखिन इति शोचनीया भवन्तीत्यर्थः ॥ ८ ॥ अविचारे दोषमाह—कोऽहमिति ॥ कोऽहमित्यात्मविषयो विचारः । कथमिदमिति जगद्विषयः । अन्तः अन्तःकरणे ॥ ९ ॥ विचारस्वरूपं दर्शयति श्लोकत्रयेण—आत्मानमिति ॥ यः स्वात्मानमितरं पुरुषं नित्याविभिन्नया सर्वदा भेदशून्यया दृशा ज्ञानेन पश्यति विचारयति सर्वं जगच्चिज्ज्योतिरेवेति चैतन्यमात्रमेवेति पश्यति स विचारपरः पुमान् पश्यति। तत्त्वं साक्षात्करोतीत्यर्थः ॥ १० ॥ सर्वेति ॥ सर्वभावान्तरस्थितः सर्वपदार्थान्तर्यामी पुरुषः सर्वशक्तिः। अनन्तात्माऽपरिच्छिन्नस्वरूपः । अतएवाद्वितीयः स्वव्यतिरिक्तवस्त्वभावात् चिच्चिन्मात्ररूप इति च यः पश्यति ॥ ११ ॥ नेति ॥ अहं अहन्तापरिच्छिन्नं उपहितं वस्तु नास्ति अन्यत्स्वव्यतिरिक्तं दृश्यं च नास्ति किंतु निरामयं निर्विकारं ब्रह्मैवास्ति इत्थमनेन प्रकारेण

अयत्नोपनतेष्वक्षि दिग्द्रव्येषु यथा पुनः ।
अरागमेव पतति तद्वत्कार्येषु धीरधीः ॥ १३ ॥
परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ।
विज्ञाय सेवितश्चौरो मैत्रीमेति न चौरताम् ॥ १४ ॥
अशङ्कितोपसंप्राप्ता ग्रामयात्रा यथाध्वगैः ।
प्रेक्ष्यते तद्वदेव ज्ञैर्भोगश्रीरवलोक्यते ॥ १५ ॥
मनसो निगृहीतस्य लीलाभोगोऽल्पकोऽपि यः ।
तमेवालब्धविस्तारं क्लिष्टत्वाद्बहु मन्यते ॥ १६ ॥
बन्धयुक्तो महीपालो ग्रासमात्रेण तुष्यति ।
परैरबद्धोऽनाक्रान्तो न राज्यं बहु मन्यते ॥ १७ ॥

सदसतोः आत्मानात्मनोर्मध्यं द्रष्टृत्वदृश्यत्वोपाधिरहितं चिन्मात्रत्वम् ॥ १२ ॥ अयत्नेति ॥ दिग्द्रव्येषु दिक्षु स्थितेषु द्रव्येषु अक्षि चक्षुरिन्द्रियं अयत्नेनैवोपनतेषु प्राप्तेषु सत्सु तद्विषयो मनोरथोऽनुरागस्तं विनैव पतति तद्वद्धीराणां ब्रह्मविदामपि धीर्बुद्धिः कार्येषु अवश्यकर्तव्येषु रागरहितमेव प्रवर्तते ॥ १३ ॥ परिज्ञायेति ॥ अयमिह ज्ञानिनो भोगविशेषः यत्परिज्ञायोपभुक्तो भोगः तुष्टये भवति न पुनः क्लेशायेति । यथाहि । चौरः संसेव्यमानोऽपि विज्ञातारं नैव बाधते प्रत्युत मित्रभावेनोपकरोति तद्वदिति ॥ १४ ॥ अशङ्कितेति ॥ अध्वगैः पुरुषैः अशङ्कितमतर्कितमेवोपसंप्राप्ता ग्रामयात्रा ग्रामस्य विवाहादिमहोत्सवपरिकल्पिता यात्रा गच्छज्जनसंघो यथा प्रेक्ष्यते तद्वदेव ज्ञैर्ज्ञानिभिर्भोगश्रीर्निरासङ्गमेवावलोक्यते ॥ १५ ॥ मनस इति ॥ निगृहीतस्य प्रत्याहारादिभिर्योगाङ्गैर्निरुद्धस्य मनसोऽल्पकोऽपि यो लीलाभोगः अनादरेणोपभोगः तमेव भोगं क्लिष्टत्वान्निरुद्धत्वादलब्धविस्तारं मनो बहु मन्यते ॥ १६ ॥ अत्र

हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च ।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ।
मनसो विजयान्नान्या गतिरस्ति भवार्णवे ॥ १८ ॥

एतावति धरणितले सुभगास्ते साधुचेतसः पुरुषाः ।
पुरुषकथासु च गण्या न जिता ये चेतसा स्वेन ॥ १९ ॥

हृदयबिले कृतकुण्डल उल्बणकलनाविषो मनोभुजगः ।
यस्योपशान्तिमागतस्तमुदितं [चित्तं] तमव्ययं वन्दे ॥ २० ॥

वसिष्ठ उवाच ॥

महानरकसाम्राज्ये मत्ता दुष्कृतवारणाः ।
आशाशरशलाकाढ्या दुर्जया हीन्द्रियारयः ॥ २१ ॥

प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ।
पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥ २२ ॥

तावन्निशीथवेताला वल्गन्ति हृदि वासनाः ।
एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ॥ २३ ॥

दृष्टान्तमाह—वन्धेति ॥ ग्रासमात्रेण अन्नपानप्रदानमात्रेण ॥ १७ ॥ मनोनिग्रहोपायमाह—हस्तमिति ॥ हठयोगेन पवनजयद्वारा स्वकं मनो जयेदिति तात्पर्यम् ॥ १८ ॥ १९ ॥ २० ॥ महानरकेति ॥ महान्तो नरका एव साम्राज्यं इन्द्रियादीनां भोगस्थानत्वात् । दुष्कृतान्येव मत्ता वारणाः इन्द्रियाणां प्रवृत्तिहेतुत्वात् । आशा मनोरथा एव शरशलाकाः शलाकारूपाः शरास्तैः प्रवर्त्यमानत्वात् ॥ २१ ॥ चित्तोपशमस्येन्द्रियजयस्य च फलमाह—प्रक्षीणेति ॥ भोगवासनाः पुनःपुनर्भोगाशाः ॥ २२ ॥ तावदिति ॥ एकतत्त्वदृढाभ्यासा एकस्मिन्नात्मतत्त्वे दृढो रूढमूलो यो ध्यानाभ्यासस्तस्मात्

भृत्योऽभिमतकर्तृत्वान्मन्त्री सत्कार्यकारणात् ।
सामन्तश्चेन्द्रियक्रान्त्या गुरुर्विद्याप्रदानतः ॥ २४ ॥
लालनात्स्निग्धललना पालनात्पावनः पिता ।
सुहृदुक्तं च विश्वासान्मनो मन्ये मनीषिणाम् ॥ २५ ॥
स्वालोकितः शास्त्रदृशा स्वबुद्ध्या स्वानुभावितः ।
प्रयच्छति परां सिद्धिं त्यक्त्वात्मानं मनःपिता ॥ २६ ॥
सुदृष्टः सुदृढः स्वच्छः सुकान्तः सुप्रबोधितः ।
स्वगुणेनोर्जितो भाति हृदि हृद्यो मनोमणिः ॥ २७ ॥
एवं मनोमणिं राम बहुपङ्ककलङ्कितम् ।
विवेकवारिणा सिद्ध्यै प्रक्षाल्यालोकवान्भव ॥ २८ ॥

॥ २३ ॥ वशीकृत मनो बहुप्राणिनामुपकरोतीत्याह श्लोकद्वयेन— भृत्य इति ॥ मनो भृत्यादिकार्यकरणात् भृत्यादिरूपतामापद्यत इत्यर्थः । सतां हितानां कार्याणां स्वत एव करणान्मन्त्री इन्द्रियाणां ज्ञानकर्मकरणानामाक्रान्तेर्नियोजकत्वाद्बहुविधाधिकारिपुरुषप्रवर्तकः सामन्त इव ॥ २४ ॥ २५ ॥ स्वालोकित इति ॥ शास्त्रदृशा विचारसिद्धेन शास्त्रीयज्ञानेन स्वालोकितः सुष्ठु पर्यालोकितः स्वबुद्ध्या स्वानुभवेन स्वानुभावितः सुष्ठु निश्चयं प्रापितः मनः पिता 'पालनात् पावनः पिते'त्युक्तत्वात् मन एव पिता आत्मानं त्यक्त्वा स्वयं विलीय परां सिद्धिं कैवल्यं प्रयच्छति । क इत्थमुपकरिष्यतीति भावः ॥ २६ ॥ सुदृष्ट इति ॥ सम्यग्दृष्टः अत एव सुदृढः संशयविपर्ययरहितत्वादप्रकम्प्यः अतश्च स्वच्छो निष्कलङ्कः सुकान्तः शुभेच्छायुक्तः सुप्रबोधितः समीचीनं प्रबोधं प्रापितः स्वगुणेन शमादिना ऊर्जित उत्कृष्टः सन्मनोमणिर्हृद्यो भातीति ॥ २७ ॥ एवमिति ॥ बहुपङ्ककलङ्कितं बहुभिर्मलिनवासनाभिः संजातकलङ्कं

विवेकं परमाश्रित्य बुद्ध्या सत्यमवेक्ष्य च ।
इन्द्रियारीनलं तीर्त्वा तीर्णो भव भवार्णवात् ॥ २९ ॥

अयमहमिति निश्चयो वृथा य-
स्तमलमपास्य महामते स्वबुद्ध्या ।
यदितरदवलम्ब्य तत्पदं त्वं
व्रज पिब भुङ्क्ष्व न बध्यसेऽमनस्कः ॥ ३० ॥

वसिष्ठ उवाच ॥

दामव्यालकटन्यायो मा ते भवतु राघव ।
भीमभासदृढस्थित्या तवास्त्वतिविशोकता ॥ ३१ ॥

श्रीराम उवाच ॥

दामव्यालकटन्यायो भीमभासदृढस्थितिः ।
ब्रह्मन्किमुक्तं भवता भवतापापहारिणा ॥ ३२ ॥

एनं मनोमाणिं विवेकवारिणा विचारजन्यं विज्ञानं विवेकस्तेनैव वारिणा प्रक्षाल्य सिद्ध्यै कैवल्यायालोकवान् तत्त्वज्ञो भव ॥ २८ ॥ ॥ २९ ॥ अयमिति ॥ अयमहमिति यः परिच्छिन्नाकारविषयो वृथानिश्चयो विपरीतपरिच्छेदः तं स्वबुद्ध्या अलमपास्य इतरद्यत्पदं अहंतानवच्छिन्नं यच्चैतन्यं तदवलम्ब्य अमनस्कः सन् यथेच्छं व्यवहर । तथासति न बध्यस इत्यर्थः ॥ ३० ॥ दामेति ॥ दामो व्यालः कटश्चेति दैत्या वक्ष्यन्ते । तेषां न्यायो विवेकशून्यो व्यवहारस्ते मा भवतु । भीमो भासो दृढ इति च दैत्याः तेषां स्थित्या तव विशोकतास्तु ॥ ३१ ॥ दामेति ॥ भवतापाः संसारदुःखानि तानपहर्तुं शीलमस्येति ॥ ३२ ॥ ३३ ॥ ३४ ॥ तस्येति ॥

श्रीवसिष्ठ उवाच ॥

दामव्यालकटन्यायं भीमभासदृढस्थितिम् ।
शृणु राघव तच्छ्रुत्वा यथेच्छसि तथा कुरु ॥ ३३ ॥
आसीत्पातालकुहरे सर्वैश्वर्यमनोहरे ।
शम्बरो नाम दैत्येन्द्रो मायामणिमहार्णवः ॥ ३४ ॥
तस्यादिदेवदेवस्य कठिनोड्डामराकृतेः ।
बभूव विपुलं सैन्यमासुरं सुरनाशनम् ॥ ३५ ॥
तस्मिन्मायाबले सुप्ते देशान्तरगते तथा ।
तत्सैन्यं तरसा जघ्नुश्छिद्रं प्राप्य किलामराः ॥ ३६ ॥
अथ शम्बरदैत्येन मुण्डिकाङ्कद्रुमादयः ।
रक्षार्थं मन्त्रिसामन्ताः स्वसेनासु नियोजिताः ॥ ३७ ॥
तानप्यन्तरमासाद्य जघ्नुर्देवा भयानकान् ।
स्वयं कोपादथायासीच्छम्बरः सुरपत्तनम् ॥ ३८ ॥
तस्य मायाबलाद्भीताः सुरास्तेऽन्तर्धिमाययुः ।
मेरुकाननकुञ्जेषु भयभारावयन्त्रिताः ॥ ३९ ॥
क्रन्दत्क्षुद्रामरगणं बाष्पक्लिन्नाङ्गनामुखम् ।
शून्यं ददर्श स स्वर्गं कल्पक्षीणजगत्समम् ॥ ४० ॥
विहृत्य कुपितस्तत्र दोर्दण्डमदघूर्णितः ।
लोकपालपुरीं दग्ध्वा जगामात्मीयमालयम् ॥ ४१ ॥

आदिदेवाः पूर्वदेवा दैत्याः तेषां देवो जातस्तस्य कठिनोड्डामरा भयंकरा च आकृतिर्यस्य ॥ ३५ ॥ ३६ ॥ अथेति ॥ मुण्डिकाङ्क-द्रुमादयः मुण्डिकाङ्को द्रुमश्च आदिर्येषां ते ॥ ३७ ॥ ३८ ॥ ३९ ॥ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ वासनेति ॥

एवं दृढतरीभूते द्वेषे दानवदेवयोः।
देवाः स्वर्गं परित्यज्य दिक्षु जग्मुरदर्शनम् ॥ ४२ ॥
अथ शम्बरदैत्येन ये ये सेनाधिनायकाः।
क्रियन्ते यत्नतस्तांस्ताञ्जघ्नुर्यत्नपराः सुराः ॥ ४३ ॥
यावदुद्वेगमापन्नः शम्बरः कोपवान्भृशम्।
ससर्ज मायया घोरानसुरांस्त्रीन्महाबलान् ॥ ४४ ॥
निर्मिता मायया भीमाः पक्षक्षुब्धा इवाद्रयः।
उदगुस्ते महामाया दामो व्यालः कटस्तथा ॥ ४५ ॥
वासनात्माभिमानाभ्यां हीनास्ते प्रथमोद्गताः।
नाभिपातं न वापातं न विदुस्ते पलायनम् ॥ ४६ ॥
न जीवितं न मरणं समरे न जयाजयौ।
केवलं सैनिकानग्रे दृष्ट्वा ते हननोद्यताः ॥ ४७ ॥
शम्बरश्चिन्तयामास परितुष्टमनास्तदा।
इष्टानिष्टाभिरेते हि वासनाभिर्यदुज्झिताः ॥ ४८ ॥
तदेते न पलायन्ते देवैरभिहता अपि।
इति निर्णीय दैत्येन्द्रो दामव्यालकटान्विताम् ॥ ४९ ॥
सेनां संप्रेषयामास देवेन्द्रबलघातिनीम्।
दैत्याः सागरकुञ्जेभ्यः कन्दरेभ्यश्च सायुधाः ॥ ५० ॥
उदगुर्भीमनिर्ह्लादाः सपक्षगिरिलीलया।
अथोत्तस्थुर्निकुञ्जेभ्यः कन्दरेभ्यः सुरा बलात् ॥ ५१ ॥

वासनात्माभिमानाभ्यां लोकवासनया देहाभिमानेन च हीनाः। यतः प्रथमोद्गताः मायावशात्परस्मादात्मन एवोद्गताः। अतएव अभिपातं शत्रून्प्रत्यभियानं आपातं शत्रूणामागमनं च न विदुः न जानन्ति ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

प्रयान्त इव शैलेन्द्रा भीमाः स्वर्वासिनां गणाः ।
देवासुरपताकिन्योस्तद्युद्धमभवत्तयोः ॥ ५२ ॥

अकालोल्बणकल्पान्तभीषणं भुवनान्तरे ।
तस्मिंस्तदा वर्तमाने घोरे समरसंभ्रमे ॥ ५३ ॥

पतिताङ्गायुधानीह प्रस्रवद्रुधिराणि च ।
पयांसीव विशीर्णानि देवसैन्यानि दुद्रुवुः ॥ ५४ ॥

दामव्यालकटास्तानि चिरमन्तर्हितान्यपि ।
अनुजग्मुर्लसन्नादमिन्धनानीव पावकाः ॥ ५५ ॥

अन्विष्यन्तोऽपि यत्नेन नालभन्तासुराः सुरान् ।
अलब्धेष्वमरौघेषु दामव्यालकटास्तथा ॥ ५६ ॥

जग्मुः पातालकोशस्थं प्रभुं प्रमुदिताशयाः ।
अथ देवा विषण्णास्ते क्षणमाश्वास्य वै ययुः ॥ ५७ ॥

दामादिभिश्च विजिता ब्रह्माणममितौजसम् ।
तेषामाविरभूद्ब्रह्मा रक्तो रक्तासनच्छविः ॥ ५८ ॥

प्रणेमुस्ते सुरास्तस्मै तत्सर्वं शम्बरेहितम् ।
सम्यक्प्रकथयामासुर्दामव्यालकटक्रमम् ॥ ५९ ॥

समाकर्ण्याखिलं ब्रह्मा विचार्य स विचारवान् ।
उवाचेदं सुरानीकमाश्वासनपरं वचः ॥ ६० ॥

ब्रह्मोवाच ॥

हन्त वर्षसहस्रान्ते शम्बरस्य रणे सुराः ।
जेतव्या समरे सेना तावत्कालं प्रतीक्ष्यताम् ॥ ६१ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

दामव्यालकटानेतान्युध्यध्वममरेश्वराः ।
योधयन्तः पलायध्वं युद्धार्थं पुनरेव च ॥ ६२ ॥
युद्धाभ्यासबलादेषा मुकुराणामिवाशये ।
अहङ्कारचमत्कारः प्रतिबिम्बमुपैष्यति ॥ ६३ ॥
गृहीतवासना ह्येते दामव्यालकटासुराः ।
सुजेया वो भविष्यन्ति लग्नजालाः खगा इव ॥ ६४ ॥
आस्थामात्रमनन्तनां दुःखानामाकरं विदुः ।
अनास्थामात्रमभितः सुखानामाकरं विदुः ॥ ६५ ॥
वासनातन्तुबद्धोऽयं लोको हि परिवर्तते ।
सा प्रवृद्धातिदुःखाय सुखायोच्छेदमागता ॥ ६६ ॥
धीरोऽप्यतिबहुज्ञोऽपि प्रवृद्धोऽपि महानपि ।
तृष्णया बध्यते जन्तुः सिंहः शृङ्खलया यथा ॥ ६७ ॥
इत्युक्त्वा भगवान्देवस्तत्रैवान्तर्धिमाययौ ।
सुरास्त्वाकर्ण्य तद्वाक्यं जग्मुश्चाभिमतां दिशम् ॥ ६८ ॥
चक्रुर्दुन्दुभिनिर्घोषं प्रलयाभ्ररवोपमम् ।
अथ दैत्यैर्महाव्योम्नि तैः पातालतलोत्थितैः ॥ ६९ ॥
कालक्षेपकरं घोरं पुनर्युद्धमवर्तत ।
पुनः पलायनं चक्रुरयुध्यन्त पुनः सुराः ॥ ७० ॥
एवं ते कालहरणं युद्धेन सुरपुङ्गवाः ।
चक्रुर्नानाविधोपायैर्दैत्यव्यामोहकारणात् ॥ ७१ ॥

॥ ६२ ॥ युद्धेति ॥ युद्धाभ्यासबलात्पुनःपुनर्युद्धप्रवर्तनात् । मुकुराणां दर्पणानां आशये अभ्यन्तरे इव अहंकाररूपश्चमत्कारः प्रत्ययविशेषः प्रतिबिम्बमुपैष्यतीत्यन्वयः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

एतावता च कालेन दृढाभ्यासादहंकृतेः ।
दामादयोऽहमित्यास्थां जगृहुर्युक्तचेतसः ॥ ७२ ॥
भववासनया ग्रस्ता मोहवासनया युताः ।
आशापाशनिबद्धास्ते ततः कृपणतां गताः ॥ ७३ ॥
स्थिरो भवतु मे देहः सुखायास्तु धनं मम ।
इति वृद्धधियां तेषां धैर्यमन्तर्धिमाययौ ॥ ७४ ॥
अतस्तस्मिन् रणे दैत्याः सापेक्षत्वमुपाययुः ।
मरिष्यामो मरिष्याम इति चिन्ताहताशयाः ॥ ७५ ॥
अथ प्रम्लानसत्त्वास्ते हन्तुमग्रगतं भटम् ।
न शेकुरिन्धने क्षीणे हविर्दग्धमिवाग्नयः ॥ ७६ ॥
बहुनात्र किमुक्तेन मरणाद्भीतचेतसः ।
पलायनैकशरणा नष्टास्ते त्रिदशारयः ॥ ७७ ॥
अहमेतत्प्रबोधाय वच्मि राम महामते ।
दामव्यालकटन्यायो मा भवत्विति लीलया ॥ ७८ ॥
अविवेकानुसंधानाच्चित्तमापदमीदृशीम् ।
अनन्तभवदुःखाय परिगृह्णाति हेलया ॥ ७९ ॥

राम उवाच ॥

कथं दामकटव्यालाः समुत्पन्नाः परात्पदात् ।
इति मे संशयं ब्रह्मन्यथावच्छेत्तुमर्हसि ॥ ८० ॥

वसिष्ठ उवाच ॥

यथा दामादयो राम प्रतिभामात्ररूपिणः ।
तथैवेमे वयमिति न बहिः क्वापि संस्थिताः ॥ ८१ ॥

॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ यथेति ॥ दामादयो

अलीकमेव त्वद्भावो मद्भावोऽलीकमेव च ।
दामव्यालकटादीनां सद्भावोऽलीकमेव च ॥ ८२ ॥
प्रतिभासमयी काचिज्जीवशक्तिः परात्मनः ।
शम्बरध्यानविक्षुब्धा त्रिधोल्लासमवाप सा ॥ ८३ ॥
तस्मान्नेमे वयं सत्या न च दामादयः क्वचित् ।
सत्यं संवेदनं शुद्धं बोधाकाशं निरञ्जनम् ॥ ८४ ॥
सत्यं सर्वगतं शान्तमस्त्यनस्तमनोदयम् ।
तस्य शक्तिसमुल्लासमात्रं जगदिति स्थितिः ॥ ८५ ॥
सर्वत्र सर्वमिदमस्ति यथानुभूतं
नो किंचन क्वचिदिहास्ति न चानुभूतम् ।

यथा प्रतिभामात्ररूपिणः मायापरिकल्पितत्वात्प्रातिभासिकदेहाः । इमे वयमपि तथैव प्रतिभामात्ररूपिणः बहिश्चिदाकाशाद्बहिः क्वापि न संस्थिताः ॥ ८१ ॥ ८२ ॥ प्रतीति ॥ परात्मनः सकाशात्प्रतिभासमयी सा काचिज्जीवशक्तिः शम्बरध्यानेन विक्षुब्धा सती त्रिधा दामादिरूपेण उल्लासमवाप ॥ ८३ ॥ तस्मादिति ॥ भेदः प्रपञ्चः सर्वोऽप्यसत्यः । चिदाकाशमात्रं शुद्धं संवेदनमेव सत्यम् ॥८४॥ तस्य चिन्मात्रस्य शक्तिसमुल्लासमिदं जगत्स्थितमिति श्लोकद्वयाभिप्रायः ॥ ८५ ॥ सर्वत्रेति ॥ यथानुभूतं अनुभवानुसारेण सर्वं सर्वत्रास्ति न चानुभूतम् । चशब्दश्चेदर्थे । न चेदनुभूतं तर्हि किंचन क्वचिन्नास्ति । शान्तं सद्रूपमेकं वस्तु इत्थमाततं व्याप्तं सदिदं विश्वमास्ते जगद्रूपेण भाति अतः कारणात्त्वं संत्यक्तशङ्कं अभेदं वा स्वशङ्कां भेदं च विहाय सुखं तिष्ठेत्यर्थः ॥ ८६ ॥ इति श्रीमदल्लालसूरिसूनुना पदवाक्यप्रमाणपारावारदृश्वना श्रीमुम्मडिदेवविद्वदा-

शान्तं सदेकमिदमाननमित्थमास्ते
संत्यक्तशङ्कमपभेदमतस्त्वमास्स्व ॥ ८६ ॥

इति श्रीवाल्मीकीये मोक्षोपाये स्थितिप्रकरणे दामाद्युपाख्यानं
नाम द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः

वसिष्ठ उवाच ॥

इदं मे स्यादिदं मे स्यादिति बुद्धिर्महामते ।
स्वेन दौर्भाग्यदैन्येन न सत्यमुपतिष्ठति ॥ १ ॥
वेत्ति नित्यमुदारात्मा त्रैलोक्यमपि यस्तृणम् ।
तं त्यजन्त्यापदः सर्वा मृगा इव जरत्तृणम् ॥ २ ॥
परिस्फुरति यस्यान्तर्नित्यं सत्यचमत्कृतिः ।
ब्राह्ममण्डमिवाखण्डं लोकेशाः पालयन्ति तम् ॥ ३ ॥

चार्यविरचिते संसारतरणिनाम्नि वासिष्ठविवरणे दामाद्युपाख्यानं नाम द्वितीयः सर्गः ॥ २ ॥

पूर्वं दामाद्युपाख्याने विवेकादहंममाभिमानाभ्यां संसारो वर्धत इत्युक्तम्, इदानीं भीमाद्युपाख्याने देहादावहंकाररहित्यं पुरुषार्थाय प्रकल्पत इति प्रतिपाद्यते । तत्रादौ हितमुपदिशति—इदमिति ॥ सर्वं जगदात्मन्येव वर्तते । सर्वात्मकश्चात्मा । एवं च सति स्वेनैव दौर्भाग्यदैन्येन दुर्भगोऽहमिति दीनभावेन इदं पुत्रादिकं मे स्यात् इदं क्षेत्रादिकं च मे स्यादिति या बुद्धिः तस्या हेतोः सत्यं ब्रह्म नोपतिष्ठति न संनिधत्ते । न प्रकाशत इत्यर्थः ॥१॥२॥ परीति ॥ यस्यान्तः सत्यचमत्कृतिः सत्यस्वरूपस्य ब्रह्मणोऽनुसंधानं नित्यं परिस्फुरति तं पुरुषं ब्रह्मगर्भत्वात् ॥ ब्रह्माण्डमिव लोकेशाः पालयन्ति । बहुमन्यन्त

येषां गुणेषु संतोषो रागो येषां श्रुतं प्रति ।
सत्यव्यसनिनो ये च ते नराः पशवोऽपरे ॥ ४ ॥
अथापदि दुरन्तायां नैव गन्तव्यमक्रमम् ।
राहुरप्यक्रमेणैव पिबन्नप्यमृतं मृतः ॥ ५ ॥
अवश्या वश्यतां यान्ति यान्ति सर्वापदः क्षयम् ।
अक्षयं भवति श्रेयः क्रीतं येन गुणैर्यशः ॥ ६ ॥
परमं पौरुषं यत्नमास्थायादाय सूद्यमम् ।
यथाशास्त्रमनुद्वेगमाचरन्को न सिध्यति ॥ ७ ॥
यथाशास्त्रं विहरता त्वरा कार्या न सिद्धिषु ।
चिरकालं परा पक्का सिद्धिः पुष्टफला भवेत् ॥ ८ ॥
वीतशोकभयायासमगर्धमपयन्त्रणम् ।
व्यवहारो यथाशास्त्रं क्रियतां मा विनश्यताम् ॥ ९ ॥
अनर्थायार्थसंपत्तिर्भोगौघो भवरोगदः ।
आपदः संपदः सर्वाः सर्वत्रानादरो जयः ॥ १० ॥

आचारचारुचरितस्य विविक्तवृत्तेः
संसारसौख्यफलदुःखदशास्वगृध्नोः ।
आयुर्यशांसि च गुणाश्च सहैव लक्ष्म्या
फुल्लन्ति माधवलता इव सत्फलाय ॥ ११ ॥

इत्यर्थः ॥ ३ ॥ येषामिति ॥ ते उक्तगुणयुक्ता एव नराः पुरुषाः । अपरे पशव इत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ यथेति ॥ चिरकालं पक्का सिद्धिः पुष्टफला सती परा उत्कृष्टा भवेदित्यन्वयः ॥ ८ ॥ वीतेति ॥ अगर्धं अनाकाङ्क्षम् । गृधु अभिकाङ्क्षायामित्यस्माद्धातोः । अपयन्त्रणं अपगतकौटिल्यम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

वसिष्ठ उवाच ॥

न तपांसि न तीर्थानि न शास्त्राणि जपन्ति हि ।
संसारसागरोत्तारे सज्जनासेवनं विना ॥ १२ ॥
लोभमोहरुषां यस्य तनुतानुदिनं भवेत् ।
यथाशास्त्रं विहरति स्वकर्मसु स सज्जनः ॥ १३ ॥
अहमर्थोऽपरिज्ञातः परमार्थाम्बरेऽमलः ।
परिज्ञातोऽहमर्थस्तु परमार्थाम्बरं भवेत् ॥ १४ ॥
चिज्ज्योत्स्ना यावदेवान्तरहंकारघनावृता ।
विकासयति नो तावत्परमार्थकुमुद्वती ॥ १५ ॥
अहंभावोऽङ्कुरो जन्मवृक्षाणामक्षयात्मनाम् ।
ममेदमिति विस्तीर्णास्तेषां शाखास्त्वसत्फलाः ॥ १६ ॥

राम उवाच ॥

किमाकृतिरहंकारः कथं संत्यज्यते प्रभो ।
सशरीरोऽशरीरश्च त्यक्ते तस्मिंश्च किं भवेत् ॥ १७ ॥

वसिष्ठ उवाच ॥

त्रिविधो राघवास्तीह सोऽहंकारो जगत्त्रये ।
द्वौ श्रेष्ठावितरस्त्याज्यः शृणु ते कथयाम्यहम् ॥ १८ ॥

अहमिति ॥ अपरिज्ञातोऽहंशब्दार्थः ॥ परमार्थाम्बरे चिदाकाशे मलः कलङ्क इव परिज्ञातः श्रेष्ठ एवाहमर्थः परमार्थाम्बरं भवेत् । जीवब्रह्मणोरैक्यादिति भावः ॥ १४ ॥ चिज्ज्योत्स्नेति ॥ परमार्थकुमुद्वती परमार्थकैवल्यम् ॥ १५ ॥ अहमिति ॥ जन्मनामेव वृक्षाणां अहंभाव एवाङ्कुरः ममेदमिति भावः । तेषां जन्मवृक्षाणां असत्फलाः दुःखफलाः शाखाः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

अहं सर्वमिदं विश्वं परमात्माहमच्युतः ।
नान्यदस्तीति संचिन्त्य परमा सा ह्यहंकृतिः ॥ १९ ॥
एषा सा नैव बन्धाय जीवन्मुक्तस्य विद्यते ।
सर्वस्माद्व्यतिरिक्तोऽहं वालाग्रशतकल्पितः ॥ २० ॥
इति या संविदेवासौ द्वितीयाहंकृतिः शुभा ।
मोक्षायैषा न बन्धाय जीवन्मुक्तस्य विद्यते ॥ २१ ॥
पाणिपादादिमात्रोऽयमहमित्येष निश्चयः ।
अहंकारस्तृतीयोऽसौ लौकिकस्तुच्छ एव सः ॥ २२ ॥
वर्ज्य एष दुरात्मासौ कन्दः संसारसंततेः ।
अनेनाभिहतो जन्तुरधोऽधः परिधावति ॥ २३ ॥
अनया दुरहंकृत्या भावात्संत्यक्तया चिरम् ।
शिष्टाहंकारवाञ्जन्तुर्भवत्याशु विमुक्तये ॥ २४ ॥
प्रथमौ द्वावहंकारावङ्गीकृत्यातिलौकिकौ ।
तृतीयाहंकृतिस्त्याज्या लौकिकी दुःखदायिनी ॥ २५ ॥
एषा तावत्परित्याज्या त्यक्त्वैनां दुःखदायिनीम् ।
यथायथा पुमांस्तिष्ठेत्परमेति तथातथा ॥ २६ ॥
अहंकृतिद्दशावेते पूर्वोक्ते भावयन्यदि ।
तिष्ठत्यभ्येति परमं तत्पदं पुरुषोऽनघ ॥ २७ ॥
अथ ते अपि संत्यज्य सर्वाहंकृतिवर्जितः ।
स तिष्ठति तथात्युच्चैः पदमेवाधिरोहति ॥ २८ ॥

॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ अनयेति ॥ अनया शरीरपरिमितात्मविषयतया दुरहंकृत्या भावादभिप्रायाच्चिरं संत्यक्तया सत्या शिष्टाहंकारवान् सर्वात्मकोऽहं सर्वातीतोऽहमिति च यौ द्वावहंकारौ शिष्टौ तद्वाञ्जन्तुर्मुक्ततां याति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

शरीरावस्था महापुण्या दुरहंकृतिवर्जनात् ।
अत्यन्तं परमं श्रेय एतदेव परं पदम् ॥ २९ ॥

वसिष्ठ उवाच ॥

अथ ते शृणु वक्ष्यामि दामादिषु गतेष्वपि ।
देवनिर्जितसैन्योऽसौ शम्बरो दृप्तमानसः ॥ ३० ॥
पुनर्देववधोपायं चिन्तयामास दानवः ।
दामाद्यो ये रचितास्ते मया मायया पुरा ॥ ३१ ॥
मोहात्तैर्भाविता बुद्धिर्मिथ्यैवान्तरहंकृतिः ।
इदानीं संसृजाम्यन्यान्दानवान्माययोत्तमान् ॥ ३२ ॥
तानप्यध्यात्मशास्त्रज्ञान्सविवेकान्करोम्यहम् ।
ततस्तत्त्वपरिज्ञानान्मिथ्याभावनयोज्झिताः ॥ ३३ ॥
नाहंकारं प्रयास्यन्ति विजेष्यन्ते च ते सुरान् ।
इति संचिन्त्य दैत्येन्द्रस्तादृशान्दानवान्धिया ॥ ३४ ॥
माययोत्पादयामास बुद्बुदानिव वारिधिः ।
सर्वज्ञा वेद्यवेत्तारो वीतरागा गतैनसः ॥ ३५ ॥
याथाप्राप्तैककर्तारो भावितात्मान उत्तमाः ।
भीमो भासो दृढ इति नामभिः परिलाञ्छिताः ॥ ३६ ॥
जगत्तृणमिवाशेषं पश्यन्तः पावनाशयाः ।
ते दैत्येन्द्रवचः प्राप्य छादयामासुरम्बरम् ।
अयुध्यन्त समं देवैरपि वर्षगणान्बहून् ॥ ३७ ॥

शरीरेति ॥ दुरहंकृतिवर्जनाद्दुरहंकारं पूर्वोक्तं वर्जयित्वा या शरीरावस्था सा महापुण्या महतः पुण्यस्य हेतुः योगसाधनत्वात् परमं श्रेयः । परं पदमित्यपि एतदेव नान्यत् तत्साधनत्वात् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

तेषां यावदुदेत्यन्तर्ममेदमिति वासना ।
तावत्कोऽयमहन्तेति विचाराद्यात्यसत्यताम् ॥ ३८ ॥
ततस्तैर्निरहंकारैर्जरामरणनिर्भयैः ।
प्राप्तार्थकारिभिर्वीरैर्वर्तमानानुवर्तिभिः ॥ ३९ ॥
वीतरागैर्गतद्वेषैः सततं समदृष्टिभिः ॥ ४० ॥
सा दैवी दानवैः सेना भीमभासदृढादिभिः ।
हता भुक्ता क्षता प्लुष्टा स्वान्नश्रीरिव भोक्तृभिः ॥ ४१ ॥
भीमभासदृढक्षुण्णा ततो गीर्वाणवाहिनी ।
परिदुद्राव वेगेन गङ्गेव हिमवच्च्युता ॥ ४२ ॥
सा सुरानीकिनी देवं क्षीरोदार्णवशायिनम् ।
जगाम शरणं शैलं वातार्तेवाभ्रमालिका ॥ ४३ ॥
अथ देवेन ते दैत्याः सङ्गरे भृशदारुणे ।
चक्राग्निज्वालनिर्दग्धाः प्रापिता वैष्णवीं पुरीम् ॥ ४४ ॥
तस्माद्वासनया बद्धं मुक्तं निर्वासनं मनः ।
राम निर्वासनीभावमाहराशु विवेकतः ॥ ४५ ॥
सम्यगालोकनात्सत्याद्वासना प्रविलीयते ।
वासनाविलये चेतः शाम्यत्यस्नेहदीपवत् ॥ ४६ ॥

इति श्रीयोगवासिष्ठसारे स्थितिप्रकरणे भीमाद्युपाख्यानं नाम तृतीयः सर्गः ॥ ३ ॥

---

तेषामिति ॥ तेषां भीमादीनां यावन्ममेदं अयमहमिति च वासनान्तरुदेति तावत्कालं सा वासना विचारात् स्वस्वरूपविचाराद्धेतोः असत्यतां याति तेषां ब्रह्मवित्त्वादिदमहन्ते न स्थिरे इत्यर्थः ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

## चतुर्थः सर्गः

### वसिष्ठ उवाच ॥

अस्य संसारदुःखस्य सर्वोपद्रवकारिणः ।
उपाय एक एवास्ति मनसः स्वस्य निग्रहः ॥ १ ॥
श्रूयतां ज्ञानसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते ॥ २ ॥
किमन्यैः शास्त्रसन्दर्भैः क्रियतामेतदेव तु ।
यद्यत्स्वादिह तत्सर्वं दृश्यतां विषवह्निवत् ॥ ३ ॥
विषया विषमाभोगाः प्रविचार्य पुनः पुनः ।
मनसा संपरित्यज्य सेव्यमानाः सुखावहाः ॥ ४ ॥
मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ।
ज्ञमनो नाशमभ्येति मनोऽज्ञस्य हि शृङ्खला ॥ ५ ॥

इति श्रीमदल्लालसूरिसूनुना पदवाक्यप्रमाणपारावारपारदृश्वना श्रीमुम्मडिदेवविद्वदाचार्यविरचिते संसारतरणिनाम्नि वासिष्ठविवरणे स्थितिप्रकरणे भीमाद्युपाख्यानं नाम तृतीयः सर्गः ॥ ३ ॥

पूर्वं भीमाद्युपाख्याने अहंकारपरित्यागः पुरुषार्थाय कल्पत इत्युक्तम् । इदानीं तदुपपादनाय जगत्स्थितेर्मायिकत्वं विशदं प्रतिपाद्यते । तत्र तावदुपायमुपदिशति—अस्येति ॥ संसारदुःखस्य दुःखयतीतिदुःखम् । दुःखहेतुरित्यर्थः । संसाररूपस्य दुःखहेतोरिति यावत् । दुःखत्वे हेतुः सर्वोपद्रवदायिन इति । उपायः निवृत्त्युपाय इत्यर्थः ॥ १ ॥ २ ॥ किमिति ॥ इदं जगति यद्वस्तु स्वादु मनसः प्रियं प्रतीयते तत्सर्वं विषवद्वह्निवच्च दृश्यतां संतापहेतुत्वादहितमिति विचार्यताम् ॥ ३ ॥ ४ ॥ मनस इति ॥ मनसः अभ्युदयः अभित उदयः । विस्तार

नानन्दं न निरानन्दं न चलं नाचलं स्थिरम् ।
न सन्नासन्न चैतेषां मध्यं ज्ञानिमनो विदुः ॥ ६ ॥

श्रीराम उवाच ॥

यथेदं संस्थितं विश्वं विश्वातीते चिदात्मनि ।
तन्मे कथय हे ब्रह्मन्पुनर्बोधविवृद्धये ॥ ७ ॥

वसिष्ठ उवाच ॥

यथा सर्वगतः सौक्ष्म्यादाकाशो नोपलक्ष्यते ।
तथा निरंशश्चिद्भावः सर्वगोऽपि न लक्ष्यते ॥ ८ ॥
सर्वसंकल्परहिता सर्वसंज्ञाविवर्जिता ।
सैषा चिदविनाशात्मा स्वात्मेत्यादिकृताभिधा ॥ ९ ॥

इत्यर्थः । स मनोऽभ्युदयो नाशः स्वरूपादर्शनहेतुत्वात् । मनोनाशस्तु आत्मनो महोदयः निःश्रेयसहेतुत्वात् । ज्ञस्य ज्ञानिनो मनोनाशमभ्येति अज्ञस्य तु मन एव शृङ्खला ॥५॥ नेति ॥ ज्ञानिनो मनो निर्वासनत्वाद्व्यवहारहेतुत्वाच्च किमित्यपि निरूपयितुं न शक्यते । तथाहि । न तावदानन्दात्मकं जडत्वात् । न च निरानन्दं आनन्दानुभवहेतुत्वात् । न चलं आत्मैकनिष्ठत्वात् । नाचलं स्थिरं नियतं यथा भवति तथा बहिरपि स्फुरणात् । न सत् संकल्पादेस्तत्कार्यस्याभावात् । नासत् इन्द्रियाणां विषयेषु प्रवर्तनात् । न चैतेषामानन्दनिरानन्दादीनां मध्यं परस्परविरोधे पक्षान्तरानुदयात् । तस्मादनिर्वचनीयं ज्ञानिमनो विदुरित्यर्थः ॥ ६ ॥ ७ ॥ विश्वस्य विवर्तभावेन चिदात्मनावस्थानेन हि दर्शयितुं चित्स्वरूपनिरूपणाय दुर्लक्ष्यत्वं तावदाह—यथेति ॥ चिदाभासश्चित्प्रकाश्यो भूताकाशः सौक्ष्म्यान्निरवयवत्वाद्यथा नोपलक्ष्यते तथा चिद्भावश्चिद्रूपः पदार्थः सर्वगोऽपि निरंशत्वान्नोपलक्ष्यते ॥ ८ ॥ सर्वेति

आकाशशतभागाच्छा ज्ञेषु निष्कलरूपिणी ।
सकलामलसंसारस्वरूपैकात्मदर्शिनी ॥ १० ॥
तरङ्गादिमयी स्फारा नानाता सलिलार्णवे ।
तस्मान्न व्यतिरेकेण यथा भाति विसारिणी ॥ ११ ॥
त्वत्तामत्तामयी स्फारा नाना सेयं चिदर्णवे ।
चिन्मात्रा व्यतिरेकेण तथैवेत्थं प्रकाशते ॥ १२ ॥
अज्ञेष्वसत्स्वभावोग्रसंसारगणगर्भिणी ।
ज्ञेषु प्रकाशरूपैव सकलैकात्मिका सती ॥ १३ ॥

श्लोकद्वयं वाक्यम् । वस्तुतः सर्वसंज्ञाविवर्जितापि सैषा चित् स्वात्मेत्यादिकृताभिधा । स्वमित्यात्मेति चेतन इत्येवमादिभिः शब्दैः कल्पितसंज्ञेत्यर्थः ॥ ९ ॥ आकाशात् शतेन भागैरच्छा शतगुणाच्छेत्यर्थः । ज्ञेषु ज्ञानिषु निष्कलरूपिणी निष्कलङ्कस्वरूपा । सकलाज्ञनिष्ठायाः पूर्वमभिधानादज्ञेषु सकलङ्का अतएव मलसंसारस्वरूपैकात्मदर्शिनी मलमज्ञानं संसारस्तथा कार्यं तयोः स्वरूपेण सह एकः ऐक्यापन्नो य आत्मा तथाभूतं आत्मानं दर्शयन्ती अज्ञानतत्कार्याभ्यामभिन्नमात्मानं दर्शयन्तीत्यर्थः । मलसंसारस्वरूपेणात्मदर्शिनीति पाठेऽपि स एवार्थः । मलसंसारयोः स्वरूपेण अभिन्नं आत्मानं दर्शयतीति ॥ १० ॥ तरङ्गेतिश्लोकद्वयं वाक्यम् । अर्णवे तरङ्गफेनबुद्बुदादिस्वरूपा गतिवशाद्विसारिणी नानारूपता यथा तस्मादर्णवादव्यतिरेकेण प्रकाशते ॥ ११ ॥ तथा त्वत्तामत्तामयी स्फारेयं नाना मता अपि चिदर्णवे चिन्मात्राव्यतिरेकेणैव प्रकाशत इत्यन्वयः ॥ १२ ॥ अज्ञेष्विति श्लोकत्रयं वाक्यम् । अज्ञेषु असत्स्वभावा रागद्वेषादिकालुष्याद्दुःखस्वभावा अतएवोग्रसंसारगणगर्भिणी

अनुभूतिवशान्नित्यं कर्मादीनां प्रकाशिनी।
स्वादिनी सर्वभावानां भावनी भवभोगिनाम् ॥ १४ ॥
नास्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति।
न च याति न चायाति न चेह न च नेह चित् ॥ १५ ॥
सैषा चिदमलाकारा स्वयमात्मनि संस्थिता।
राघवेयं प्रपञ्चेन जगन्नाम्ना विजृम्भते ॥ १६ ॥
तत्स्वभावेन चिन्नाम्ना सर्वगेनोदितात्मना।
प्रकाशेनाप्रकाशेन निरंशेनांशधारिणा ॥ १७ ॥

घोरेण संसृतिसमूहेन गर्भवती। संसारपरम्पराहेतुरित्यर्थः। ज्ञेषु तु प्रकाशरूपा विशुद्धज्ञानरूपैव सकलैकात्मिका सर्वत्राभिन्नस्वभावा सती ॥ १३ ॥ अनुभूतीति ॥ अनुभूतिवशात्तत्तद्विषयानुभववशात् कर्मादीनां कार्यकारकाणां प्रकाशनी सर्वभावानां सर्वेषां भोग्यवस्तूनां स्वादनी रसज्ञानहेतुः। भवभोगिनां संसारिणां भावनी प्रवृत्तिहेतुः एवंभूता चित् ॥ १४ ॥ नास्तमेति न चोदेति नित्यत्वात्। नोत्तिष्ठति न तिष्ठति निर्विकारत्वात्। न च याति न चायाति निष्क्रियत्वात्। न चेह वर्तते निराधारत्वात्। न च नेह वर्तते परिपूर्णत्वात् ॥ १५ ॥ सेति ॥ सैषा पूर्वोक्ता चिन्निर्मलाकारा स्वात्मन्येव संस्थिता इत्थं जगन्नाम्ना प्रपञ्चेन विजृम्भते ॥ १६ ॥ तदिति सार्धश्लोकत्रयं वाक्यम्। तत्पूर्वोक्तं चिद्रूपं परं वस्तु सर्वगेन परिपूर्णेन उदितात्मना अनस्तमितरूपेण प्रकाशेनाप्रकाशेन ज्ञानाज्ञानरूपेण निरंशेनांशधारिणा निरवयवसावयवरूपेण स्वकल्पनायोगात् स्वसंकल्पवशात् स्वयमेव अनन्तपदं स्वस्वरूपावस्थानमुज्झता अयमस्मीति भावेन उपहिताकाराभिमानेन अज्ञपदं जीवभावं गच्छता

स्वयं स्वकल्पनायोगादनन्तं पदमुज्झता ।
अयमस्मीति भावेन गच्छता ज्ञपदं शनैः ॥ १८ ॥
नानातायां प्रवृद्धायामस्यां संसृतिपूर्वकम् ।
भावाभावग्रहोत्सर्गपदे स्थितिमुपागते ।
पुर्यष्टकं स्पन्दशतैः करोति न करोति च ॥ १९ ॥
इत्थं स्थिरबलाकाराः संसारावलयोऽभितः ।
स्वभावाद्ब्रह्मणः सर्वाः पुनरायान्ति यान्ति च ॥ २० ॥
व्योमन्येव चिदाभासे निदाघात्सरितो यथा ।
लक्ष्यन्ते तद्वदेवेमाश्चित्तत्वे सृष्टिदृष्टयः ॥ २१ ॥
यथा मदवशादात्मा अन्यवत्प्रतिभासते ।
तथैव चित्त्वाविद्यातः स एवाऽस इति स्थितः ॥ २२ ॥
येन शब्दं रसं रूपं गन्धं जानासि राघव ।
सोऽयमात्मा परंब्रह्म सर्वमापूर्य संस्थितः ॥ २३ ॥

चिन्नाम्ना स्वभावेन संसृतिपूर्वकम् ॥ १७ ॥ १८ ॥ नानातायां प्रवृद्धायां सत्यां भावाभावग्रहोत्सर्गपदे इदं भावरूपमिदमभावरूपमिदं गृहीतमिदमुत्सृष्टमित्येवंरूपे भेदपदे स्थितिमुपागते सति स्पन्दशतैर्विकल्पगतैः पुर्यष्टकं वक्ष्यमाणलक्षणं सूक्ष्मशरीरं करोति न करोति च । वस्तुतः कारणाभावात् ॥ १९ ॥ २० ॥ व्योमनीति ॥ यथा निदाघानन्तरं व्योम्नि सरितो वृष्टयो लक्ष्यन्ते तद्वन्निराभासे निष्कलङ्के चित्तत्त्वे सृष्टिरूपा दृष्टय इत्यर्थः ॥ २१ ॥ यथेति ॥ यथा ह्यात्मा मदवशात्संमोहानन्दसंभेदो मदिराकृतो मदः तद्वशात्स्वस्मादन्यवत्प्रतिभासते तथैव चित्त्वस्याविद्यातः चित्स्वरूपाज्ञानाद्धेतोः स एवात्मा अस इव तस्मादन्य इव स्थितः ॥२२॥ येनेति ॥ बाह्येन्द्रियप्रणालिकया बहिः प्रसृतेन येन चैतन्येन शब्दा-

ब्रह्मैवेदं स्थितं नाम्ना मलमस्तीह नेतरत् ।
तरङ्गोग्रगणैरम्भः सिन्धोः स्फुरति नो रजः ॥ २४ ॥
द्वितीया कल्पनैवेह न रघूद्वह विद्यते ।
ब्रह्ममात्रादृते वह्नावौष्ण्यमात्रादृते यथा ॥ २५ ॥
आदौ शमदमप्रायैर्गुणैः शिष्यं प्रबोधयेत् ।
पश्चात्सर्वमिदं ब्रह्म शुद्धस्त्वमिति बोधयेत् ॥ २६ ॥
अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ।
महानरकजालेषु स तेन विनियोजितः ॥ २७ ॥
प्रबुद्धबुद्धेः प्रक्षीणभोगेच्छस्य निराशिषः ।
नास्त्यविद्यामलमिति त्वादृशस्यैव गोचरः ॥ २८ ॥

दीन्विषयाञ्जानासि सोऽयं तादृशचैतन्यरूपोऽयमात्मा परंब्रह्म स एवात्मा सर्वमापूर्य संस्थितः ॥ २३ ॥ ब्रह्मेति ॥ ब्रह्मैव नाम्ना वियदादिनामभेदेन इदं जगत्स्थितम् । जगद्रूपेण स्थितमित्यर्थः । इह मलं अविद्यातत्कार्यरूपं इतरत् ब्रह्मणो व्यतिरिक्तं किंचिन्नास्ति । तथाहि ॥ सिन्धोस्तरङ्गोग्रगणैः अम्भ एव स्फुरति नो रजः । रज इत्युपलक्षणम् । न वस्त्वन्तरं स्फुरतीत्यर्थः ॥२४॥ द्वितीयेति ॥ यथा वह्नावौष्ण्यादृते द्वितीया कल्पना न विद्यते एवमिह जगति सच्चिदानन्दात्मकं यद्ब्रह्मरूपं तन्मात्रादृते द्वितीया कल्पना नास्ति ॥२५॥ इत्थं चेतनाचेतन प्रपञ्चस्य चिद्विवर्ततया तदभेदं निरूप्याधिकारिणस्त्वादृशस्यैवायमर्थः परिस्फुरतीति दर्शयितुमाह—आदाविति ॥ आदौ शमादिसाधनचतुष्टयसम्पत्तिं परीक्ष्य पश्चादधिकारिणं बोधयेदित्यर्थः ॥ २६ ॥ अनधिकारिबोधे तु महान्प्रत्यवाय इत्याह—अज्ञस्येति ॥ सः अज्ञः तेन । बोधकेन ॥ २७॥ प्रबुद्धेति ॥ निराशिषः निःसंकल्पस्य त्वादृशस्यैव अविद्यामलं नास्तीति बोधो गोचरः

सति दीप इवालोकः सत्यर्क इव वासरः ।
सति पुष्प इवामोदश्चिति सत्यां जगत्तथा ।
प्रतिभासत एवेदं न जगत्परमार्थतः ॥ २९ ॥

राम उवाच ॥

क्षीरोदकुक्षितुल्याभिः शीतलामलदीप्तिभिः ।
तवोक्तिभिर्विचित्राभिर्गम्भीराभिः प्रबोधितः ॥ ३० ॥
क्षणमान्ध्यमिवाप्नोमि क्षणं यामि प्रकाशताम् ।
शीतातपलवप्रावृड्लोलाभ्र इव वासरः ॥ ३१ ॥
अनन्तस्याप्रमेयस्य सर्वस्यैकस्य भास्वतः ।
अनस्तमितसारस्य कलना कथमागता ॥ ३२ ॥

वसिष्ठ उवाच ॥

यथाभूतार्थवाक्यार्थाः सर्वा एव ममोक्तयः ।
नासमर्था विरूपार्थाः पूर्वापरविरोधतः ॥ ३३ ॥

योग्य इत्यर्थः ॥ २८ ॥ सतीति ॥ दीपालोकादिवच्चिज्जगतोरपि कार्यकारणत्वात् न परस्परं वियोगो ऽयुतभावः(?) ॥ २९ ॥ क्षीरोदेति श्लोकद्वयं वाक्यम् ॥ शीतलवैरातपलवैश्चोपलक्षितः प्रावृड्लोलाभ्रः प्रावृषि वर्षाकाले लोलान्यभ्राणि यस्मिन्स वासर इव क्षणमान्ध्यमवाप्नोमि क्षणं प्रकाशतां यामीत्यन्वयः ॥ ३० ॥ ३१ ॥ अनन्तस्येति ॥ सर्वस्य सर्वात्मकस्य एकस्याद्वितीयस्य भास्वतः नित्यं प्रकाशमानस्य अनस्तमितसारस्य अनष्टशक्तेः कलना बन्धहेतुरविद्या कथमागता तेजसस्तिमिरावरणासंभवादिति भावः ॥ ३२ ॥ यथेति ॥ ममोक्तयः सर्वा एव यथाभूतार्थवाक्यार्थाः विसंवादिवाक्यार्था एव । असमर्था असंगतार्थास्तु न भवन्ति पूर्वापरविरोधतो विरूपार्था

ज्ञानदृष्टौ प्रसन्नायां प्रबोधे विततोदये ।
यथावज्ज्ञास्यसि स्वस्थो मद्वाग्दृष्टिबलाबलम् ॥ ३४ ॥
अविद्ययैवोत्तमया स्वात्मनाशोद्यमोत्थया ।
विद्या सा प्राप्यते राम सर्वदोषापहारिणी ॥ ३५ ॥
शाम्यति ह्यस्त्रमस्त्रेण मलेन क्षाल्यते मलः ।
शमं विषं विषेणैति रिपुणा हन्यते रिपुः ॥ ३६ ॥
ईदृशी भूतमायेयं या स्वनाशेन हर्षदा ।
न लक्ष्यते स्वभावोऽस्याः प्रेक्ष्यमाणैव नश्यति ॥ ३७ ॥
नास्त्येषा परमार्थेनेत्येवं भावनयेद्धया ।
ज्ञो भूत्वा ज्ञेयसंप्राप्त्या ज्ञास्यस्यस्यास्त्वमाशयम् ॥ ३८ ॥
यावत्तु न प्रबुद्धत्वं तावन्मद्वचसैव ते ।
निश्चयो भवतूद्दामो नास्त्यविद्येति निश्चलः ॥ ३९ ॥

विपरीतार्थाश्च न भवन्ति ॥ ३३ ॥ यद्येवं तर्हि किमिति तथा न प्रतीयत इत्यत्राह—ज्ञानेति ॥ मद्वाग्दृष्टिबलाबलं मम वाचां तन्मूलभूताया दृष्टेर्ज्ञानस्य च बलाबलं प्रामाण्याप्रामाण्यं च ॥ ३४ ॥ अविद्येति ॥ उत्तमया परिपक्वया स्वात्मनाशोद्यमोत्थया स्वस्वरूपनाशाय य उद्यमस्तेनोदितया चरमसाक्षात्काररूपया अप्यविद्यया विद्यापरिणामरूपत्वादविद्यायाः स्वात्मनाशोद्यमोत्थत्वं वेदितव्यम् ॥ ३५ ॥ ॥ ३६ ॥ ईदृशीति ॥ भूतमाया प्राणिनामविद्या । भवमायेतिपाठे भवः संसारः तन्मूलभूतमायया ईदृशीं या स्वनाशेन स्वयं नष्टा सती हर्षदा ब्रह्मानन्ददायिनी । अस्याः स्वरूपं तु लक्ष्यते द्रष्टुं न शक्यते। यतः प्रेक्ष्यमाणैव नश्यति असत्यत्वादिति भावः ॥ ३७ ॥ नास्तीति ॥ ज्ञेयसंप्राप्त्या ज्ञेयस्य ब्रह्मात्मैक्यस्य संप्राप्त्या । अस्या अविद्यायाः। आशयं स्वभावम् ॥ ३८ ॥ ३९ ॥ ४० ॥ अविद्येति ॥

सर्वं ब्रह्मेति यस्यान्तर्भावना स हि मुक्तिभाक् ।
भेददृष्टिरविद्येयं सर्वथा तां विवर्जयेत् ॥ ४० ॥
अविद्यासरितः पारमात्मलाभादृते किल ।
राम नासाद्यते तद्धि पदमक्षयमुच्यते ॥ ४१ ॥
कुतो जातेयमिति ते राम मास्तु विचारणा ।
इमां कथमहं हन्मीत्येषा तेऽस्तु विचारणा ॥ ४२ ॥
अस्तं गतायां क्षीणायामस्यां ज्ञास्यसि राघव ।
यत एषा यथा चैषा यथा नष्टेत्यखण्डितम् ॥ ४३ ॥
तदस्या रोगशालाया यत्नं कुरु चिकित्सने ।
यथैषा जन्मदुःखेषु न भूयस्त्वां नियोक्ष्यति ॥ ४४ ॥
आत्मन्येवात्मना व्योम्नि यथा सरति मारुतः ।
तथात्मा स्वात्मशक्त्यैव स्वात्मन्येवैति लोलताम् ॥ ४५ ॥

आत्मलाभादृते स्वरूपसाक्षात्कारमन्तरेण अविद्यासरितः पारं नासाद्यते । अविद्यानिवृत्तिर्न सिध्यतीत्यर्थः । हि यस्मात्कारणात्तत् सत् अविद्यापारमेव अक्षयं पदं कैवल्यमुच्यते ॥ ४१ ॥ कुत इति श्लोकत्रयं वाक्यम् । इयमविद्या कुतो जातेति विचारणा मास्तु निष्प्रयोजनत्वात् । एषा अविद्या भूयो जन्मदुःखेषु यथा त्वां न नियोक्ष्यति तथा इमामविद्यां कथं हन्मीत्येषैव विचारणा तेऽस्तु अस्या एव सप्रयोजनत्वात् ॥ ४२ ॥ सप्रयोजनत्वमेवाह—अस्तमिति ॥ अस्यामविद्यायां क्षीणायामस्तं गतायां सत्यां एषा अविद्या यत उद्भूता स्वरूपेण च यथा भूता यथा च नष्टेत्याद्यखण्डितं अखिलं ज्ञास्यसि ॥ ४३ ॥ तत्तस्मात्कारणाद्रोगशालाया रोगादीनां आस्पदभूताया अस्या अविद्यायाश्चिकित्सने यत्नं कुर्वित्यन्वयः ॥४४॥ आत्मनीति ॥ व्योम्नि मारुतो यथा आत्मन्येव नाश्रयान्तरेण आत्मनैव न हेत्वन्त-

स्वात्मनि स्वपरिस्पन्दैः स्फुरत्यच्छश्चिदर्णवः ।
एकात्मकमखण्डं तदित्यन्तर्भाव्यतां दृढम् ॥ ४६ ॥
किंचित्क्षुभितरूपा सा चिच्छक्तिश्चिन्महार्णवे ।
तन्मय्येव स्फुरत्यच्छा तत्रैवोर्मिरिवार्णवे ॥ ४७ ॥
क्षणं स्फुरन्ती सा देवी सर्वशक्तितया तथा ।
देशकालक्रियाशक्तीर्वयस्याः संप्रकर्षति ॥ ४८ ॥
स्वस्वभावं विदित्वोच्चैरप्यनन्तपदे स्थिता ।
रूपं परिमितेनासौ भावयत्यविभाविता ॥ ४९ ॥
यदैवं भावितं रूपं तया परमकान्तया ।
तदैवैनामनुगता नामसंख्यादिका दृशः ॥ ५० ॥

रेण सरति गच्छति तथा आत्मापि स्वात्मशक्त्यैव स्वाभिन्नया चिच्छक्त्यैव स्वात्मन्येव लोलतां जगद्रूपतामेति। आत्मैव जगतोऽधिकरणमुपादानं निमित्तं चेत्यर्थः ॥ ४५ ॥ स्वात्मनीति ॥ चिदर्णवः स्वपरिस्पन्दैः स्वरूपविक्षेपैः आत्मन्येव स्फुरति अतः कारणात्तद्वस्तु एकात्मकमखण्डं चेत्यन्तर्दृढं भाव्यतां विचार्यताम् ॥ ४६ ॥ किंचिदिति ॥ चिन्महार्णवे सा अविद्यारूपा चिच्छक्तिः किंचित्क्षुभितरूपा सती तन्मय्येव चिद्रूपैव तत्रैव स्फुरति अर्णवे ऊर्मिरिवेति ॥ ४७ ॥ क्षणमिति ॥ सा चिद्रूपा देवी सर्वशक्तितया अनन्तशक्तित्वात्क्षणं तथा स्फुरन्ती वयस्याः सखीरिव सहचारिणीर्देशकालक्रियाशक्तीः संप्रकर्षति प्रेरयति सृष्ट्यर्थं प्रवर्तयति ॥ ४८ ॥ स्वमिति ॥ असौ चिद्देवी स्वस्वभावं स्वस्वरूपं विदित्वा उच्चैरुन्नते अनन्तपदे कैवल्यपदे स्थितापि अविभाविता प्रमत्ता विचाररहिता सती रूपं स्वरूपं परिमितेन परिच्छिन्नेनात्मना भावयति ॥ ४९ ॥ यदेति ॥ परमकान्तया देव्या यदा रूपमेवं परिमितत्वेन भावितं

विकल्पकल्पिताकारं देशकालक्रियास्पदम् ।
चितो रूपं महाबाहो क्षेत्रज्ञ इति कथ्यते ॥ ५१ ॥
वासनाः कलयन्सोऽपि यात्यहंकारतां पुनः ।
अहंकारो विनिर्णेता कलङ्की बुद्धिरुच्यते ॥ ५२ ॥
बुद्धिः संकल्पकलिता प्रयाति मननास्पदम् ।
मनो घनविकल्पं तु गच्छतीन्द्रियतां शनैः ।
पाणिपादादिमद्देहमिन्द्रियाणि विदुर्बुधाः ॥ ५३ ॥
एवं जीवो हि संकल्पवासनारज्जुवेष्टितः ।
दुःखजालपरीतात्मा क्रमादायाति नीचताम् ॥ ५४ ॥
इति शक्तिमयं चेतो घनाहंकारतां गतम् ।
कोशकारक्रिमिरिव स्वेच्छया याति बन्धनम् ॥ ५५ ॥

तदैवैनां देवीं नामसंख्यादिका दृशो दृष्टयोऽनुगता भवन्ति ॥५०॥ नामसंख्यादिभेदमेव प्रपञ्चयितुमाह सार्धेन श्लोकत्रयेण—विकल्पेति॥ विकल्पकल्पिताकारं संकल्पविकल्पाद्युपहिताकारं देशकालक्रियास्पदं देशकालादिभिरवच्छिन्नं चितो रूपं क्षेत्रज्ञ इति कथ्यते । क्षेत्रज्ञो जीवः ॥ ५१ ॥ स क्षेत्रज्ञोऽपि वासनाः कल्पयन्भावयन्नहंकारतां याति । अहंकारोऽपि वासनाभिः कलङ्की भूत्वा विनिर्णेता निश्चेता सन् बुद्धिरुच्यते 'निश्चयात्मिका बुद्धि'रितिवचनात् ॥ ५२ ॥ बुद्धिरपि संकल्पादिभिः कलिता मननास्पदं स्पन्दनं प्रयाति । मनश्च घनविकल्पं निबिडविकल्पं सदिन्द्रियतां बाह्येन्द्रियत्वं गच्छति । इन्द्रियाणि च पाणिपादमयं देहं विदुः । इन्द्रियाण्येव देह इत्यर्थः ॥५३॥ एवमिति ॥ एवमुक्तेन प्रकारेण संकल्पवासनारज्जवेष्टितः सन् जीव एव दुःखजालपरीतात्मा क्रमान्नीचतामायाति ॥ ५४ ॥ इतीति ॥ इति पूर्वोक्तप्रकारेण संकल्पशक्तिमयं विचित्रशक्तिकं चेतः चिदेव

स्वसंकल्पिततन्मात्रं जालाभ्यन्तरवर्ति च।
परां विवशतामेति शृङ्खलाबद्धसिंहवत् ॥ ५६ ॥
क्वचिन्मनः क्वचिद्बुद्धिः क्वचिज्ज्ञानं क्वचित्क्रिया।
क्वचिदेवेत्यहंकारः क्वचित्पुर्यष्टकं स्मृतम् ॥ ५७ ॥
क्वचित्प्रकृतिरित्युक्तं क्वचिन्मायेति कल्पितम्।
क्वचिन्मलमिति प्रोक्तं क्वचित्कर्मेति संस्थितम् ॥ ५८ ॥
क्वचिद्बन्ध इति प्रोक्तं क्वचिच्चित्तमिति स्फुटम्।
प्रोक्तं क्वचिदविद्येति क्वचिदिच्छेति संमतम् ॥ ५९ ॥
इमं संसारमखिलमाशापाशविधायकम्।
दधदन्तः फलैर्हीनं वटधाना वटं यथा ॥ ६० ॥
चिन्तानलशिखादग्धं कोपाजगरचर्वितम्।
कामाब्धिकल्लोलहतं विस्मृतात्मपितामहम्।
समुद्धर मनो राम मातङ्गमिव कर्दमात् ॥ ६१ ॥

घनाहंकारं सत् कोशकारकृमिवत्स्वेच्छयैव बन्धनं याति ॥ ५५ ॥ स्वेति ॥ तदेव चेतः स्वेन संकल्पितानां तन्मात्राणां शब्दादीनां जालस्याभ्यन्तरवर्ति च भूत्वा शृङ्खलाबद्धसिंहवत् परां विवशतामेति ॥ ५६ ॥ क्वचिदिति श्लोकत्रयं वाक्यम्। नानाशक्तिपूक्तमेतदेव चैतन्यं मनोबुद्ध्यादिरूपेण नानात्वं प्रतिपद्यत इत्यर्थः ॥ ५७ ॥ ॥ ५८ ॥ ५९ ॥ इममिति सार्धश्लोकद्वयं वाक्यम्। वटधाना वटवीजं कर्तृ वटमिव आशापाशविधायकं फलैर्हीनं नश्वरफलं इमं संसारमन्तरभ्यन्तरे दधत् ॥ ६० ॥ चिन्ताभिरेवानलशिखाभिर्दग्धं कोपेन चाजगरेण सर्पेण चर्वितं भक्षितं कामैरेवाब्धिकल्लोलैर्हतं विस्मृत आत्मा पितामहश्च येन तथाभूतं मनो मातङ्गमिव कर्दमात्सं-

ज्वलज्जरामरणविषादमूर्च्छिते
शुभाशुभप्रसरपराहताकृतौ ।
दयेह न स्वमनसि यस्य जायते
नराकृतिर्जगति स राम राक्षसः ॥ ६२ ॥

वसिष्ठ उवाच ॥

एवं जीवाश्रितो भावा भवभावनयेहिताः ।
ब्रह्मणः कल्पिताकारा लक्षशोऽप्यथ कोटिशः ॥ ६३ ॥
संख्यातीताः पुरा जाता जायन्तेऽद्यापि चाभितः ।
उत्पत्स्यन्तेऽपि चैवान्ये जलौघा इव निर्झरात् ॥ ६४ ॥
केचित्प्रथमजन्मानः केचिज्जन्मशताधिकाः ।
केचिच्चासंख्यजन्मानः केचिद्द्वित्रिभवान्तराः ॥ ६५ ॥
केचित्किन्नरगन्धर्वविद्याधरमहोरगाः ।
केचिदर्केन्दुवरुणत्र्यक्षाधोक्षजपद्मजाः ॥ ६६ ॥

सारूपात्सकाशात्समुद्धर ॥६१॥ ज्वलदिति ॥ ज्वलद्भिर्जरामरणविषादैर्मूर्च्छिते शुभाशुभयोः पुण्यपापयोः प्रसरेण पराहता आकृतिर्यस्य तस्मिन् स्वमनसि यस्य दया उद्धर्तुमिच्छा न जायते स नराकृती राक्षस एव ॥६२॥ एवमिति नवभिः श्लोकैर्वाक्यम् ॥ निर्झरात्प्रवाहाज्जलौघा इव कल्पिताकारान्मायासहिताद्ब्रह्मणः सकाशाद्भवभावनया संसारवासनया सहिताः जीवरूपाश्रितो भावा विलासा लक्षशः कोटिशः ॥ ६३ ॥ संख्यातीताश्च पुरा जाताः अद्यापि जायन्ते उत्पत्स्यन्तेऽपि च तेच जन्मकालपौर्वापर्यात्पुण्यपापतारतम्यात् ज्ञानवैचित्र्याच्च प्रथमचरमभावेन सुरनरतिर्यगादिभावेन जडभावेन च बहुधा भिद्यमानाः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

केचिद्ब्राह्मणभूपालवैश्यशूद्रगणाः स्थिताः ।
केचित्पुण्यौषधीपत्रफलमूलपतङ्गकाः ॥ ६७ ॥
केचित्कदम्बजम्बीरशालतालतमालकाः ।
केचिन्महेन्द्रमलयाः सह्यमन्दरमेरवः ॥ ६८ ॥
केचित्क्षारदधिक्षीरघृतेक्षुजलराशयः ।
केचिद्विशालाः ककुभः केचिन्नद्यो महारयाः ॥ ६९ ॥
विहरन्त्युच्चकैः केचिन्निपतन्त्युत्पतन्ति च ।
कन्दुका इव हस्तेन मृत्युनाविरतं हताः ॥ ७० ॥
भुक्त्वा जन्मसहस्राणि भूयः संसारसंकटे ।
पतन्ति केचिदबुधाः संप्राप्याप्यविवेकिताम् ॥ ७१ ॥

अविरतमियमातता स्थितौघै-
र्भवति विनश्यति वर्धते मुधैव ।
त्रिभुवनरचनाविमोहमाया
परमपदे लहरीव वारिराशौ ॥ ७२ ॥

राम उवाच ॥

जीवो मनःपदं प्राप्य वैरञ्चं पदमागतः ।
यथा ब्रह्मंस्तथा सर्वं विस्तरेण वदाशु मे ॥ ७३ ॥

वसिष्ठ उवाच ॥

ब्राह्मं शृणु महाबाहो शरीरग्रहणक्रमम् ।
निदर्शनेन तेनैव ज्ञास्यसे जागतीं स्थितिम् ॥ ७४ ॥

॥ ६९ ॥ ७० ॥ संसारसंकटे पतन्तीति समुदायार्थः ॥ ७१ ॥ अविरतमिति ॥ वारिराशौ लहरीव परमपदे ब्रह्मणि त्रिभुवनरचनारूपा विमोहयन्ती माया मुधैव भवति वर्धते विनश्यति चेत्यन्वयः

दिक्कालाद्यनवच्छिन्नमात्मतत्त्वं स्वशक्तितः ।
लीलयैव यदादत्ते दिक्कालकलितं वपुः ॥ ७५ ॥
तदेतज्जीवपर्यायं वासनावशतः परम् ।
मनः संपद्यते लोलं कलनाकलनोन्मुखम् ॥ ७६ ॥
कलयन्ती मनःशक्तिरादौ भावयति क्षणात् ।
आकाशभावनामच्छां शब्दबीजरसोन्मुखीम् ॥ ७७ ॥
ततस्तद्घनतां यातं घनस्पन्दक्रमान्मनः ।
भावयत्यनिलस्पन्दं स्पर्शबीजरसोन्मुखम् ॥ ७८ ॥
ताभ्यामाकाशवाताभ्यां दृढाभ्यासवशाद्यतः ।
शब्दस्पर्शस्वरूपाभ्यां संघर्षाज्जायतेऽनलः ॥ ७९ ॥

॥ ७२ ॥ ७३ ॥ ७४ ॥ दिक्कालेति श्लोकद्वयं वाक्यम् । दिक्कालादिभिरनवच्छिन्नमात्मतत्त्वं कर्तृ लीलयैव स्वशक्तितो हेतोः दिक्कालकलितं यद्वपुरादत्ते स्वीकरोति ॥ ७५ ॥ जीवपर्यायं जीवशब्दपर्यायवाच्यं तदेतद्रूपं वासनावशतः परं वासनावशादेव केवलं लोलं मनः संपद्यते ॥ ७६ ॥ कलयन्तीति ॥ मनोरूपा शक्तिः कलयन्ती विचारयन्ती सती आदावच्छां शब्दबीजरसोन्मुखीं शब्द एव बीजम् शब्दतन्मात्रमित्यर्थः । तद्विषयो रसस्तद्भावना तदुन्मुखीं तत्सापेक्षाम् । तत्पूर्विकामित्यर्थः । तादृशीमाकाशभावनां भावयति । पूर्वं शब्दतन्मात्रं भावयित्वा पश्चादाकाशभावनां भावयति स्मेत्यर्थः । शब्दतन्मात्रस्याकाशनिदानत्वात् ॥ ७७ ॥ तत इति ॥ ततोऽनन्तरं तन्मनो घनतां यातं सत् घनस्पन्दक्रमात् स्पर्शबीजरसोन्मुखं स्पर्शतन्मात्रभावनापूर्वकं अनिलस्पन्दं वायोश्चलनं भावयति ॥ ७८ ॥ ताभ्यामिति ॥ शब्दस्पर्शस्वरूपाभ्यां आकाशवाताभ्यां सह दृढा-

मनस्तादृग्गुणगतं रसतन्मात्रवेदनम् ।
क्षणाच्चेतत्यपां शैत्यं जलसंवित्ततो भवेत् ॥ ८० ॥
ततस्तादृग्गुणगतं मनो भावयति क्षणात् ।
गन्धतन्मात्रमेतस्माद्भूमिसंवित्ततो भवेत् ॥ ८१ ॥
अथेत्थंभूततन्मात्रैर्वेष्टितं तनुतां जहत् ।
वपुर्वह्निकणाकारं स्फुरितं व्योम्नि पश्यति ॥ ८२ ॥
अहंकारकलायुक्तं बुद्धिबीजसमन्वितम् ।
तत्पुर्यष्टकमित्युक्तं भूतहृत्पद्मषट्पदम् ॥ ८३ ॥
तस्मिंस्तत्तीव्रसंवेगाद्भावयन्भासुरं वपुः ।
स्थूलतामेति पाकेन मनो बिल्वफलं यथा ॥ ८४ ॥

भ्यासवशात् यः संघर्षः तस्माद्धेतोर्मन एवानलो जन्यते । अग्निं भावयित्वा तद्रूपं भवतीत्यर्थः । वशात्तत इति पाठे ततो मनसः अनलो जन्यत इत्यन्वयः ॥ ७९ ॥ मन इति ॥ तादृग्गुणगतं शब्दस्पर्शरूपगुणयुक्तं मनो रसतन्मात्रवेदनं रसतन्मात्रं भावयन् क्रमादपां शैत्यं चेतति भावयति ततो भावनाज्जलसंविद्भवेत् ॥ ८० ॥ तत इति ॥ तादृग्गुणगतं शब्दस्पर्शरूपरसयुक्तं मनो गन्धतन्मात्रं भावयति । ततोऽनन्तरमेतस्माद्भावनाद्भूमिसंविद्भवेत्॥८१॥अथेति॥ अथ महाभूतसृष्ट्यनन्तरं इत्थमनेन प्रकारेण भूतैस्तन्मात्रैश्च वेष्टितं अतएव तनुतां सूक्ष्मतां जहत्त्यजन्मनः कर्तृ क्रमाद्व्योम्नि स्फुरितं वह्निकणाकारं वपुः पश्यति भावयति ॥ ८२ ॥ अहमिति ॥ अहंकारकलायुक्तं अहंकारांशैरेकादशभिरिन्द्रियैर्युक्तं बुद्धिबीजसमन्वितं बुद्ध्या तन्मात्रैश्च समन्वितं तद्व्योम्नि स्फुरितं वपुर्भूतम् हृत्पद्मषट्पदं भूतानां हृत्पुण्डरीके वर्तमानं पुर्यष्टकमित्युक्तम् ॥ ८३ ॥ तस्मिन्निति ॥ तस्मिन्पुर्यष्टके स्थित्वा मनस्तीव्रसंवेगात्तीव्रवासना-

मूषास्थद्रुतहेमाभं स्फुरितं विमलाम्बरे ।
संनिवेशमथादत्ते तत्तेजः स्वस्वभावतः ॥ ८५ ॥
ऊर्ध्वं शिरःपिण्डमयमधः पादमयं तथा ।
पार्श्वयोर्हस्तसंस्थानं मध्ये चोदरधर्मिणम् ॥ ८६ ॥
कालेन स्फुटतामेत्य भवत्यमलविग्रहः ।
बुद्धिसत्त्वबलोत्साहविज्ञानैश्वर्यसंस्थितः ॥ ८७ ॥
स एव भगवान्ब्रह्मा सर्वलोकपितामहः ।
अवलोक्य वपुर्ब्रह्मा कान्तमात्मीयमुत्तमम् ॥ ८८ ॥
चिन्तामभ्येति भगवांस्त्रिकालामलदर्शनः ।
एतस्मिन्परमाकाशे चिन्मयैकात्मरूपिणि ॥ ८९ ॥

योगाद्धेतोर्भासुरं वपुर्भावयत् पाकवशाद्बिल्वफलवत्स्थूलतामेति ॥ ८४ ॥ मूषेति श्लोकद्वयं वाक्यम् । अथ अनन्तरं मूषास्थद्रुतहेमाभम् मूषा नाम प्रतिमादिनिर्माणार्थं विरचिता अन्तः सान्तराला मृन्मयी आकृतिः तत्स्थं द्रवीभूतं यद्धेम तत्सदृशं विमलाम्बरे स्फुरितं तत्पुर्यष्टकरूपं तेजः स्वस्वभावत एव ॥ ८५ ॥ ऊर्ध्वमुपरि शिरःपिडमयं अधः पादमयं पार्श्वयोर्हस्तसंस्थानं मध्ये उदरधर्मिणं च संनिवेशमादत्ते ॥ ८६ ॥ कालेनेति सार्धश्लोकं वाक्यम् । स पूर्वोक्तः संनिवेश एव कालेन स्फुटतामेत्य अमलविग्रहः बुद्ध्यादियुक्तः सर्वलोकपितामहो भगवान्ब्रह्मा भवतीत्यन्वयः । तद्बुद्धिस्तात्कालिकी कार्याकार्यहेतुर्मनीषा सत्त्वं व्यवसायः। बलं शरीरसामर्थ्यम् । उत्साहो लोकोत्तरकार्येषु स्वेच्छया यत्नः । विज्ञानं विशिष्टमीश्वरसाक्षात्काररूपं ज्ञानं। ऐश्वर्यमणिमादि तेषु संस्थितः प्रतिष्ठितः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ सृष्टि-

अदृष्टापारपर्यन्ते प्रथमं किमभूदिति ।
इति चिन्तितवान्ब्रह्मा सद्योजातोऽमलात्मदृक् ॥ ९० ॥
संपश्यन्सर्ववृन्दानि समतीतान्यनेकशः ।
स्मरत्यथो स सकलान्सर्वधर्मगुणक्रमान् ॥ ९१ ॥
लीलया कल्पयत्येष चित्राः संकल्पजाः प्रजाः ।
नानाचारसमारम्भा गन्धर्वनगरं यथा ॥ ९२ ॥
तासां स्वर्गापवर्गार्थं धर्मकामार्थसिद्धये ।
अनन्तानि विचित्राणि शास्त्राणि समकल्पयत् ॥ ९३ ॥
सृष्टिरेवमियं राम सर्गेऽस्मिन्स्थितिमागता ।
विरिञ्चिरूपान्मनसः पुष्पलक्ष्मीर्मधोरिव ॥ ९४ ॥

वसिष्ठ उवाच ॥

स्वसंकल्पकृताः सर्वे देवासुरनरामराः ।
स्वसंकल्पोपशमने शाम्यन्त्यस्नेहदीपवत् ॥ ९५ ॥
आकाशसदृशं सर्वं कल्पनामात्रजृम्भितम् ।
जगत्पश्य महाबुद्धे सुदीर्घस्वप्नमुत्थितम् ॥ ९६ ॥
न जायते न म्रियते इति किंचित्कदाचन ।
परमार्थेन सुमते मिथ्या सर्वं तु विद्यते ॥ ९७ ॥
कोशमाशाभुजङ्गानां संसाराडम्बरं त्यज ।
असदेतदिति ज्ञात्वा माऽत्र भावं निवेशय ॥ ९८ ॥
गन्धर्वनगरस्यार्थे भूषिते दूषितेऽथ वा ।
अविद्यांशसुताद्यैर्वा कः क्रमः सुखदुःखयोः ॥ ९९ ॥

रिति ॥ सर्गे जगति। सृष्टिः सृज्यमानः प्रपञ्चः ॥ ९४ ॥ ९५ ॥ ॥ ९६ ॥ ९७ ॥ कोशमिति ॥ माऽत्र भावं निवेशय अत्र संसाराडम्बरे भावं तात्पर्यं मा निवेशय॥ ९८ ॥ गन्धर्वेति ॥ गन्धर्व-

धनदारेषु वृद्धेषु दुःखं युक्तं न चेष्टतः ।
वृद्धायां मोहमायायां कः समायासवानिह ॥ १०० ॥
यैरेव जायते रागो मूर्खस्याधिकतां गतैः ।
तैरेव भोगैः प्राज्ञस्य विराग उपजायते ॥ १ ॥
अतो राघव तत्त्वज्ञो व्यवहारेषु संस्थितः ।
नष्टं नष्टमुपेक्षस्व प्राप्तं प्राप्तमुपाहर ॥ २ ॥
अनागतानां भोगानामवाञ्छनमकृत्रिमम् ।
आगतानां च संभोग इति पण्डितलक्षणम् ॥ ४ ॥
यस्य स्यादिदमित्यास्था निवृत्ता सर्ववस्तुषु ।
क्रोडीकरोति सर्वज्ञं नाविद्या तमवास्तवी ॥ ४ ॥
शुद्धं सदसतोर्मध्यं पदं बुद्ध्यावलम्ब्य च ।
सबाह्याभ्यन्तरं दृश्यं मा गृहाण विमुञ्च मा ॥ ५ ॥
यस्य नेच्छा न वानिच्छा ज्ञस्य कर्मणि तिष्ठतः ।
न तस्य लिप्यते प्रज्ञा पद्मपत्रमिवाम्बुभिः ॥ ६ ॥

नगरशब्दस्यार्थे भूषिते दूषिते वा यथा न सुखं न दुःखं वा तद्वद्-विद्याकल्पिते सुतादावपि सुखदुःखयोरक्रमः ॥ ९९ ॥ १०० ॥ ॥ १ ॥ २ ॥ ३ ॥ यस्येति ॥ यस्य सर्ववस्तुषु इदं स्यादित्यास्था निवृत्ता तं सर्वज्ञमवास्तवी अविद्या न क्रोडीकरोति नावृणोति ॥ ४ ॥ शुद्धमिति ॥ शुद्धं निष्कलङ्कं सदसतोः कार्यकारणभूतयोश्चिच्चेत्ययोः मध्यं कार्यकारणात्मकं चिन्मात्ररूपं पदं वस्तु बुद्ध्यावलम्ब्य सबा-ह्याभ्यन्तरं दृश्यं मा गृहाण मा विमुञ्च । उपेक्षस्वेत्यर्थः ॥५॥ यस्येति ॥ कर्मणि अवश्यकर्तव्ये तिष्ठतः प्रवर्तमानस्य ज्ञस्य ज्ञाननिष्ठस्य विषयेषु इच्छा न प्रवर्तते इष्टसाधनात् । अनिच्छा च न । अनिष्ट-

यदि ते नेन्द्रियार्थश्रीः स्वदते हृदि राघव ।
तदसि ज्ञातविज्ञानः समुत्तीर्णो भवार्णवात् ॥ ७ ॥
उच्चैःपदाय परया प्रज्ञया वासनागणात् ।
पुष्पाद्गन्धमिवोदारं चेतो राम पृथक्कुरु ॥ ८ ॥
संसाराम्बुनिधावस्मिन्वासनाम्बुपरिप्लुते ।
ये प्रज्ञानावमारूढास्ते तीर्णा दुःखिताः परे ॥ ९ ॥
न त्यजन्ति न वाञ्छन्ति व्यवहारं जगद्गतम् ।
सर्वमेवानुवर्तन्ते पारावारविदो जनाः ॥ ११० ॥
ते शून्येऽपि न खिद्यन्ते ते देवोद्यानसङ्गिनः ।
नियतिं च न मुञ्चन्ति महान्तो भास्करा इव ॥ ११ ॥

वाल्मीकिरुवाच ॥

इत्थंगिरा विमलया विमलाशयस्य
रामो मुनेः सपरिपुष्ट इवाबभासे ।
ज्ञानामृतेन मधुरेण विचारितातः
पूर्णं शशाङ्क इव शीतलतां जगाम ॥ १२ ॥

साधनबुद्ध्यभावात् तस्य प्रज्ञा पद्मपत्रमम्बुभिरिव हर्षविषादादिभिर्न लिप्यते न संश्लिष्यते ॥ ६ ॥ यदिति ॥ स्वदते स्वादनं करोति ॥ ७ ॥ उच्चैरिति ॥ उच्चैःपदाय कैवल्याय प्रज्ञया प्रज्ञाप्रकर्षेण हेतुना वासनाजालाच्चेतः समुद्धरेत्यर्थः ॥ ८ ॥ संसारेति ॥ प्रज्ञायामनारूढायां कदाचिदपि संसारान्नोत्तरणमिति भावः ॥ ९ ॥ नेति ॥ पारावारविदः संसारसागरस्य पारं उत्तरणे हेतुर्विद्या अवारं संसारहेतुरविद्या तद्विद इत्यर्थः ॥ ११० ॥ ११ ॥ १२ ॥ १३ ॥

राम उवाच ॥

सृष्टिरेकविधा किं स्यात्किं वा बहुविधा वद ।
तद्विज्ञानेन मायाया रूपं स्फुटतरं भवेत् ॥ १३ ॥

वसिष्ठ उवाच ॥

कदाचित्सृष्टयः शार्व्यः कदाचित्पद्मजोद्भवाः ।
कदाचिदपि वैष्णव्यः कदाचिन्मुनिनिर्मिताः ॥ १४ ॥
कदाचिदब्जजो ब्रह्मा कदाचित्सलिलोद्भवः ।
अण्डोद्भवः कदाचित्तु कदाचिज्जायतेऽम्बरात् ॥ १५ ॥
कदाचिद्भूरभूत्सृष्टौ नीरन्ध्रतरुसंकटा ।
कस्यांचिन्नरनीरन्ध्रा कस्यांचिद्भूधरावृता ॥ १६ ॥
कदाचिन्मृन्मयी भूमिः कदाप्यासीद्दृषन्मयी ।
कदाचित्काञ्चनमयी कदाचिन्मांसमय्यभूत् ॥ १७ ॥
कदाचित्प्रथमं व्योम प्रतिष्ठामाधिगच्छति ।
कदाचित्प्रथमं पृथ्वी कदाचित्प्रथमं पयः ।
कदाचित्प्रथमं तेजः कदाचित्प्रथमं मरुत् ॥ १८ ॥
निदर्शनार्थं सृष्टेस्तु मयैकस्य प्रजापतेः ।
भवेत कथितोत्पत्तिर्न त्वयं नियमः क्वचित् ॥ १९ ॥

कदाचिदित्यादिना सार्धेन श्लोकषट्केन सृष्टिक्रमस्यानियमं दर्शयति । तत्र कर्तुरनियममाह—कदाचिदित्यनेन ॥ शार्व्यः शिवसंबन्धिन्यः । पद्मजोद्भवाः ब्राह्मण्यः । वैष्णव्यो विष्णूद्भूताः । मुनिनिर्मिताश्च कदाचित् ॥ १४ ॥ प्रादुर्भावस्थानमपि न नियतमित्याह पञ्चदशेन ॥ १५ ॥ पृथिवीस्वरूपमप्यनियतमित्याह षोडशसप्तदशभ्याम् ॥ १६ ॥ १७ ॥ वियदादेः पौर्वापर्यमप्यनियतमित्याह सार्धेनाष्टादशेन ॥ १८ ॥ उक्तस्यानियमस्योपसंहार एकोनविंशेनेति विवेकः

पुनः कृतं पुनस्त्रेता पुनश्च द्वापरः कलिः ।
पुनःपुनरिदं सर्वं तत्रास्ति न पुनस्तु यत् ॥ १२० ॥
जगन्मायास्वरूपस्य वर्णनाव्यपदेशतः ।
दाशूराख्यायिकां राम वर्ण्यमानां मया शृणु ॥ २१ ॥
अस्त्यस्मिन्वसुधापीठे विचित्रकुसुमद्रुमः ।
मागधो नाम विख्यातः श्रीमाञ्जनपदो महान् ॥ २२ ॥
कदम्बवनविस्तारितालावलितजङ्गलः ।
विचित्रविहगव्यूहसर्वाश्चर्यमनोहरः ॥ २३ ॥
तत्रैकस्मिन्गिरितटे कर्णिकारसमाकुले ।
कदलीखण्डनीरन्ध्रनीपगुल्मविराजिते ॥ २४ ॥
कश्चित्परमधर्मात्मा मुनिरासीन्महातपाः ।
दाशूरनामा महता तपोयोगेन संयुतः ॥ २५ ॥
शरलोमेति विख्यातः पिता तस्य बभूव ह ।
रामापर इव ब्रह्मा तस्मिन्नेवावसद्गिरौ ॥ २६ ॥
तस्यासावेकपुत्रोऽभूत्कचो देवगुरोरिव ।
तेन सार्धं स पुत्रेण नीतवाञ्जीवितं वने ॥ २७ ॥
अथासौ शरलोमात्र भुक्त्वा युगगणान्ययौ ।
त्यक्त्वा देहं सुरागारं त्यक्तनीडः खगो यथा ॥ २८ ॥

॥ १९ ॥ पुनरिति ॥ चत्वार्यपि युगानि पुनः पुनरावर्तन्त इत्यर्थः । इत्थं सर्वमिदं पुनःपुनरावर्तत एव । यत्तु पुनरस्ति कालान्तरेऽपि तथैवावतिष्ठते तादृशं कूटस्थं नित्यं वस्तु नास्ति ॥ १२० ॥ ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

एक एव वने तस्मिन्दाशूरः प्ररुरोद ह ।
दशापनीतपितृकः करुणं कुररो यथा ।
मातापितृवियोगेन शोकसंतापिताशयः ॥ २९ ॥
म्लानिमभ्याययौ नूनं हेमन्त इव पङ्कजम् ।
बालोऽसावथ दीनात्मा वनदेवतया वने ॥ १३० ॥
इत्थमाश्वासितो राम तदादृश्यशरीरया ।
ऋषिपुत्र महाप्राज्ञ किमज्ञ इव रोदिषि ॥ ३१ ॥
संसारस्य न कस्मात्त्वं स्वरूपं वेत्सि चञ्चलम् ।
सर्वदैवेदृशी साधो संसारस्य स्थितिश्चला ॥ ३२ ॥
जायते जीव्यते पश्चादवश्यं च विनश्यति ।
तदर्थं मा कृथा व्यर्थं विषादं मरणे पितुः ॥ ३३ ॥
अवश्यभाव्योऽस्तमयो जातस्याहर्पतेरिव ।
अशरीरामिति श्रुत्वा गिरमारक्तलोचनः ॥ ३४ ॥
धैर्यमासादयामास शिखण्डी स्तनितादिव ।
उत्थायावश्यकं कृत्वा पाश्चात्त्यं पितुरादृतः ।
चकार तपसे बुद्धिं दृढामुत्तमसिद्धये ॥ ३५ ॥
ब्राह्मेण कर्मणा तस्य विपिने चरतस्तपः ।
अनन्तसंकल्पमयं श्रोत्रियत्वं बभूव ह ॥ ३६ ॥

दशेति ॥ दशापनीतपितृकः दशा जीवितकालस्य चरमावस्था तया अपनीतः पिता यस्य । कुरर उत्क्रोशनामा पक्षिविशेषः ॥ २९ ॥ ॥ १३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ उत्थायेति ॥ पाश्चात्त्यमौर्ध्वदैहिकं कर्म ॥ ३५ ॥ ब्राह्मेणेति ॥ अनन्तसंकल्पमयम् । तपसे एतादृशेन विशुद्धेन स्थानेन भवितव्यम् । एवंविधैश्च पावनैः साध-

अज्ञातज्ञेयबुद्धेस्तु सुश्रोत्रियतया तया ।
न विशश्राम चेतोऽस्य पवित्रेऽपि धरातले ॥ ३७ ॥
केवलं सर्वमेवेदं सुविशुद्धं धरातलम् ।
अशुद्धमेव पश्यन्स नारमत्क्वचिदेव हि ॥ ३८ ॥
अथ संकल्पनेनैव संकल्पमनसैव सः ।
वृक्षाग्रमेव संशुद्धं स्थितिरत्रोचिता मम ॥ ३९ ॥
अथेदानीं तपस्तप्यं तपसोग्रेण शाखिषु ।
खगवत्स्थितिमाप्नोति शाखासु च दलेषु च ॥ १४० ॥
इति संचिन्त्य संज्वाल्य हुताशमतिभास्वरम् ।
जुहाव तस्मिन्प्रोत्कृत्य मांसं स्वस्कन्धभित्तितः ॥ ४१ ॥
अथ गीर्वाणवृन्दस्य समग्रा गलभित्तयः ।
मन्मुखस्थेन मा यान्तु विप्रमांसेन भस्मताम् ॥ ४२ ॥
इति संचिन्त्य भगवान्सप्तार्चिस्तस्य देवता ।
पुरो बभूव दीप्तांशुर्दीप्तांशुर्वाक्पतेरिव ॥ ४३ ॥
उवाच वचनं विप्रकुमाराऽभिमतं वरम् ।
गृहाण स्थापितं साधो कोशस्थं सन्मणिं यथा ॥ ४४ ॥
इत्युक्तवन्तं तं देवमर्घपुष्पोपशोभितम् ।
संपूज्य स्तुतिवादेन प्राह विप्रकुमारकः ॥ ४५ ॥
भगवन्भूतपूर्णाया भुवः पावनमण्डलम् ।
नाप्नोमि तेन वृक्षाणामुपरि स्थितिरस्तु मे ॥ ४६ ॥
इत्युक्ते मुनिपुत्रेण सर्वदेवमुखं शिखी ।
एवमस्तु तवेत्युक्त्वा जगामान्तर्धिमीश्वरः ॥ ४७ ॥

नैर्भवितव्यमित्यनन्तसंकल्पप्रचुरम् । श्रोत्रियत्वं छान्दसत्वम् ॥ ३६ ॥
॥ ३७ ॥ ३८ ॥ ३९ ॥ १४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

तस्मिन्नन्तर्हिते देवे क्षणात्सान्ध्य इवाम्बुदे ।
अथ काननमध्यस्थं चुम्बिताम्बुदमण्डलम् ॥ ४८ ॥
कदम्बं रोदसीस्तम्भमारुरोह द्विजोत्तमः ।
तत्रासौ व्योमलग्नायाः शाखायाः प्रान्तपल्लवे ॥ ४९ ॥
विवेश विगताशङ्कमेकाग्रतपसि स्थितः ।
अथोपविश्य मृदुनि तत्र पल्लवविष्टरे ॥ १५० ॥
क्षणमालोकितास्तेन दिशः कौतुकलीलया ।
सरिदेकावलीरम्याः शैलेन्द्रस्तनकुड्मलाः ॥ ५१ ॥
निर्मलाकाशकवरा लोलनीलाम्बुदालकाः ।
तस्मिंल्लतागृहे स्थित्वा विलोक्य ककुभः क्षणम् ॥ ५२ ॥
दृढं पद्मासनं बद्ध्वा दिग्भ्यः प्रत्याहृतात्मना ।
अज्ञातपरमार्थेन क्रियामात्रे च तिष्ठता ॥ ५३ ॥
फलकार्पण्ययुक्तेन चेतसा सोऽकरोन्मखम् ।
तत्रासौ दश वर्षाणि मनसैवायजत्सुरान् ॥ ५४ ॥
गवाश्वनरमेधाद्यैर्यज्ञैर्विपुलदक्षिणैः ।
कालेनामलतां याते वितते तस्य चेतसि ॥ ५५ ॥
बलादवततारान्तर्ज्ञानमात्मप्रसादजम् ।
ततो विशीर्णावरणो विगलद्वासनामलः ।
संददर्शैकदा तस्यां लतायामग्रतः स्थिताम् ॥ ५६ ॥
वनदेवीं विशालाक्षीमालोलकुसुमाम्बराम् ।
तामुवाचानवद्याङ्गीं स मुनिर्विनताननाम् ॥ ५७ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ १५० ॥ ५१ ॥ ५२ ॥
॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ १६० ॥

का त्वमुत्पलपत्राक्षि कान्तिविक्षोभितस्मरे ।
इत्युक्ते मृगशावाक्षी गौरी पीनपयोधरा ॥ ५८ ॥
मुनिमाह मनोहारि मुग्धाक्षरमिदं वचः ।
यानि यानि दुरापाणि वाञ्छितानि महीतले ॥ ५९ ॥
प्राप्यन्ते तानि तान्याशु महतामेव याञ्चया ।
अहमत्र द्रुमाकीर्णे त्वत्कदम्बाभ्यलंकृते ॥ १६० ॥
लतालीलालये ब्रह्मन्विपिने वनदेवता ।
यश्चैत्रसितपक्षस्य त्रयोदश्यां स्मरोत्सवे ॥ ६१ ॥
बभूव वनदेवीनां समाजो नन्दने वने ।
तत्राहमगमं नाथ त्रैलोक्यललनासदः ॥ ६२ ॥
तत्र दृष्टा मया सर्वा वयस्या मदनोत्सवे ।
अपुत्रया पुत्रयुतास्तेनाहं दुःखिता भृशम् ॥ ६३ ॥
त्वयि सर्वार्थिसार्थस्य बृहत्कल्पतरौ स्थिते ।
अनाथेव कथं नाथ किल शोचाम्यपुत्रिका ॥ ६४ ॥
देहि मे भगवन्पुत्रं नो चेद्देहमिहाग्नये ।
प्रकरोम्याहुतिं पुत्रदुःखदाहोपशान्तये ॥ ६५ ॥
तामित्युक्तवतीं तन्वीं विहस्य मुनिपुङ्गवः ।
प्रादाद्धस्तगतं पुष्पं तस्यै प्रेम्णा दयान्वितः ॥ ६६ ॥
गच्छ तन्वङ्गि मासेन पूजार्हमलिलोचने ।
प्रसोष्यसे सुतं कान्तं प्रसूनमिव सल्लता ॥ ६७ ॥
किंत्वसौ मरणावेशोपायिन्या यस्त्वया सुतः ।
याचितः कृच्छ्रसंप्राप्तज्ञानस्ते न भविष्यति ॥ ६८ ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

इत्युक्त्वा स मुनिस्तन्वीं प्रसन्नमुखमण्डलाम् ।
परिचर्यां करोमीति प्रार्थनोक्तां व्यसर्जयत् ॥ ६९ ॥
सा जगामात्मसदनं मुनिः स्वार्थपरोऽभवत् ।
अवहत्क्रमशः कालं ऋतुसंवत्सराङ्कितम् ॥ १७० ॥
अथ दीर्घेण कालेन सैवोत्पलविलोचना ।
द्वादशाब्दमुपादाय सुतं मुनिमुपाययौ ॥ ७१ ॥
सा प्रणम्योपविश्याग्रे मुनिमिन्दुसमानना ।
उवाच कलया वाचा चूतद्रुममिवालिनी ॥ ७२ ॥
अयं स भगवन्भव्यः कुमारः पुत्र आवयोः ।
कृतो मया समग्राणां कलानां किल कोविदः ॥ ७३ ॥
प्रभो केवलमेतेन ज्ञानं नाधिगतं शुभम् ।
तेन संसारयन्त्रेऽस्मिन्नवशः परिपीड्यते ॥ ७४ ॥
ज्ञानं त्वमेवास्य विभो कृपयोपदिशाधुना ।
एवं वदन्तीं स मुनिर्मच्छिष्यमबले सुतम् ॥ ७५ ॥
इहैव स्थापयैनं त्वमित्युक्त्वा तां व्यसर्जयत् ।
तस्यां गतायां स पितुरन्तेवासितयात्तया ॥ ७६ ॥
अतिष्ठत्संयतो धीमानर्कस्येवारुणः पुरः ।
तदर्थप्राप्यविज्ञानं ततश्चित्राभिरुक्तिभिः ॥ ७७ ॥
चिरकालमसौ तत्र मुनिः पुत्रमबोधयत् ।
आख्यायिकाख्यानशतैर्दृष्टान्तैर्दृष्टिकल्पितैः ॥ ७८ ॥

इतीति ॥ प्रार्थनोक्तां प्रार्थनारूपमुक्तं वचनं यस्यास्ताम् ॥ ६९ ॥ ॥ १७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ तदर्थेति सार्धश्लोकद्वयं वाक्यम् । आख्यायिकाऽऽख्यानशतैः । प्रत्यक्षत

तथेतिहासवृत्तान्तैर्वेदवेदान्तनिश्चयैः ।
अनुद्वेगतया नित्यं विस्तरेण यथाक्रमम् ॥ ७९ ॥

वसिष्ठ उवाच ॥

कदाचिदार्यमार्गेण तेन कैलासवाहिनीम् ।
अहं स्नातुमदृश्यात्मा व्योमवीथीं गतः पुरा ॥ १८० ॥
निर्गत्य नभसस्तत्र मुनिमण्डलकोदरात् ।
रात्रौ प्राप्तोऽस्मि सुमते दाशूरतरुमुन्नतम् ॥ ८१ ॥
यावच्छृणोमि विटपकुहरात्कानने वचः ।
कुड्मलाम्भोजसद्मस्थषट्पदस्येव निस्वनम् ॥ ८२ ॥

दाशूर उवाच ॥

शृणु पुत्र महाबुद्धे वस्तुनोऽस्य समामिमाम् ।
वर्णयामि महाश्चर्यामेकामाख्यायिकां तव ॥ ८३ ॥
अस्ति राजा महावीर्यो विख्यातो भुवनत्रये ।
नाम्ना स्वोत्थ इति श्रीमाञ्जगदाक्रमणे क्षमः ॥ ८४ ॥
यस्यानुशासनं सर्वे भुवनेष्वपि नायकाः ।
शिरोभिर्धारयन्त्युच्चैश्चूडामणिमिवोत्तमम् ॥ ८५ ॥
यः साहसैकरसिको नानाश्चर्यविहारवान् ।
केनचित्त्रिषु लोकेषु न महात्मा वशीकृतः ॥ ८६ ॥

उपलब्धार्था आख्यायिका । परोक्षवृत्तान्तमाख्यानम् । दृष्टिकल्पितैः स्वज्ञानकल्पितैः ॥ ७८ ॥ ७९ ॥ १८० ॥ ८१ ॥ ८२ ॥ शृण्विति ॥ अस्य वस्तुनो वृत्तान्तस्य समां सदृशीमिमामाख्यायिकां वर्णयामीत्यन्वयः ॥ ८३ ॥ अस्तीति ॥ स्वोत्थ इत्यादिभिः नामान्तरैर्गोपितार्थामाख्यायिकां पुत्रप्रश्नानन्तरं दाशूरः स्वयमेव विवरिष्यति । तथापि तत्र किंचिदुच्यते ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥

यस्यारम्भसहस्राणि सुखदुःखप्रदान्यलम् ।
संख्यातुं केन शक्यन्ते कल्लोला जलधेरिव ॥ ८७ ॥
यस्य वीर्यं सुवीर्यस्य न शस्त्रैर्न च पावकैः ।
केनचिद्भुवने क्रान्तमाकाशमिव मुष्टिना ॥ ८८ ॥
यदीयां विततारम्भलीलां निर्माणभासुराम् ।
न मनागनुकुर्वन्ति शक्रोपेन्द्रहरा अपि ॥ ८९ ॥
त्रयस्तस्य महाबाहोर्देहदिग्भरणक्षमाः ।
जगदाक्रम्य तिष्ठन्ति उत्तमाधममध्यमाः ॥ १९० ॥
व्योमन्येवातिवितते जातोऽसौ त्रिशरीरकः ।
तत्रैव च स्थितिं यातः शब्दपातश्च पक्षिवत् ॥ ९१ ॥
तत्रैवापारपर्यन्ते नगरं तेन निर्मितम् ।
चतुर्दशमहारथ्यं विभागत्रयभूषितम् ॥ ९२ ॥
वनोपवनमालाढ्यं क्रीडाशिखरिसुस्थितम् ।
मुक्तालताधवलितं वापीसप्तकभूषितम् ।
शीतलोष्णात्मकाक्षीणदीपद्वयविराजितम् ॥ ९३ ॥

॥ ८९ ॥ त्रय इति ॥ तस्यैव स्वोत्थस्य दिग्भरणक्षमाः दिशां पूरणे क्षमाः शक्तास्त्रयो देहाः सत्त्वादिगुणरूपाः ॥ १९० ॥ व्योमनीति ॥ असौ स्वोत्थः त्रिशरीरकः त्रीणि सत्त्वादिरूपाणि शरीराणि यस्य तादृशः । व्योमन्येव चिदाकाश एव जातः तत्रैव स्थितिं यातः । शब्दपातश्च शब्द्यतेऽस्मिन्निति शब्दो व्योम तत्रैव पततीति शब्दपातश्च पक्षिवत् । यथाहि पक्षी व्योमन्येवाविर्भवति तिष्ठति लीयते च तद्वदित्यर्थः ॥ ९१ ॥ तत्रैवेति सार्धश्लोकद्वयं वाक्यम् ॥ नगरमिति ॥ ब्रह्माण्डे । चतुर्दशभुवनान्येव महारथ्या यस्मिन् । विभागत्रयभूषितं ऊर्ध्वाधोमध्यलोकभेदेन त्रिधा विभक्तम् ॥ ९२ ॥ क्रीडा-

तस्मिन्नेवातिविपुले पत्तने तेन भूभृता ।
संचारिणा विरचिता मुग्धापवरका गणाः ॥ ९४ ॥
ऊर्ध्वं केचिदधः केचिन्मध्ये केचिन्नियोजिताः ।
असिताच्छादनाच्छन्ना नवद्वारविभूषिताः ॥ ९५ ॥
अनारतवहद्वातबहुवातायनान्विताः ।
दीपपञ्चकसालोकास्त्रिस्थूणाः शुक्लदारवः ॥ ९६ ॥
मसृणालेपमृद्वः प्रतोलीकुलसंकुलाः ।
मायया रचितास्तेन राज्ञा तेषु महात्मना ॥ ९७ ॥
रक्षितारो महापक्षा नित्यमालोकभीरवः ॥ ९८ ॥
अथापवरकौघेषु चलत्सु स महीपतिः ।
करोति विविधां क्रीडां नीडेष्विव विहंगमः ॥ ९९ ॥
त्रिशरीरः स तेष्वन्तस्तैर्यक्षैः सह पुत्रक ।
लीलालसमुषित्वाशु पुनर्निष्क्रम्य गच्छति ॥ २०० ॥

शिखरिणो मेरुमन्दरादयस्तैः सुस्थितम् । मुक्तालताः सरितस्ताभिः धवलितम् । वाप्यः समुद्रास्तासां सप्तकेन भूषितम् । शीतलोष्णात्मकमक्षीणं च दीपद्वयं चन्द्रार्कौ तेन विराजितम् ॥ ९३ ॥ तस्मिन्निति सार्धश्लोकत्रयं वाक्यम् । अपवरका देहरूपाण्यभ्यन्तरगृहाणि ॥ ९४ ॥ असितमाच्छादनं नाम केशरूपं तृणम् । नव द्वाराणि श्रोत्रादीनि ॥ ९५ ॥ वातायनानि नासिकाविवरादीनि । दीपपञ्चकं तिस्रः स्थूणास्तम्भाः वातपित्तकफरूपास्तेषां देहधारकत्वाच्छुक्लानि दारूण्यस्थीनि ॥ ९६ ॥ मसृण आलेपो मृच्च येषाम् । तत्र आलेपो बाह्यत्वक् । मृन्मांसम् । प्रतोल्यो भुजाद्यङ्गरूपा वीथ्यः॥९७॥ महापक्षाः अहंकाराः । तेषामालोकभीरुत्वं तत्त्वज्ञाननिवर्त्यत्वात् ॥ ९८ ॥ ९९ ॥ २०० ॥ तस्येति ॥ भविष्यन्निर्माणं पुरं भाविदेहान्तरम्

तस्येच्छा जायते वत्स कदाचिच्चलचेतसः ।
पुरं भविष्यन्निर्माणां किंचिद्यामीति निश्चला ॥ १ ॥
भूताविष्ट इवावेगात्तत उत्थाय धावति ।
पुरं तदप्यवाप्नोति गन्धर्वैरिव निर्मितम् ॥ २ ॥
तस्येच्छा जायते वत्स कदाचिच्चलचेतसः ।
विनाशं संप्रयामीति तेनाशु स विनश्यति ॥ ३ ॥
पुनरुत्पद्यते तूर्णं खान्महोर्मिरिवाम्भसः ।
व्यवहारं तनोत्युच्चैः पुनरारम्भमन्थरम् ।
स्वयैव व्यवहृत्यासौ कदाचित्परिदूयते ॥ ४ ॥
किं करोम्यहमज्ञोऽस्मि दुःखितोऽस्मीति शोचति ।
मुदमेत्य कदाचिच्च स्वयमायाति पीनताम् ॥ ५ ॥

पिबति गच्छति वल्गति जृम्भते
स्फुरति भाति च भासुररूपधृक् ।
सुत महामहिमा स महीपतिः
पतिरपामिव वातरयाकुलः ॥ ६ ॥

वसिष्ठ उवाच ॥

अथापृच्छत्सुतस्तत्र जम्बूद्वीपे महानिशि ।
कदम्बद्रुमपर्णस्थं पितरं पावनाशयः ॥ ७ ॥
कोऽसौ स्वोत्थेति विख्यातो भूपस्तातोत्तमाकृतिः ।
कथितं च किमेतन्मे त्वयेति ब्रूहि तत्त्वतः ॥ ८ ॥

दाशूर उवाच ॥

शृणु पुत्र यथाभूतमेतत्ते कथयाम्यहम् ।
येन संसारचक्रस्य तत्त्वमस्यावबुध्यसे ॥ ९ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ २१० ॥ ११ ॥

असदभ्युत्थितारम्भमवस्तुमयमाततम् ।
संसारसंस्थानमिदमेवमाकथितं मया ॥ २१० ॥
परमान्नभसो जातः संकल्पः स्वोत्थ उच्यते ।
जायते स्वयमेवासौ स्वयमेव विलीयते ॥ ११ ॥
तत्स्वरूपमिदं सर्वं जगदाभोगि विद्यते ।
जायते तत्र जाते तु तस्मिन्नष्टे विनश्यति ॥ १२ ॥
ब्रह्मविष्णिवन्द्ररुद्रादींस्तस्यैवावयवान्विदुः ।
शून्ये व्योमनि तेनेदं निर्मितं त्रिजगत्पुरम् ॥ १३ ॥
प्रतिभासानुसन्धानमात्रेणैति विरञ्चिताम् ।
यत्रैते वितता लोकालोककोशाश्चतुर्दश ॥ १४ ॥
वनोपवनमालाश्च यत्रोद्यानपरम्परा ।
क्रीडाशिखरिणो यत्र सह्यमन्दरमेरवः ॥ १५ ॥
शीतोष्णदीप्तौ चन्द्रार्कौ दीपौ चण्डानिलाक्षतौ ।
सूर्यांशुकवदालोलत्तरङ्गोत्तुङ्गमौक्तिकाः ॥ १६ ॥
वहन्ति सरितो यत्र सन्मुक्तावलयश्चलाः ।
इक्षुक्षीरादिसलिला मणिरत्नबिसाङ्कुराः ॥ १७ ॥
और्वानलाम्बुजा यत्र वाप्यः सप्तमहार्णवाः ।
तस्मिन्नेव जगत्यस्मिन्पुरे संकल्पभूभृता ॥ १८ ॥
क्रीडार्थमात्मनश्चित्रा देहापवरकाः कृताः ।
केचिद्गीर्वाणनामान ऊर्ध्वे एव नियोजिताः ॥ १९ ॥
नरनागादयः केचिन्मध्येऽधश्च नियोजिताः ।
प्राणयन्त्रप्रवाहेण चलन्तो मांसमृन्मयाः ॥ २२० ॥

॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

सितास्थिदारवः स्निग्धत्वग्लेपमसृणामलाः ।
केचित्केशोलपोल्लासरचिताच्छादनश्रियः ॥ २१ ॥
कर्णाक्षिनासाप्रमुखैर्द्वारैर्नवभिरन्विताः ।
कर्णनासास्यताल्वादिवातायनगणान्विताः ॥ २२ ॥
भुजाद्यङ्गप्रतोलीकाः पञ्चेन्द्रियकदीपकाः ।
मायया रचितास्तेषु संकल्पेन महामते ॥ २३ ॥
अहंकारमहायक्षाः परमालोकभीषणाः ।
देहापवरकस्यान्तर्महाहंकारपक्षकैः ॥ २४ ॥
सहितः क्रीडतेऽत्यर्थं तस्मिन्नेवासदुत्थितैः ।
क्षणमभ्युदयं याति क्षणं शाम्यति दीपवत् ॥ २५ ॥
देहगेहेषु संकल्पस्तरङ्गः सागरेष्विव ।
भविष्यन्नेव निर्माणमवाप्नोति तदा पुरम् ॥ २६ ॥
यदा संकल्पितं वस्तु क्षणादेव प्रपश्यति ।
असंकल्पनमात्रेण स्वेनैवाशु विनश्यति ॥ २७ ॥
अनन्तायात्मदुःखाय नानन्दाय कदाचन ।
इदं स्फारं जगद्दुःखं प्रतनोत्यात्मसत्तया ॥ २८ ॥
असत्तया नाशयति घनं सांध्यं यथा तमः ।
स्वयैव दुःखदायिन्या चेष्टया परिरोदिति ॥ २९ ॥
संकल्पितानन्दलवस्तिष्ठत्युत्तरकन्धरम् ।
त्रयस्तस्यामतेर्देहा अधमोत्तममध्यमाः ॥ २३० ॥
तमःसत्त्वरजःसंज्ञाः कारणं जगतः स्थितेः ।
तमोरूपो हि संकल्पो नित्यं प्राकृतचेष्टया ॥ ३१ ॥

॥ २२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

परां कृपणतामेत्य प्रयाति कृमिकीटताम् ।
सत्त्वरूपो हि संकल्पो धर्मज्ञानपरायणः ॥ ३२ ॥
अदूरकेवलीभावः साम्राज्य इव तिष्ठति ।
रजोरूपो हि संकल्पो लोकसंव्यवहारवान् ॥ ३३ ॥
परितिष्ठति संसारे पुत्रदारानुरञ्जितः ।
त्रिविधं तु परित्यज्य रूपमेतन्महामते ॥ ३४ ॥
संकल्पः परमायाति पदमात्मपरिक्षये ।
सर्वा दृष्टीः परित्यज्य नियम्य मनसा मनः ॥ ३५ ॥
सबाह्याभ्यन्तरस्थस्य संकल्पस्य क्षयं कुरु ।
यदि वर्षसहस्राणि तपश्चरसि दारुणम् ॥ ३६ ॥
पातालस्थश्च भूस्थश्च स्वर्गस्थश्चापि तत्त्व ।
नान्यः कश्चिदुपायोऽस्ति संकल्पोपशमादृते ॥ ३७ ॥
अनाबाधेऽविकारे च सुखे परमपावने ।
संकल्पोपरमे यत्नं पौरुषेण परं कुरु ॥ ३८ ॥
संकल्पतन्तावखिला भावाः प्रोताः किलानघ ।
छिन्ने तन्तौ न जाने ते क्व यान्ति विशरारवः ॥ ३९ ॥
निःसंकल्पो यथाप्राप्तव्यवहारपरो भव ।
चिदचित्योन्मुखत्वं हि याति संकल्पसंक्षये ॥ २४० ॥

अधिगतपरमार्थतामुपेत्य
प्रसभमपास्य विकल्पजालमुच्चैः ।
अधिगमय पदं तदद्वितीयं
विततसुखाय सुषुप्तचित्तवृत्तिः ॥ ४१ ॥

॥ २८ ॥ २९ ॥ २३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

पुत्र उवाच ॥

कीदृशस्तात संकल्पः कथमुत्पद्यते प्रभो ।
कथं वा वृद्धिमायाति कथं चैष विनश्यति ॥ ४२ ॥

दाशूर उवाच ॥

अनन्तस्यात्मतत्त्वस्य सत्तासामान्यरूपिणः ।
चितश्चेत्योन्मुखत्वं यत्तत्संकल्पाङ्कुरं विदुः ॥ ४३ ॥
लेशतः प्राप्तसत्ताकः स एव घनतां शनैः ।
याति चित्तत्त्वमापूर्य दृढं जाड्याय मेघवत् ॥ ४४ ॥
भावयन्ती चितिश्चेत्यं व्यतिरिक्तमिवात्मनः ।
संकल्पतामिवायाति वीजमङ्कुरतामिव ॥ ४५ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ २४० ॥ ४१ ॥ ४२ ॥

अनन्तस्येति ॥ सत्तासामान्यरूपिणः सर्वात एवानन्तस्यात्मतत्त्वस्य स्वरूपभूतचितश्चैतन्यस्य यच्चेत्योन्मुखत्वं वहिर्मुखत्वं तदेव संकल्पस्याङ्कुरं सूक्ष्मरूपं विदुः ॥ ४३ ॥ लेशेति ॥ लेशतः सूक्ष्मांशेन प्राप्तसत्ताको लब्धस्वरूपः स एव चिच्चेत्योन्मुखीभावरूपः संकल्पाङ्कुर एव शनैश्चित्तत्त्वं चितः स्वरूपं दृढमापूर्य जाड्याय जडात्मकप्रपञ्चभावेन परिणतये घनतां घनीभावं याति मेघवत् । यथा हि मेघः प्रथमं लेशतः प्राप्तसत्ताकः शनैराकाशमापूर्य जाड्याय जडाविर्भावाय घनतां याति तद्वदित्यर्थः ॥ ४४ ॥ भावयन्तीति ॥ चितिरात्मनश्चैतन्यं चेत्यं दृश्यं आत्मनो व्यतिरिक्तमिव विभावयन्ती सती संकल्पतामायातीव वीजमङ्कुरतामिव । चितः स्वव्यतिरिक्ततया चेत्यभावनं संकल्प इत्यर्थः ॥ ४५ ॥ आयातीवेत्यनेन भ्रान्तिमात्रकल्पितमेतत् न परमार्थत इति दर्शयति संकल्पन-

संकल्पनं हि संकल्पः स्वयमेव प्रजायते ।
वर्धते स्वत एवाशु दुःखाय न सुखाय तु ॥ ४६ ॥
मा संकल्पय संकल्पं भावं भावय मा स्थितौ ।
एतावतैव भावेन भव्यो भवसि भूतये ॥ ४७ ॥
संकल्पनाशने यत्नो न भूयाननुगच्छति ।
भावनाभावमात्रेण संकल्पो जीयते ह्ययम् ॥ ४८ ॥
सुमनःकुसुमामर्दे किंचिद्व्यतिकरो भवेत् ।
सुसाध्याऽभावमात्रेण न तु संकल्पनाशने ॥ ४९ ॥
संकल्पेनैव संकल्पं मनसैव मनो मुने ।
छित्त्वा स्वात्मनि तिष्ठ त्वं किमेतावति दुष्करम् ॥ २५० ॥

मिति ॥ हि यस्मात्कारणात् संकल्पनमसत्कल्पनमेव संकल्पस्त-स्मात्तस्य निमित्तान्तरानपेक्षत्वात् स्वयमेव प्रजायते प्रादुर्भवति स्वत एव चाशु वर्धते किंतु ससंकल्पो दुःखाय केवलं नतु कदा-चिदपि सुखाय अतो हेय एवेत्यर्थः ॥ ४६ ॥ तस्य हानोपायमुपदि-शति—मेति ॥ संकल्पं मा संकल्पय मा प्रवर्तय । स्थितौ जगत्स्थितौ भावं तात्पर्यं मा भावय मा कुरु । एतावता निःसंकल्पेन जग-त्स्थितौ निरादरेण च भावेनाभिप्रायेणैव भूतये मुक्तये भव्यो भवसि योग्यो भविष्यसि ॥ ४७ ॥ संकल्पेति ॥ संकल्पनाशने भूया-न्प्रयत्नो नानुगच्छति । हि यस्मात्कारणात्संकल्पः भावनायाः संक-ल्पनायाः अभावमात्रेणाप्रवर्तनेनैव ॥ ४८ ॥ सुमन इति ॥ सुमनःकुसुमं मालतीपुष्पं तस्य आमर्दे ईषन्मर्दनेऽपि किंचिद्व्यति-करः अल्पो यत्नभेदो भवेत् । संकल्पनाशे तु न कश्चिद्व्यतिकरः न कोऽपि यत्नभेदः । कुतः । सुसाध्याभावमात्रेण सुखसाध्यस्यापि कार्य-स्याभावात् उपेक्षामात्रनिवर्त्यत्वात्संकल्पस्येति ॥ ४९ ॥ संकल्पेनेति ॥

यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि ।
असन्मयविकल्पोत्थे उभे एते तते यतः ॥ ५१ ॥
तन्दुलस्य यथा चर्म यथा ताम्रस्य कालिमा ।
नश्यति क्रियया पुत्र पुरुषस्य तथा मलः ॥ ५२ ॥
जीवस्य तन्दुलस्येव मलं सहजमप्यलम् ।
नाश्यत्येष न संदेहस्तस्मादुद्यमवान्भव ॥ ५३ ॥
मम गुरुविभवोऽज्ज्वला विलासा
इति तव मास्तु वृथैव विभ्रमोऽन्तः ।
त्वमपि च वितताश्च ते विलासा
विलसति सर्वमिदं चिदात्मतत्त्वम् ॥ ५४ ॥

तत्रान्तर्मुखेन संकल्पेन बहिर्मुखस्य संकल्पस्य छेदः । शास्त्रसंगमधीरेणातप्तेन मनसा चिन्तासंतप्तस्य मनसश्छेद इति विवेकः ॥ २५० ॥ संकल्पस्य बहिर्मुखत्वनिवृत्तये जगतो व्योमवच्छून्यतामाह—यथेति ॥ यतः कारणात् एते उभे जगन्नभसी असन्मयविकल्पोत्थे अज्ञानमयाद्विकल्पादेवोत्थिते सती तते विस्तीर्णे । अतः कल्पितत्वाविशेषादुभयोः शून्यत्वमित्यर्थः ॥ ५१ ॥ ननु स्वाभाविकस्य मलस्य कथं पौरुषेण निवृत्तिरित्याशङ्क्य दृष्टान्तमुखेनोपपादयन्नाह—तन्दुलस्येति ॥ अत्र यथावहननादिक्रियया तन्दुलस्य चर्मनाशः । अम्ललवणादिभिः क्षालनया ताम्रस्य कालिमानाशः । तथा श्रवणमननादिक्रियया पुरुषस्याज्ञानरूपमलविनाश इति विवेकः ॥ ५२ ॥ ५३ ॥ ममेति ॥ गुरूणां महतां विभवानां संपदां उज्ज्वलाविलासा ममेति मदीया इति अन्तःकरणे वृथैव विभ्रमो मास्तु । त्वमपि विततास्ते विलासा अपि च सर्वमिदं तदात्मतत्त्वमेव विलसति ॥ ५४ ॥ ५५ ॥ ५६ ॥

वसिष्ठ उवाच ॥

इत्याकर्ण्य तदा तत्र रात्रावालपनं द्वयोः ।
अहं रघुकुलाकाशशशाङ्क रघुनन्दन ॥ ५५ ॥
पतितः खात्कदम्बाग्रे पत्रपुष्पफलाकुले ।
मामप्यालोक्य संप्राप्तं दाशूरोऽर्घं सपर्यया ॥ ५६ ॥
वितीर्णविष्टरे पत्रे परया पर्यपूजयत् ।
आवयोस्तत्र चित्राभिः कथाभिरितरेतरम् ॥ ५७ ॥
शर्वरी सा व्यतीयाय मुहूर्त इव कान्तयोः ।
अहं विसृज्य दाशूरं ततोऽमरनदीं गतः ॥ ५८ ॥
दाशूराख्यायिकैषा ते कथिता रघुनन्दन ।
दाशूराख्यायिकेवेदं जगदित्येव भाव्यताम् ॥ २५९ ॥

इति श्रीयोगवासिष्ठसारे मोक्षोपाये स्थितिप्र०दाशूराख्यानं नाम चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः

वसिष्ठ उवाच ॥

अपर्यन्तस्य कालस्य कियानंशः शरच्छतम् ।
तावन्मात्रमहायुर्यः किमास्थां सोऽनुधावति ॥ १ ॥

॥ ५७ ॥ ५८ ॥ २५९ ॥ इति श्रीमदल्लालसूरिसूनुना पदवाक्यप्रमाणपारावारपारदृश्वना श्रीमुम्मडिदेवविद्वदाचार्येण विरचिते संसारतरणिनाम्नि वासिष्ठविवरणे स्थितिप्रकरणे दाशूरोपाख्यानं नाम चतुर्थः सर्गः ॥ ४ ॥

पूर्वं दाशूराख्यायिकायां जगत्स्थितेर्मायिकत्वमुक्तम् । इदानीं स्थितिप्रकरणतात्पर्यं संग्रहेण प्रतिपाद्यते—अपर्यन्तस्येति ॥ शरच्छतं

अन्तरास्थां परित्यज्य भावश्रीर्भावनामयीम् ।
योऽसि सोऽसि जगत्यस्मिंल्लीलया विहरानघ ॥ २ ॥
निरिच्छे संस्थिते रत्ने यथाऽऽलोकः प्रवर्तते ।
सत्तामात्रेण देवे तु तथैवायं जगद्गणः ॥ ३ ॥
अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
निरिच्छत्वादकर्तासौ कर्ता संनिधिमात्रतः ॥ ४ ॥
ते द्वे आत्मनि विद्येते कर्तृताकर्तृतेऽनघ ।
यत्रैव ते चमत्कारस्तामाश्रित्य स्थिरो भव ॥ ५ ॥
सर्वत्राहमकर्तेति दृढभावनयानया ।
प्रवाहपतितं कर्म कुर्वन्नपि न लिप्यते ॥ ६ ॥
याति नीरसतां जन्तुरप्रवृत्तेः स्वचेतसः ।
तस्मान्नित्यमकर्ताहमिति भावनयेद्धया ।
परमामृतनाम्नी सा समतैवावशिष्यते ॥ ७ ॥

वर्षशतं कियान् अल्पस्तावन्मात्रं वर्षशतमेव महायुर्यस्य सः।किमास्थां कां वा आस्थां आददानः अनुधावति अनुसरति ॥ १ ॥ अन्तरिति ॥ अन्तःकरणे भावश्रीः सत्तारूपं भावं श्रयतीति तथाभूतः सन् भावनामयीं संकल्पमयीं आस्थां परित्यज्य निर्मनस्कतया योऽसि यद्रूपोऽवशिष्यसे सोऽसि तद्रूपस्त्वमित्यर्थः ॥ २ ॥ निरिच्छे इति ॥ प्रवर्ततामितीच्छाशून्येऽपि संस्थित आलोको यथा प्रवर्तते तथैव देवे परमात्मनि निरिच्छे संस्थितेऽपि तत्संनिधिसत्तामात्रेण जगद्गणोऽयं प्रवर्तते ॥ ३ ॥ ४ ॥ ते द्वे इति ॥ ते यत्रैव चमत्कारोऽभिरतिः तां कर्तृतामकर्तृतां वा आश्रित्य स्थिरो भव ॥ ५ ॥ ॥ ६ ॥ यातीति सार्धश्लोको वाक्यम्। स्वचेतसोऽप्रवृत्तेर्हेतोरन्तर्नी-

अथ सर्वं करोमीति महाकर्तृतया तया ।
यदीच्छसि स्थितिं राम तत्तामप्युत्तमां विदुः ॥ ८ ॥
अहं यत्र करोमीमं समग्रं जागतं भ्रमम् ।
रागद्वेषक्रमस्तत्र कुतोऽन्यस्याप्यसंभवात् ॥ ९ ॥
यदन्येन शरीरं मे दग्धमन्येन लालितम् ।
सोऽस्मदारम्भ एवातः कः खेदोल्लासयोः क्रमः ॥ १० ॥
मत्सुखासुखविस्तारे जगज्जालक्षयोदये ।
अहं कर्तेति मत्वान्तः कः खेदोल्लासयोः क्रमः ॥ ११ ॥
खेदोल्लासविलासेषु स्वात्मकर्तृतयैकया ।
स्वसंकल्पे लयं याते समतैवावशिष्यते ॥ १२ ॥

रसतां रसो विषयेष्वौत्सुक्यं तद्रहितत्वं याति । तस्मात्कारणादकर्ताहमिति नित्यसिद्धया भावनया सा परमामृतरूपा समतैवावशिष्यते ॥ ७ ॥ अथेति ॥ तत्तर्हि । तामपि महाकर्तृतामहंकृतिमपि ॥ ८ ॥ अहमिति ॥ यत्र यस्यां महाकर्तृतायां इमं समग्रं जागतं भ्रमं अहमेव करोमीत्यभिमानस्तत्र रागद्वेषादयः कुतः । अन्यस्य कर्तुरसंभवात् ॥ ९ ॥ यदिति ॥ मे शरीरं अन्येन मातापित्रादिना लालितं अन्येन पुत्रादिना दग्धमिति यत् स जन्मवृद्धिक्षयादिरूपः अस्मदारम्भ एव अस्मत्कर्मविपाक एव । अतः कारणात् खेदस्योल्लासस्य च कः क्रमः कोऽवकाशः ॥ १० ॥ मदिति ॥ ममैव सुखासुखयोर्विस्तारे प्रपञ्चरूपे जगज्जालस्य क्षयोदये अहमेव कर्तेत्यन्तर्मत्वा खेदोल्लासयोः कः क्रमः ॥ ११ ॥ खेदेति ॥ खेदोल्लासविलासेषु स्वात्मनो या कर्तृता तया एकया सर्वत्राखण्डितया सत्या स्वस्य संकल्पे एवं कर्तव्यमित्यादिरूपे लयं याते सति समतैव उपे-

समता सर्वभावेषु यासौ सत्यपरा स्थितिः ।
तस्यामवस्थितं चित्तं न भूयो जन्मभाग्भवेत् ॥ १३ ॥
अथवा सर्वकर्तृत्वमकर्तृत्वं च राघव ।
सर्वं त्यक्त्वा मनः पीत्वा योऽसि सोऽसि स्थिरो भव ॥ १४ ॥
अयं सोऽहमयं नाहं करोमीदमिदं तु न ।
इति भावानुसंधानमयी दृष्टिर्न तुष्टये ॥ १५ ॥
सा कालसूत्रपदवी सा महावीचिवागुरा ।
सासिपत्रवनश्रेणी या देहेऽहमिति स्थितिः ॥ १६ ॥
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन श्वमांसेनेव पुक्कसी ॥ १७ ॥
तया सुदूरोज्झितया दृष्टौ पटललेखया ।
उदेति परमा दृष्टिर्ज्योत्स्नेव विगताम्बुदा ।
तयाभ्युदितया राम तीर्यतेऽयं भवार्णवः ॥ १८ ॥

क्षाबुद्धिरेवावशिष्यते ॥ १२ ॥ समतेति ॥ सर्वभावेषु या समता असौ सत्यपरा ब्रह्मपरा स्थितिः । तस्यां समतायामवस्थितं चित्तं भूयो न जन्मभाग्भवेत् ॥ १३ ॥ १४ ॥ अयमिति ॥ अयं यज्ञदत्तस्त्वहं न । इदमेव परिमितं कार्यं करोमि इदं तु यज्ञदत्तादिकर्तृकं कार्यं न करोमि इति भेदे भावानुसंधानमयी दृष्टिस्तुष्टये ब्रह्मानन्दाय न कल्पत इत्यर्थः ॥ १५ ॥ सेति ॥ कालसूत्रं महावीचिरसिपत्रमिति च नरकविशेषाः ॥ १६ ॥ सेति ॥ सा देहात्मभावना । भव्येन मुमुक्षुणा । पुक्कसी चण्डाली ॥ १७ ॥ तयेति सार्धश्लोको वाक्यम् । पटललेखया पटलं दृष्टिप्रतिब-

कर्ता नास्मि न चायमस्मि स इति ज्ञात्वैवमन्तः स्फुटं
कर्तैवास्मि समग्रमस्ति तदिति ज्ञात्वाथवा निश्चितम् ।
कोऽप्येवास्मि न कश्चिदेवमिति वा निर्णीय सर्वोत्तमे
तिष्ठ त्वं स्वपदे स्थिताः पदविदो यत्रोत्तमाः साधवः ॥ १९ ॥

वसिष्ठ उवाच ॥

वन्धो हि वासनाबन्धो मोक्षः स्याद्वासनाक्षयः ।
वासनां त्वं परित्यज्य मोक्षार्थित्वमपि त्यज ॥ २० ॥
मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासिताः ।
मैत्र्यादिभावनानाम्नीर्गृहाणामलवासनाः ॥ २१ ॥
ता अप्यन्तः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तः शान्ततमस्नेहो भव चिन्मात्रवासनः ॥ २२ ॥

न्धको नेत्ररोगः ॥ १८ ॥ कर्तेति ॥ नाहं कर्ता नापि परिच्छिन्न इत्येका भावना। सर्वकर्ता सर्वात्मकश्चाहमिति। द्वितीया । एवं कर्तृत्वाद्युपलक्षितः कश्चिदपि न भवामि किं तर्हि सर्वविकल्पातीतः कोऽप्येवास्मीति तृतीया । तत्रान्यतमामाश्रित्य त्वं सर्वोत्तमे स्वपदे तिष्ठ । यत्र च पदविदो ज्ञानिनः साधवः स्थिता इति ॥ १९ ॥ बन्ध इति ॥ मोक्षार्थित्वमपि त्यजेति तस्यापि वासनाविशेषत्वात् ॥ २० ॥ मानसीरिति ॥ विषयवासितास्तन्मयीकृताः मानसीर्वासनाः पूर्वं त्यक्त्वा मैत्र्यादिनाम्नीरमलवासना गृहाण । तथा सति चित्तप्रसादो भवति । यथाह भगवान्पतञ्जलिः—'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावना तच्चित्तप्रसादनमि'ति ॥ २१ ॥ ता अपीति ॥ ताभिर्मैत्र्यादिभिर्व्यवहरन्नपि अन्तस्ता अपि परित्यज्य शान्ततमस्नेहः निवृत्तसर्वेच्छः सन् चिन्मात्रवासनो

तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् ।
शेषे स्थिरसमाधानो येन त्यजसि तं त्यज ॥ २३ ॥
चिन्मनःकलनाकारप्रकाशतिमिरादिकम् ।
वासनां वासितारं च प्राणस्पन्दनपूर्वकम् ॥ २४ ॥
समूलमखिलं त्यक्त्वा व्योमसौम्यः प्रशान्तधीः ।
यस्त्वं भवसि सद्बुद्धे स भवानस्तु तत्त्वतः ॥ २५ ॥
हृदयात्संपरित्यज्य सर्वमेव महामते ।
यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥ २६ ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥ २७ ॥
नैष्कर्म्येण न तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः ।
न समाधिजपाभ्यां वा यस्य निर्वासनं मनः ॥ २८ ॥

भव ॥ २२ ॥ तामपीति ॥ मनोबुद्धिसमन्वितां तामपि चिन्मात्रवासनामपि परित्यज्य शेषे सर्ववासनाविनिर्मुक्ते चिद्रूपे स्थिरसमाधानो भूत्वा येन यत्नविशेषेण त्यजसि तमपि त्यज ॥ २३ ॥ चिदिति श्लोकद्वयं वाक्यम् । चिदेषा मन एतदित्यादिरूपं चिदादिविकल्पं तद्विषयां वासनां वासितारं वासनाहेतुं च प्राणस्पन्दनपूर्वकं प्राणस्पन्दनं च समूलमखिलं त्यक्त्वा व्योमवत्सौम्यः प्रशान्तधीश्च सन् त्वं यो भवसि यादृशो भवसि भवान्पूज्यस्त्वं तत्त्वतः सोऽसि तादृशोऽसीत्यर्थः । तत्र चित् स्वरूपचैतन्यम् । मनः अन्तःकरणम् । कलना अविद्या । आकारः । प्रपञ्चः । प्रकाशस्तेजः । तिमिरं तमः । आदिशब्दाद्घटादयः ॥ २४ ॥ २५ ॥ २६ ॥ समाधिमिति ॥ समाधिं मा करोतु । वा अथ कर्माणि च मा करोतु करोतु वा यः परं हृदयेन अस्तसर्वास्थः परित्यक्तसर्वदृश्यादरः स उत्तमाशयो मुक्त एव ॥ २७ ॥ नैष्कर्म्येणेति ॥ यस्य मनो निर्वासनं तस्य नैष्कर्म्यादिभिः न किंचित्प्र-

विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं परम् ॥ २९ ॥
दृष्टं द्रष्टव्यमखिलं भ्रान्त्वा भ्रान्त्वा दिशो दश ।
जनाः कतिपया एव यथावस्त्ववलोकिनः ॥ ३० ॥
ये केचन समारम्भा ये जनस्याक्रियाक्रमाः ।
ते सर्वे देहमात्रार्था आत्मार्थं तु न किंचन ॥ ३१ ॥
सर्वत्र पञ्चभूतानि षष्ठं किंचिन्न विद्यते ।
पाताले भूतले स्वर्गे रतिमेतु क्व धीरधीः ॥ ३२ ॥
युक्त्या वै चरतस्तस्य संसारो गोष्पदाकृतिः ।
दूरसंत्यक्तयुक्तेस्तु महावर्तार्णवोपमः ॥ ३३ ॥
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
नागरं नागरीकान्तं कुग्रामललना इव ॥ ३४ ॥
स्फारब्रह्मामलाम्भोधेः फेनाः सर्वे कुलाचलाः ।
चिदादित्यमहातेजो मृगतृष्णा जगच्छ्रियः ॥ ३५ ॥

योजनमित्यर्थः । नैष्कर्म्यं काम्यकर्मपरित्यागः ॥ २८ ॥ विचारितमिति ॥ शास्त्रमलं विचारितं मिथ एकान्ते उद्ग्राहितं स्वबुद्ध्या उत्प्रेक्षितं च संत्यक्तवासनान्मौनात्तूष्णीम्भावादृते उत्तमं परं वस्तु नास्ति ॥ २९ ॥ ३० ॥ य इति ॥ आत्मार्थं आत्मनो बन्धमोक्षार्थम् ॥ ३१ ॥ सर्वत्रेति ॥ प्रपञ्चः सर्वत्र भूतपञ्चात्मक एव । तानि च भूतानि नश्वराणि जडानि च । अतो धीरस्य विवेकिनो धीः क्व वा रतिं विश्रान्तिमेतु । आत्मस्वरूप एव रन्तुमर्हसीत्यर्थः ॥ ३२ ॥ युक्त्येति ॥ युक्त्या परिपूर्णब्रह्मभावनारूपेण महायोगेन ॥ ३३ ॥ ३४ ॥ स्फारेति ॥ जगच्छ्रियः चिदादित्यस्य यन्महत्तेज

अत्रैव वस्तुन्युदिताः शृणु राघव पूर्वजाः ।
कचेन गाथा या गीता बार्हस्पत्येन पावनीः ॥ ३६ ॥
"कचः कदाचिदुत्थाय समाधेः प्रीतमानसः ।
एकान्ते समुवाचेदमेको गद्गदया गिरा ॥ ३७ ॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
आत्मना पूरितं विश्वं महाकल्पाम्बुना यथा ॥ ३८ ॥
सबाह्याभ्यन्तरे देहेऽप्यध ऊर्ध्वं च दिक्षु च ।
इत आत्मा ततश्चात्मा नास्त्यनात्ममयं क्वचित् ॥ ३९ ॥
न तदस्ति न यत्राहं न तदस्ति न यन्मयि ।
किमन्यदभिवाञ्छामि सर्वं संविन्मयं स्थितम्" ॥ ४० ॥

इति कचगाथाः ॥ वसिष्ठ उवाच ॥

ये हि राघव सत्त्वस्था जाता भुवि महागुणाः ।
ते नित्यमेवाभ्युदिता मुदिताः ख इवेन्दवः ॥ ४१ ॥
नापदि ग्लानिमायान्ति निशि हेमाम्बुजं यथा ।
नेहन्ते प्रकृतादन्यद्रमन्ते शिष्टवर्त्मनि ॥ ४२ ॥

आतपः तत्र स्फुरन्त्यो मृगतृष्णाः मरीचिकाः। सर्वाण्यपि जगन्ति चिद्विलासमात्रकल्पितानीत्यर्थः ॥ ३५ ॥ अत्रैवेति ॥ बार्हस्पत्येन बृहस्पतेरपत्येन ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ न तदस्तीति ॥ यत्र वस्तुनि अहं नासं तन्नास्ति। 'तत्सृष्ट्वा तदेवानुप्राविशदि'ति सर्वत्रात्मनोऽनुप्रवेशात् । यच्च वस्तु मयि नास्ति तन्नास्ति । सर्वस्य प्रपञ्चस्यात्मन्यध्यस्तत्वात् । अतः सर्वं संविन्मयं ततोऽन्यत्किमभिवाञ्छामि ॥ ४० ॥ ये हीति सार्धश्लोकपञ्चकं वाक्यम् । तत्रस्थाः ज्ञाननिष्ठाः। महान्तो गुणाः शमादयो येषां ते ॥ ४१ ॥ प्रकृताद-

नित्यमापूर्णतामन्तरक्षुब्धामिन्दुसुन्दरीम्।
आपद्यपि न मुञ्चन्ति शशिनः शीततामिव ॥ ४३ ॥
आकृत्यैव विराजन्ते मैत्र्यादिगुणकान्तया।
समाः समरसाः सौम्याः सततं साधुवृत्तयः ॥ ४४ ॥
अब्धिवद्धृतमर्यादा भवन्ति वितताशयाः।
अतस्तेषां महाबाहो पदमापदवीक्षितम् ॥ ४५ ॥
सर्वदैवानुगन्तव्यं मन्तव्यं नापदर्णवे।
कोऽहं कथमिदं चेति संसारमलमाततम् ॥ ४६ ॥
प्रविचार्यं प्रयत्नेन प्राज्ञेन सह साधुना।
नाकर्मसु निमङ्क्तव्यं नानार्येण सहावसेत् ॥ ४७ ॥
द्रष्टव्यः सर्वसंहर्ता न मृत्युरवहेलया।
शरीरमस्थिमांसं च त्यक्त्वा रक्ताद्यशोभनम् ॥ ४८ ॥
भूतमुक्तावलीतन्तु चिन्मात्रमवलोकयेत्।
यैव चिद्गगनाभोगभूषणे व्योम्नि भास्वरे ॥ ४९ ॥
धराविवरकोशस्थे सैव चित्कीटकोटरे।

वश्यकर्तव्यात् अन्यन्नेहन्ते नापेक्षन्ते ॥ ४२ ॥ शशिन इति बहुवचनम् ॥ ४३ ॥ मैत्र्यादिगुणकान्तया मैत्रीकरुणामुदितोपेक्षालक्षणैर्गुणैः कान्तया। समाः रागद्वेषरहिताः। समरसाः समं सर्वगतं ब्रह्म रसो येषां ते तथा ॥ ४४ ॥ आपदवीक्षितं आपद्भिरवीक्षितमिति ॥ ४५ ॥ ४६ ॥ ४७ ॥ द्रष्टव्य इति श्लोकत्रयं वाक्यम्। अवहेलया अनादरेण। शरीरमिति अस्थिमांसरक्तादिरूपं अतएवाशोभनं शरीरं त्यक्त्वेत्यन्वयः ॥ ४८ ॥ भूतमुक्तावलीतन्तु सर्वभूतानुस्यूतम् ॥ ४९ ॥ ५० ॥ इति श्रीमदल्लालसूरिसूनुना पदवा-

तामसीं राजसीं चैव जातिमन्यामपि स्थिताः ।
स्वप्रयत्नवशाद्यान्ति सन्तः सात्विकजातिताम् ॥ ५० ॥

इति श्रीवाल्मीकीये योगवासिष्ठसारे मोक्षपाये स्थितिप्रकरण
उपदेशाख्यानं नामपञ्चमःसर्गः ॥ ५ ॥

क्यप्रमाणपारावारदृश्वना श्रीमुम्मडिदेवविद्वदाचार्यविरचिते संसारतरणिनाम्नि वासिष्ठविवरणे स्थितिप्रकरण उपदेशोपाख्यानं नाम पञ्चमः सर्गः ॥ ५ ॥

समाप्तमिदं स्थितिप्रकरणं चतुर्थम् ॥



# उपशमप्रकरणम्

## प्रथमः सर्गः

वसिष्ठ उवाच ॥

दीर्घसंसारमायेयं राम राजसतामसैः ।
धार्यते मानवैर्नित्यं सुस्तम्भैरिव मण्डपः ॥ १ ॥
सत्त्वस्थजातिभिर्धीरैस्त्वादृशैर्गुणबृंहितैः ।
हेलया त्यज्यते पक्वा मायेयं त्वगिवोरगैः ॥ २ ॥
समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् ।
अहमन्य इदं चान्यदिति भ्रान्तिं त्यजानघ ॥ ३ ॥
तते ब्रह्मघने नित्ये संभवन्ति न कल्पनाः ।
विच्छित्तयः पयोराशौ यथा राम न सन्मयाः ॥ ४ ॥

पूर्वं जगदुत्पत्तिस्थित्योर्मन एव कारणमित्युक्तम् । इदानीं तदुपशमार्थमिदं प्रकरणमारभ्यते । तत्र दशाख्यानानि भवन्ति—जनकः पुण्यपावनौ बलिः प्रह्लादः गाधिः उद्दालकः सुरघुः भासविलासौ वीतहव्यः जीवन्मुक्तस्याकाशगमनाद्यभावश्चेति । तत्र च जनकवृत्तान्तमवतारयितुं पीठिकामाचरति—दीर्घेत्यादिना ॥ राजसतामसै रजस्तमःप्रधानैः । रजःप्रभृतीनां लक्षणम् 'सत्त्वं लघु प्रकाशकमिष्टमवष्टम्भकं चलं च । रजः गुरु । आवरणकमेव तमः' इति सांख्ये । 'सत्त्वं ज्ञानं तमोऽज्ञानं रजो मिश्रमुदाहृत'मिति गीतासु(?)॥१॥ सत्त्वेति ॥ सत्त्वस्था सत्त्वगुणप्रधाना जातिर्जन्म येषां तैर्गुणबृंहितैः गुणा मैत्र्यादयः तैर्बृंहिता वर्धिताः तैः । हेलया लीलया । त्वक्कञ्चुकः ॥ २ ॥ ३ ॥ तत इति ॥ ब्रह्मघने घनीभूते ब्रह्मणि विच्छित्तयः तरङ्गादिभेदरचनाः सन्मयाः सन्तः परमार्थसन्तः सन्तश्च ते मया

न शोकोऽस्ति न मोहोऽस्ति न जन्मास्ति न जन्मवान् ।
यदस्तीह तदेवास्ति विज्वरो भव राघव ॥ ५ ॥
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ।
अद्वितीयो विशोकात्मा विज्वरो भव राघव ॥ ६ ॥
समः स्वस्थः स्थिरमतिः शान्तः शान्तमना मुनिः ।
मौनी वरमणिस्वच्छो विज्वरो भव राघव ॥ ७ ॥
यथाप्राप्तानुभवनात्सर्वत्रानभिवाञ्छनात् ।
त्यागादानपरित्यागाद्विज्वरो भव राघव ॥ ८ ॥
यस्येदं जन्म पाश्चात्त्यं तस्य चैव महामते ।
विशन्ति विद्या विमला मुक्ता वेणुमिवोत्तमम् ॥ ९ ॥

विक्षेपाश्चेति सन्मयाः । डुमिञ् प्रक्षेपणे । अन्यथा मयटष्टित्त्वात् सन्मय्य इति भवितव्यम् ॥ ४ ॥ नेति ॥ इह यदस्ति यच्चिन्मात्रं वस्तु परमार्थतोऽस्ति तदेवास्ति तदेव सत्तया प्रतीयते । अतो विज्वरो विगततापत्रयो भव ॥ ५ ॥ निर्द्वन्द्व इति ॥ निर्द्वन्द्वः शीतोष्णादेर्द्वन्द्वान्निष्क्रान्तः । नित्यं सत्त्वगुणनिष्ठः । निर्योगक्षेमः इष्टसाधनं योगः अनिष्टनिवारणं क्षेमः तद्रहितः । आत्मवान् अप्रमत्तचित्तः । अद्वितीयो भेदभावनारहितः। विशोकात्मा । विनष्टानुशोचनचित्सुखः ॥ ६ ॥ सम इति ॥ शान्तः प्रवृत्तिमार्गादुपरतः । शान्तमनाः उपशान्तचित्तः मुनिर्मननिष्ठः वरमणिस्वच्छः आकरजो मणिरिव निर्मलः ॥ ७ ॥ यथेति ॥ यथाप्राप्तस्य प्रारब्धफलस्यानुभवनात् अप्राप्ते सर्वत्र अनभिवाञ्छनाच्च हेतोस्त्यागादानपरित्यागी विज्वरो भव ॥ ८ ॥ यस्येति ॥ पाश्चात्त्यं चरमम् । इतः परं जन्मान्तराभावाद्विद्याः ज्ञानहेतवः ॥ ९ ॥ तान्येवाह—आर्यतेति ॥ आर्यता सदाचारप्र-

आर्यता हृद्यता मैत्री सौम्यता मुक्तता ज्ञता ।
समाश्रयन्ति तं नित्यमन्तःपुरमिवाङ्गनाः ॥ १० ॥
पेशलाचारमधुरं सर्वे वाञ्छन्ति तं जनाः ।
वेणुं मधुरनिध्वानं वने वनमृगा इव ॥ ११ ॥
एष तावत्क्रमः प्रोक्तः सामान्यः सर्वजन्तुषु ।
इममन्यं विशेषं त्वं शृणु राजीवलोचन ॥ १२ ॥
अस्मिन्संसारसंरम्भे जातानां देहधारिणाम् ।
अपवर्गक्षमौ राम द्वाविमावुत्तमौ क्रमौ ॥ १३ ॥
एकस्तावद्गुरुप्रोक्तादनुष्ठानाच्छनैःशनैः ।
जन्मना जन्मभिर्वापि सिद्धिदः समुदाहृतः ॥ १४ ॥
द्वितीयः स्वात्मनैवाशु किंचिद्व्युत्पन्नचेतसः ।
भवति ज्ञानसंप्राप्तिराकाशफलपातवत् ॥ १५ ॥
नभःफलनिपाताभे ज्ञानसंप्रतिपत्तये ।
अत्रेमं शृणु वृत्तान्तं प्राक्तनं कथयामि ते ॥ १६ ॥

वसिष्ठ उवाच ॥

अस्त्यस्तमितसर्वापदुद्यत्संपदुदारधीः ।
विदेहानां महीपालो जनको नाम वीर्यवान् ॥ १७ ॥
कल्पवृक्षोऽर्थिसार्थानां मित्राब्जानां दिवाकरः ।
स कदाचिन्मधौ मत्तकोकिलोल्लासशालिनि ।
ययावुपवनं कान्तं नन्दनं वासवो यथा ॥ १८ ॥

रम्परत्वम् । हृद्यता सर्वसंमतत्वम् । मैत्री सर्वभूतानुकम्पा । सौम्यता अन्तःशीतलता । मुक्तता निःसङ्गत्वम् । ज्ञता ज्ञाननिष्ठता ॥ १० ॥ ॥ ११ ॥ एष इति ॥ एषः पूर्वोक्तः क्रमो मुक्तिक्रमः सर्वजन्तुषु सामान्यः साधारणः । इमं वक्ष्यमाणम् ॥ १२ ॥ १३ ॥ १४ ॥

तस्मिन्नुपवने रम्ये केसरामोदमोदिते ।
दूरस्थानुचरः सोऽथ कुञ्जेषु विचचार ह ॥ १९ ॥
अथ शुश्राव कस्मिंश्चित्तमालवनगुल्मके ।
सिद्धानामप्रदृश्यानां स्वप्रसङ्गादुदाहृताः ॥ २० ॥
विविक्तवासिनां नित्यं शैलकन्दरचारिणाम् ।
इमाः कमलपत्राक्ष गीता गीतात्मभावनाः ॥ २१ ॥
द्रष्टृदृश्यसमायोगात्प्रत्ययानन्दनिश्चयः ।
यस्तं स्वमात्मतत्त्वोत्थं निःस्पन्दं समुपास्महे ॥ २२ ॥
द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ।
दर्शनप्रथमाभासमात्मानं समुपास्महे ॥ २३ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ अथेति श्लोकद्वयं वाक्यम् ॥ २० ॥ गीता उपनिषदर्थसंग्राहकाः श्लोकाः । गीतात्मभावनाः गीता वर्णिता आत्मभावनाः स्वानुसंधानप्रकारो यासु ताः । गीतायां निरूपितो योऽयमात्मा तस्य भावनं स्वरूपनिरूपणं यासु ताः ॥ २१ ॥ तत्र प्रथमः सिद्ध आह—द्रष्ट्रिति ॥ द्रष्टृदृश्यसमायोगात् द्रष्टुः पुरुषस्य दृश्येन दृष्टिप्रियेण वस्तुना समायोगात् संश्लेषाद्धेतोर्यः प्रत्ययानन्दनिश्चयः प्रत्यये बुद्धावानन्दावभासः । आत्मतत्त्वोत्थं आत्मनो जीवस्य तत्त्वेन ब्रह्मभावेनोत्थमाविर्भूतं तादृगानन्दात्मकं स्वमात्मानमेव देवं निःस्पन्दं निश्चलमुपास्महे भावयामः । वाञ्छितार्थप्राप्तौ चरितार्थतया चेतस्युपरते सत्यात्मन्युदित आनन्दो ब्रह्मानन्द एवेति भावः ॥ २२ ॥ द्वितीय आह—द्रष्टृदर्शनदृश्यानि द्रष्टा अहंकर्ता आत्मा दर्शनं चक्षुरादिव्यापारोपहितं वृत्तिज्ञानं दृश्यं तद्विषयः तानि त्रीण्यपि तद्वासनया सहैव त्यक्त्वा यो दर्शनप्रथ-

द्वयोर्मध्यगतं नित्यमस्तिनास्तीति पक्षयोः ।
प्रकाशनं प्रकाशानामात्मानं समुपास्महे ॥ २४ ॥
सशिरस्कं हकारादिमशेषाकारसंस्थितम् ।
अजस्रमुच्चरन्तं स्वमात्मानं समुपास्महे ॥ २५ ॥
संत्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये ।
ते रत्नमभिवाञ्छन्ति त्यक्त्वा हस्तस्थकौस्तुभम् ॥ २६ ॥
सर्वाशाः किल संत्यज्य फलमेतदवाप्यते ।
येनाशाविषवल्लीनां मूलमाला विलूयते ॥ २७ ॥
बुध्वाप्याद्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः ।
बध्नाति भावनां भूयो नरो नासौ स गर्दभः ॥ २८ ॥

माभासो दर्शनात् वृत्तिज्ञानात् प्रथममाभासते तं सर्वस्मात्पूर्वं भातं स्वभासैव सर्वमवभासयन्तमात्मानं समुपास्महे ॥ २३ ॥ तृतीय आह—द्वयोरिति ॥ अस्तिनास्तीति पक्षयोर्द्वयोरपि मध्यगतं सद्रूपत्वादस्ति निराकारत्वाच्च नास्तीति पक्षद्वयसाधारणं प्रकाशानां सौरचान्द्रवैद्युतादीनां जडप्रकाशानां प्रकाशनं प्रतीतिहेतुं आत्मानं समुपास्महे ॥ २४ ॥ चतुर्थ आह—सशिरस्कमिति ॥ अशेषाकारसंस्थितं सुरनरतिर्यगादिशरीरेषु सर्वेष्वन्तर्यामितया स्थितं सशिरस्कं सशब्दान्तं हकारादिं हंसमन्त्रमजस्रमुच्चरन्तं स्वमात्मानमुपास्महे ॥ २५ ॥ २६ ॥ सर्वेति ॥ येन मुमुक्षुणा सर्वाशाः ऐहिकामुष्मिकविषयान्सर्वानपि मनोरथान्संत्यज्य एतदात्मोपासनरूपं फलमवाप्यते । येनात्मोपासकेन आशा एव विषवल्ल्यः संतापहेतुकत्वात् तासां मूलमाला मूलभूताज्ञानसंतानो विलूयते छिद्यते ॥ २७ ॥ बुध्वापीति ॥ दुर्मतिरल्पबुद्धिर्यः पदार्थेष्वाद्यन्तवैरस्यं आद्यन्तयोः

उत्थितानुत्थितानेतानिन्द्रियारीन्पुनः पुनः ।
हन्याद्विवेकदण्डेन वज्रेणेव हरिर्गिरीन् ॥ २९ ॥
हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च ।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ ३० ॥
उपशमसुखमाहरेत्पवित्रं
शमवशतः शममेति साधु चेतः ।
प्रशमितमनसः स्वके स्वरूपे
भवति सुखे स्थितिरुत्तमा चिराय ॥ ३१ ॥

वसिष्ठ उवाच ॥

इति सिद्धगणोद्गीर्णां गीतां श्रुत्वा महीपतिः ।
विषादमाजगामाशु भीरू रणरवादिव ॥ ३२ ॥
परिवारमशेषेण विसृज्य स्वं स्वमालयम् ।
एक एवाविशद्राजा मृगेन्द्र इव भूधरम् ॥ ३३ ॥
तत्र प्रोड्डयनालोलखगपक्षतिचञ्चलाः ।
आलोकयंल्लोकगतीर्विललापेदमातुरः ॥ ३४ ॥
हा कष्टमिति कष्टासु लोललोकदशा स्वयम् ।
पाषाणेष्विव पाषाणमालुठामि भ्रमादहम् ॥ ३५ ॥

प्राग्भावप्रध्वंसाभावयोर्वैरस्यं निःसारत्वं बुध्वापि भूयो भावनां वासनां बध्नाति असौ नरो गर्दभो नेति न ॥ २८ ॥ २९ ॥ ३० ॥ उपशमेति ॥ मुमुक्षुः पूर्वं पवित्रं निर्दोषं उपशमसुखमाहरेत्संपादयेत् । ततः शमवशत उपशमसुखसामर्थ्यात् विषयसुखेषु चेतः साधु शममुपशममेति । ततश्च प्रशमितमनसः पुरुषस्य स्वके स्वरूपे सुखे उत्तमा स्थितिः चिराय भवति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

अपर्यन्तस्य कालस्य कोऽप्यंशो जीव्यते मया ।
तस्मिन्भावं निबध्नामि धिङ्मामधमचेतसम् ॥ ३६ ॥
कियन्मात्रमिदं नाम राज्यमाजीवितं मम ।
किमेतेन वृथा ह्यस्मिंस्तिष्ठामि हतधीर्यथा ॥ ३७ ॥
यद्वस्तु यच्च वा रम्यं यदुदारमकृत्रिमम् ।
किंचित्तदिह नास्त्येव किंनिष्ठेयं धृतिर्मम ॥ ३८ ॥
अथ ये महतां मूर्ध्नि ते दिनैर्निपतन्त्यधः ।
हन्त चित्त महत्तायां कैषा विश्वस्तता बत ॥ ३९ ॥
ते महाविभवाभोगास्ते सन्तः स्निग्धबान्धवाः ।
सर्वं स्मृतिपथं प्राप्तं वर्तमानेऽत्र का धृतिः ॥ ४० ॥
क्व धनानि महीपानां ब्रह्मणः क्व जगन्ति वा ।
प्राक्तनानि प्रयातानि केयं विश्वस्तता मम ॥ ४१ ॥
कोटयो ब्रह्मणां याता गताः स्वर्गपरम्पराः ।
प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीविते ॥ ४२ ॥
संसाररात्रिदुःस्वप्ने शून्ये देहमये भ्रमे ।
आस्थां चेदनुबध्नाति तन्ममास्तु धिगस्थितिम् ॥ ४३ ॥

॥ ३५ ॥ ३६ ॥ कियदिति ॥ कियन्मात्रम्। अत्यल्पमित्यर्थः । अतः कारणादेतेन राज्येन किम् । न किंचित्प्रयोजनमित्यर्थः। हतधीर्यथा नष्टबुद्धिरिव वृथैवास्मिन् राज्ये तिष्ठामि ॥ ३७ ॥ यदिति ॥ यद्वस्तु तात्त्विकं रम्यं निर्दोषं उदारं उत्कृष्टं अकृत्रिममकल्पितं तत्किंचिदिह जगति नास्त्येव। मम धृतिः प्रीतिः किंनिष्ठा किमालम्बना ॥ ३८ ॥ अथेति ॥ चित्तेति संबोधनम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ संसारेति ॥ संसार एव रात्रिः तमोमयत्वात् तत्र दुःस्वप्नवद्दुःख-

अजस्रमुपयातास्ते यान्ति चाद्यापि वासराः ।
अविनष्टैकसद्वस्तुर्दृष्टो नाद्यापि वासरः ॥ ४४ ॥
यन्मध्ये यच्च पर्यन्ते यच्चापाते मनोरमम् ।
सर्वमेवापवित्रं तद्विनाशामेध्यदूषितम् ॥ ४५ ॥
श्वःश्वः पापीयसीमेव श्वःश्वः क्रूरतरामपि ।
श्वःश्वः खेदकरीमेति दशामिह जडो जनः ॥ ४६ ॥
अज्ञानैकहतो बाल्ये यौवने वनिताहतः ।
शेषे कलत्रचिन्तार्थैः किं करोतु कदा जडः ॥ ४७ ॥
सतोऽसत्ता स्थिता मूर्ध्नि मूर्ध्नि रम्येऽप्यरम्यता ।
सुखेषु मूर्ध्नि दुःखानि किमेकं संश्रयाम्यहम् ॥ ४८ ॥
येषां निमेषणोन्मेषौ जगतां प्रलयोदयौ ।
तादृशाः पुरुषाः सन्ति मादृशां गणनैव का ॥ ४९ ॥
संपदोऽपि विचित्रा यास्ताश्चेच्चित्तेन संमताः ।
तत्ता अपि महारम्भा हन्त मन्ये महापदः ॥ ५० ॥

मयो देहरूपो भ्रमस्तत्र चेदास्थामनुबध्नाति तत्तर्हि मम अस्थितिम-र्यादां धिगस्तु। ममेयमस्थितिः कष्टेत्यर्थः ॥ ४३ ॥ ४४ ॥ यदिति ॥ मध्ये यौवने मनोरमं देहादि। पर्यन्ते मनोरमं चूतफलादि । आपाते प्रथमं मनोरमं मालतीकुसुमादि ॥ ४५ ॥ ४६ ॥ ४७ ॥ सत इति ॥ सतो विद्यमानस्य वस्तुनः । मूर्ध्नि पर्यन्ते ॥ ४८ ॥ येषा-मिति ॥ येषां ब्रह्मादीनाम् । निमेषणोन्मेषौ निद्राप्रबोधौ ॥ ४९ ॥ संपद इति ॥ विचित्राः संपदोऽपि पुत्रवियोगादिना दुःखितस्य चित्तेन संमताश्चेत्तर्हि महारम्भाः। ता अपि संपदो महत्य आपद इति मन्ये । दुःखिते मनसि सर्वमसह्यमिति न्यायात् ॥ ५० ॥

आपदोऽपि विचित्रा यास्ताश्चेन्मनसि संमताः।
तत्ता अपि महारम्भा मन्ये मनसि संपदः ॥ ५१ ॥
संसार एव दुःखानां सीमान्तः किल कथ्यते।
तन्मध्यपतिते देहे सुखमासाद्यते कथम् ॥ ५२ ॥
सहस्राङ्कुरशाखात्मफलपल्लवशालिनः।
अस्य संसारवृक्षस्य मनो मूलमिति स्थितम् ॥ ५३ ॥
संकल्पमेव तन्मन्ये संकल्पोपशमेन तु।
शोषयामि यथा शोषमेति संसारपादपः ॥ ५४ ॥
प्रबुद्धोऽस्मि प्रबुद्धोऽस्मि दुष्टश्चौरो मयात्मनः।
मनोनामेह हन्म्येनं मनसास्मि चिरं हतः ॥ ५५ ॥
एतावन्तमिमं कालं मनोमुक्ताफलं मम।
अविद्धमासीदधुना विद्धं तु गुणमर्हति ॥ ५६ ॥
विबुधैः साधुभिः सिद्धैरहं साधु प्रबोधितः।
आत्मानमनुगच्छामि परमानन्दसाधनम् ॥ ५७ ॥
अयमहमिदमाततं ममेति स्फुरितमपास्य बलादसत्यमन्तः।
रिपुमतिबलिनं मनो निहन्मि प्रशमम्रुपैमि नमोऽस्तु ते विवेक ५८

आपद इति ॥ विचित्रा आपदोऽपि महाभ्युदयशिरस्कतया चित्तेन संमताश्चेत्तर्हि ता अपि सकलसंपदो मन्ये ॥ ५१ ॥ ५२ ॥ सहस्रेति ॥ सहस्रसंख्यैरङ्कुरादिभिः शालते यस्तस्य। तत्र अङ्कुरा रागद्वेषादयः। शाखाः पुत्रादयः। आत्मा देह एव स्कन्धः। फलानि सुखदुःखानि। पल्लवास्तद्धेतवः ॥ ५३ ॥ ५४ ॥ ५५ ॥ एतावन्तमिति ॥ अविद्धमशिक्षितं विद्धं सुशिक्षितम्। गुणं शमादिकम्। अन्यत्र विद्धं छिद्रितं गुणं ग्रथनतन्तुम् ॥ ५६ ॥ ५७ ॥ अयमिति ॥ अयमहमिदं ममेत्यहंममाभिमानाभ्यां बलादन्तः स्फुरितमाततमसत्यम-

वसिष्ठ उवाच ॥

इति संचिन्त्य जनकस्तूष्णीमेव बभूव ह ।
शान्तचापलचेतस्त्वाल्लिपिकर्मार्पितोपमः ॥ ५९ ॥
तूष्णीमथ चिरं स्थित्वा जनको जनजीवनः ।
व्युत्थितश्चिन्तयामास मनसा शमशालिना ॥ ६० ॥

जनक उवाच ॥

किमुपादेयमस्तीह यत्नात्संसाधयामि किम् ।
यतः स्थिरस्य शुद्धस्य चितः का मेऽस्ति कल्पना ॥ ६१ ॥
नाभिवाञ्छाम्यसंप्राप्तं संप्राप्तं न त्यजाम्यहम् ।
स्वच्छ आत्मनि तिष्ठामि यन्ममास्तु तदस्तु मे ॥ ६२ ॥

वसिष्ठ उवाच ॥

इति संचिन्त्य जनको यथाप्राप्तक्रियामसौ ।
असक्तः कर्तुमुत्तस्थौ दिनं दिनपतिर्यथा ॥ ६३ ॥
भविष्यं नानुसंधत्ते नातीतं चिन्तयत्यसौ ।
वर्तमाननिमेषं तु हसन्नेवानुवर्तते ॥ ६४ ॥
स्वविचारवशेनैव तेन तामरसेक्षण ।
प्राप्तं प्राप्यमशेषेण राम नेतरयेहया ॥ ६५ ॥

पास्य अतिबलिनं रिपुं मनो निहन्मीत्यन्वयः ॥ ५८ ॥ ५९ ॥ ६० ॥ किमिति ॥ स्वत एव शुद्धस्य निष्कलङ्कस्य स्थिरस्य चितः सद्रूपस्य मे का कल्पनास्ति । न किंचित्कल्पनीयमित्यर्थः ॥ ६१ ॥ ६२ ॥ ॥ ६३ ॥ ६४ ॥ स्वेति ॥ तेन हेतुना अशेषेण सर्वेणापि मुमुक्षुणा स्वविचारवशेनैव प्राप्यं परं वस्तु प्राप्तम्। इतरया ईहया न क्रिया-

सुन्दर्या निजया बुद्ध्या प्रज्ञयैव वयस्यया ।
पदमासाद्यते राम न नाम क्रिययान्यया ॥ ६६ ॥

य एव यत्नः क्रियते बाह्यार्थोपार्जने जनैः ।
स एव यत्नः कर्तव्यः पूर्वं प्रज्ञाविवृद्धये ॥ ६७ ॥

सीमानं सर्वदुःखानामापदां कोशमुत्तमम् ।
बीजं संसारवृक्षाणां प्रज्ञामान्द्यं विनाशयेत् ॥ ६८ ॥

चिन्तामणिरियं प्रज्ञा हृत्कोशस्था विवेकिनः ।
फलं कल्पलतेवैषा चिन्तितं संप्रयच्छति ॥ ६९ ॥

विवेकिनमसंमूढं प्राज्ञमाशागणोत्थिताः ।
दोषा न परिबाधन्ते संनद्धमिव सायकाः ॥ ७० ॥

पिधानं परमार्कस्य जडात्मा विततोऽसितः ।
अहंकाराम्बुदो मत्तः प्रज्ञावातेन पात्यते ॥ ७१ ॥

पदमतुलमुपैतुमिच्छतोच्चैः
प्रथममियं मतिरेव लालनीया ।
फलमभिलषता कृषीवलेन
प्रथमतरं ननु कृष्यते धरैव ॥ ७२ ॥

इति श्रीमोक्षोपाय उपशमप्रकरणे जनकोपाख्यानं
नाम प्रथमः सर्गः ॥ १ ॥

---

न्तरेण न प्राप्तम् ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ॥ ७१ ॥ ७२ ॥ इति श्रीसंसारतरणिनाम्नि वासिष्ठविवरणे उपशमप्रकरणे जनकोपाख्यानं नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः

वसिष्ठ उवाच ॥

मुष्टयो मोहबीजानां दृष्टयो विविधापदाम् ।
कुदृष्टयः क्षयं यान्ति दृष्टे तस्मिन्परावरे ॥ १ ॥
नित्यमन्तर्विचारस्य पश्यतश्चञ्चलं जगत् ।
जनकस्येव कालेन स्वयमात्मा प्रसीदति ॥ २ ॥
न दैवं न च कर्माणि न धनानि न बान्धवाः ।
शरणं भवभीतानां स्वप्रयत्नादृते नृणाम् ॥ ३ ॥
अयमेवाहमित्यस्मिन्संकोचे विलयं गते ।
समस्तभुवनव्यापी विस्तार उपजायते ॥ ४ ॥
अयमेवाहमित्यस्या निशाया उदिते क्षये ।
स्वयं सर्वगतः स्फारः स्वालोकः संप्रवर्तते ॥ ५ ॥
उपादेयानुपतनं हेयैकान्तविवर्जनम् ।
यदेतन्मनसो राम तं बन्धं विद्धि नेतरत् ॥ ६ ॥

पूर्वमाकाशफलपातवदाकस्मिकसिद्धगीताकर्णनाज्जनकस्य चित्तोपशान्तिरुक्ता । इदानीमतीतानेकजन्मानुस्मरणद्वारेणात्मावबोधनाच्चित्तस्योपशमः पुण्यपावनाख्यानेन निरूप्यते । तत्र तावच्चित्तोपशमोपायानुपदिशति—मुष्टय इत्यादिना ॥ मुष्टयो बीजावापहेतवः कुञ्चिताङ्गुलयः कराः । दृष्टयो दर्शनहेतवः । कुदृष्टयो भ्रान्तयः । मुष्टयो दृष्टय इति च पदद्वयमपि कुदृष्टिविशेषणं द्रष्टव्यम् ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ अयमिति ॥ अयं देहपरिमित एवाहमित्येवंरूपा या अहंकृतिः सैव निशा तमोमयत्वात् । तस्याः क्षये उदिते सति सर्वगतः स्फारः स्वालोकः आत्मतत्त्वज्ञानं संप्रवर्तते ॥ ५ ॥ उपादेयेति ॥ अत्र पामरदृष्ट्या हेयोपादेयविभाग इति द्रष्टव्यम् ॥ ६ ॥

मा खेदं भज हेयेषु नोपादेयपरो भव ।
हेयादेयदृशौ त्यक्त्वा शेषस्थः सुस्थिरो भव ॥ ७ ॥
निराशता निर्भयता नित्यता समता ज्ञता ।
निरीहता निष्क्रियता सौम्यता निर्विकल्पता ॥ ८ ॥
धृतिर्मैत्री मनस्तुष्टिर्मृदुता मृदुभाषिता ।
हेयोपादेयनिर्मुक्ते ज्ञे तिष्ठन्त्यपवासनम् ॥ ९ ॥
गृहीततृष्णाशफरिवासनाजालमाविलम् ।
संसारवारिप्रसृतं चिन्तातन्तुभिराततम् ॥ १० ॥
अनया तीक्ष्णया तात छिन्धि बुद्धिशलाकया ।
वात्यययाम्बुदजालं च छित्त्वा तिष्ठ पदे तते ॥ ११ ॥

मेति ॥ शेषस्थः समदृष्टौ स्थितः ॥ ७ ॥ समदृष्टौ स्थितस्य लिङ्ग-भूतान् गुणानाह ॥ निरिति श्लोकद्वयं वाक्यम् । निराशता इदं मे भूयादिति भाविविषयतृष्णानिवृत्तिः । निर्भयता सर्वभूताभयप्रदानात् स्वस्य भयनिवृत्तिः । नित्यता देहातिरिक्तनित्यात्मभावः । समता परिपूर्णदृष्टिः । ज्ञता ज्ञाननिष्ठता । निरीहता उपादेयेऽपि अप्रवृत्तिः । निष्क्रियता अनिष्टस्यापि अचिकित्सा । सौम्यता आह्लादकरत्वम् । निर्विकल्पता एकाग्रचित्तत्वम् ॥ ८ ॥ धृतिरचञ्चलत्वम् । मैत्री सर्वत्र मित्रभावः । मनस्तुष्टिः यथालाभपरितुष्टता । मृदुता अनिष्ठुरचित्तत्वम् । मृदुभाषिता प्रियंवदत्वम् ॥ ९ ॥ गृहीतेतिश्लोकद्वयं वाक्यम् । संसारवारिणि संसाराख्ये जले प्रसृतम् । चिन्ताभिरेव तन्तुभिराततं विस्तृतम् । गृहीता तृष्णा एव शफर्यो येन तद्वासनाजालम् ॥ १० ॥ तीक्ष्णया बुद्धिशलाकया छिन्धि । वात्यया वातसमूहेन आम्बुदं अम्बुदसंबन्धि जालं समूहमिव छित्त्वा च तते

मनसैव मनश्छित्त्वा कुठारेणेव पादपम् ।
पदं पावनमासाद्य सद्य एव स्थिरो भव ॥ १२ ॥
तिष्ठन्गच्छन्स्वपञ्जाग्रन्निश्वसन्नुत्पतन्पतन् ।
असदेवेदमित्यन्तर्निश्चित्यास्थां परित्यज ॥ १३ ॥
मनः प्रकृत्यैव जडं चित्तत्वमनुधावति ।
मांसगर्धेन मार्जारो वने मृगपतिं यथा ॥ १४ ॥
सिंहवीर्यवशाल्लब्धं मांसं भुङ्क्तेऽनुगो हरेः ।
संविद्वीर्यवशात्प्रासं दृश्यमाश्रयते मनः ॥ १५ ॥
दृश्यमाश्रयसीदं चेत्तत्सचित्तोऽसि बन्धवान् ।
दृश्यं संत्यजसीदं चेत्तदचित्तोऽसि मोक्षवान् ॥ १६ ॥
नाहं ज्ञेयमिति ध्यायंस्तिष्ठ त्वमचलः सदा ।
अनन्ताकाशसंकाशहृदयो हृदयेश्वरे ॥ १७ ॥
आत्मनो जगतश्चान्तर्द्रष्टृदृश्यदशान्तरे ।
दर्शनाख्ये स्वमात्मानं सर्वदा भावयन्भव ॥ १८ ॥

पदे तिष्ठेति संबन्धः ॥ ११ ॥ १२ ॥ तिष्ठन्निति त्रिभिः सर्वावस्थास्वपि जगतोऽसत्तां निश्चित्य तत्रास्थां परित्यजेत्यर्थः ॥ १३ ॥ मन इति ॥ हतद्विपं सिंहं मांसलोभात् चित्स्वरूपमनुधावतीत्यर्थः ॥ १४ ॥ सिंहेति ॥ यथा स्वतोऽसमर्थोऽपि शृगालादिः सिंहमनुसरन् मांसं भुङ्क्ते तद्वन्मनः स्वयं जडमपि चिच्छायासंक्रान्त्या विषयग्रहणसमर्थं भवतीत्यर्थः ॥ १५ ॥ दृश्यमिति ॥ दृश्याश्रय एव सचित्तत्वं बन्धहेतुश्च । दृश्यत्याग एवाचित्तत्वं मोक्षहेतुत्वं चेत्यर्थः ॥ १६ ॥ नेति ॥ आत्मनोऽपरिच्छिन्नतां जगतोऽसत्त्वं च ध्यायन् गिरिरिव स्थिरो भूत्वा अनन्ताकाशवन्निर्मलहृदयो हृदयेश्वरे तिष्ठ त्वम् ॥ १७ ॥ आत्मन इति ॥ आत्मनो जगतश्च

स्वाद्यस्वादकसंत्यक्तं स्वाद्यस्वादकमध्यगम् ।
स्वादनान्तःस्थितं ध्यायन्नित्यमात्ममयो भव ॥ १९ ॥

रागानुभवनीयस्य सदानुभवितुः स्वयम् ।
अवलम्ब्य निरालम्बं मध्यं मध्ये स्थिरो भव ॥ २० ॥

एतामहंभावमयीमपुण्यां
छित्त्वानहंभावशलाकयैव ।
स्वभावनां भाव्य भवान्तभूमौ
भवाभिभूताखिलभूतभूतिः ॥ २१ ॥

श्रीराम उवाच ॥

अतिगम्भीरमेवैतद्भगवन्वचनं तव ।
यदहंकारतृष्णां त्वं मा गृहाणेति वक्षि माम् ॥ २२ ॥

अन्तर्मध्ये यद्दर्शनं तद्द्रष्टृदृश्यदशान्तरे वर्तते द्रष्टृदशां दृश्यदशां वा प्राप्य चिन्मात्ररूपेण वर्तते तादृग्दर्शनस्वरूपं स्वमात्मानं सर्वदा भावयन् भव तिष्ठ ॥ १८ ॥ अमुमेवार्थं भङ्ग्यन्तरेणाह श्लोकद्वयेन—स्वाद्येति ॥ स्वाद्यं रसनीयं पानादि । स्वादको रसयिता । तयोर्मध्यगं मध्यगताभ्यां कर्तृकर्मभ्यां संत्यक्तं केवलमनुपहितं यत्स्वादनं रसानुभवरूपं वस्तु तद्ध्यायन् परमात्ममयो भव ॥१९॥ रागेति ॥ अनुभवनीयस्योपभोग्यस्य कान्तादेरनुभवितुरुपभोक्तुश्च निरालम्बं कर्तृकर्मभावासंस्पृष्टं मध्यमनुभवरूपमवलम्ब्य तत्र मध्ये स्थिरो भव ॥ २० ॥ एतामिति ॥ अहंभावमयीमेतां स्वस्य भावनामनहंभावशलाकया नाहमिति यो भावः तयैव शलाकया छित्त्वा प्रशान्ताखिलभूतभूतिः सन्भवान्तभूमौ संसारस्य पारे भव ॥ २१ ॥ २२ ॥

यद्यहंकारसंत्यागं करोमि तदिमं प्रभो ।
त्यजामि देहनामानं संनिवेशमशेषतः ॥ २३ ॥
अहंकारक्षये देहः किलावश्यं विनश्यति ।
मूले क्रकचसंलूने सुमहानिव पादपः ॥ २४ ॥

वसिष्ठ उवाच ॥

सर्वत्र वासनात्यागो राम राजीवलोचन ।
द्विविधः कथ्यते तज्ज्ञैर्ध्येयो ज्ञेयश्च नामतः ॥ २५ ॥
अहमेषां पदार्थानामेते च मम जीवितम् ।
नाहमेभिर्विना कश्चिन्न मयैते विना किल ॥ २६ ॥
इत्यन्तर्निश्चयं त्यक्त्वा विचार्य मनसा सह ।
नाहं पदार्थस्य न मे पदार्थ इति भाविते ॥ २७ ॥
अन्तःशीतलया बुद्ध्या कुर्वतो लीलया क्रियाः ।
यो नूनं वासनात्यागो ध्येयो राम स कीर्तितः ॥ २८ ॥
सर्वं समस्तया बुद्ध्या यं कृत्वा वासनाक्षयम् ।
जहाति निर्ममो देहं ज्ञेयोऽसौ वासनाक्षयः ॥ २९ ॥

यदीति ॥ आभिमानिकत्वाद्देहबन्धस्याकारपरित्यागे देहत्याग एव स्यादित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ ध्येयज्ञेयनाम्नोर्वासनात्यागयोर्मध्ये प्रथमस्य लक्षणमाह श्लोकत्रयेण—अहमिति ॥ आत्मनो देहादिभिः परस्परसंबन्धाभिमानरूपमहंकारं विचारपूर्वकं मनसा सह त्यक्त्वा देहादेः पदार्थस्य मम च न कश्चित्संबन्ध इति भाविते सति ॥ २६ ॥ २७ ॥ अन्तःशीतलया रागद्वेषरहितया बुद्ध्या क्रियाः कुर्वतो यो वासनात्यागः सोऽयं ध्येयः प्रकीर्तितः ॥ २८ ॥ द्वितीयं वासनात्यागं लक्षयति—सर्वमिति ॥ समस्तया

अहंकारसखीं त्यक्त्वा वासनां लीलयैव यः ।
तिष्ठति ध्येयसंत्यागी स जीवन्मुक्त उच्यते ॥ ३० ॥
निर्मूलकलनां त्यक्त्वा वासनां यः समं गतः ।
ज्ञेयत्यागमयं विद्धि मुक्तं तं रघुनन्दन ॥ ३१ ॥
द्वावेतौ राघव त्यागौ समौ मुक्तपदे स्थितौ ।
द्वावेतौ ब्रह्मतां यातौ द्वावेतौ विगतज्वरौ ॥ ३२ ॥
आपतत्सु यथाकालं सुखदुःखेष्वनारतम् ।
न हृष्यति ग्लायति यः स मुक्त इति कथ्यते ॥ ३३ ॥
ईप्सितानीप्सिते न स्तो यस्यान्तर्वस्तुदृष्टिषु ।
सुषुप्तवद्यश्चलति स मुक्त इति कथ्यते ॥ ३४ ॥
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ।
न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते ॥ ३५ ॥
सुषुप्तवत्प्रशमितभाववृत्तिना
स्थितं सदा जाग्रति तेन चेतसा ।
कलान्वितो विधुरिव यः सदा मुदा
निषेव्यते मुक्त इतीह स स्मृतः ॥ ३६ ॥

भेदरहितया बुद्ध्या यं वासनाक्षयं कृत्वा निर्ममो निर्गताहंममभावः सन् स्थूलसूक्ष्मकारणभेदेन त्रिविधमपि देहं जहाति त्यजति असौ वासनात्यागो ज्ञेय इत्युच्यते ॥ २९ ॥ उक्तं त्यागद्वयमपि जीवन्मुक्तिविदेहमुक्त्योर्विभजते श्लोकद्वयेन—अहमित्यादिना ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ आपत्स्वित्यादिना श्लोकचतुष्टयेन जीवन्मुक्तलक्षणमाह ॥ ३३ ॥ वस्तुदृष्टिषु इष्टानिष्टदर्शनेषु ॥ ३४ ॥ अमर्षोऽत्राक्षान्तिरूपेर्ष्या । क्रोधः परतिरस्कारादिभिर्मनसः प्रज्वलनम् । कामोऽभिलाषः । कार्पण्यं दैन्यम् ॥ ३५ ॥ तेन मुमुक्षुणा जाग्रद्दशाया-

वसिष्ठ उवाच ॥

बाह्यार्थवासनोद्भूता तृष्णा बद्धेति राघव ।
सर्वार्थवासनोन्मुक्ता तृष्णा मुक्तेति कथ्यते ॥ ३७ ॥
इदमस्तु ममेत्यन्तयैषा राघव भावना ।
तां तृष्णां शृङ्खलां विद्धि कलनां च महामते ॥ ३८ ॥
तामेतां सर्वभावेषु सत्स्वसत्सु च सर्वदा ।
संत्यज्य परमोदारपदमेति महामनाः ॥ ३९ ॥
बन्धास्थामथ मोक्षास्थां सुखदुःखदशामपि ।
त्यक्त्वा सदसदास्थां च तिष्ठाक्षुब्धमहाब्धिवत् ॥ ४० ॥
अन्यश्च राम मनसि पुरुषस्य विचारिणः ।
जायते निश्चयः साधो स्फाराकारश्चतुर्विधः ॥ ४१ ॥
आपादमस्तकमहं मातृपितृविनिर्मितः ।
इत्येको निश्चयो राम बन्धायासद्विलोकनात् ॥ ४२ ॥
अतीतः सर्वभावेभ्यो वालाग्रादप्यहं तनुः ।
इति द्वितीयो मोक्षाय निश्चयो जायते सताम् ॥ ४३ ॥

मपि सुषुप्तावस्थायामिव प्रशमितभाववृत्तिना निवृत्तहर्षविषादादिभाववृत्तिना चेतसा उपलक्षितेन स्थितमित्यन्वयः ॥ ३६ ॥ बाह्येति ॥ बाह्यार्थवासनोद्भूता बाह्यवस्तुवासनाभिर्भूयिष्ठा ॥ ३७ ॥ तृष्णास्वरूपमाह—इदमिति ॥ तां तृष्णां शृङ्खलां विद्धि । कलनां चेति सैव भावना तृष्णा सैव बन्धो बन्धहेतुश्चेत्यर्थः ॥ ३८ ॥ ३९ ॥ ॥ ४० ॥ अन्यश्चेत्यादिश्लोकषट्केन चतुर्विधमहंकारमाह ॥ ४१ ॥ तत्र आपादमस्तकमेवाहमिति प्रथमः ॥ ४२ ॥ सर्वातीतः परम-

जगज्जालपदार्थात्मा सर्वमेवाहमक्षयः ।
तृतीयो निश्चयोऽप्येवं मोक्षायैव रघूत्तम ॥ ४४ ॥
जगच्चासदिदं शून्यं शून्यव्योमसमं सदा ।
एवमेव चतुर्थोऽपि निश्चयो मोक्षसिद्धये ॥ ४५ ॥
एतेषां प्रथमः प्रोक्तस्तृष्णया बन्धयोग्यया ।
शुद्धतृष्णास्त्रयः स्वच्छा जीवन्मुक्तविलासिनः ॥ ४६ ॥
सर्वमात्माहमेवेति निश्चयो यो महामते ।
तमादाय विषादाय न भूयो याति ते मतिः ॥ ४७ ॥
शून्यं प्रकृतिर्मायेति ब्रह्मविज्ञानमित्यपि ।
शिवः पुरुष ईशानो नित्यमात्मेति कथ्यते ॥ ४८ ॥
द्वैताद्वैतसमुद्भेदैर्जगन्निर्माणलीलया ।
परमात्ममयी शक्तिरद्वैतैव विजृम्भते ॥ ४९ ॥

सूक्ष्मोऽहमिति द्वितीयः ॥४३॥ सर्वात्मकोऽहमिति तृतीयः ॥ ४४ ॥ अहमिति जगदिति च सकलं शून्यमेव अतो व्योमवत्सर्वविकल्पातीतोऽहमिति चतुर्थः ॥ ४५ ॥ एतेषां मध्ये प्रथमो बन्धयोग्यतृष्णाप्रोतत्वाद्बन्धायैव । अन्ये तु त्रयः शुद्धतृष्णान्वितत्वाज्जीवन्मुक्तेष्वेव विलसन्ति ॥ ४६ ॥ उपादेयेष्वपि त्रिषु सर्वात्माहमिति निश्चयः श्रेयानित्याह—सर्वमिति ॥ सर्वमहं चात्मैवेति यो निश्चय इत्यन्वयः ॥ ४७ ॥ शून्यवादशङ्कानिरासाय शून्यमित्यादयः शब्दाः कथंचिदात्मपर्याया इत्याह—शून्यमिति ॥ तत्र निराकारत्वात् शून्यं परोक्षत्वात् जगदुपादानत्वात् प्रकृतिः विविधविक्षेपहेतुत्वान्माया बृंहणाद्ब्रह्म विशुद्धज्ञानरूपत्वाद्विज्ञानं कल्याणरूपत्वाच्छिवः पूरकत्वात्पुरुषः ईशितृत्वादीशानः इत्येवमात्मैव नित्यं कथ्यते ॥ ४८ ॥ द्वैतेति ॥ द्वयोर्भावो द्विता द्वितैव द्वैतं भेद इति यावत् । द्वैतं च

आत्मीये परकीये वा सर्वस्मिन्नेव सर्वदा ।
नष्टे चोपचिते कार्ये सुखदुःखे गृहाण मा ॥ ५० ॥
सर्वातीतपदालम्बी पूर्णेन्दुशिशिराशयः ।
नोद्वेगी न च तुष्टात्मा संसारे नावसीदति ॥ ५१ ॥
समः शत्रौ च मित्रे च दयादाक्षिण्यसंयुतः ।
प्राप्तकर्मकरो नित्यं संसारे नावसीदति ॥ ५२ ॥
नाभिनन्दति न द्वेष्टि न शोचति न काङ्क्षति ।
ईहितानीहितैर्मुक्तः संसारे नावसीदति ॥ ५३ ॥
सर्वस्याभिमतं वक्ता चोदितः पेशलोक्तिमान् ।
आशयज्ञश्च भूतानां संसारे नावसीदति ॥ ५४ ॥

अद्वैतं च तयोर्मेलनं च तैः प्रकारैः या जगन्निर्माणरूपा लीला तयेत्थंभूता परमात्ममयी शक्तिः चिच्छक्तिरद्वैतैव सर्वत्र सच्चिदानन्दात्मनः स्वरूपस्याविच्छेदादभिन्नैव विजृम्भते प्रकाशते। तरङ्गादिवैचित्र्येऽपि समुद्रस्यैक्यमिवेति भावः । तत्र कार्यकारणयोः क्वचिद्द्वैतमेव प्रतीयते यथा गोमयाद्वृश्चिको जायते इत्यत्र । क्वचिदद्वैतम् यथा सुवर्णात्कटककुण्डलमुकुटादि । क्वचिद्द्वैताद्वैते यथा क्षीराद्दध्यादि ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ नेति ॥ यः खलु मुमुक्षुः प्राप्तं सुखं तत्साधनं च नाभिनन्दति नानुमोदते । दुःखं च तत्साधनं च प्राप्तं द्वेष्टि। इष्टे विनष्टे न शोचति । अप्राप्तमिष्टं न काङ्क्षति। तस्मादीहितानीहितैरिष्टानिष्टैर्मुक्तः स पुमान्संसारे नावसीदति जन्मादिदुःखैर्न खिद्यते ॥ ५३ ॥ सर्वस्येति ॥ स्वभावतः पेशलोक्तिमान् मृदुभाषी । चोदितः किमीहितमिति परैश्चोदितः सन्सर्वस्याप्यभिमतं उचितमेव वक्ता । ताच्छीलिकः कन्प्र-

पूर्णां दृष्टिमवष्टभ्य ध्येयत्यागविलासिनीम् ।
जीवन्मुक्ततया स्वस्थो लोके विहर राघव ॥ ५५ ॥
अन्तः संत्यक्तसर्वाशो वीतरागो विवासनः ।
बहिः सर्वसमाचारो लोके विहर राघव ॥ ५६ ॥
बहिः कृत्रिमसंरम्भो हृदि संरम्भवर्जितः ।
कर्ता बहिरकर्तान्तर्लोके विहर राघव ॥ ५७ ॥
त्यक्ताहंकृतिराशुप्तमतिराकाशशोभनः ।
अगृहीतकलङ्काङ्को लोके विहर राघव ॥ ५८ ॥
उदारपेशलाचारः सर्वाचारानुवृत्तिमान् ।
अन्तः सर्वपरित्यागी लोके विहर राघव ॥ ५९ ॥

त्ययः । तेन 'न लोकाव्यय–'इति कृद्योगलक्षणायाः षष्ठ्या निषेधाद्भिमतमिति द्वितीया युज्यते । अभिमतत्वनिश्चयः कथमित्यत्राह–आशयज्ञश्च भूतानामिति । आशयोऽभिप्रायः ॥ ५४ ॥ पूर्णामिति श्लोकषट्केन जीवन्मुक्तव्यवहारमाह–ध्येयत्याग इति ॥ पूर्वोक्ताहंकाररूपवासनात्यागो ध्येयत्यागः तेन विलासिनीं परिस्फुरन्तीं पूर्णां दृष्टिम् । ब्रह्मदृष्टिमित्यर्थः ॥ ५५ ॥ अन्तरिति ॥ अनागते आशा । वर्तमाने रागः । भूते वासना । तत्रितयरहितः ॥ ५६ ॥ बहिरिति ॥ कृत्रिमसंरम्भः कल्पितरागद्वेषादिविकारः । हृदि संरम्भवर्जितः निर्वासनत्वान्निर्विकारः ॥५७॥ त्यक्तेति ॥ अगृहीतकलङ्काङ्कः अगृहीताः कलङ्का अङ्काश्च येन । तत्र कलङ्का मनोदोषाः । अङ्कास्तु व्यावृत्तिहेतवो लाञ्छनानि ॥ ५८ ॥ उदारेति ॥ पेशलाचारः मृदुव्यवहारः । सर्वाचारानुवृत्तिमान् सर्वेषामाचारमनुवर्तमानः । अनुमोदमान इत्यर्थः । 'जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्'

अन्तर्नैराश्यमादाय बहिराशोन्मुखेहितः ।
बहिस्तप्तोन्तरा शीतो लोके विहर राघव ॥ ६० ॥
अयं बन्धुः परश्चायमयं चाहमयं भवान् ।
इति मिथ्यादृशो राम विगलन्तु तवाधुना ॥ ६१ ॥
अयं बन्धुरयं नेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ६२ ॥

विविधजन्मशताहितसंभ्रमे जगति बन्धुरबन्धुरितीक्षणम् ।
भ्रमदृशैव विभाति न वस्तुतस्त्रिभुवनं चिरबन्धुरबन्ध्वपि ॥ ६३ ॥

इति न्यायात् ॥५९॥ अन्तरिति ॥ बहिराशोन्मुखेहितः आशानुकूलचेष्टितः ॥ ६० ॥ अयमिति ॥ अयं बन्धुः अयं तु परः । अयमेवाहं अयं तु भवान् । इति या मिथ्यादृशो भेददृष्टयः ता अधुना विगलन्तु अधुना प्रबुद्धस्य तव विगलन्तु विनश्यन्तु ॥ ६१ ॥ अयमिति ॥ लघुचेतसां लघुनि परिच्छिन्ने स्वस्य जीवस्यात्मत्वेन गृहीते देहे चेतो येषां तेषामेवायमेव बन्धुरयं नेति गणना भवेत् । उदारचरितानामुदारे महति परिपूर्णे ब्रह्मणि चरितं निष्ठा येषां तेषां ब्रह्मनिष्ठानां पुनर्वसुधैव प्रपञ्चः सर्वोऽपि कुटुम्बकम् । भोगोपकरणद्रव्यमित्यर्थः ॥ ६२ ॥ विविधेति ॥ विविधैः सुरनरतिर्यगादिरूपैः जन्मशतैराहितसंभ्रमे विरचितविपर्यये अस्मिञ्जगति बन्धुरयमिति वायं पुनरबन्धुरिति ईक्षणं भ्रमदृशैव केवलं विभाति भ्रान्तदृशास्फुरणमेव । वस्तुतस्तु विचार्यमाणं बन्धुरपि स्यात् अबन्धुरपि स्याज्जन्मभेदात् । जन्मभेदापेक्षया

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
आत्रोस्त्रिपथगातीरे संवादं मुनिपुत्रयोः ॥ ६४ ॥
अस्त्यस्य जम्बूद्वीपस्य कस्मिंश्चिद्दिङ्निकुञ्जके ।
वनव्यूहमहोत्तंसो महेन्द्रो नाम पर्वतः ॥ ६५ ॥
तस्यैकदेशे वितते रत्नसानौ मनोरमे ।
आसीदभ्युदितज्ञानस्तपोराशिरुदारधीः ॥ ६६ ॥
मुनिर्दीर्घतपा नाम तपोमूर्तिरिवास्थितः ।
मुनेर्बभूवतुस्तस्य पुत्रौ द्वाविन्दुसुन्दरौ ॥ ६७ ॥
पुण्यपावननामानौ द्वौ कचाविव वाक्पतेः ।
स ताभ्यां सह पुत्राभ्यां चिरकालमुवास ह ॥ ६८ ॥
अथ काले तयोस्तस्य पुत्रयोर्ज्ञानवानभूत् ।
पुण्यनामा तयोर्ज्येष्ठो गुणज्येष्ठश्च राघव ॥ ६९ ॥
पावनोऽर्धप्रबुद्धोऽभूत्पूर्वसंध्याम्बुजं यथा ।
मौर्ख्यादतिगतोऽनाप्तपदो दोलामिवास्थितः ॥ ७० ॥
ततो वहत्यकलिते काले कलितकारणे ।
रतिमुत्सृज्य संसाराज्जराजर्जरजीवितः ॥ ७१ ॥
कलनापक्षिणीनीडं देहं दीर्घतपा मुनिः ।
जहौ गिरिगुहागेहे भारं वैवधिको यथा ॥ ७२ ॥

संबन्धानामनियमादिति भावः ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ॥ ६७ ॥ ६८ ॥ ६९ ॥ पावन इति ॥ पूर्वसंध्याम्बुजं प्रभातसंध्यायामम्बुजं तद्वदर्धप्रबुद्धः मौर्ख्यात् अत्यन्ताभावात् अतिगतः अतिक्रान्तः । अनाप्तपदः अप्राप्तब्रह्मपदनिष्ठः ॥ ७० ॥ ततः इति श्लोकद्वयं वाक्यम् । कलितकारणे कलितानि प्रेरितानि जन्मादिकारणानि येन तस्मिन् ॥ ७१ ॥ कलनापक्षिणीनीडं कलना अहंकृतिः

प्रशान्तकलनारम्भं चेत्यमुक्तचिदास्पदम् ।
पदं जगाम नीरागं पुष्पगन्ध इवाम्बरम् ॥ ७३ ॥
पितर्युपरते तस्मिन्नौर्ध्वदैहिककर्मणि ।
पुण्य एव स्थितोऽव्यग्रः पावनो दुःखमाययौ ॥ ७४ ॥
शोकोपहतचित्तोऽसौ भ्रमन्काननवीथिषु ।
ज्यायांसमनवेक्ष्यैव पावनो विललाप ह ॥ ७५ ॥
अथौर्ध्वदैहिकं कृत्वा पितुः परमधार्मिकः ।
आययौ विपिने पुण्यः पावनं शोकलालसम् ॥ ७६ ॥

पुण्य उवाच ॥

किं पुत्र दृढतां शोकं नयस्यान्ध्यैककारणम् ।
पिता तव महाप्राज्ञ गतः प्रज्ञावतां वरः ॥ ७७ ॥
स्वामेव परमामात्मपदवीं मोक्षनामिकाम् ।
स्वभावमभिसंपन्ने किं पितर्यनुशोचसि ॥ ७८ ॥
मातापितृसहस्राणि समतीतानि ते सुत ।
पुत्रबान्धववृन्दानि जन्तोर्जन्मनि जन्मनि ॥ ७९ ॥
शोचनीया यदि स्नेहान्मातापितृसुताः सुत ।
तदतीता न शोच्यन्ते किमजस्रं सहस्रशः ॥ ८० ॥

सैव पक्षिणी तस्या नीडं स्थानम् । वैवधिकः विवधः भारयष्टिः तद्वाहकः ॥ ७२ ॥ प्रशान्तेति ॥ प्रशान्तकलनारम्भं कलना बन्धहेतवः संकल्पादयः। प्रशान्तः कलनानामारम्भो यस्मिंस्तत् । चेत्यमुक्तचिदास्पदं चेत्यमुक्तायाश्चित आस्पदं प्रतिष्ठारूपं नीरागं पदं रागादिरहितं कैवल्यं जगाम पुष्पगन्धोऽम्बरमिव । पुष्पगन्धो हि मुकुलबन्धान्निर्गतः अम्बरं व्याप्नोति ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

अज्ञानविस्तीर्णमरौ विलोलं शुभाशुभस्पन्दमयैस्तरङ्गैः ।
स्ववासनातापमरीचिवारि परिस्फुरत्येतदनन्तरूपम् ॥ ८१ ॥

बन्धुमित्रसुतस्नेहद्वेषमोहदशामयः ।
स्वसंज्ञामात्रकेणैव प्रपञ्चोऽयं वितन्यते ॥ ८२ ॥

बन्धुत्वे भावितो बन्धुः परत्वे भावितः परः ।
विषामृतदशेवेह स्थितिर्भावनिबन्धिनी ॥ ८३ ॥

एकत्वे विद्यमानस्य सर्वगस्य किलात्मनः ।
अयं बन्धुः परश्चायमित्येषा कलना कुतः ॥ ८४ ॥

रक्तमांसादिसंघाताद्देहादेवास्थिपञ्जरात् ।
कोऽहं स्यामिति चित्तेन स्वयं पुत्र विचारय ॥ ८५ ॥

दृष्ट्या तु पारमार्थिक्या न कश्चित्त्वं न चाप्यहम् ।
मिथ्याज्ञानमिदं पुण्यः पावनश्चेति वल्गति ॥ ८६ ॥

॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ अज्ञानेति ॥ अज्ञानमेव विस्तीर्णो मरुदेशः तत्र स्ववासनातापमरीचिवारि स्ववासनैव तापः आतपः तेन कल्पितं मरीचिरूपं वारि एतज्जगच्छुभाशुभस्पन्दमयैस्तरङ्गैरनन्तरूपं सत्परिस्फुरति ॥ ८१ ॥ ८२ ॥ बन्धुत्व इति ॥ विषामृतदशेव। तत्र परत्वापरत्वभावनारूपा स्थितिर्विपदशेव। बन्धुत्वभावनारूपा त्वमृतदशेव। भावनिबन्धिनी भावो भावना तया निबध्यत इत्यर्थः ॥ ८३ ॥ एकत्व इति ॥ विद्यमानस्य परमार्थस्य सतः सर्वगस्यात्मन एकत्वे अद्वितीयत्वे सति अयं बन्धुरयं पर इत्यसौ कलना कल्पना कुतः ॥ ८४ ॥ रक्तेति ॥ यद्यपि नायं देह एवात्मा रक्तमांसादिसंघातरूपत्वात् तथापि तथाभूताद्देहादेवारभ्य कोऽहं स्यामिति विचारयेत्यर्थः ॥ ८५ ॥ आस्तामयं विचारप्रयासः। इयमिह पारमार्थिकी दृष्टिरालम्ब्यतामित्याह—दृष्ट्येति ॥ पारमार्थिक्या

बभूवुस्ते सुपुण्यासु स्थलीषु मृगयोनिषु ।
बहवो बन्धवो मार्गास्तान्कथं नानुशोचसि ॥ ८७ ॥
बभूवुस्ते महाभ्रेषु शिखरेषु महीभृताम् ।
बहवो बान्धवाः सिंहाः किं तानपि न शोचसि ॥ ८८ ॥
बभूवाथ दशार्णेषु कपिलो वनवानरः ।
राजपुत्रस्तुषारेषु पुण्ड्रेषु वनवायसः ॥ ८९ ॥
हैहयेषु च मातङ्गस्त्रिगर्तेष्वथ गर्दभः ।
शाल्वेषु सरमापुत्रः पतत्री सरलद्रुमे ॥ ९० ॥
एतास्वन्यासु चान्यासु बह्वीषु जनयोनिषु ।
जातोऽसि जम्बूद्वीपेऽस्मिन्पुरा शतसहस्रशः ॥ ९१ ॥
अनन्ताः पितरो यान्ति यान्त्यनन्ताश्च मातरः ।
इह संसारिणां पुंसां वने पादपपर्णवत् ॥ ९२ ॥
भावाभावविनिर्मुक्तं जरामरणवर्जितम् ।
संस्मरात्मानमव्यग्रो मा विमूढमतिर्भव ॥ ९३ ॥

सर्वैषणामयकलङ्कविवर्जितेन
स्वच्छात्मभावकलितेन हृदब्जमध्ये ।
पुत्रात्मनात्मनि महामतिनामुनैव
संत्यज्य संभ्रममलं परितोषमेहि ॥ ९४ ॥

पर्यालोचनप्रवणया तु दृष्ट्या परामृश्यमाने त्वमिति न कश्चित्पदार्थः अहमित्यपि न कश्चित्। किं तर्हि मिथ्याज्ञानमेवेदं पुण्य इति पावन इति च वल्गति स्फुरति । पुण्योऽहं पावनस्त्वमिति मिथ्याज्ञानकल्पितत्वाद्भ्रान्तिरेवेत्यर्थः ॥ ८६ ॥ बभूवुरिति ॥ मार्गा मृगसंबन्धिनः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ सर्वेति ॥ एषणाः पुत्रकलत्रादिविषयेच्छाः तन्मयकलङ्कवर्जितेन

वसिष्ठ उवाच ॥

एवं प्रबोधितस्तेन तदा पुण्येन पावनः ।
प्रबोधमाप प्राकाश्यं प्रभात इव भूतलम् ॥ ९५ ॥
उभावपि ततः सिद्धौ ज्ञानविज्ञानपारगौ ।
विचेरतुर्वने तस्मिन्यावदित्थमनिन्दितौ ॥ ९६ ॥
एवं प्राग्भुक्तदेहानामनन्ता जनबन्धुजाः ।
किमाशा गृह्यते ताभ्यः किं वा संत्यज्यतेऽनघ ॥ ९७ ॥
चिन्तनेनैधते चिन्ता त्विन्धनेनेव पावकः ।
नश्यत्यचिन्तनेनैव विनेन्धनमिवानलः ॥ ९८ ॥
ध्येयत्यागरथारूढः करुणोदारया दृशा ।
लोकमालोकयन्दीनमातिष्ठोत्तिष्ठ राघव ॥ ९९ ॥
एषा ब्राह्मी स्थितिः स्वस्था निःकामा विगतामया ।
एनां प्राप्य महाबाहो विमूढोऽपि न मुह्यति ॥ १०० ॥

स्वच्छात्मभावकलितेन स्वच्छभावयुक्तेन आत्मनान्तःकरणेन संभ्रमं संत्यज्य आत्मन्येव परितोषमेहीत्यन्वयः ॥ ९४ ॥ एवमिति ॥ प्रभाते भूतलं कर्तृ । प्राकाश्यं प्रकाशमानत्वम् ॥ ९५ ॥ उभाविति ॥ ज्ञानविज्ञानपारगौ ज्ञानविज्ञाने परोक्षापरोक्षब्रह्मज्ञाने ॥ ९६ ॥ एवमिति ॥ प्राग्भुक्तदेहानां पूर्वजन्मानुभूतदेहसंबन्धिन्यो जनबन्धुजाः अनन्ता आशास्ताभ्यः किं गृह्यते इति बुद्धिप्रदानायानुजं पृच्छति--किमत्र युक्तमाशाया ग्रहणं त्यागो वेति । त्याग एव युक्त इति भावः ॥ ९७ ॥ चिन्तनेति ॥ कथमिष्टसिद्धिरिति विचारश्चिन्ता । दृष्टार्थानां पुनःपुनरनुस्मरणं चिन्तनम् ॥ ९८ ॥ ध्येयेति ॥ आतिष्ठ सुखमास्स्व । उत्तिष्ठ जीवन्मुक्त्यर्थं उद्यमं कुरु ॥ ९९ ॥ १०० ॥

एकं विवेकं सुहृदमेकां प्रौढसखीं धियम्।
आदाय विहरन्नेवं संकल्पेषु न मुह्यति॥ १॥
विनिवारितसर्वार्थादपहस्तितबान्धवात्।
न स्वधैर्यादृते किंचिदभ्युद्धरति संकटात्॥ २॥
वैराग्येणाथ शास्त्रेण महत्त्वादिगुणैरपि।
यत्नेनापद्विघातार्थं स्वमेवोन्नमयेन्मनः॥ ३॥
न तत्त्रिभुवनैश्वर्यान्न कोशाद्रत्नधारिणः।
फलमासाद्यते चित्ताद्यन्महत्त्वोपबृंहितात्॥ ४॥
पूर्णे मनसि संपूर्णं जगत्सर्वं सुधाद्रवैः।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः॥ ५॥
वैराग्यात्पूर्णतामेति मनो नाशावशानुगम्।
आशया रिक्ततामेति शरदीव सरोजलम्॥ ६॥

॥१॥ विनिवारितेति॥ विनिवारिताः सर्वेऽर्थाः सांसारिकप्रयोजनानि येन तस्मात् अपहस्तिता हस्तेनापसारिता बान्धवा येन तथाभूतात् स्वधैर्यादृते स्वस्य विवेकवैराग्यधैर्यं विना किंचिदपि संकटात् संसारान्नोद्धरतीत्यन्वयः॥ २॥ स्वधैर्यमेव संकटादुद्धरतीत्युक्तम्। इदानीं धैर्यसंपादनप्रकारमाह—वैराग्येणेति॥ आपद्विघातार्थं संसारनिवृत्तये वैराग्यादिभिः साधनैः स्वयमेव मन उन्नमयेत्। धैर्ययुक्तं कुर्यादित्यर्थः॥ ३॥ नेति॥ महत्त्वोपबृंहितान्महत्त्वादिगुणैरुन्नतीकृताच्चित्ताद्यत्फलं कैवल्यरूपमासाद्यते। तत्त्रिभुवनैश्वर्यादिभिरपि नासाद्यत इत्यन्वयः॥ ४॥ पूर्ण इति॥ मनसि पूर्णे संतुष्टे सति सर्वं जगत्सुधाद्रवैरमृतरसैः पूर्णमेव सुखाय जायत इत्यर्थः॥ ५॥ कथं मनसः पूर्णतेत्यत्राह—वैराग्यादिति॥ वैराग्यादेव मनः पूर्णतामेति। आशावशानुगं तु न कदाचित्पूर्णतामेति। यदाह परा-

हृदयं शून्यतामेति प्रकटीकृतकोटरम् ।
अगस्त्यपीतार्णववदाशाविवशचेतसाम् ॥ ७ ॥
न तथा भाति पूर्णेन्दुर्न पूर्णः क्षीरसागरः ।
न लक्ष्मीवदनं कान्तं स्पृहाहीनं यथा मनः ॥ ८ ॥
यथाभ्रलेखा शशिनं सुधालेपं मषी यथा ।
दूषयत्येवमेवान्तर्नरमाशापिशाचिका ॥ ९ ॥

प्रशमितसकलैषणो महात्मा
भव भवबन्धमपास्य मुक्तचित्तः ।
मनसि निगडरज्जवः कदाशाः
परिगलितासु च तासु को न मुक्तः ॥ १० ॥

इति श्रीवाल्मीकीये मोक्षोपाय उपशमप्रकरणे पुण्यपावनोपाख्यानं नाम द्वितीयः सर्गः ॥ २ ॥

---

शर:—'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति ॥ ६ ॥ हृदयस्य प्रकटीकृतकोटरत्वं नाम तृष्णातिशयप्रकाशनम् ॥ ७ ॥ नेति ॥ पूर्णेन्दुप्रभृतीनां क्षयवृद्धिसंभवादनित्या शोभा । निःस्पृहस्य तु मनसः कदाचिदपि हर्षविषादाभावान्नित्या शोभेति तात्पर्यार्थः ॥ ८ ॥ यथेति ॥ अभ्रलेखा मेघपङ्क्तिः । सुधालेपं चूर्णादिद्रव्यलेपम् ॥ ९ ॥ प्रशमितेति ॥ प्रशमितसकलैषणः सन्भवबन्धमपास्य मुक्तचित्तो भव । यतःकारणान्मनसि वर्तमानाः कदाशाः पुत्रकलत्रैषणादिरूपाः कुत्सिता आशाः निगडरज्जवः शृङ्खला रज्जुवद्बन्धनहेतवः । अतः कारणात्तासु परिगलितासु को न मुक्तः । सर्वोऽपि मुच्यत इत्यर्थः ॥ १० ॥ इति श्रीसंसारतरणिनाम्नि वासिष्ठविवरण उपशमप्रकरणे पुण्यपावनोपाख्यानं नाम द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः

वसिष्ठ उवाच ॥

अथवा रघुवंशाख्यनभःपूर्णनिशाकर ।
बलिवद्बुद्धिभेदेन ज्ञानमासादयामलम् ॥ १ ॥

श्रीराम उवाच ॥

बलिवज्ज्ञानसंप्राप्तिं पुनर्मद्बोधवृद्धये ।
विभो कथय खिद्यन्ते सन्तो नावनतं प्रति ॥ २ ॥

वसिष्ठ उवाच ॥

अस्त्यस्मिञ्जगतः कोशे कस्मिंश्चिद्दिङ्निकुञ्जके ।
पातालमिति विख्यातो लोको भूमेरधः स्थितः ॥ ३ ॥
तस्मिन्नसुरदोःस्तम्भधार्यमाणमहाभरे ।
बभूव दानवो राजा विरोचनसुतो बलिः ॥ ४ ॥
लीलानिर्जितनिःशेषभुवनाभोगभूषणः ।
दशकोटीः स वर्षाणां दैत्यराज्यं चकार ह ॥ ५ ॥
अथ गच्छत्स्वनल्पेषु युगेष्वावर्तवृत्तिषु ।
सुरासुरमहौघेषु प्रोत्पतत्सु पतत्सु च ॥ ६ ॥
अजस्रमुपभुक्तेषु त्रैलोक्योदरवर्तिषु ।
भोगेष्वभजदुद्वेगं बलिर्दानवनायकः ॥ ७ ॥

पूर्वमतीतानेकजन्मानुस्मरणद्वारा स्वरूपज्ञानेन चित्तोपशान्तिरुक्ता । इदानीं पुण्यप्रकर्षात्कुत्रचिद्वैषयिकमपि सुखं चित्तोपशान्तये भवतीति बल्युपाख्यानेन निरूप्यते । तत्र चिरोपभोगाद्भोगेष्वरुचिरुत्पन्नेत्याह—अथेत्यादिना श्लोकद्वयेन ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ॥ ५ ॥ आवर्तवृत्तिषु । 'स्यादावर्तोऽम्भसां भ्रमः' । तस्य वृत्तिरिव वृत्तिर्येषां तेषु ॥ ६ ॥ उद्वेगमरुचिम् ॥ ७ ॥ ८ ॥ ९ ॥ पुनरिति ॥

एकदा चिन्तयामास प्रासादशिखरस्थितः ।
महता मम राज्येन त्रैलोक्याद्भुतकारिणा ॥ ८ ॥
किं वा भवति भुक्तेन भूरिभोगातिभारिणा ।
आपातमात्रमधुरमावश्यकपरिक्षयम् ।
भोगोपभोगमात्रं मे किं नामेदं सुखावहम् ॥ ९ ॥
पुनरालिङ्ग्यते कान्ता पुनरेव च भुज्यते ।
सेयं शिशुजनक्रीडा लज्जायै महतामिह ॥ १० ॥
तमेव भुक्तविरसं व्यापारौघं पुनःपुनः ।
दिवसे दिवसे कुर्वन्प्राज्ञः कस्मान्न लज्जते ॥ ११ ॥
पुनर्दिनं पुना रात्रिः पुनः कार्यपरम्परा ।
पुनःपुनरहं मन्ये प्राज्ञस्येयं विडम्बना ॥ १२ ॥
कृतयाप्यनया नित्यं क्रियया कृतकार्यया ।
कोऽर्थः स्यात्तादृशो येन पुनः कर्म न विद्यते ॥ १३ ॥
भोगादृते किमन्यत्तत्स्याद्द्रव्यमविनाशि यत् ।
एतत्संचिन्तयाम्याशु दध्यौ मत्वेत्यसौ बलिः ॥ १४ ॥

लज्जायै । महतामुच्छिष्टस्य पुनर्भोगानर्हत्वादिति भावः ॥ १० ॥ ॥ ११ ॥ पुनरिति ॥ पुनःपुनरहं मन्ये इति येषां पुनःपुनः प्रवृत्तिः इयं प्राज्ञस्य विडम्बनेति अहं मन्ये इत्यन्वयः ॥ १२ ॥ कृतयेति ॥ कृतकार्यया कृतप्रयोजनयाप्यनया क्रियया नित्यं कृतया तादृशः कोऽर्थः स्यात् येनार्थेन पुनः कर्म न विद्यते । कृतकृत्यताहेतुः कापि क्रिया नास्तीत्यर्थः ॥ १३ ॥ भोगादिति ॥ भोगादृते भोगरूपं विषयसुखं मुक्त्वा यदन्यदविनाशि द्रव्यं तत्किं स्यादिति एतद्वस्तु संचिन्तयामीति मत्वा निश्चित्य बलिर्दध्याविलन्वयः ॥ १४ ॥

अथाभ्युवाचासुरराट् आः संस्मृतमिति क्षणात् ।
स्वात्मन्येव मनस्यर्थं सभ्रूभङ्गं निवेशयन् ॥ १५ ॥

पुरा किलेह भगवान्पृष्टोऽभूत्स विरोचनः ।
पिता मयात्मतत्त्वज्ञो दृष्टलोकपरावरः ॥ १६ ॥

पितः सकलदुःखानां सुखानां च महामते ।
यत्र सर्वे भ्रमाः शान्ताः कोऽसौ सीमान्त उच्यताम् ॥ १७ ॥

क्वोपशान्तो मनोमोहः क्वातीताः सकलैषणाः ।
विरागरहितं क्वात्र तात विश्रमणं चिरम् ॥ १८ ॥

यत्रातिविततानन्दसुन्दरं किंचिदेव मे ।
तादृक्कथय तत्रस्थश्चिरं विश्रान्तिमेम्यहम् ॥ १९ ॥

अथेति ॥ अथानन्तरमसुरराट् बलिर्मनसि विचारितमर्थं सभ्रूभङ्गं स्वात्मन्येव स्वबुद्धावेव निवेशयन्स्थापयन् क्षणात् क्षणादुपरि आः संस्मृतमित्यभ्युवाच । सभ्रूभङ्गमिति विचारदृष्ट्यभिनयः । आः इति स्मृतिद्योतकमव्ययम् ॥ १५ ॥ स्मृतमनुवदति—पुरेत्यादिना ॥ दृष्टलोकपरावरः । परं पर्यवसानहेतुः । अवरमादिकारणम् ॥ १६ ॥ स्वप्रश्नप्रकारमनुवदति—पितरिति ॥ हे पितः, सकलदुःखानां सुखानां च वैषयिकाणां सीमान्तः परमावधिः कोऽसावुच्यताम् ॥ १७ ॥ सर्वभ्रमाणां शान्तिमेव प्रपञ्चयति—क्वेति श्लोकद्वयं वाक्यम् । यत्र वस्तुनि विरागरहितं अरुचिविनिर्मुक्तं चिरं विश्रमणं विश्रान्तिसुखं संभवति । यत्र वस्तुनि मे मदीयं रूपं अतिविततानन्दसुन्दरं सत्किंचिदेव अव्यपदेश्यमेव भवति तादृग्वस्तु कथय । तत्रस्थोऽहं चिरं विश्रान्तिमेमीत्यन्वयः ॥ १८ ॥ १९ ॥ स्वपितुरुत्तरमनुभाषते—

मतिपितोवाच ॥

अस्ति पुत्रातिविततो देशो विपुलकोटरः ।
त्रैलोक्यानां सहस्राणि यत्र मान्ति बहून्यपि ॥ २० ॥
यत्र पृथ्वी न नाकाशं सागरा न च नाद्रयः ।
न वनानि न तीर्थानि न नद्यो न सरांसि च ॥ २१ ॥
एक एवास्ति सुमहांस्तत्र राजा महाद्युतिः ।
सर्वकृत्सर्वगः सर्वः स च तूष्णीं व्यवस्थितः ॥ २२ ॥
तेन संकल्पितो मन्त्री सर्वतो मन्त्रणोन्मुखम् ।
अघटं घटयत्याशु घटं विघटयत्यलम् ॥ २३ ॥
भोक्तुं न किंचिच्छक्नोति न च जानाति किंचन ।
राज्यार्थं केवलं सर्वं करोत्यविरतोद्यम् ॥ २४ ॥
स एव सर्वकार्यैककर्ता तस्य महीपतेः ।
राजा केवलमेकान्ते स्वस्थ एवावतिष्ठति ॥ २५ ॥

बलिरुवाच ॥

आधिव्याधिविनिर्मुक्तः कः स देशो महामते ।
कथमासाद्यते वापि केन वाधिगतः प्रभो ॥ २६ ॥

मतिपितेत्यादिना ॥ देशो मोक्षः राजा आत्मा मन्त्री मन इति ॥२०॥ ॥ २१ ॥ बलिप्रश्नानन्तरं विरोचन एव वक्ष्यति ॥ २२ ॥ तेनेति श्लोकद्वयं वाक्यम् । तेन राज्ञा संकल्पितः 'स ऐक्षत लोकान्नु सृजा इती'ति सिसृक्षामात्रकल्पितो मन्त्री मन्त्रणोन्मुखं विचारपूर्वकं तत्सर्वं राजकार्यमघटं दुर्घटमपि घटयति। घटं सुघटितमपि कार्यमनभिमतं चेद्विघटयति। नाशयतीत्यर्थः ॥ २३ ॥ किंचिदपि भोक्तुं न शक्नोति। किंचन न च जानाति । मनसः अचेतनत्वादिति भावः ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

कः स तादृग्विधो मन्त्री राजा वापि महाबलः ।
हेलालूनजगज्जालैर्योऽस्माभिरपि नो जितः ॥ २७ ॥

विरोचन उवाच ॥

स तत्र मन्त्री बलवान्देवासुरगणैः सुत ।
समेतैर्लक्षगुणितैरपि नाक्रम्यते मनाक् ॥ २८ ॥
तत्रासिमुसलप्रासवज्रचक्रगदादयः ।
हेतयः कुण्ठतां यान्ति दृषदीवोत्पलाहतिः ॥ २९ ॥
स मन्त्री केवलं तत्र तेनैव प्रभुणा यदि ।
जीयते तत्सुजेयोऽसावन्यथा त्वचलाचलः ॥ ३० ॥
पुत्र युक्त्या गृहीतोऽसौ क्षणादायाति वश्यताम् ।
युक्तिं विना दहत्येष आशीविष इवोद्धतः ॥ ३१ ॥
शृणु यः पुत्र देशोऽसौ पूर्वं प्रकटयामि ते ।
देशनाम्ना मयोक्तस्ते मोक्षः सकलदुःखहा ॥ ३२ ॥
राजा तु तत्र भगवानात्मा सर्वपदातिगः ।
तेन मन्त्री कृतः प्राज्ञो मनो नाम महामते ॥ ३३ ॥
विषयान्प्रति भोः पुत्र सर्वानेव हि सर्वथा ।
अनास्था परमा ह्येषा सा युक्तिर्मनसो जये ॥ ३४ ॥
एषैव परमा युक्तिरनयैव महामदः ।
स्वमनोमत्तमातङ्गो द्रागित्येव विदम्यते ॥ ३५ ॥
चित्तस्य भोगैर्द्वौ भागौ शास्त्रेणैकं प्रपूरयेत् ।
गुरुशुश्रूषया भागमव्युत्पन्नस्य सत्क्रमे ॥ ३६ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ चित्तजयक्रमं अधिकारिभेदेन त्रिभिः श्लोकैराह—चित्तस्येति ॥ चित्तस्य व्यवहारकालं चतुर्धा विभज्य

किंचिद्व्युत्पत्तियुक्तस्य भागं भोगैः प्रपूरयेत् ।
गुरुशुश्रूषया भागौ भागं शास्त्रार्थचिन्तया ॥ ३७ ॥

व्युत्पत्तिमनुयातस्य पूरयेच्चेतसोऽन्वहम् ।
द्वौ भागौ शास्त्रवैराग्यैर्द्वौ ध्यानगुरुपूजया ॥ ३८ ॥

प्रज्ञाविचारवशतः शममेव सदा सुत ।
आत्मावलोकनं तृष्णासंत्यागं च समाहरेत् ॥ ३९ ॥

विचारो भोगगर्हातो विचाराद्भोगगर्हणम् ।
अन्योन्यमेते पूर्येते समुद्रजलदाविव ॥ ४० ॥

सत्कर्मे ज्ञानाभ्यासे अव्युत्पन्नस्याशिक्षितस्य चित्तस्य प्रथमं भोगैर्विषयभोगैर्द्वौ भागौ पूरयेत् । कालद्वयं नयेदित्यर्थः । शास्त्रेण अध्यात्मशास्त्रेणैकं भागं पूरयेत् । गुरुशुश्रूषया चतुर्थं भागं पूरयेत् ॥३६॥ किंचिदिति ॥ किंचिद्व्युत्पत्तियुक्तस्य भोगैरेकं कालं गुरुशुश्रूषया कालद्वयं शास्त्रार्थचिन्तया चतुर्थं कालं नयेदित्यर्थः ॥ ३७ ॥ व्युत्पत्तिमिति ॥ सम्यग्व्युत्पन्नस्य चित्तस्य द्वौ व्यवहारकालौ शास्त्रवैराग्यैरध्यात्मशास्त्रविचारैर्विषयाणां हेयत्वविचारैश्च द्वौ च कालौ ध्यानसहितया गुरुपूजया च पूरयेत् ॥ ३८ ॥ प्रज्ञेति ॥ इत्थं प्रज्ञाविचारवशतः प्रज्ञावशाद्विचारवशाच्च शमं चित्तोपशमं तृष्णायाः संत्यागमात्मावलोकनं च समाहरेत्संपादयेत् ॥ ३९ ॥ विचार इति ॥ भोगगर्हातः विषयसुखानां दोषदर्शनात्पुरुषार्थविचारः पूर्यते । पुरुषार्थविचाराच्च भोगानां गर्हणं अपुरुषार्थत्वात्कुत्सितार्थत्वं च पूर्यत इत्येवमेते विचारभोगगर्हणे अन्योन्यं पूर्येते । यथा समुद्रो जलदाद्वृष्टिद्वारा पूर्यते समुद्रोदकाच्च जलदास्तद्वदित्यर्थः ॥ ४० ॥

देशक्रमेण धनमल्पविगर्हणेन
तेनाङ्ग साधुजनमर्जय मानपूर्वम् ।
तत्संगमोत्थविषयाद्यवहेलनेन
सम्यग्विचारविभवेन तवात्मलाभः ॥ ४१ ॥

बलिरुवाच ॥

एतन्मे कथितं पूर्वं पित्रा चारुविचारिणा ।
इदानीं संस्मृतं दिष्ट्या संप्रबोधमहं गतः ॥ ४२ ॥
अद्येयं मम संजाता भोगान्प्रत्यरतिः स्फुटम् ।
दिष्ट्या शमसुखं स्वस्थं विशाम्यमृतशीतलम् ॥ ४३ ॥
अहो नु खलु रम्येयं शमभूः शीतलान्तरा ।
सर्वा एव समं यान्ति सुखदुःखदशः शमे ॥ ४४ ॥
कोऽहं तावदयं किं स्यादात्मेत्यात्मावलोकिनम् ।
पृच्छाम्युशनसं नाथं नूनमज्ञानशान्तये ॥ ४५ ॥

वसिष्ठ उवाच ॥

इति संचिन्त्य बलवान्बलिरामीलितेक्षणः ।
दध्यौ कमलपत्राक्षः शुक्रमाकाशमन्दिरम् ॥ ४६ ॥

देशेति ॥ अल्पविगर्हणेन स्वल्पदोषेण देशक्रमेण देशाचारक्रमेण धनमर्जय । तेन च धनेन मानपूर्वं सत्कारपूर्वकं साधुजनमर्जय । तत्संगमोत्थविषयाद्यवहेलनेन साधुसंगमसंजातविषयवैराग्येण सम्यग्विचारविभवेन च तव आत्मलाभो भविष्यतीत्यन्वयः ॥ ४१ ॥ एतदिति ॥ पित्रा मे पूर्वं कथितमेतदिदानीं संस्मृतमित्यन्वयः ॥ ४२ ॥ दिष्ट्येत्यव्ययमानन्दे ॥ ४३ ॥ अहो इति ॥ शमभूः शमदशा ॥ ४४ ॥ कोऽहमिति ॥ आत्मावलोकिनमुशनसं नाथं गुरुं

अथ सर्वगतानन्तचिदात्मा भार्गवः प्रभुः ।
आनिनाय सदेहं स्वं रत्नवातायनं बलेः ॥ ४७ ॥
अथ रत्नार्घदानेन मन्दारकुसुमोत्करैः ।
पादाभिवन्दनेनैनं पूजयामास भार्गवम् ॥ ४८ ॥

बलिरुवाच ॥

भार्गव त्वत्प्रसादोत्था प्रतिभेयं पुरस्तव ।
नियोजयति मां वक्तुं कार्यं कर्तुमिवार्कभाः ॥ ४९ ॥
किमिहास्ति कियन्मात्रमिदं किमयमेव वा ।
कोऽहं कस्त्वं किमेते वा लोका इति वदाशु मे ॥ ५० ॥

शुक्र उवाच ॥

बहुनात्र किमुक्तेन खं गन्तुं यत्नवानहम् ।
सर्वदानवराजेन्द्र सारं संक्षेपतः शृणु ॥ ५१ ॥
चिदिहास्ति हि चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेते च लोकाश्चिदिति संग्रहः ॥ ५२ ॥
भव्योऽसि चेत्तदेतस्मात्सर्वमाप्नोषि निश्चयात् ।
नोचेत्तद्बह्वपि प्रोक्तं त्वयि भस्मनि हूयते ॥ ५३ ॥
चिच्चेत्यकलिता बन्धस्तन्मुक्ता मुक्तिरुच्यते ।
चिदचेत्या किलात्मेति सर्वसिद्धान्तसंग्रहः ॥ ५४ ॥

कोऽहं अयमात्मा किं स्यादित्यहंशब्दार्थमात्मस्वरूपं च पृच्छामीत्यन्वयः ॥ ४५ ॥ ४६ ॥ अथेति ॥ अथ स भार्गवः स्वं देहं बलेरवस्थानप्रदेशभूतं रत्नवातायनमानिनाय । तत्राजगामेत्यर्थः ॥४७॥४८॥ ॥ ४९ ॥ ५० ॥ ५१ ॥ चिदिति ॥ चिन्मात्रं चिद्रूपम् । चिन्मयं चित्प्रकृतिकम् । चिद्व्यतिरेकेण न किंचिदस्तीत्यर्थः ॥ ५२ ॥ ५३ ॥ चिदिति ॥ चेत्यकलिता चिदेव बन्ध उच्यते । चेत्यं मुक्त्वा तु चिन्मु-

एवं निश्चयमादाय विलोक्य धियेद्धया ।
स्वयमेवात्मनात्मानमनन्तपदमाप्स्यसि ॥ ५५ ॥
खं व्रजाम्यहमत्रैते मुनयः सप्त संगताः ।
केनापि सुरकार्येण वस्तव्यं तत्र वै मया ॥ ५६ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा भगवाञ्छुक्र आरुरोह नभस्तलम् ।
बलिस्तु चिन्तयामास चिदात्मकमिदं जगत् ॥ ५७ ॥

बलिरुवाच ॥

युक्तमुक्तं भगवता चिदेवेदं जगत्त्रयम् ।
चिदहं चिदिमे लोकाश्चिदाशाश्चिदियं क्रिया ॥ ५८ ॥
दृश्यदर्शननिर्मुक्तः केवलामलरूपवान् ।
नित्योदितो निराभासो द्रष्टासि परमेश्वरः ॥ ५९ ॥
चेत्यनिर्मुक्तचिद्रूपं विष्वग्विश्वावपूरकम् ।
संशान्तसर्वसंवेद्यं संविन्मात्रमहं महत् ॥ ६० ॥

क्तिरिति । अचेत्या चेत्यासंस्पृष्टा चिदेवात्मेति संग्रहः ॥ ५४ ॥ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ दृश्येति ॥ दृश्यदर्शननिर्मुक्तः । दृश्यानि भूतानि भौतिकानि च । दर्शनानि ज्ञानसाधनानि । तेभ्यो निर्मुक्तो व्यतिरिक्तः । अतश्च केवलामलरूपवान् । नित्योदितो नित्यप्रकाशः । निराभासो भासकान्तरनिरपेक्षः । द्रष्टा सर्वसाक्षी परमेश्वरोऽसीति ॥ ५९ ॥ चेत्येति ॥ चेत्यनिर्मुक्तचिद्रूपं विशुद्धचिदात्मकम् । विष्वगन्तर्बहिश्च सर्वतो विश्वावपूरकम् । संशान्तसर्वसंवेद्यम् उपरतसर्वविषयवासनम् । महत्परिपूर्णम् । संविन्मात्रमह-

इति संचिन्तयन्नेव बलिः परमकोविदः ।
ॐकारादर्धमात्रार्थं भावयन्ध्यानमास्थितः ॥ ६१ ॥
संशान्तसर्वसंकल्पः प्रशान्तकलनागणः ।
निःशङ्कमतिदूरास्तचेत्यचिन्तकचिन्तनः ॥ ६२ ॥
ध्यातृध्येयध्यानहीनो निर्मनाः शान्तवासनः ।
बभूवावातदीपाभो बलिः प्राप्तमहापदः ॥ ६३ ॥
प्रशमितैषणया परिपूर्णया मननदोषदशोज्झितयैतया ।
बलिरराजत निर्मलसत्त्वया विघनमच्छतयेव शरन्नभः ॥ ६४ ॥

वसिष्ठ उवाच ॥

अथ ते दानवास्तत्र बलेरनुचरास्तदा ।
तद्गृहं स्फाटिकं सौधमुच्चैरारुरुहुः क्षणात् ॥ ६५ ॥
निर्विकल्पसमाधाने स्थित्वा चिरमुदारधीः ।
व्यबुध्यत बलिस्तत्र पुरस्तेषां महामते ॥ ६६ ॥
अथ वैरोचनिस्तत्र ध्येयत्यागमयात्मना ।
मनसा सकलान्येव राजकार्याणि संव्यधात् ॥ ६७ ॥
आपदं संपदं दृष्ट्वा समयैव स पश्यति ।
नास्तमेति न वोदेति तत्प्रज्ञा सुखदुःखयोः ॥ ६८ ॥

मस्मि ॥ ६० ॥ इतीति ॥ ॐकारादर्धमात्रार्थं प्रणवान्निष्कृष्य अर्धमात्रार्थमेव परब्रह्मरूपं भावयन्ध्यानमास्थितः ॥ ६१ ॥ संशान्तेति श्लोकद्वयं वाक्यम् । निःशङ्कं यथा तथा अतिदूरे अस्तं क्षिप्तं चेत्यं चिन्तकं चिन्तनं चेति त्रयं येनेत्यनेन बहिर्मुखविक्षेपराहित्यमुक्तम् ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ध्यातृध्यानध्येयहीन इत्यनेन अन्तर्मुखोऽपि न विक्षेप इत्याह—अथेति ॥ ध्येयत्यागमयात्मना अहंममतादिवासनात्यागो ध्येयत्यागः तन्मयस्वरूपेण

ऊहापोहसहस्राणि भावाभावशतानि च ।
बलिना परिदृष्टानि क्व समाश्वासमेत्यसौ ॥ ६९ ॥
धावमानमिहामुत्र लुठितं लोकवृत्तिषु ।
संस्थापय निरुध्यैतन्मनो हृदयकोटरे ॥ ७० ॥
येषु येषु प्रदेशेषु मनो मज्जति बालवत् ।
तेभ्यस्तेभ्यः समुद्धृत्य तद्धि तत्त्वे नियोजयेत् ॥ ७१ ॥
एवमभ्यसताभ्यासं मनोमत्तमतङ्गजम् ।
निबध्य सर्वभावेन परं श्रेयोऽधिगम्यते ॥ ७२ ॥

इति श्रीमोक्षोपाय उपशमप्रकरणे बल्युपाख्यानं
नाम तृतीयः सर्गः ॥ ३ ॥

---

मनसा। इत्थंभूतो राजकार्याणि संव्यधात् ॥ ६७ ॥ ६८ ॥ ऊहेति। इष्टसाधनोत्प्रेक्षणमूहः। अनिष्टनिरासोत्प्रेक्षणमपोहः। तेषां सहस्राणि पदार्थानां भावाभावशतानि च बलिना परिदृष्टानि तथापि असौ बलिः क्व वा समाश्वासं विश्वासमेतेति। न क्वापीत्यर्थः। असक्त एव राज्यं चकारेति यावत् ॥ ६९ ॥ श्रीरामं प्रति हितमुपदिशति—धावमानमिति ॥ इहास्मिँल्लोके अमुत्र परलोके च धावमानं विषयसुखवाञ्छया वेगेन गच्छत् लोकवृत्तिषु अर्थार्जनादिषु लौकिकव्यापारेषु लुठितमासक्तं एतच्चेतो निरुध्य विवेकवैराग्यादिभिः निरुध्य हृदयकोटरे हृत्पुण्डरीके संस्थापय। आत्मानुसंधानतत्परं कुर्वित्यर्थः ॥ ७० ॥ ७१ ॥ ७२ ॥ इति श्रीसंसारतरणिनाम्नि वासिष्ठविवरणे उपशमप्रकरणे बल्युपाख्यानं नाम तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः

वसिष्ठ उवाच ॥

अथेमं परमं राम विज्ञानाधिगमक्रमम् ।
शृणु दैत्येश्वरः सिद्धः प्रह्लादः स्वात्मना यथा ॥ १ ॥
हते त्रिदशवृन्दानां हिरण्यकशिपौ रिपौ ।
प्रह्लादश्चिन्तयामास शोकसंविग्नमानसः ॥ २ ॥
एते तातादयः सर्वे विष्णुनाऽसुरसत्तमाः ।
घातिताः क्षुब्धकल्पान्तवातेनेव कुलाचलाः ॥ ३ ॥
अभ्यस्ता बहवस्तेन मिथः प्रेरितपर्वताः ।
भीमाः समरसंरम्भाः सममस्मत्पितामहैः ॥ ४ ॥
तासु तास्वतिघोरासु विततास्वसुरराजिषु ।
यो न भीत इदानीं स भयमेष्यति का कथा ॥ ५ ॥
तस्मात्तस्यातिवीरस्य हरेराक्रमणे स्फुटम् ।
मन्ये तद्व्यतिरेकेण विद्यते न प्रतिक्रिया ॥ ६ ॥
सर्वात्मना सर्वधिया सर्वसंरम्भरंहसा ।
स एव शरणं देवो गतिरस्तीह नान्यथा ॥ ७ ॥
अस्मान्निमेषादारभ्य नारायणमजं सदा ।
संप्रपन्नोऽस्मि सर्वत्र नारायणमयो ह्यहम् ॥ ८ ॥

पूर्वं पुण्यप्रकर्षात् वैषयिकमपि सुखं क्वचिच्चित्तोपशान्तये भवतीत्युक्तम् । इदानीमीश्वरानुग्रहादेव कदाचिदात्मतत्त्वावबोधो भवतीति प्रह्लादाख्यानेन प्रतिपाद्यते । तत्र प्रह्लादवृत्तान्तं तावत्प्रस्तौति— अथेत्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ।
नापैति मम हृत्कोशादाकाशादिव मारुतः ॥ ९ ॥
अविष्णुः पूजयन्विष्णुं न पूजाफलभाग्भवेत् ।
विष्णुर्भूत्वा यजेद्विष्णुमयं विष्णुरहं स्थितः ॥ १० ॥

वसिष्ठ उवाच ॥

प्रह्लाद इत्थं संचिन्त्य कृत्वा नारायणीं तनुम् ।
पुनः संचिन्तयामास पूजार्थमसुरद्विषम् ॥ ११ ॥
वपुषो वैष्णवादस्मान्मरुन्मूर्तिः परावरः ।
अयं प्राणप्रवाहेण बहिर्विष्णुः स्थितोऽपरः ॥ १२ ॥
तमेनं पूजयाम्याशु परिवारसमन्वितम् ।
सपर्यया मनोमय्या सर्वसंभाररम्यया ॥ १३ ॥
प्रह्लाद इति संचिन्त्य संभारभरभारिणा ।
मनसा पूजयामास माधवं कमलाधवम् ॥ १४ ॥
रत्नार्घपात्रपटलैश्चन्दनादिविलेपनैः ।
धूपैर्दीपैः पवित्रैश्च नानाविभवभूषणैः ॥ १५ ॥
अथ देवगृहे तस्मिन्बाह्यार्थपरिपूर्णया ।
पूजया पूजयामास दानवेन्द्रो जनार्दनम् ॥ १६ ॥

॥ ९ ॥ १० ॥ ११ ॥ तत्र वपुष इति श्लोकद्वयं वाक्यम् । परावरः परे ब्रह्मादयोऽप्यवरे अधमा यस्मात् सोऽयं विष्णुः वैष्णवादस्माद्वपुषो बहिः प्राणप्रवाहेण वायोर्निःसरणेन मरुन्मूर्तिर्वायुरूपो योऽपरः स्थितः ॥ १२ ॥ तमेनं वायुस्वरूपे वर्तमानं विष्णुं पूजयामीत्यन्वयः ॥ १३ ॥ प्रह्लाद इति श्लोकद्वयं वाक्यम् ॥ संभारभरभारिणा संभारः पूजोपकरणानि ॥ १४ ॥ १५ ॥ अथेति ॥ पूजया पूजाविधिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

ततस्ततः प्रभृत्येव प्रह्लादः परमेश्वरम् ।
तथैव प्रत्यहं भक्त्या पूजयामास पूर्णया ॥ १७ ॥
अथ तस्मिन्पुरे दैत्यास्ततः प्रभृति वैष्णवाः ।
सर्वे एवाभवन्भक्त्या राजा ह्याचारकारणम् ॥ १८ ॥
जगाम वार्ता गगनं देवलोकमथारिहन् ।
विष्णोर्द्वेषं परित्यज्य भक्त्या दैत्याः श्रिता इति ॥ १९ ॥
देवा विस्मयमाजग्मुः शक्राद्याः समरुद्गणाः ।
गृहीता वैष्णवीभक्तिर्दैत्यैः किमिति राघव ॥ २० ॥
क्षीरोदे भोगिभोगस्थं विबुधा विस्मयाकुलाः ।
जग्मुरम्बरमुत्सृज्य हरिमाहवशालिनम् ॥ २१ ॥

देवा ऊचुः ॥

किमेतद्भगवन्दैत्या विरुद्धा ये सदैव ते ।
ते हि त्वन्मयतां याता विस्मयो नो विजृम्भते ॥ २२ ॥
क्व किलात्यन्तदुर्वृत्ता दानवा दलिताद्रयः ।
क्व पाश्चात्त्यमहाजन्मलभ्या भक्तिर्जनार्दने ॥ २३ ॥
प्राकृतो गुणवाञ्जात इत्येषा भगवन्कथा ।
अकालपुष्पमालेवासुखायोद्वेजनाय च ॥ २४ ॥
क्वाधमः प्राकृतारम्भो हीनकर्ममतिः सदा ।
वराको दानवस्तुच्छजातिर्भक्तिः क्व वैष्णवी ॥ २५ ॥

श्रीभगवानुवाच ॥

विबुधा मा विषण्णाः स्थ प्रह्लादो भक्तिमानिति ।
पाश्चात्त्यं जन्म तस्येदं मोक्षार्होऽसावरिन्दमाः ॥ २६ ॥
गुणवान्निर्गुणो जात इत्यनर्थक्रमं विदुः ।
निर्गुणो गुणवाञ्जात इत्याहुः सिद्धिदं क्रमम् ॥ २७ ॥

॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ क्केति ॥ वराकः शोच्यः

आत्मीयानि विचित्राणि भुवनान्यमरोत्तमाः ।
प्रयात नासुखायैषा प्राह्लादी गुणितोद्भवा ॥ २८ ॥
इत्युक्त्वा भगवांस्तत्र क्षीरोदार्णववीचिषु ।
अन्तर्धानं ययौ देवस्तटतापिच्छगुच्छवत् ॥ २९ ॥
सोऽपि संपूजितहरिः सुरौघोऽव्रजदम्बरम् ।
प्रह्लादं प्रति गीर्वाणास्ततः स्निग्धत्वमाययुः ॥ ३० ॥

वसिष्ठ उवाच ॥

प्रत्यहं पूजयामास देवदेवं जनार्दनम् ।
मनसा कर्मणा वाचा प्रह्लादो भक्तिमानिति ॥ ३१ ॥
अथ पूजापरस्यास्य हृद्ये स्थल इवाब्जिनी ।
न विशश्राम चेतोऽस्य भोगत्यागानुरञ्जतः ॥ ३२ ॥
त्यक्तभोगादिकथनं विश्रान्तिमनुपागतम् ।
चेतः केवलमस्यासीद्दोलायामिव योजितम् ॥ ३३ ॥
प्राह्लादीं तां स्थितिं कृष्णो देवः क्षीरोदमन्दिरात् ।
विवेद सर्वगतया धिया परमकान्तया ॥ ३४ ॥
अथ पातालमार्गेण विष्णुराह्लादिताग्रगः ।
देवपूजागृहं तस्य प्रह्लादस्य समाययौ ॥ ३५ ॥

॥ २५ ॥ २६ ॥ २७ ॥ आत्मीयानीति ॥ प्राह्लादी प्रह्लादसंबन्धिनी । गुणिता गुणवत्तोद्भवोत्कृष्टप्रभावा ॥ २८ ॥ इतीति ॥ तापिच्छगुच्छवत्तमालपुष्पस्तबकवत् ॥ २९ ॥ ३० ॥ ३१ ॥ ॥ ३२ ॥ ३३ ॥ प्राह्लादीमिति ॥ क्षीरोदमन्दिरात्क्षीरोदमन्दिरे स्थित्वैव सर्वगतया धिया विवेदेत्यन्वयः । मन्दिरादिति 'अधिकरणे चोपसंख्यानम्' इति ल्यब्लोपे पञ्चमी ॥ ३४ ॥ अथेति ॥

विज्ञायाभ्यागतं देवं पूजया द्विगुणोद्धया ।
दैत्येन्द्रः पुण्डरीकाक्षमादरात्प्रत्यपूजयत् ॥ ३६ ॥
पूजागृहगतं देवं प्रत्यक्षावस्थितं हरिम् ।
प्रह्लादः सुपरिप्रीतो गिरा तुष्टाव पुष्टया ॥ ३७ ॥

प्रह्लाद उवाच ॥

त्रिभुवनभवनाभिरामकोशं सकलकलङ्कहरं परं चकास्ति ।
अशरणशरणं शरण्यमीशं हरिमजमच्युतमीश्वरं प्रपद्ये ॥ ३८ ॥
कुवलयदलशैलसंनिकाशं शरदमलाम्बरकोटरोपमानम् ।
भ्रमरतिमिरकज्जलाञ्जनाभं सरसिजचक्रगदाधरं प्रपद्ये ॥ ३९ ॥
विमलमलिकलापकोमलाङ्गं सितदलपङ्कजकुड्मलाभशङ्खम् ।
श्रुतिरणितविरिञ्चिचञ्चरीकं स्वहृदयपद्मजलाशयं प्रपद्ये ॥ ४० ॥
सितनखतरतारकावकीर्णं स्मितधवलाननपीवरेन्दुबिम्बम् ।
हृदयमणिमरीचिजालगङ्गं हरिशरदम्बरमाततं प्रपद्ये ॥ ४१ ॥

विष्णुः पातालमार्गेण तस्य देवपूजागृहं समाययौ । क्षीरोदे निमज्ज्य तस्य देवपूजागृहादुन्ममज्जेत्यर्थः । आह्लादिताग्रगः । भक्तानुग्रहव्यग्रतया परितोषितपरिवार इत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ अथाष्टभिः श्लोकैः प्रह्लादो विष्णुं स्तौति—त्रिभुवनेति ॥ त्रिभुवनमेव भवनं तस्याभिरामः कोशोऽर्थौघ इव सर्वैरुपजीव्यत्वात्तादृशम् ॥ ३८ ॥ कुवलयेति ॥ कुवलयदलानां शैलः शैलाकारो राशिस्तत्संनिकाशम् । भ्रमरतिमिरकज्जलाञ्जनाभं कज्जलरूपमञ्जनम् । अञ्जनस्य नयनप्रसादहेतोः द्रव्यस्य बहुविधत्वाद्विशेषणोपादानम् ॥ ३९ ॥ विमलेति ॥ श्रुतिभिर्वेदै रणितो मुखरितो विरिञ्चिरेव चञ्चरीको भ्रमरो यस्मिंस्तम् । स्वहृदयस्य प्रह्लादहृदयस्यैव पद्मस्य जलाशयमिवाश्रयभूतम् ॥ ४० ॥ सितेति ॥ हृदयमणिमरीचिजालगङ्गं वक्षसि

त्रिभुवननलिनीसितारविन्दं तिमिरसमानविमोहदीपमग्र्यम् ।
स्फुटतरमजडं चिदात्मतत्त्वं जगदखिलार्तिहरं हरिं प्रपद्ये ॥४२॥
नवविकसितपद्मरेणुगौरस्फुटकमलावपुषोपभूषिताङ्गम् ।
दिनशमसमयारुणाङ्गरागं कनकनिभाम्बरसुन्दरं प्रपद्ये ॥४३॥
अविरतकृतविश्वसर्गलीलं सततमजातमवर्धनं विशालम् ।
युगशतजरठाभिजातदेहं तरुदलशायिनमर्भकं प्रपद्ये ॥ ४४ ॥
दितिसुतनलिनीतुषारपातं सुरनलिनीसततोदितार्कबिम्बम् ।
कमलजनलिनीजलावपूरं हृदि नलिनीनिलयं विभुं प्रपद्ये ॥४५॥

स्थितानां मुक्तामणीनां मरीचिजालमेव गङ्गा मन्दाकिनी यस्य तम् ॥४१॥ त्रिभुवनेति ॥ त्रिभुवनमेव नलिनी सरसी तस्यां सितारविन्दम् । सितत्वं च नरसिंहाद्यवताराभिप्रायेण । तिमिरसमानविमोहदीपं ज्ञानप्रतिबन्धकत्वात्तिमिरसमानस्य मोहस्य दीपमिव निवर्तकम् ॥ ४२ ॥ नवेति ॥ नवविकसितपद्मरेणुवद्गौरेण कमलाया वक्षःस्थलस्थितायाः श्रियो वपुषा उपभूषितानि अङ्गानि यस्य। दिनशमसमयः संध्या तद्वदरुणोऽङ्गरागो यस्य ॥ ४३ ॥ अविरतेति ॥ अत्र अविरतकृतविश्वसर्गलीलस्य सततमजातत्वं अवर्धनस्य विशालत्वं जरठस्य अभिजातदेहत्वं अर्भकत्वं च विरुद्धमिति विरोधाभासः प्रतीयते । अवर्धनं विशालम् । असत्येव वर्धने विपुलं स्वभावतएव व्यापकत्वात् । युगशतजरठाभिजातदेहं युगशतेषु जरठो जीर्णोऽप्यभिजातो रम्यो देहो यस्य तम् । तरुदलशायिनं वटपत्रशायिनम् ॥ ४४ ॥ दितिसुतेति ॥ दितिसुता एव नलिन्यः तासां तुषारपातः संहारहेतुत्वात् । कमलजो ब्रह्मा स एव नलिनी अनेकमुखपद्मयुक्तत्वात् तस्या जलावपूरो जलाशयः तम् । हृदि नलिनी-

इति गुणबहुलाभिर्वाग्भिरभ्यर्चितोऽसौ
हरिरसुरविनाशी श्रीनिषण्णांसदेशः ।
जलद इव मयूरे प्रीतिमान्प्रीयमाणं
कुवलयदलनीलः प्रत्युवाचासुरेन्द्रम् ॥ ४६ ॥

श्रीभगवानुवाच ॥

वरं कुलनिधे दैत्यकुलानर्घ्यमहामणे ।
गृहाणाभिमतं भूयो जन्मदुःखोपशान्तये ॥ ४७ ॥

प्रह्लाद उवाच ॥

सर्वसंकल्पफलदः सर्वलोकान्तरस्थितः ।
यदुदारतमं वेत्सि तदेवादिश मे विभो ॥ ४८ ॥

श्रीभगवानुवाच ॥

सर्वसंभ्रमसंशान्त्यै परमाय फलाय च ।
ब्रह्मविश्रान्तिपर्यन्तो विचारोऽस्तु तवानघ ॥ ४९ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा दितिपुत्रेन्द्रं विष्णुरन्तरधीयत ।
कृतघर्घरनिर्ह्रादस्तरङ्गस्तोयधेरिव ॥ ५० ॥
विष्णावन्तर्हिते देवे पूजायै कुसुमाञ्जलिम् ।
पाश्चात्त्यं दानवस्त्यक्त्वा मणिरत्नपरिष्कृतम् ॥ ५१ ॥
पद्मासनस्थोऽपि मुदा ह्युपविष्टोऽधरासने ।
स्तोत्रपाठविधिप्रान्ते चिन्तयामास चिन्तया ॥ ५२ ॥

निलयम् । नलिनीशब्दोऽत्र पद्ममात्रवाची । हृदि वक्षसि या नलिनी यत्पुण्डरीकं तन्निलयम् ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ विष्णाविति ॥ पाश्चात्त्यं पश्चाद्भवम् । उद्वासनाङ्गभूतमित्यर्थः । मणिरत्नपरिष्कृतं मणिश्रेष्ठैरलंकृतम् ॥५१॥ पद्मेति ॥ पद्मा-

विचारवानेव भवान्भवत्विति मवारिणा ।
देवेनोक्तोऽस्मि तेनान्तः करोम्यात्मविचारणम् ॥ ५३ ॥
किमहं तावदेव स्यां योऽस्मिन्भुवनडम्बरे ।
वच्मि गच्छामि तिष्ठामि प्रयते विहरामि च ॥ ५४ ॥
जगत्तावदिदं नाहं सवृक्षतृणवीरुधम् ।
यद्बाह्यं जडमत्यन्तं तत्स्यां कथमहं किल ॥ ५५ ॥
असन्नभ्युत्थितो मूकः पवनेनैव विस्फुरन् ।
कालेनाल्पेन विलयी देहो नाहमचेतनः ॥ ५६ ॥
जडया कर्णशष्कुल्या कल्पमानः क्षणस्थया ।
शून्याकृतिः शून्यभवः शब्दो नाहमचेतनः ॥ ५७ ॥
त्वचा क्षणविनाशिन्या प्राप्योऽप्राप्योऽयमन्यथा ।
चित्प्रसादोपलब्धात्मा स्पर्शो नाहमचेतनः ॥ ५८ ॥

सनं तु—'ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे । पद्मासनं भवेदेतत्सर्वेषामपि पूजितम्' इत्युक्तलक्षणम् । स्तोत्रपाठविधावत्र पूर्वोक्तस्तोत्रविषये ॥ ५२ ॥ ५३ ॥ किमिति ॥ वच्मीत्यादि सर्वेन्द्रियव्यापारोपलक्षणम् । वच्मीत्यादिरूपेण सर्वेन्द्रियव्यापाराभिमानी अहं किं स्यामिति विचारोपक्रमः ॥ ५४ ॥ इदं जगदहं न । बाह्यत्वाज्जडत्वाच्चेत्यर्थः ॥ ५५ ॥ असन्निति ॥ वस्तुतोऽसन्नेवाभ्युत्थितः कल्पितः । भूतेन्द्रियसंघातस्य देहव्यपदेशाद्देहो नाहं अचेतनत्वाज्जडत्वात् । कुतश्चाचेतनत्वम् असदभ्युत्थत्वान्मूकत्वात्पवनप्रेर्यत्वाच्चेत्यर्थः ॥ ५६ ॥ जडयेति ॥ शून्याकृतिः अमूर्तत्वात् । शून्यभवः आकाशप्रभवत्वात् । अत्रापि पूर्ववत्साध्यसाधनभावो योज्यः ॥५७॥ त्वचेति ॥ त्वचा त्वगिन्द्रियेण प्राप्यः प्रकारान्तरेण त्वप्राप्यत्वात्

लब्धात्मा जिह्वया तुच्छो लोलक्षणिकसत्तया ।
स्वल्पस्पन्दो द्रव्यनिष्ठो रसो नाहमचेतनः ॥ ५९ ॥

दृश्यदर्शनयोर्लीनं क्षयिक्षणविनाशिनोः ।
केवले द्रष्टरि क्षीणं रूपं नाहमचेतनम् ॥ ६० ॥

नासया गन्धजडया क्षयिणा परिकल्पितः ।
पेलवो नियताकारो गन्धो नाहमचेतनः ॥ ६१ ॥

निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ।
शुद्धचेतन एवाहं कलाकलनवर्जितः ॥ ६२ ॥

चेत्यवर्जितचिन्मात्रमहमेवावभासकः ।
सबाह्याभ्यन्तरव्यापी निष्कलामलसन्मयः ॥ ६३ ॥

चित्प्रसादेन इन्द्रियप्रवर्तकतया बहिः प्रसृतेन । उपलब्धात्मा प्रकाशितस्वरूपः ॥ ५८ ॥ लब्धेति ॥ लोला क्षणिका सत्ता यस्यास्तया ॥ ५९ ॥ दृश्येति ॥ दृश्यं घटादि दर्शनं चक्षुस्तयोर्लीनं समवेतम् । केवले द्रष्टरि क्षीणमविद्यमानम् । केवलग्रहणमुपहितनिवृत्त्यर्थम् ॥ ६० ॥ नासयेति ॥ गन्धजडया गन्धवत्या जडया चेत्यर्थः । पेलवो विरलः । अनियताकारः क्षणान्तरे गन्धान्तरस्य प्रादुर्भावात् ॥ ६१ ॥ तर्हि कस्त्वमित्यत्राह—निर्मम इति ॥ तत्र गतपञ्चेन्द्रियभ्रमः इत्यनेन चक्षुरादीन्द्रियतादात्म्यं वारयति । अमनन इति मनोरूपता । मननं हि मनोव्यापारः । निर्मम इत्यनहंकारत्वम् । ममेत्यव्ययम् । निर्गतो ममेत्यभिमानो यस्मात् । कलाकलनवर्जित इति मायासंबन्धरहित इत्यर्थः ॥ ६२ ॥ जीवभावं च वारयति—चेत्येति ॥ निष्कलामलसन्मयः निष्कलं निरंशं अमलं च

आ इदानीं स्मृतं सत्यमेतत्तदखिलं मया ।
निर्विकल्पचिदाभास एष आत्मास्मि सर्वगः ॥ ६४ ॥
मयैव चेतनेनेमे सर्वे घटपटादयः ।
सूर्यान्ता अवभासन्ते दीपेनोत्तमतेजसा ॥ ६५ ॥
मयैवैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः ।
तेजसान्तःप्रकाशेन यथाग्निकणपङ्क्तयः ॥ ६६ ॥
विरिञ्चिसदनात्पारे कल्पान्तेऽप्याहरत्पदम् ।
प्रसरत्येव मे रूपमद्यापि न निवर्तते ॥ ६७ ॥
अयं नामाहमित्यन्तः कुतो निरवलम्बनः ।
अपर्यन्ताकृतेरेषा किलासीत्स्वल्पता मम ॥ ६८ ॥
अनन्तानन्दसंभोगा परोपशमशालिनी ।
शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥ ६९ ॥

यत्सद्वस्तु तद्रूपः ॥ ६३ ॥ आ इति ॥ आ इति स्मृतिद्योतकमव्ययम् । सत्यमखिलं सर्वात्मकं चैतद्रूपं मया स्मृतमित्यन्वयः ॥ ६४ ॥ तदेव रूपं निर्विकल्पेत्यादिना दर्शयति—मयैवेति ॥ मयैव दीपेन चेतनेनेमे घटपटादयः सूर्यान्ता अवभासन्ते । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः ॥ ६५ ॥ मयैवेति ॥ एता विचित्रा इन्द्रियवृत्तयोऽपि अन्तःप्रकाशमानेन मयैव तेजसा स्फुरन्ति अन्तर्गताग्नयः काष्ठशलाका इवेति ॥ ६६ ॥ विरिञ्चीति ॥ मे रूपं चैतन्यं विरिञ्चिसदनात्सत्यलोकात्परतोऽपि कल्पान्तेऽपि पदं स्थानमाहरत् संपादयत् प्रसरत्येव अद्यापि न निवर्तते । देशकालाभ्यामपरिच्छिन्नत्वात्सर्वत्र परिपूर्णं मे स्वरूपमित्यर्थः ॥ ६७ ॥ अयमिति ॥ अपरिच्छिन्नस्यात्मनोऽयमिति परिच्छेदो निरालम्बो निर्हेतुकश्चेत्यर्थः ॥६८॥ अनन्तेति ॥ प्रकृष्टोपशमशालिनी इयं मदीया

लब्धात्मा जिह्वया तुच्छो लोलक्षणिकसत्तया ।
स्वल्पस्पन्दो द्रव्यनिष्ठो रसो नाहमचेतनः ॥ ५९ ॥

दृश्यदर्शनयोर्लीनं क्षयिक्षणविनाशिनोः ।
केवले द्रष्टरि क्षीणं रूपं नाहमचेतनम् ॥ ६० ॥

नासया गन्धजडया क्षयिणा परिकल्पितः ।
पेलवो नियताकारो गन्धो नाहमचेतनः ॥ ६१ ॥

निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ।
शुद्धचेतन एवाहं कलाकलनवर्जितः ॥ ६२ ॥

चेत्यवर्जितचिन्मात्रमहमेवावभासकः ।
सबाह्याभ्यन्तरव्यापी निष्कलामलसन्मयः ॥ ६३ ॥

चित्प्रसादेन इन्द्रियप्रवर्तकतया बहिः प्रसृतेन । उपलब्धात्मा प्रकाशितस्वरूपः ॥ ५८ ॥ लब्धेति ॥ लोला क्षणिका सत्ता यस्यास्तया ॥ ५९ ॥ दृश्येति ॥ दृश्यं घटादि दर्शनं चक्षुस्तयोर्लीनं समवेतम् । केवले द्रष्टरि क्षीणमविद्यमानम् । केवलग्रहणमुपहितनिवृत्त्यर्थम् ॥ ६० ॥ नासयेति ॥ गन्धजडया गन्धवत्या जडया चेत्यर्थः । पेलवो विरलः । अनियताकारः क्षणान्तरे गन्धान्तरस्य प्रादुर्भावात् ॥ ६१ ॥ तर्हि कस्त्वमित्यत्राह—निर्मम इति ॥ तत्र गतपञ्चेन्द्रियभ्रमः इत्यनेन चक्षुरादीन्द्रियतादात्म्यं वारयति । अमनन इति मनोरूपता । मननं हि मनोव्यापारः । निर्मम इत्यनहंकारत्वम् । ममेत्यव्ययम् । निर्गतो ममेत्यभिमानो यस्मात् । कलाकलनवर्जित इति मायासंबन्धरहित इत्यर्थः ॥ ६२ ॥ जीवभावं च वारयति—चेत्येति ॥ निष्कलामलसन्मयः निष्कलं निरंशं अमलं च

आ इदानीं स्मृतं सत्यमेतत्तदखिलं मया ।
निर्विकल्पचिदाभास एष आत्मास्मि सर्वगः ॥ ६४ ॥
मयैव चेतनेनेमे सर्वे घटपटादयः ।
सूर्यान्ता अवभासन्ते दीपेनोत्तमतेजसा ॥ ६५ ॥
मयैवैताः स्फुरन्तीह विचित्रेन्द्रियवृत्तयः ।
तेजसान्तःप्रकाशेन यथाग्निकणपङ्क्तयः ॥ ६६ ॥
विरिञ्चिसदनात्पारे कल्पान्तेऽप्याहरत्पदम् ।
प्रसरत्येव मे रूपमद्यापि न निवर्तते ॥ ६७ ॥
अयं नामाहमित्यन्तः कुतो निरवलम्बनः ।
अपर्यन्ताकृतेरेषा किलासीत्स्वल्पता मम ॥ ६८ ॥
अनन्तानन्दसंभोगा परोपशमशालिनी ।
शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥ ६९ ॥

यत्सद्वस्तु तद्रूपः ॥ ६३ ॥ आ इति ॥ आ इति स्मृतिद्योतकमव्ययम् । सत्यमखिलं सर्वात्मकं चैतद्रूपं मया स्मृतमित्यन्वयः ॥ ६४ ॥ तदेव रूपं निर्विकल्पेत्यादिना दर्शयति—मयैवेति ॥ मयैव दीपेन चेतनेनेमे घटपटादयः सूर्यान्ता अवभासन्ते । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः ॥ ६५ ॥ मयैवेति ॥ एता विचित्रा इन्द्रियवृत्तयोऽपि अन्तःप्रकाशमानेन मयैव तेजसा स्फुरन्ति अन्तर्गताग्नयः काष्ठशलाका इवेति ॥ ६६ ॥ विरिञ्चीति ॥ मे रूपं चैतन्यं विरिञ्चिसदनात्सत्यलोकात्परतोऽपि कल्पान्तेऽपि पदं स्थानमाहरत् संपादयत् प्रसरत्येव अद्यापि न निवर्तते । देशकालाभ्यामपरिच्छिन्नत्वात्सर्वत्र परिपूर्णं मे स्वरूपमित्यर्थः ॥ ६७ ॥ अयमिति ॥ अपरिच्छिन्नस्यात्मनोऽयमिति परिच्छेदो निरालम्बो निर्हेतुकश्चेत्यर्थः ॥६८॥ अनन्तेति ॥ प्रकृष्टोपशमशालिनी इयं मदीया

सर्वभावान्तरस्थाय चेत्यमुक्तचिदात्मने ।
प्रत्यक्चेतनरूपाय मह्यमेव नमोनमः ॥ ७० ॥
विचित्राः शक्तयः स्वच्छसमया निर्विकारया ।
चिता क्रियन्ते परया कलङ्कमलमुक्तया ॥ ७१ ॥
कालत्रयमुपेक्षिण्या हीनायाश्चेत्यबन्धनैः ।
चितश्चेत्यमुपेक्षित्र्याः समतैवावशिष्यते ॥ ७२ ॥
सा हि वाचामगम्यत्वादसत्तामिव शाश्वतीम् ।
नैरात्म्यसिद्धान्तदशामुपयातेव तिष्ठति ॥ ७३ ॥
ईहानीहमयैरन्तर्या चिदावलिता मलैः ।
सा हि नोत्पतितुं शक्ता पाशबद्धेव पक्षिणी ॥ ७४ ॥

दृष्टिः अखिलदृष्टिषु समस्तवस्तुदर्शनेषु अनन्तमानन्दमनुभवती चिन्मयी जयतीत्यन्वयः ॥ ६९ ॥ सर्वेति ॥ 'आत्मैव देवताः सर्वाः' इति श्रुतेः आत्मनश्चाद्वितीयत्वात् स्वस्यैव नमस्कारो युज्यते । सर्वपदार्थान्तर्यामिणे विषयासंस्पृष्टसद्रूपाय प्रत्यगात्मने मह्यं नमः ॥ ७० ॥ विचित्रेति ॥ स्वच्छया समया निर्विकारया च परया चितैव कलङ्कमलमुक्तया विचित्राः शक्तयो जगत्सृष्ट्याद्यनुकूला ब्रह्मादिरूपा मूर्तयः क्रियन्ते ॥ ७१ ॥ कालेति ॥ अतीतमनागतं वर्तमानं च कालमुपेक्षते नानुसंधत्ते या चित्सा चेत्यबन्धनैः हर्षविषादादिभिः हीयते । तस्याश्च चेत्यं दृश्यभेदमुपेक्षमाणायाश्चितः समतैव पूर्णतैवावशिष्यते । उपेक्षित्र्या इति तृन्नन्तात् 'ऋन्नेभ्यो ङीप्' इति ङीपि रूपम् ॥ ७२ ॥ सा हीति । सा हि समतामापन्ना चिद्वाचामगम्यत्वादव्यपदेश्यत्वात् शाश्वतीं समतामुपगतेव नैरात्म्यसिद्धान्तदशां शून्यवादिसिद्धान्तावस्थां शून्यरूपतामुपयातेवावशिष्यते ॥ ७३ ॥ ईहेति ॥ ईहानीहमयैः रागद्वेषमूलैर्मलैः

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ।
धराविवरलग्नानां कीटानां समतां गताः ॥ ७५ ॥
आत्मनेऽस्तु नमो मह्यमविच्छिन्नचिदात्मने ।
लोकालोकमणे देव चिरेणाधिगतोऽस्म्यहम् ॥ ७६ ॥
परामृष्टोऽसि लब्धोऽसि प्रोदितोऽस्यचिराय च ।
उद्धृतोऽसि विकल्पेभ्यो योऽसि सोऽसि नमोऽस्तु ते ॥७७॥
मह्यं तुभ्यमनन्ताय तुभ्यं मह्यं शिवात्मने ।
नमो देवाधिदेवाय पराय परमात्मने ॥ ७८ ॥

गतघनमिव पूर्णमिन्दुबिम्बं
गतकलनावरणं स्वमेव रूपम् ।
स्ववपुषि मुदिते स्वयं स्वसंस्थं
स्वयमुदितं स्ववशं स्वयं नमामि ॥ ७९ ॥

मनोदोषैर्या चिदावलिता वेष्टिता भवति सा चित् पाशबद्धा पक्षिणीव उत्पतितुं मुक्ता भवितुं न शक्ता ॥ ७४ ॥ ७५ ॥ आत्मन इति ॥ लोकालोकमणे लोकानालोकयति प्रकाशयतीति लोकालोकः स चासौ मणिश्च तस्यासम्बोधनम् ॥ ७६ ॥ परामृष्ट इति ॥ परामृष्टः श्रुत्याचार्यवाक्यैः सम्यग्विचारितोऽसि । ततो विकल्पेभ्यः कल्पिताकारेभ्य उद्धृतोऽसि । ततश्च प्रोदितोऽसि कूटस्थेन सत्यज्ञानानन्दादिलक्षणेन स्वरूपेण प्रादुर्भूतोऽसि । ततश्च लब्धोऽसि ऐक्येन सोऽहमित्यपरोक्षमनुभूतोऽसि । इत्थं पूर्वं योऽसि यद्रूपोऽसि तद्रूप एवेदानीमसि कल्पिताकारनिवृत्त्या स्वरूपेणैवावस्थितोऽसि तथाभूताय ते नमोऽस्त्वित्यन्वयः ॥ ७७ ॥ मह्यमिति ॥ जीवपरमात्मनोरैक्यान्मह्यं मद्रूपाय तुभ्यं नमः । तुभ्यं त्वद्रूपाय मह्यं नमः । देवानामधिदेवाय पराय परमात्मने नमः ॥ ७८ ॥ गतेति ॥ गतकलनावरणं निवृत्ताविद्यावरणम् । अतश्च गतघनं पूर्णमिन्दु-

तिष्ठन्नपि हि नासीनो गच्छन्नपि न गच्छति ।
शान्तोऽपि व्यवहारस्थः कुर्वन्नपि न लिप्यते ॥ ८० ॥
मनांसि क्षोभयत्येष पल्लवानिव मारुतः ।
वाहयत्यक्षपङ्क्तिं स्वामश्वालीमिव सारथिः ॥ ८१ ॥
एष एव सदान्वेष्यः स्तुत्यो ध्यातव्य एव च ।
जरामरणसंमोहादनेनोत्तीर्य गम्यते ॥ ८२ ॥
सुलभश्चायमत्यन्तं सुजेयश्चाप्तबन्धुवत् ।
शरीरपद्मकुहरे सर्वेषामिव षट्पदः ॥ ८३ ॥
न मे भोगस्थितौ वाञ्छा न मे भोगविवर्जने ।
यदायाति तदायातु यत्प्रयाति प्रयातु तत् ॥ ८४ ॥

बिम्बमिव स्थितम् । मुदिते आनन्दात्मके स्ववपुषि स्वरूपे न पुनः स्वव्यतिरिक्त आधारेः स्वयमात्मनैव न कारणान्तरेण । स्वसंस्थं स्वस्वरूपभूतं नतु क्रियारूपा संस्था स्थितिर्यस्य तम् । स्वयमेव उदितं आविर्भूतम् । स्ववशं अनन्याधीनं स्वमेव रूपं नमामि ॥ ७९ ॥ तिष्ठन्निति ॥ निष्क्रियत्वात्तिष्ठन्नपि आसीनो न भवति । अवस्थितदेहानभिमानात् । गच्छन्नपि देशान्तरं व्याप्नुवन्नपि न गच्छति गमनक्रियाया देहनिष्ठत्वात् । आत्मनश्च तद्व्यतिरिक्तत्वात् । शान्तोऽपि निर्विकारचित्तोऽपि व्यवहारस्थः सर्वेन्द्रियप्रवर्तकत्वात् । इत्थं कुर्वन्नपि व्यवहरन्नपि आत्मा न लिप्यते पुण्यपापैर्न श्लिष्यते अहंकारस्य निवृत्तत्वात् ॥ ८० ॥ मनांसीति ॥ मनांसि मनोबुद्ध्यादीन्यन्तःकरणानि । अक्षपङ्क्तिं बाह्येन्द्रियगणम् ॥ ८१ ॥ एष इति ॥ एष आत्मैव सदान्वेष्यः । 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति श्रुतेः । एवं च सति अनेनात्मना जरामरणसंमोहात्संसाराद्रुत्तीर्य स्वरूपं गम्यते ॥ ८२ ॥ ८३ ॥

एतावन्तमहं कालमज्ञानरिपुणामुना ।
हृत्वा विवेकसर्वस्वमेकान्तमवपोथितः ॥ ८५ ॥
मनसा मनसि छिन्ने निरहंकारतां गते ।
भावेन गलिते भावे स्वस्थस्तिष्ठामि केवलः ॥ ८६ ॥
निर्भावं निरहंकारं निर्मनस्कमनीहितम् ।
केवलास्पन्दशुद्धात्मन्यवतिष्ठति मे वपुः ॥ ८७ ॥
तृष्णारज्जुगणं छित्त्वा मच्छरीरकपञ्जरात् ।
न जाने क्व गतोड्डीय दुरहंकृतिपक्षिणी ॥ ८८ ॥
विद्यमानापि वस्तुश्रीर्न स्थिता त्वयि न स्थिरे ।
वनितारूपलावण्यसत्तेव गतचक्षुषः ॥ ८९ ॥
जय प्रोड्डामराकार जय शान्तिपरायण ।
जय सर्वागमातीत जय सर्वागमास्पद ॥ ९० ॥
जय जात जयाजात जय क्षत जयाक्षत ।
जय भाव जयाभाव जय जेय जयाजय ॥ ९१ ॥

॥ ८४ ॥ एतावन्तमिति ॥ एकान्तं परैरविज्ञातं यथा तथा । अवपोथितो हिंसितः ॥ ८५ ॥ मनसेति ॥ मनसा शास्त्रसंस्कृतेन मनोवृत्तिविशेषेण मनसि संसारवासिते चेतसि छिन्ने निरहंकारतां गते सति भावेन ब्रह्माद्वैतविषयेण तात्पर्येण संसारालम्बिनि भावे गलिते सति केवलः स्वच्छः तिष्ठामि ॥ ८६ ॥ निर्भावमिति ॥ निर्भावमित्यादि तिष्ठतिक्रियाविशेषणम् । भावः संसारवासना ॥ ८७ ॥ ८८ ॥ ८९ ॥ जयेति श्लोकद्वयेनात्मानं स्तौति । प्रोड्डामरो भयंकरो भैरवाद्याकारो यस्य । सर्वागमातीतनामजात्याद्यभावात् । सर्वागमास्पद सर्वोपनिषत्समन्वयगम्यत्वात् सर्वात्मक-

वसिष्ठ उवाच ॥

इति संचिन्तयन्नेव प्रह्लादः परवीरहा ।
निर्विकल्पपरानन्दसमाधिं समुपाययौ ॥ ९२ ॥
निर्विकल्पसमाधिस्थश्चित्रार्पित इवाबभौ ।
पञ्चवर्षसहस्राणि पीनांसोऽतिष्ठदेकदृक् ॥ ९३ ॥
एतावता च कालेन तद्रसातलमण्डलम् ।
बभूवाराजकं तीक्ष्णं मात्स्यन्यायकदर्थितम् ॥ ९४ ॥
अथाखिलजगज्जालक्रमपालनदेहवान् ।
क्षीरोदसागरे शेषशय्यासनगतो हरिः ॥ ९५ ॥
इदं संचिन्तयामास त्रैलोक्याम्भोरुहांशुमान् ।
प्रह्लादे पदविश्रान्ते पाताले गतनायके ॥ ९६ ॥
कष्टं सृष्टिरियं प्रायो निर्दैत्यत्वमुपागता ।
दैत्याभावे सुरश्रेणी निर्जिगीषुपदं गता ।
शममेष्यत्यपद्वन्द्वं मोक्षाख्यं पदमाप्स्यति ॥ ९७ ॥
देवौघे शान्तिमायाते भुवि यज्ञतपःक्रियाः ।
भविष्यन्त्यफलाः सर्वाः शममेष्यन्त्यसंशयम् ॥ ९८ ॥

त्वात् जाताजातादिरूपत्वम् ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ एतावतेति ॥ तीक्ष्णं हिंसाभूयिष्ठम् । मात्स्यन्यायो नाम बलवता दुर्बलस्य बाधः । मत्स्या हि महान्तः स्वल्पान्मत्स्यान्गिलन्ति ॥ ९४ ॥ अथेति ॥ अखिलानां जगतां जालस्य तत्क्रमस्य वर्णाश्रमधर्मसर्यादायाश्च पालनाय देहवान् ॥ ९५ ॥ अष्टभिः श्लोकैर्भगवतश्चिन्ता । इत्थं च चिन्तायाः क्रमः—प्रह्लादस्य स्वपदविश्रान्तत्वात् पाताले गतनायके सति तत्रत्यानामनाथतया क्षये ॥ ९६ ॥ सुरश्रेणीविजिगीषां विहायोपशान्ता सती मुमुक्षेत ॥ ९७ ॥ ततस्तद्भोगभूमेः

क्रियास्वथोपशान्तासु भूर्लोकोऽस्तमुपैष्यति ।
असंसारप्रसङ्गोऽथ शेषेऽप्यर्थे भविष्यति ॥ ९९ ॥
ततोऽहमपि शून्येऽस्मिन्नष्टचन्द्रार्कतारके ।
चेतःप्रशान्तिमाधाय स्थितिमेष्यामि तत्पदे ॥ १०० ॥
अकाण्ड एवमेवं हि जगत्युपशमं गते ।
नेह श्रेयोऽनुपश्यामि मन्ये जीवन्तु दानवाः ॥ १ ॥
दैत्योद्योगेन विबुधास्ततो यज्ञतपःक्रियाः ।
तेन संसारसंस्थानमसंसारक्रमोऽन्यथा ॥ २ ॥
आकल्पमिह वस्तव्यं देहेनानेन तेन च ।
एवं हि नियतिर्दैवी निश्चिता पारमेश्वरी ॥ ३ ॥
इति संचिन्त्य सर्वात्मा निर्गत्य क्षीरसागरात् ।
प्रह्लादनगरं प्राप्य प्रासादतलमाविशत् ॥ ४ ॥
वैनतेयासनस्थोऽसौ लक्ष्मीविधुतचामरः ।
स्वायुधादिपरीवारो देवर्षिमुनिवन्दितः ॥ ५ ॥
महात्मन्संप्रबुध्यस्वेत्येवं विष्णुरुदाहरन् ।
पाञ्चजन्यं प्रदध्मानो ध्वनयन्ककुभां गणम् ॥ ६ ॥

स्वर्गस्याभावाद्भुवि यज्ञतपःप्रमुखानि स्वर्गफलानि सत्कर्माण्युच्छिद्येरन् ॥ ९८ ॥ ततो धर्मस्याप्रवृत्तेः भूलोकस्याप्युपरतौ असंसारप्रसङ्ग सति पालनीयस्याभावात् ॥ ९९ ॥ अहमपि स्वपदे विश्राम्येयम् ॥ १०० ॥ ततश्चाकाण्ड एव प्रलयः स्यादिति दानवानां जीवनमेव वरं मन्ये ॥ १ ॥ ततो दैत्योद्योगेन विबुधानां विजिगीषायां यज्ञादिक्रियाप्रवृत्तौ संसारस्य स्थितिर्नान्यथेति ॥ २ ॥ ३ ॥ ४ ॥

महता तेन शब्देन वैष्णवप्राणजन्मना ।
बभूव स प्रबुद्धात्मा दानवेशः शनैःशनैः ॥ ७ ॥
ब्रह्मरन्ध्रकृतोत्थाना प्राणशक्तिरथासुरम् ।
शनैराक्रमयामास नाडीभ्यः सर्वतोमुखम् ॥ ८ ॥
प्राणेषु रन्ध्रवक्रेषु प्रवृत्तेष्वथ तस्य चित् ।
चेत्योन्मुखी बभूवान्तःप्राणदर्पणबिम्बिता ॥ ९ ॥
चेतनीयोन्मुखी चेत्यचिन्मनस्तामुपाययौ ।
द्वित्वं मुकुरसंक्रान्ता मुखश्रीरिव राघव ॥ ११० ॥
किंचिदङ्कुरिते चित्रे नेत्रे विकसनोन्मुखे ।
शनैर्बभूवतुस्तस्य प्रान्तनीले यथोत्पले ॥ ११ ॥
प्राणापानपरामृष्टनाडीविवरसंविदः ।
वातार्तस्येव पद्मस्य स्पन्दोऽस्य समजायत ॥ १२ ॥

॥ ५ ॥ ६ ॥ महतेति ॥ वैष्णवप्राणजन्मना विष्णुसंबन्धप्राणवायुजनितेन ॥ ७ ॥ ब्रह्मरन्ध्रेति ॥ अथ प्रबोधानन्तरं प्राणशक्तिश्चैतन्यशक्तिः ब्रह्मरन्ध्रकृतोत्थाना पूर्वं समाधिसमये तत्रैव ब्रह्मरन्ध्रे स्थितेति तत उत्थिता सती सर्वाभ्यो नाडीभ्यः शनैरसुरमाक्रमयामास व्याप्तवती ॥ ८ ॥ प्राणेष्विति ॥ रन्ध्रवक्रेषु नवकेषु नवसु रन्ध्रेषु प्राणेष्विन्द्रियेषु प्रवृत्तेषु सत्सु तस्य चित् अन्तःप्राणदर्पणबिम्बिता अन्तःप्राणे अन्तरिन्द्रिय एव दर्पणे प्रतिबिम्बिता चेत्योन्मुखी बभूव ॥ ९ ॥ चेतनीयेति ॥ चेतनीयं चेत्यं दृश्यमिति पर्यायाः । चेतनीयोन्मुखी चेत्यचित् अन्तःकरणप्रतिबिम्बितत्वाच्चेत्यभूता सा चित् मनस्तां मनोरूपतामुपाययौ । मुखश्रीर्मुखशोभा मुकुरसंक्रान्ता दर्पणप्रतिफलिता द्वित्वं रूपान्तरमिवेति ॥ ११० ॥ ॥ ११ ॥ प्राणेति ॥ प्राणापानपरामृष्टनाडीविवरसंविदः प्राणापा-

निमेषान्तरमात्रेण मनः पीवरतां ययौ ।
अथासौ विकसन्नेत्रमनःप्राणवपुर्बभौ ॥ १३ ॥
प्रफुल्लनयनं जातं मानसं पीवरं स्मृतम् ।
उवाचैनां त्रिलोकेशः पर्जन्य इव बर्हिणम् ॥ १४ ॥
साधो स्मर महालक्ष्मीमात्मीयां स्मर चाकृतिम् ।
अकाण्ड एव किं देहविरामः क्रियते त्वया ॥ १५ ॥
हेयोपादेयसंकल्पविहीनस्य शरीरगैः ।
भावाभावैस्तत्रानर्थः कस्तिष्ठोत्तिष्ठ संप्रति ॥ १६ ॥
जीवन्मुक्तेन भवता राज्य एव हि तिष्ठता ।
क्षेपणीया गतोद्वेगमाकल्पान्तमियं तनुः ॥ १७ ॥
नोदिता द्वादशादित्या न विलीनाः शिलोच्चयाः ।
न जगज्ज्वलितं साधो तनुं त्यजसि वै मुधा ॥ १८ ॥
कृशोऽतिदुःखी मूढोऽहमेताश्चान्याश्च भावनाः ।
मतिं यस्यावलुम्पन्ति मरणं तस्य राजते ॥ १९ ॥
आशापाशनिबद्धोऽन्तरितश्चेतश्च नीयते ।
यो विलोलमनोवृत्त्या मरणं तस्य राजते ॥ १२० ॥

नाभ्यां परामृष्टा प्रबोधिता नाडीविवरेषु संविच्चेतना यस्य तस्य वातेरितपद्मस्येव स्पन्दः समजायतेति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ हेयेति ॥ हेयोपादेयविषयसंकल्पविहीनस्य तव शरीरगैर्भावाभावैः इष्टानिष्टैः कोऽनर्थः का हानिः । तस्माज्जीवन्मुक्तपदे तिष्ठ समाधेरुत्तिष्ठ ॥ १६ ॥ जीवन्निति ॥ क्षेपणीया प्रवर्तनीया । गतोद्वेगं विगतभयम् ॥ १७ ॥ १८ ॥ कृश इति ॥ दारिद्र्यादिदुःखवासनाविलुप्तधैर्यस्यैव मरणं शोभत इत्यर्थः ॥ १९ ॥ आशेति ॥ अन्तः अन्तःकरणे आशापाशनिबद्धत्वात् विलोलमनोवृत्त्या पशुवदितस्ततो नीयमानस्य सुखलेशा-

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
यः समः सर्वभूतेषु जीवितं तस्य शोभते ॥ २१ ॥
योऽन्तःशीतलया बुद्ध्या रागद्वेषविमुक्तया ।
साक्षिवत्पश्यतीदं हि जीवितं तस्य शोभते ॥ २२ ॥
येन सम्यक्परिज्ञाय हेयोपादेयमुक्तताः ।
चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते ॥ २३ ॥
ग्राह्यग्राहकसंबन्धे क्षीणशान्तिरुदेत्यलम् ।
स्थितिमभ्यागता शान्तिर्मोक्षनाम्नाभिधीयते ॥ २४ ॥
तदुत्तिष्ठासुराधीश सिंहासनमुपाश्रय ।
यावदाश्वभिषेकं ते स्वयमेव ददाम्यहम् ॥ २५ ॥
पाञ्चजन्यरवं श्रुत्वा य इमे समुपागताः ।
सिद्धाः साध्याः सुरौघाश्च कुर्वन्तु तव मङ्गलम् ॥ २६ ॥
अथैनं हरिराहूतैः क्षीरोदाद्यैर्महाब्धिभिः ।
गङ्गादिभिः सरित्पूरैः सर्वतीर्थजलैस्तथा ॥ २७ ॥

भावान्मरणमेव वरमित्यर्थः ॥ १२० ॥ जीवन्मुक्तस्य तु जीवितमेव शोभत इत्याह त्रिभिः—यस्येति ॥ यस्य भावोऽन्तःकरणवृत्तिः नाहंकृतः देहादावहंममाभिमानशून्यः बुद्धिश्च हर्षविषादादिभिः न लिप्यते न स्पृश्यते यश्च सर्वभूतेषु समः समदर्शी तस्य जीवित शोभते ॥ २१ ॥ २२ ॥ येनेति ॥ सम्यक्परिज्ञाय । आत्मतत्त्वमिति शेषः । चित्तस्यान्ते चित्तलयस्थाने स्वात्मन्येव चित्तमर्पितम् । तदायत्तं कृतमित्यर्थः ॥ २३ ॥ ग्राह्येति ॥ ग्राह्यग्राहकसंबन्धे क्षीणे ग्राह्यादिभेदप्रतीतौ निवृत्तायां या शान्तिः चित्तस्य निर्विकारता उदेति सैव स्थितिमभ्यागतासती मोक्ष इत्युच्यते ॥ २४ ॥ २५ ॥

सुरासुरैः स्तूयमानं स्तूयमानः सुरासुरैः ।
अभिषिक्तमुवाचेदं प्रह्लादं मधुसूदनः ॥ २८ ॥
यावन्मेरुर्धरा यावद्यावच्चन्द्रार्कमण्डलम् ।
अखण्डितगुणश्लाघी तावद्राजा भवानघ ॥ २९ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा पुण्डरीकाक्षः सनरामरकिंनरः ।
द्वितीय इव संहारस्तत्रैवान्तर्धिमाययौ ॥ १३० ॥

राम उवाच ॥

परे पदे परिणतं पाञ्चजन्यस्वनैर्मनः ।
कथं प्रबुद्धं भगवन्प्रह्लादस्य महात्मनः ॥ ३१ ॥

वसिष्ठ उवाच ॥

भ्रष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता ।
हृदि जीवद्विमुक्तानां शुद्धा वसति वासना ॥ ३२ ॥
पावनी परमोदारा शुद्धसत्त्वानुपातिनी ।
आत्मध्यानमयी नित्यं सुषुप्तस्थेव तिष्ठति ॥ ३३ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ १३० ॥ परे पद इति ॥ परे पदे ब्रह्मणि परिणतं तादात्म्यमापन्नम् ॥ ३१ ॥ भ्रष्टेति ॥ भ्रष्टबीजोपमा अतएव भूयो जन्मरूपेणाङ्कुरेण विवर्जिता शुद्धा वासना जीवन्मुक्तानां हृदि वसति ॥ ३२ ॥ तामेव विशिनष्टि—पावनीति ॥ पावनी पापलेपाभावात् । परमोदारा कैवल्यसुखप्रदत्वात् । शुद्धसत्त्वानुपातिनी रजस्तमोभ्यामसंभिन्नं सत्त्वगुणमेवानुवर्तमाना आत्मध्यानमयी सा शुद्धवासना जीवन्मुक्ते सुषुप्तस्थवासनावन्नि-

अपि वर्षसहस्रान्ते तयैवान्तरवस्थया ।
सति देहे प्रबुध्यन्ते कुतोऽत्युच्छूनया शनैः ॥ १३४ ॥

इति श्रीवाल्मीकीये मोक्षोपाय उपशमप्रकरणे प्रह्लादोपाख्यानं नाम चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः

वसिष्ठ उवाच ॥

रामापर्यवसानेयं माया संसृतिनामिका ।
आत्मचित्तजयेनैव वश्यमायाति नान्यथा ॥ १ ॥
जगन्मायाप्रपञ्चस्य वैचित्र्यप्रतिपत्तये ।
इतिहासमहं वक्ष्ये शृणुष्वावहितोऽनघ ॥ २ ॥
अस्त्यस्मिन्वसुधापीठे कोसलो नाम मण्डलम् ।
तत्राभूद्ब्राह्मणः कश्चिद्गुणी गाधिरिति श्रुतः ॥ ३ ॥
किमप्यधिगतं कार्यं विनिधाय स चेतसि ।
बन्धुवृन्दाद्विनिष्क्रम्य तपस्तप्तुं वनं ययौ ॥ ४ ॥
उत्फुल्लकमलं प्राप सरस्तत्र स विप्रराट् ।
आकण्ठमम्बुनिर्मग्नस्तपस्तत्र चकार सः ॥ ५ ॥

लीना तिष्ठति ॥ ३३ ॥ अपीति ॥ अन्तरवस्थया अन्तरवस्था यस्यास्तया कुतोऽपि कारणात् शनैरुच्छूनया प्रवृद्धया तयैव वासनया देहे सति वर्षसहस्रान्तेऽपि प्रबुध्यन्ते ॥ १३४ ॥ इति संसारतरणिनाम्नि वासिष्ठविवरण उपशमप्रकरणे प्रह्लादोपाख्यानं नाम चतुर्थः सर्गः ॥ ४ ॥

पूर्वमीश्वरानुग्रहादेवात्मतत्त्वावबोधेन संसाराख्योपशान्तिरुक्ता । इदानीं चित्तजयमन्तरेण जगन्माया नोपशाम्यतीति दर्शयितुं मायावैचित्र्यप्रतिपादनाय लवणवृत्तान्तवद्गाधिवृत्तान्तो निरूप्यते ॥

ययौ मासाष्टकं तस्य मग्नस्य सरसोऽम्भसि।
अथैनं तपसा तस्माजगामैकदा हरिः ॥ ६ ॥

श्रीभगवानुवाच ॥

विप्रोत्तिष्ठ पयोमध्याद्गृहाणाभिमतं वरम्।
अभीप्सितफलोपेतो जातस्ते नियमक्रमः ॥ ७ ॥

गाधिरुवाच ॥

असंख्येयजगद्भूतहृत्पद्मकुहरालिने।
जगत्रयैकनलिनीसरसे विष्णवे नमः ॥ ८ ॥
मायामिमां त्वद्रचितां भगवन्पारमात्मिकीम्।
द्रष्टुमिच्छामि संसारनाम्नीमाश्चर्यकारिणीम् ॥ ९ ॥

वसिष्ठ उवाच ॥

इमां द्रक्ष्यसि मायां त्वं ततस्त्यजसि चेत्त्यज।
इत्युक्त्वान्तर्दधे विष्णुर्गान्धर्वमिव पत्तनम् ॥ १० ॥
गते विष्णौ समुत्तस्थौ जलात्स ब्राह्मणेश्वरः।
बभूव परितुष्टात्मा दर्शनेन जगत्पतेः ॥ ११ ॥
अथास्य कतिचित्तस्मिन्दिवसानि ययुर्वने।
हरिसंदर्शनानन्दवतो ब्राह्मणकर्मणा ॥ १२ ॥
एकदारब्धवान्स्नानं सरस्युदितपङ्कजे।
चिन्तयन्वैष्णवं वाक्यं महर्षिरिव मानसे ॥ १३ ॥

रामेत्यादिना ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ असंख्येयेति ॥ सर्वभूतान्तर्यामिणे सर्वजगदधिष्ठानाय चेत्यर्थः ॥ ८ ॥ मायामिति ॥ पारमात्मिकीं परमात्मसंबन्धिनीम् ॥ ९ ॥ १० ॥ ॥ ११ ॥ १२ ॥ एकदेति ॥ मानसे मानसाख्ये सरसि महर्षिरिव

जलस्यान्ते विधावन्तर्जलमेष चचार ह ।
अन्तर्जलविधौ तस्मिन्विस्मृतध्यानमन्त्रधीः ॥ १४ ॥
मृतमात्मानमात्मीये सदनेऽपश्यदातुरः ।
प्राणापानप्रवाहेण मुक्तमन्तर्धिमागतम् ॥ १५ ॥
आवृतं बन्धुभिः खिन्नैर्भार्यया पादयोः श्रितम् ।
मात्रा गृहीतं चिबुके नवव्यजनलाञ्छिते ॥ १६ ॥
अथ तत्कालकल्लोलप्रलापाकुलचेष्टितैः ।
नीतं श्मशानमास्थानं वसापङ्ककलङ्कितम् ।
तत्र ते ज्वलने दीप्ते चक्रुस्तं भस्मसाच्छवम् ॥ १७ ॥
अथापश्यदसौ गाधिः स्वाधिपीवरया धिया ।
हूणमण्डलपर्यन्तग्रामोपान्तनिवासिनाम् ॥ १८ ॥
श्वपचानां स्त्रियो गर्भे स्थितमात्मानमाकुलम् ।
शनैः पुक्कसया काले प्रसूतं मेचकच्छविम् ॥ १९ ॥
संपन्नं श्वपचागारे शिशुं श्वपचवल्लभम् ।
द्वादशाब्दिकतां त्यक्त्वा संस्थितं षोडशाब्दिकम् ॥ २० ॥
पीवराङ्गमुदारांसं पयोदमिव मेदुरम् ।
तमाललतयेवाथ वृतं श्वपचकान्तया ॥ २१ ॥

॥ १३ ॥ जलस्येति ॥ तस्मिन्विधौ स्नानविधौ ॥ १४ ॥ १५ ॥ आवृतमिति ॥ नवव्यञ्जनलाञ्छिते नवयौवनेन प्रत्यग्रश्मश्रुचिह्निते चिबुके वक्त्रस्याधोभागे वात्सल्यान्मात्रागृहीतमित्यन्वयः ॥ १६ ॥ अथेति ॥ अष्टभिः श्लोकैः गर्भप्रवेशमारभ्य गाधेरुत्तरोत्तरावस्थानदर्शनम् ॥ १७ ॥ अथेति ॥ स्वाधिपीवरया स्वमनोदुःखस्थूलया ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

स्तनस्तबकशालिन्या नवपल्लवहस्तया ।
विश्रान्तं वनकुञ्जेषु सुप्तं गिरिदरीषु च ॥ २२ ॥
निलीनं पत्रकुञ्जेषु गुल्मकेषु कृतालयम् ।
प्रसूतमथ शैलेषु पुत्रान्निजकुलाङ्कुरान् ॥ २३ ॥
कलत्रवन्तं संपन्नं स्थितं प्रक्षीणयौवनम् ।
संस्थितं मठिकां पर्णैः कृत्वा दूरे मुनीन्द्रवत् ॥ २४ ॥
जराजरठतां यान्तं स्वदेहमनु पुत्रकम् ।
अथापश्यदसौ गाधिर्यावत्तस्य कलत्रिणः ॥ २५ ॥
तत्कलत्रमशेषेण नीतमाहृत्य मृत्युना ।
ततः शोकपरीतात्मा प्रलापविकलाननः ॥ २६ ॥
तं विहाय निजं देशं विगतः साश्रुलोचनः ।
विजहार बहून्देशान्दुःखितश्चिन्तयान्वितः ॥ २७ ॥
एकदा प्राप कीराणां मण्डले श्रीमतीं पुरीम् ।
सामन्तैर्ललनाभिश्च नागरैश्च निरन्तरम् ॥ २८ ॥
स्वर्गमार्गोपमं राजमार्गमस्यामवाप सः ।
मणिरत्नकृतद्वारं तत्र मङ्गलहस्तिनम् ॥ २९ ॥
ददर्शामलशैलेन्द्रमिव संसारचञ्चलम् ।
मृते राजनि राजार्थं विहरन्तमितस्ततः ॥ ३० ॥
आलोकयन्तमादाय तं करेण सुचारुणा ।
स्वकण्ठे योजयन्मेरुतटेऽर्कमिव सादरम् ॥ ३१ ॥
तस्मिन्कण्ठगते नेदुर्जयदुन्दुभयोऽभितः ।
पूरिताशोऽवनौ राजा जयतीति जनस्वनः ।
उद्ययौ संप्रबुद्धानां विहगानामिवारवः ॥ ३२ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

तं तत्र वरयामासुर्मण्डनार्थं वराङ्गनाः ।
तादृशं तमुपाजग्मुः सर्वाः प्रकृतयस्ततः ॥ ३३ ॥
एवं स श्वपचो राज्यं प्राप कीरपुरान्तरे ।
कीरीकरतलाम्भोजप्रमृष्टचरणाम्बुजः ॥ ३४ ॥
परिविसृतनृपौजाः सर्वदिक्संस्थिताज्ञः
कतिपयदिवसेहासिद्धदेशव्यवस्थः ।
प्रकृतिभिरलमूढाशेषराजत्वभारः
स गवल इति नाम्ना तत्र राजा बभूव ॥ ३५ ॥

वसिष्ठ उवाच ॥

विलासिनीभिर्वलितो मन्त्रिमण्डलपूजितः ।
वन्दितः सर्वसामन्तैश्छत्रचामरशोभितः ॥ ३६ ॥
कीरेषु श्वपचो राज्यं वर्षाण्यष्टौ चकारह ।
यदृच्छयैकदा योऽसावतिष्ठत्त्यक्तभूषणः ॥ ३७ ॥
एक एवाजिरं बाह्यं तादृग्वेषः स निर्ययौ ।
तत्रापश्यद्धनश्यामं पीनं श्वपचपेटकम् ॥ ३८ ॥
धुनानं वल्लरीं तन्त्रीं करपल्लवलीलया ।
एकस्तस्मात्समुत्तस्थौ जरावान्रक्तलोचनः ॥ ३९ ॥

॥ ३३ ॥ ३४ ॥ परीति ॥ परिविसृतनृपौजाः सर्वतः प्रसृतराजतेजाः । कतिपयदिवसेहासिद्धदेशव्यवस्थः कतिपयैरल्पैरेव दिवसैरीहासिद्धा स्वेच्छामात्रेणैव सिद्धा देशव्यवस्था देशमर्यादा यस्य सः । प्रकृतिभिरमात्यादिभिः ऊढोऽशेषो राज्यत्वस्य राज्यस्य भारो यस्य ॥ ३५ ॥ ३६ ॥ ३७ ॥ तत्रेति ॥ श्वपचपेटकः श्वपचसमूहः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

भो कटञ्जेति सहसा वदन्कीरमहीपतिम् ।
उवाचेदं स कीरेशं हे बन्धो भो कटञ्जक ॥ ४० ॥
क्व नु स्थितोऽसि दिष्ट्याद्य दृष्टोऽसि चिरबान्धव ।
क्वासि विश्रान्तवान्कालमेतावन्तं वनान्तरे ॥ ४१ ॥
श्वपचोऽग्रे वदत्येवं राजा यावत्तया तया ।
चकार तत्कालतया चेष्टयैवावधीरणम् ॥ ४२ ॥
तावद्वातायनगताः कान्ताः प्रकृतयस्तथा ।
श्वपचोऽयमिति ज्ञात्वा म्लानतामलमाययुः ॥ ४३ ॥
सत्वरं प्रविवेशान्तःपुरमाम्लानमानवम् ।
मन्त्रिणो नागरा नार्यस्ततस्त्वेनं महीपतिम् ॥ ४४ ॥
नास्प्राक्षुरपि तिष्ठन्तं गृह एव शवं यथा ।
एक एव बभूवासौ जनमध्यगतोऽपि सन् ॥ ४५ ॥
सार्थादिगणनिर्मुक्तः परदेश इवाध्वगः ।
अथ सर्वे वयं दीर्घकालं श्वपचदूषिताः ॥ ४६ ॥
प्रायश्चित्तैर्न शुद्ध्यामः प्रविशामो हुताशनम् ।
इति निर्णीय नगरे नागरा मन्त्रिणस्तथा ॥ ४७ ॥
अभितो ज्वालयित्वाग्निं विविशुः सह बन्धुभिः ।
राजा सज्जनसंपर्कपवित्रीकृतधीरधीः ॥ ४८ ॥
एकलश्चिन्तयामास शोकव्याकुलचेतनः ।
मदर्थमित्यनर्थोऽयं देशेऽस्मिंस्थितिमागतः ॥ ४९ ॥
किंच जीवितदुःखेन मरणं मे महोत्सवः ।
इति निश्चित्य गवलो ज्वलिते ज्वलने पुरः ॥ ५० ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

पतङ्गवदनुद्वेगमकरोदाहुतिं वपुः ।
अत्रान्तरेऽनलक्षुब्धो गाधिर्मोहादबुध्यत ॥ ५१ ॥

वसिष्ठ उवाच ॥

मुहूर्तद्वितयेनासौ गाधिरासीद्गतभ्रमः ।
कोऽहं किमिव पश्यामि किमकार्षमहं किल ॥ ५२ ॥
एवं विचारयंश्चित्रमुदस्थादुदकान्तरात् ।
नित्यमेवमनन्तासु भ्रमदृष्टिषु देहिनाम् ॥ ५३ ॥
चेतो भ्रमति शार्दूलो वनराजिष्विवोन्मदः ।
अवधार्येति तं चित्तमोहं गाधिर्निनाय सः ॥ ५४ ॥
दिनानि कतिचित्तस्मिन्स्वक एवाश्रमे तदा ।
एकदा गाधिमागच्छत्कश्चित्प्रियतरोऽतिथिः ॥ ५५ ॥
परमां तृप्तिमानीतः फलपुष्परसाशनैः ।
अथ वन्दितसंध्यौ तौ कृतजप्यावुभावपि ॥ ५६ ॥
क्रमाच्छयनमासाद्य चक्रतुः पावनीः कथाः ।
तं पप्रच्छातिथिं गाधिः प्रसङ्गापतितं वचः ॥ ५७ ॥
किं ब्रह्मन्संकृशाङ्गस्त्वं किमिति श्रमवानसि ॥ ५८ ॥

अतिथिरुवाच ॥

अस्त्यस्मिन्वसुधापीठे उत्तराशानिकुञ्जके ।
कीरो नामेति विख्यातः श्रीमाञ्जनपदो महान् ॥ ५९ ॥
तत्राहमवसं मासं पूज्यमानः पुरे जनैः ।
एकदैकेन तत्रोक्तं कथाप्रस्तावतः क्वचित् ॥ ६० ॥

॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

इहाभूच्छ्वपचो राजा वर्षाण्यष्टौ द्विजेति मे ।
स एवान्ते परिज्ञातः प्रविष्टो ज्वलनं जवात् ॥ ६१ ॥
ततो द्विजशतानीह प्रविष्टानि हुताशनम् ।
इति तस्य मुखाच्छ्रुत्वा तस्मान्निर्गत्य मण्डलात् ॥ ६२ ॥
प्रयागे स्नानजप्यादि प्रायश्चित्तमहं द्विज ।
कृत्वा चान्द्रायणस्यान्ते तृतीयस्याद्य पारणम् ॥ ६३ ॥
इहाहमागतस्तेन श्रान्तोऽस्म्यतिकृशोऽस्मि च ॥ ६४ ॥

वसिष्ठ उवाच ॥

इति विप्रमुखाच्छ्रुत्वा विस्मयोद्धुरया धिया ।
गाधिः संचिन्तयामास मद्वृत्तान्तोऽयमीदृशः ॥ ६५ ॥
तदात्मश्वपचोदन्तं द्रष्टुं गच्छाम्यखिन्नधीः ।
निर्गत्याथ महाबुद्धिर्देशानुल्लङ्घ्य भूरिशः ॥ ६६ ॥
तत्तादृशसमाचारं हूणमण्डलमासदत् ।
तेनैव संनिवेशेन निजं श्वपचमन्दिरम् ॥ ६७ ॥
तथाऽपश्यदथान्यांश्च संनिवेशानितस्ततः ।
एवं जाताः स्मरन् गाधिः प्राक्तनीः श्वपचक्रियाः ॥ ६८ ॥
विस्मयोत्कम्पितशिरा धातुश्रेष्ठां परामृशत् ।
हूणमण्डलमुत्सृज्य कीरमण्डलमाययौ ॥ ६९ ॥
अथात्मनानुभूतानि दृष्टान्यासेवितानि च ।
स्थानानि नगरेऽपश्यज्जनेभ्यः श्रुतवांस्तथा ॥ ७० ॥
एषा हि माया महती तेन मे चक्रधारिणा ।
दर्शितेत्यधुना साधु मया स्मृतमखण्डितम् ॥ ७१ ॥

॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥
॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

इति संचिन्त्य निर्गत्य तस्माद्गाधिर्जनास्पदात् ।
कन्दरां प्राप्य शैलस्य तस्थौ तत्र च सिंहवत् ॥ ७२ ॥
तत्र संवत्सरं सार्धमपश्चुलुकभोजनः ।
तपश्चक्रे महातेजास्तुष्टये शार्ङ्गधन्वनः ॥ ७३ ॥
अथाजगाम शैलेन्द्रकन्दरे द्विजमन्दिरे ।
पयोधरवदच्छात्मच्छविश्चक्रगदाधरः ॥ ७४ ॥

श्रीभगवानुवाच ॥

विप्रवर्य त्वया दृष्टा माया मम गरीयसी ।
तपो गिरितटे कुर्वन्किमन्यदभिवाञ्छसि ॥ ७५ ॥
दत्तार्घं कीर्णकुसुमं प्रणम्याङ्गप्रदक्षिणैः ।
विष्णुमाह द्विजो वाक्यमम्भोदमिव चातकः ॥ ७६ ॥

गाधिरुवाच ॥

देव एषा त्वया माया दर्शितातितमोमयी ।
तस्या मर्म न जानामि भ्रमः सत्योऽभवत्कथम् ॥ ७७ ॥

श्रीभगवानुवाच ॥

विप्र पृथ्व्यादि चित्तस्थं न बहिःस्थं कदाचन ।
स्वप्नभ्रमपदार्थेषु सर्वैरेवानुभूयते ॥ ७८ ॥
यत्रानन्तजगज्जालं संस्थितं तेन चेतसा ।
श्वपचत्वं प्रकटितं यदि तद्विस्मयोऽत्र किम् ॥ ७९ ॥

॥ ७७ ॥ विप्रेति ॥ पृथ्व्यादि पृथिव्यादिरूपं जगच्चित्तस्थं चित्तस्यैव जगन्निदानत्वात्तत्रैव तिष्ठति न बहिःस्थं बहिस्तु वस्तुतो नास्तीत्यर्थः । अयं चार्थः स्वप्नाद्यवस्थासु सर्वैरनुभूयत एव स्वप्नादिषु चित्तगतस्यैव प्रपञ्चस्य परिस्फुरणात् ॥ ७८ ॥ यत्रेति ॥ यत्र चेतसि अनन्तजगज्जालं संस्थितं तेन सर्वप्रपञ्चपरिधारिणा

अवबुद्धा श्वपचता प्रतिभासवशाद्यथा ।
तथैवातिथिरायातो दृष्टवानसि संभ्रमे ॥ ८० ॥
तथैवोत्थाय गच्छामि प्राप्तोऽहं हूणमण्डलम् ।
तथैवेदं कटञ्जस्य प्राक्तनं संचितं गृहम् ॥ ८१ ॥
तथैव कीरनगरं प्राप्तोऽसि कथितं च मे ।
कीरे श्वपचराजत्वं दृष्टवान्विगतश्रमम् ॥ ८२ ॥
काकतालीययोगेन चेतसि श्वपचस्थितिः ।
सर्वेषां हूणकीराणां तथैव प्रतिबिम्बिता ॥ ८३ ॥
कदाचित्प्रतिभैकैव बहूनामपि जायते ।
काकतालीयस्थितिवद्विचित्रा हि मनोगतिः ॥ ८४ ॥
योऽसौ कटञ्जको नाम श्वपचो हूणमण्डले ।
तेनैव सन्निवेशेन स तथैवाभवत्पुरा ॥ ८५ ॥
तथैव विधिवैधुर्यं प्राप्य देशान्तरं गतः ।
बभूव कीरनृपतिः प्रविवेशानलं ततः ॥ ८६ ॥
तत्राभूत्केवलं चित्ते स्वसंबन्धितया तदा ।
प्रतिभाया तथाभूता कटञ्जाचारसंस्थितिः ॥ ८७ ॥
अयं सोऽहमिदं तन्म इति मज्जत्यनात्मवान् ।
सर्वमेवाहमेवेति तत्त्वज्ञो नावसीदति ॥ ८८ ॥

चेतसा श्वपचत्वमेकं चेत्प्रकटितं को नामात्र विस्मयः ॥ ७९ ॥
अवबुद्धेति ॥ प्रतिभासवशाद्भ्रान्तिवशाच्छ्वपचता यथावबुद्धा तथैवातिथिरायात इति अहमखिलं भ्रमं दृष्टवानिति च प्रतिभासवशादेवावबुद्धमित्यर्थः ॥ ८० ॥ ८१ ॥ ८२ ॥ काकेति ॥ यथा त्वच्चेतसि श्वपचस्थितिस्तथा यदृच्छया सर्वेषां हूणकीराणां चेतस्यपि श्वपचस्थितिः प्रतिबिम्बिता । भ्रान्तेर्विचित्रत्वादिति भावः ॥ ८३ ॥

विप्रापर्यवसानेयं माया संसृतिनामिका ।
आत्मचिन्तनयैवेयं क्षयमायाति नान्यथा ॥ ८९ ॥
न गृह्णाति पदार्थेषु विभागानर्थभावनाम् ।
तेनासौ भ्रममोहेषु तत्त्वज्ञो नावसीदति ॥ ९० ॥
ज्ञानस्यापरिपूर्णत्वान्न शक्नोषि मनोभ्रमम् ।
विनिवारयितुं तेन तेनैवाक्रम्यसे क्षणात् ॥ ९१ ॥
चित्तं नाभिः किलास्येह मायाचक्रस्य सर्वतः ।
स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते ॥ ९२ ॥
त्वमुत्तिष्ठ गिरेः कुञ्जे दश वर्षाणि खिन्नधीः ।
तपः कुरु ततो ज्ञानमनन्तं समवाप्स्यसि ॥ ९३ ॥

॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ अयमिति ॥ अयमहं सोऽहं इदमेतन्म इति भेदं भावयन् अनात्मवाननात्मज्ञो मज्जति संसारसागरे मग्नो भवति । तत्त्वज्ञस्तु सर्वमेवाहं अहमेव सर्वमिति अद्वैतं भावयन्संसारे नावसीदति ॥ ८८ ॥ ८९ ॥ नेति ॥ यस्मात्तत्त्वज्ञः पदार्थेषु विभागानर्थभावनां विभागविषयामनर्थहेतुं भावनां न गृह्णाति तेन हेतुना असौ तत्त्वज्ञो भ्रमहेतुषु मोहेष्वज्ञानेषु नावसीदति ॥ ९० ॥ ज्ञानस्येति ॥ ज्ञानस्यात्मतत्त्वज्ञानस्यापरिपूर्णत्वात् परिच्छिन्नविषयत्वात् मनोभ्रमं विनिवारयितुं न शक्नोषि तेनैव हेतुना तेनैव मनोभ्रमेणाक्रम्यसे परिभूयसे ॥ ९१ ॥ चित्तमिति ॥ अस्य जगद्रूपस्य मायाचक्रस्य चक्रमिव भ्रमणहेतोर्मायाप्रपञ्चस्य चित्तमेव नाभिर्मध्यगतविवरं किल प्रसिद्धं चक्रप्रवृत्तिहेतुत्वात् तत्तादृशं मायाचक्रनाभिभूतं चित्तं कर्म सर्वतः सर्वत्राक्रम्य निरुध्य स्थीयते चेन्निर्विकारमवस्थीयते चेत्तर्हि तन्मायाचक्रं कर्तृ किंचिदपीषदपि नावबाधते ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥

इत्युक्त्वा पुण्डरीकाक्षस्तत्रैवान्तरधीयत ।
गाधिर्विवेकवशजं वैराग्यं परमं गतः ॥ ९४ ॥
जगाम करुणार्द्रात्मा नियमायावनीधरम् ।
निरस्ताशेषसंकल्पस्तीव्रं तत्राकरोत्तपः ॥ ९५ ॥
दश वर्षाणि तेनासावात्मज्ञानमवाप ह ॥ ९६ ॥

अरमत तदनु स्वां प्राप्य सत्तां महात्मा
व्यपगतभयशोको भोगभूमावनिच्छः ।
सततविततजीवन्मुक्तरूपः प्रशान्तः
सकल इव शशाङ्कोऽघूर्णितापूर्णचेताः ॥ ९७ ॥

इति श्रीवाल्मीकीये मोक्षोपाय उपशमप्रकरणे गाधिवृत्तान्तकथनं नाम पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः

### वसिष्ठ उवाच ॥

एवमेषातिवितता दुर्ज्ञाना रघुनन्दन ।
महामोहकरी माया विषमा पारमात्मिकी ॥ १ ॥

॥ ९६ ॥ अरमतेति ॥ स्वां परिपूर्णां सत्तां महासत्तां प्राप्य अरमत । आत्मन्येवेति शेषः । अघूर्णितापूर्णचेताः अघूर्णितमभ्रान्तम् ॥ ९७ ॥ इति श्रीसंसारतरणिनाम्नि वासिष्ठविवरण उपशमप्रकरणे गाध्युपाख्यानं नाम पञ्चमः सर्गः ॥ ५ ॥

पूर्वं चित्तोपशान्तये मायावैचित्र्यमुक्तम् । इदानीं दृढभूमेर्योगाभ्यासाच्चञ्चलमपि चित्तमुपशाम्यतीति उद्दालकोपाख्यानेन निरूप्यते—एवमित्यादिना ॥ पारमात्मिकी परमात्मसंबन्धिनी तच्छ-

अतो वच्मि महाबाहो मायेयं विषमान्वहम् ।
असावधानमनसं संयोजयति संकटे ॥ २ ॥
चित्ताक्रमणमात्रात्तु परमादौषधादृते ।
प्रयत्नेनापि संसारमहारोगो न शाम्यति ॥ ३ ॥
वर्तमानं क्रमायातं भजद्बाह्यधिया क्षणम् ।
भूतं भविष्यदभजद्याति चित्तमचित्तताम् ॥ ४ ॥
संकल्पाशानुसन्धानवर्जनं चेत्प्रतिक्षणम् ।
करोषि तदचित्तत्वं प्राप्त एवासि पावनम् ॥ ५ ॥
चेतनं चित्तरिक्तं हि प्रत्यक्चेतनमुच्यते ।
निर्मनस्कस्वभावं तु न तत्र कलनामलः ॥ ६ ॥
सा सत्यता सा शिवता सावस्था पारमात्मिकी ।
सर्वज्ञता सा सा तृप्तिर्ननु यत्र मनः क्षतम् ॥ ७ ॥

क्तिरूपत्वात् ॥ १ ॥ २ ॥ ३ ॥ वर्तमानमिति ॥ क्रमायातं वर्णाश्रमक्रमवशादागतं वर्तमानमेव कार्यं बाह्यधिया अनादरया बुद्ध्या क्षणमात्रमनुसंदधत् भूतं भविष्यच्च कार्यमभजत् अननु-संदधानं चित्तमचित्ततां निर्विकल्पतां याति ॥ ४ ॥ संकल्पेति ॥ एवमेव करिष्यामीति मानसं कर्म संकल्पः । इदं मे स्यादिति प्रार्थनमाशा । अतीतानुस्मरणमनुसन्धानम् ॥ ५ ॥ चेतनमिति ॥ चित्तरिक्तं विकल्पविहीनं चेतनं चैतन्यं प्रत्यक्चेतनं प्रत्यगात्मस्वरूप-चैतन्यमुच्यते । तत्र प्रत्यक्चैतन्ये निर्मनस्कस्वभावत्वात् कलनामलः अविद्याकृतः कलङ्को नास्ति ॥ ६ ॥ सेति ॥ यत्र यस्यां दशायां मनः क्षतं विनष्टं सैव दशा सत्यता निर्विकारता । जीवन्मुक्ततेति यावत् । सैव शिवता विदेहमुक्तता । सैव पारमात्मिकी अवस्था ।

अविवेकादुपाहृत्य चेतः सोद्यमनिश्चयैः ।
बलात्कारेण संयोज्यं शास्त्रसत्पुरुषक्रमैः ॥ ८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
निरस्तमननोऽनन्ते संविन्मात्रपरो भव ॥ ९ ॥
ममेदं तदयं सोऽहमिति संत्यज्य वासनाः ।
एकनिष्ठतयान्तस्थसंविन्मात्रपरो भव ॥ १० ॥
मलं संवेद्यमुत्सृज्य मनो निर्मलयन्परम् ।
आशापाशानलं छित्त्वा स्वसंवित्तिमयो भव ॥ ११ ॥
अशुभाशुभसंकेतः संशान्ताशाविषूचिकः ।
नष्टेष्टानिष्टदृष्टिस्त्वं संवित्सारपरो भव ॥ १२ ॥

सैव च सर्वज्ञता। सैव तृप्तिः आनन्दरूपता चेत्यर्थः ॥ ७ ॥ अविवेकादिति ॥ सोद्यमनिश्चयैः उद्यम उत्साहः तत्सहितैर्निश्चयैः आत्मानात्मविवेकहेतुभिः प्रमाणतर्कैश्चेतः कर्म अविवेकादात्मनो देहादावभिमानादुपाहृत्य उद्धृत्य बलात्कारेण पुरुषप्रयत्नेन शास्त्रसत्पुरुषक्रमैरध्यात्मशास्त्रैरात्मविदामाचारक्रमैश्च संयोज्यम् ॥ ८ ॥ अथ पञ्चभिः श्लोकैरात्मानुसंधानमुपदिशति—प्रलपन्निति ॥ प्रलापादिषु संनिधिमात्रेण तत्प्रवर्तके सर्वसाक्षिणि निर्विकल्पे अनन्ते संविन्मात्र एव तात्पर्यवान्भव ॥ ९ ॥ ममेति ॥ इदं मम जन्म सोऽहं अयमहमिति भेदवासनाः संत्यज्य एकनिष्ठतया सर्वाधिष्ठानमेकमेव ब्रह्मेति निश्चयेन अन्तस्थे संविन्मात्रे तात्पर्यवान्भव ॥ १० ॥ मलमिति ॥ आशारूपान्पाशानलं छित्त्वा संवेद्यं दृश्यमेव मलमुत्सृज्य मनः परं निर्मलयन्स्वसंवित्तिपरो भव ॥ ११ ॥ अशुभेति ॥ अशुभाशुभसंकेतः अविद्यमानः शुभमशुभमिति च

आत्मतापरते त्यक्त्वा निर्विभावो जगत्स्थितौ ।
यज्ञस्तम्भवदात्मानमवलम्ब्य स्थिरो भव ॥ १३ ॥
तदा संक्षीयते मोहः संसारभ्रमकारणम् ।
निर्मलायां निराशायां स्वसंवित्तौ यदा स्थितिः ॥ १४ ॥
स्वभावमालोकयतः स्वानन्दमयसंस्थितेः ।
रसायनमपि स्वादु राम प्रतिविषायते ॥ १५ ॥
दूरादात्मज्ञतायाति चित्ते पीवरतां गते ।
आलोकलक्ष्मीरभितो महामेघ इवोत्थिते ॥ १६ ॥
अनात्मन्यात्मभावेन देहमात्रास्थया धिया ।
पुत्रदारकुटुम्बैश्च चेतो गच्छति पीनताम् ॥ १७ ॥

संकेतो भेदोल्लेखो यस्य संशान्ता आशारूपा विषूचिका यस्य नष्टा इष्टदृष्टिः अनिष्टदृष्टिश्च यस्य तादृशस्त्वं संवित्सारपरो भव ॥ १२॥ आत्मतेति ॥ चेतनाचेतनात्मके प्रपञ्चे भेदभावनां परित्यज्यात्मानमेव केवलमनुसंदधानो यज्ञस्तम्भवत्स्थिरो निर्विकल्पो भव ॥१३॥ ॥ १४ ॥ स्वभावमिति ॥ स्वभावमात्मस्वरूपमवलोकयतः साक्षात्कुर्वतः अतएवानन्दमयी संस्थितिर्यस्य तस्य पुंसः स्वादु मधुरमपि रसायनं रसवद्वस्तु प्रतिविषायते प्रतिकूलं विषमिव भवति । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः ॥ १५ ॥ दूरादिति ॥ चित्ते पीवरतां संसारवासनाभिः स्थूलतां गते सति आत्मज्ञता दूराद्याति । अभितो महामेघ उत्थिते आलोकलक्ष्मीरिव प्रकाशसंविदिवेत्यन्वयः ॥ १६ ॥ चित्तस्य कथं पीवरत्वमित्याकाङ्क्षायां पञ्चभिः श्लोकैः पीनतामाह—अनात्मनीत्यादिना ॥ अनात्मनि देहादावात्मभावेन हेतुना देहमात्रे आस्था आदरो यस्यास्तया धिया पुत्रदारा-

अहंकारविकारेण ममतामललीलया ।
इदं ममेति भावेन चेतो गच्छति पीनताम् ॥ १८ ॥
आधिव्याधिविलासेन समाश्वासेन संसृतौ ।
हेयादेयविभागेन चेतो गच्छति पीनताम् ॥ १९ ॥
स्नेहेन धनलोभेन लाभेन मणियोषिताम् ।
आपातरमणीयेन चेतो गच्छति पीनताम् ॥ २० ॥
दुराशाक्षीरपानेन भोगानिलबलेन च ।
आश्वासनेन चारेण चित्ताहिर्याति पीनताम् ॥ २१ ॥
उद्दालकवदालूनं विशीर्णं पञ्चभूतकम् ।
कृत्वा कृत्वा धिया धीर धीरयान्तर्विचारय ॥ २२ ॥

राम उवाच ॥

केन क्रमेण भगवन्मुनिनोद्दालकेन तत् ।
भूतपञ्चकमालूनं कृत्वान्तःप्रविचारितम् ॥ २३ ॥

दिभिः कुटुम्बैः पोष्यवर्गैश्चेतः पीनतां स्थूलतां गच्छति ॥ १७ ॥ अहंकारेति॥अहंकाररूपविकारेण इदं ममेत्येवंरूपेण भावेन प्रवृत्ता या ममतारूपस्य मलस्य लीला हेला तया चेतः पीनतां गच्छति ॥ १८ ॥ आधीति ॥ समाश्वासेन शुभनिश्चयेन ॥ १९ ॥ स्नेहेनेति ॥ पुत्र-दारादिस्नेहेन आपातरमणीयेन अविचारितरम्येण मणियोषितां लाभेन प्रवृत्तो यो धनलोभस्तेन च चेतः पीनतां गच्छति ॥ २० ॥ दुराशेति ॥ अहिः क्षीरपानेन अनिलप्रचारबलेन सम्यक्करोषीत्या-श्वासनेन स्वैरचारेण पीनतां याति तद्वच्चित्तं दुराशादिभिरित्यर्थः ॥ २१ ॥ उद्दालकवदिति ॥ आलूनं विशीर्णं आसमन्तात्लूनं छिन्नं च तद्विशीर्णं विक्षिप्तं चेति तथा ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

वसिष्ठ उवाच ॥

शृणु राम यथा पूर्वं भूतवृन्दविचारणात् ।
उद्दालकेन संप्राप्ता परमा दृष्टिरक्षता ॥ २४ ॥
गन्धमादनशैलेन्द्रनाम्नः काचित्किल स्थली ।
विद्यते कीर्णकुसुमा कर्पूरद्रुमधूसरा ॥ २५ ॥
तत्र कस्मिंश्चिदुचिते सानौ सफलपादपे ।
उद्दालको नाम मुनिरासीदुद्दामतापसः ॥ २६ ॥
प्रथमं तु बभूवासावल्पप्रज्ञोऽविचारवान् ।
ततः क्रमेण तपसा शास्त्रार्थैर्नियमैर्यमैः ॥ २७ ॥
विवेकमाजगामैनमथेदं समचिन्तयत् ।
किं तत्प्राप्यं प्रधानं स्याद्यद्विश्रान्तौ न शोचति ॥ २८ ॥
कदाहं त्यक्तमनने पदे परमपावने ।
चिरं विश्रान्तिमेष्यामि मेरुशृङ्ग इवाम्बुदः ॥ २९ ॥
कदा शममुपैष्यन्ति ममान्तर्भोगसंविदः ।
इदं कृत्वेदमप्यन्यत्कर्तव्यमिति चञ्चलाः ॥ ३० ॥
कदाहं बहुकल्लोलां नावा परमया धिया ।
परितीर्णो भविष्यामि मत्तां तृष्णातरङ्गिणीम् ॥ ३१ ॥
ईहितानीहितैर्मुक्तो हेयोपादेयवर्जितः ।
कदाहं स्वस्तिमेष्यामि स्वप्रकाशपदे स्थितः ॥ ३२ ॥
कदोपशान्तमननो धरणीधरकन्दरे ।
समेष्यामि शिलासाम्यं निर्विकल्पसमाधिना ॥ ३३ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

निरंशध्यानविश्रान्तमूकस्य मम मूर्धनि ।
कदा तार्णं करिष्यन्ति कुलायं वनपुत्रिकाः ॥ ३४ ॥
इति चिन्तापरवशो वन उद्दालको द्विजः ।
पुनःपुनस्तूपविश्य ध्यानाभ्यासं चकार ह ॥ ३५ ॥
विषयैर्नीयमाने तु चित्ते मर्कटचञ्चले ।
न स लेभे समाधानप्रतिष्ठां प्रीतिदायिनीम् ॥ ३६ ॥
कदाचिद्बाह्यसंस्पर्शपरित्यागादनन्तरम् ।
तस्यागच्छच्चित्तकपिरान्तरस्पर्शसंचयान् ॥ ३७ ॥
कदाचिदान्तरस्पर्शाद्बाह्यं विषयमाददे ।
तस्योड्डीय मनो याति कदाचित्त्रस्तपक्षिवत् ॥ ३८ ॥
कदाचिदुदितार्काभं तेजः पश्यति विस्तृतम् ।
कदाचित्केवलं व्योम कदाचिन्निबिडं तमः ॥ ३९ ॥
इति पर्याकुलस्वान्तः स लुठन्ध्यानवृत्तिषु ।
अतिपर्याकुलमना विजहारारतिर्गिरौ ॥ ४० ॥
समग्रजनदुःप्रापामेकदा प्राप्य कन्दराम् ।
संशान्तसर्वसंचारां मुनिर्मोक्षदशामिव ॥ ४१ ॥

निरंशेति ॥ निरंशध्यानविश्रान्तमूकस्य निरंशध्यानं निर्विकल्पकसमाधिः । तार्णं तृणमयम् । कुलायं नीडम् । वनपुत्रिका वनपतङ्गिकाः यत्कृतं मधु पौत्रिकमुच्यते ॥ ३४ ॥ ३५ ॥ ३६ ॥ कदाचिदिति ॥ स्पृशन्तीति स्पर्शा विषयाः । बाह्यस्पर्शपरित्यागाद्बाह्यविषयपरित्यागादान्तरस्पर्शसंचयान्मनोरथपरिकल्पितान्विषयचयान् ॥ ३७ ॥ ३८ ॥ कदाचिदिति ॥ रजस उद्रेके उदितार्काभं विस्तृतं तेजः पश्यति । सत्त्वोद्रेके तु केवलं व्योम । तमस उद्रेके तु निबिडं तम इति विवेकः

स तां विवेश धर्मात्मा गन्धमादनकन्दराम् ।
चकारासनमम्लानैः पत्रैरन्तस्थगुच्छकम् ॥ ४२ ॥
तस्य प्रस्तारयामास पृष्ठे चारु मृगाजिनम् ।
तत्रोपाविशदावेशाच्चेतः स तनुतां नयन् ॥ ४३ ॥
बुधवत्सुदृढं बध्वा पद्मासनमुदङ्मुखः ।
पार्ष्णिभ्यां वृषणौ धृत्वा चकार ब्राह्ममञ्जलिम् ॥ ४४ ॥
वासनाभ्यः समुद्धृत्य मनोमृगमुपप्लुतम् ।
निर्विकल्पसमाध्यर्थं चकारेमां विचारणाम् ॥ ४५ ॥
अयि मूर्ख मनः कोऽर्थस्तव संसारवृत्तिभिः ।
धीमन्तो न निषेवन्ते पर्यन्ते दुःखदां क्रियाम् ॥ ४६ ॥

॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ बुधवदिति ॥ इदमत्र पद्मासनमभिप्रेतम् । यदुक्तमगस्त्यसंहितायाम्—'पादद्वयं समं सम्यगङ्कमूलद्वयोपरि । कृतं पद्मासनं ह्येतत्प्रशस्तं सर्वकर्मसु' इति । अतएव पार्ष्णिभ्यां पादपृष्ठभागाभ्यां वृषणौ धृत्वा नियम्येत्येतदुपपद्यते । चकार ब्राह्ममञ्जलिमिति । ब्रह्माञ्जलिर्नाम ब्रह्मानुध्यानसमये परस्पराभिमुखयोरुत्तानयोः पाण्योः संनिवेशः स चास्य पद्मासनस्याङ्गम् । यदुक्तमागमान्तरे—'उत्तानं वामचरणं दक्षिणोरुणि विन्यसेत् । उत्तानं सव्यचरणं वामोरुणि निवेशयेत् ॥ तन्मध्य ऊर्ध्वगोत्तानौ वामवामेतरौ करौ । निवेशयेदित्यनुषङ्गः । स्थित्वा निश्चलदृष्टिभ्यां नासाग्रमवलोकयेत् ॥ इदं पद्मासनं प्राहुर्मुख्यं ध्यानादिकर्मस्वि'ति । तथाच कालिदासः—'पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतासन्नमितोभयांसम् । उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये' इति ॥ ४४ ॥ ४५ ॥ ४६ ॥ अनुधावतीति ॥

अनुधावति यो भोगांस्त्यक्त्वा शमरसायनम् ।
संत्यक्तमन्दारवनः प्रयाति विषजाङ्गलम् ॥ ४७ ॥
यदि यासि महीरन्ध्रं ब्रह्मलोकमथापि वा ।
तन्न निर्वृतिमाप्नोषि विनोपशमनामृतम् ॥ ४८ ॥
इमा विचित्राः कलना भावाभावमयात्मिकाः ।
दुःखायैव भयोग्राय न सुखाय कदाचन ॥ ४९ ॥
शब्दादिगाभिरेताभिः किं मूर्ख हतवृत्तिभिः ।
यस्मात्किंचिदवाप्नोषि यस्मिन्वहसि निर्वृतिम् ।
तस्मिंश्चित्तशमे मूर्ख नानुधावसि किं पदम् ॥ ५० ॥
आगत्य श्रोत्रतां मूर्ख व्यर्थोत्थानोपबृंहिताम् ।
धिया शब्दानुसारिण्या मृगवन्मा क्षयं व्रज ॥ ५१ ॥
त्वक्त्वमागत्य दुःखाय स्पर्शोन्मुखतया तया ।
मूर्ख मा बध्यतामेहि गजीलुब्धगजेन्द्रवत् ॥ ५२ ॥

विषजाङ्गलं विषवृक्षभूयिष्ठमरण्यम् ॥ ४७ ॥ ४८ ॥ इमा इति ॥ कलनाः कल्पनाः । भावाभावमयात्मिकाः सदसद्वस्तुविषयत्वाद्भावमयः अभावमयश्चात्मा स्वरूपं यासां ताः । भयोग्राय भयेनोग्राय ॥ ४९ ॥ शब्दादीति ॥ शब्दादिगाभिः शब्दादीन्विषयान् गच्छन्तीति शब्दादिगाः ताभिः । यस्मादिति । यस्माच्छमात्किंचित्प्रयोजनं कैवल्यरूपं अवाप्नोषि । यस्मिन्निति । यस्मिन् शमे सति निर्वृतिं स्वरूपसुखं वहसि प्राप्नोषि तस्मिन् शमे किमिति पदं नानुधावसि नानुबध्नासि ॥ ५० ॥ आगत्येति ॥ शब्दानुसारिण्या श्रवणेच्छया शब्दमनुसरन्त्या धिया बुद्धिवृत्त्या व्यर्थोत्थानोपबृंहितां निःप्रयोजनेनैवोद्यमेन वर्धितां श्रोत्रतां श्रवणेन्द्रियत्वमागत्य मृगवल्लुब्धकगीतासक्तमृगवत्संक्षयं मा व्रज ॥ ५१ ॥ त्वक्त्वमिति ॥

रसनाभावमागत्य गर्धेनान्धदुरन्धसाम् ।
मा नाशमेहि बडिशपिण्डीलम्पटमत्स्यवत् ॥ ५३ ॥
चाक्षुषीं वृत्तिमाश्रित्य प्रभारूपचयोन्मुखीम् ।
मा गच्छ दग्धतां मूर्ख कान्तिलुब्धपतङ्गवत् ॥ ५४ ॥
घ्राणमार्गमुपाश्रित्य शरीराम्भोजकोटरे ।
गन्धोन्मुखतया बन्धं मा समाश्रय भृङ्गवत् ॥ ५५ ॥
कुरङ्गालिपतङ्गेभमीनास्त्वेकैकशो हताः ।
सर्वैरेतैरनर्थैस्तैर्व्याप्तस्याज्ञ कुतः सुखम् ॥ ५६ ॥
हे चित्त वासनाजालं बन्धाय भवतोऽभितः ।
यदि शाम्यसि तत्त्यक्त्वा तदानन्तो जयस्तव ॥ ५७ ॥

तया तादृश्या स्पर्शोन्मुखतया स्पर्शार्हसुखानुभवेच्छया दुःखाय केवलं त्वक्त्वं त्वगिन्द्रियत्वमागत्य गजीलुब्धगजेन्द्रवद्बध्यतां मा एहि ॥ ५२ ॥ रसनेति ॥ दुरन्धसां दुरन्नानां गर्धेन आस्वादनाकाङ्क्षया रसनेन्द्रियत्वमागत्य बडिशपिण्डीलम्पटमत्स्यवन्मा नाशमेहि । बडिशं मत्स्यवेधनम् । पिण्डी तद्गतोऽल्पो मांसपिण्डः ॥ ५३ ॥ चाक्षुषीमिति ॥ प्रभारूपचयोन्मुखीं प्रभावतो लावण्ययुक्तस्य रूपस्य चये ग्रहणे उन्मुखीं सावधानाम् ॥ ५४ ॥ घ्राणेति ॥ गन्धोन्मुखतया घ्राणमार्गमुपाश्रित्य शरीराम्भोजकोटरे बन्धं मा समाश्रयेत्यन्वयः ॥ ५५ ॥ कुरङ्गेति ॥ एकैकशः एकैकेन शब्दादिविषयेण ॥ ५६ ॥ हे चित्तेति ॥ हे चित्त, भवतो बन्धायैवाभितो वासनाजालं प्रवर्तते । तद्वासनाजालं त्यक्त्वा यदि शाम्यसि तत्तर्हि तव अनन्तो निरवधिको जयो विजयः स्यात् ॥ ५७ ॥

करोम्येष किमर्थं वा तवैतदनुशासनम् ।
विचारणावतः पुंसश्चित्तत्वमपि नास्ति यत् ॥ ५८ ॥
अनन्तस्यात्मतत्त्वस्य तन्वी मनसि संस्थितिः ।
न संभवति बिल्वान्तर्वासिता दन्तिनो यथा ॥ ५९ ॥
पादाङ्गुष्ठाच्छिरो यावत्कणशः प्रविचारितम् ।
न लब्धोऽसावहंनाम कः स्यादहमिति स्थितः ॥ ६० ॥
भरिताशेषदिक्कुञ्जं पश्याम्येकं जगत्त्रये ।
संवेदनमसंवेद्यं सर्वत्र विततात्मकम् ॥ ६१ ॥
दृश्यते यस्य नेयत्ता न नाम परिकल्पना ।
नैकता न च नानाता स्थूलता न च नाणुता ॥ ६२ ॥

करोमीति ॥ विचारणावतः आत्मव्यतिरेकेण चित्तं नाम किमिति विचारयतः पुंसः चित्तमेव नास्ति । अविचारसिद्धत्वादिदन्वया न स्फुरतीत्यर्थः ॥ ५८ ॥ अनन्तस्येति ॥ यथा हि दन्तिनो बिल्वफलाभ्यन्तरवासित्वं न संभवति तथा देशकालादिभिरपरिच्छिन्नस्यात्मतत्त्वस्य सूक्ष्मे मनसि स्थितिर्न संभवतीत्यर्थः ॥ ५९ ॥ पादेति ॥ पादाङ्गुष्ठमारभ्य शिरःपर्यन्तं कणशो मया प्रविचारितम् । तत्र पादादिकेशान्ते देहे अहंशब्दार्थो न लब्धः । अहमिति स्थितः पदार्थः कः स्यादिति चित्तं प्रति विचारः ॥ ६० ॥ भरितेति श्लोकद्वयं वाक्यम् ॥ यस्य वस्तुनः इयत्तादयो न दृश्यन्ते तादृशमसंवेद्यं प्रकाशान्तराप्रकाश्यं संवेदनमेकमेव भरिताशेषदिक्कुञ्जं पश्यामीत्यन्वयः ॥ ६१ ॥ इयत्ता परिच्छिन्नत्वम् । एकता एकत्वसंख्यायोगः । नानाता भेदः । स्थूलता महत्ता च परिमाणभेदः ॥ ६२ ॥

वेदनत्वात्सुसंवेद्ये मयि त्वं दुःखकारणम् ।
विवेकजेन बोधेन तदिदं हन्यसे मया ॥ ६३ ॥
इदं मांसमिदं रक्तमिमान्यस्थीनि देहके ।
इमे ते श्वासमरुतः कोऽसावहमिति स्थितिः ॥ ६४ ॥
मांसमन्यदसृक्चान्यदस्थीन्यन्यानि चित्त हे ।
बोधोऽन्यः स्पन्दनं चान्यत्कोऽसावहमिति स्थितिः ॥६५॥
इदं घ्राणमियं जिह्वा त्वगियं श्रवणे इमे ।
इदं चक्षुरयं स्पन्दः कोऽसावहमिति स्थितिः ॥ ६६ ॥
अहमेव हि सर्वत्र नाहं किंचिदपीह वा ।
इत्येवं सन्मयी दृष्टिर्नेतरो विद्यते क्रमः ॥ ६७ ॥
चिरमज्ञानधूर्तेन पोथितोऽस्मीत्यहन्तया ।
वृकेन दृशेनाटव्यां पशुपोतो यथा तथा ॥ ६८ ॥

वेदनत्वादिति ॥ वेदनत्वाज्ज्ञानरूपत्वात्स्वसंवेद्ये स्वयंप्रकाशे मयि हे चित्त, त्वं दुःखकारणं जायसे तत्तस्मात्कारणादिदं त्वं विवेकजेन बोधेन मया हन्यसे ॥ ६३ ॥ इदमिति ॥ इदन्तया गृह्यमाणेषु मांसादिषु कोऽसावहंशब्दार्थः न कोऽपि। इदन्ताहन्तयोर्विरोधादिति ॥ ६४ ॥ मांसमिति ॥ मांसादीनामात्मनोऽन्यत्वेन प्रतीयमानत्वादहन्ता नोपपद्यत इत्यर्थः । तत्र बोधो ज्ञानेन्द्रियव्यापारः ॥ ६५ ॥ इदमिति ॥ घ्राणादीन्यपीदन्तया प्रतीयमानत्वान्नाहंशब्दार्थ इत्यर्थः। तत्र स्पन्दो नाम क्रियाहेतुः कर्मेन्द्रियगणः ॥६६॥ अहमिति ॥ इह जगति सर्वत्र प्रतीयमानोऽहमेवेति वा इह प्रतीयमानं किंचिदपि अहं नेति वा या दृष्टिः सैव सन्मयी वास्तवी । इतरक्रमः परिच्छिन्नविषयाहंप्रत्ययरूपो न विद्यते । न वास्तव इत्यर्थः ॥ ६७ ॥ चिरमिति ॥ इत्येवमज्ञाननाम्ना धूर्तेन चिरमह-

दिष्ट्येदानीं परिज्ञातो मयैषोऽज्ञानतस्करः ।
पुनर्न संश्रयाम्येनं स्वरूपार्थापहारिणम् ॥ ६९ ॥
वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः ।
प्रवर्तते बहिः स्वार्थं वासना नात्र कारणम् ॥ ७० ॥
तस्मान्मूर्खाणीन्द्रियाणि त्यक्त्वान्तर्वासनां निजाम् ।
कुरुध्वं कर्म हे सर्वं न दुःखं समवाप्स्यथ ॥ ७१ ॥
तृष्णयैव विनष्टाः स्थ व्यर्थमिन्द्रियबालकाः ।
कोशकाराः कुक्रमयस्तन्तुनेव स्वयंभुवा ॥ ७२ ॥
हे चित्त सर्वेन्द्रियकोश तस्मात्सर्वेन्द्रियैरैक्यमुपेत्य नूनम् ।
आलोक्य चात्मानमसत्स्वरूपं निर्वाणमेकामलबोधमास्व॥७३॥
विषयविषविषूचिकामनन्तां
निपुणमहंस्थितिवासनामपास्य ।

न्तया परिच्छिन्नाहंकारेण पोथितोऽस्मि हिंसितोऽस्मि। दृप्तेन वृकेन अटव्यां पशुपोतो गवादेः पशोः शिशुर्यथा तथा। तद्वदित्यर्थः ॥६८॥ दिष्ट्येति ॥ इदानीं ममैषोऽज्ञानरूपस्तस्करः परिज्ञातो दिष्ट्या फलितं भाग्येनेत्यर्थः । स्वरूपार्थापहारिणं स्वरूपमेवार्थः तदपहारिणं एनमज्ञानतस्करं पुनर्न संश्रयामि ॥ ६९ ॥ ७० ॥ ७१ ॥ तृष्णयैवेति । स्वयंभुवा स्वोत्पन्नेनैव तन्तुना कोशकारकृमय इव स्वयंभुवा तृष्णयैव व्यर्थं विनष्टाः स्थ ॥ ७२ ॥ हे चित्तेति ॥ सर्वेन्द्रियकोश सर्वैश्चक्षुरादिभिः कोशवदुपजीव्य हे चित्त, तस्मात्पूर्वोक्ताद्धेतोः सर्वेन्द्रियैः ऐक्यमुपेत्य आत्मानं स्वीयं रूपं असत्स्वरूपं अविद्यमानस्वभावमालोक्य विचार्य एकामलबोधं एकः केवलः अमलश्च बोधो यथा स्यात्तथा निर्वाणमुपरतव्यापारमास्व तिष्ठ ॥ ७३ ॥ विषयेति ॥ हे चित्त, अनन्तां विषयविषविषूचिकां विषयरूपां विषय-

अभिमतपरिहारमन्त्रयुक्त्या
भव विभवो भगवान्भियामभूमिः ॥ ७४ ॥

उद्दालक उवाच ॥

संकल्पपादपं तृष्णालतं छित्त्वा मनोवनम् ।
विततां भुवमासाद्य विहरामि यथासुखम् ॥ ७५ ॥
पदं तदनुयातोऽस्मि केवलोऽस्मि जयाम्यहम् ।
निर्वाणोऽस्मि निरंशोऽस्मि निरीहोऽस्मि निरीप्सितः ॥ ७६ ॥
स्वच्छतोर्जितता सत्ता हृद्यता सत्यता ज्ञता ।
आनन्दितोपशमिता मानिता मुदितोदिता ॥ ७७ ॥

जन्यविषूचिकां अहंस्थितिवासनां च अभिमतपरिहारमन्त्रयुक्त्या इष्टवस्तुपरित्यागरूपमन्त्रयोगेन निपुणमपास्य विभवो विगतसंसारो भियां भयानामभूमिः भगवान्भव ॥ ७४ ॥ संकल्पेति ॥ संकल्पा एव पादपा यस्मिंस्तृष्णा एव लता यस्मिंस्तन्मनोवनं छित्त्वा विततां भुवं चिदाकाशरूपामासाद्य यथासुखं विहरामि ॥ ७५ ॥ पदमिति ॥ यतः केवलोऽस्मि निर्मनस्कत्वात् अतस्तत्पदं ब्रह्मभावमनुयातोऽस्मि । अतस्तापत्रयशान्त्या निर्वाणोऽस्मि । परिपूर्णत्वान्निरंशोऽस्मि । अतश्चावाप्तकामत्वान्निरीप्सितोऽस्मि ततो निरीहोऽस्मि ततो जयामीति संबन्धः ॥ ७६ ॥ स्वच्छतेति श्लोकत्रयं वाक्यम् ॥ स्वच्छतादयः कान्ता मम हृदयवल्लभाः व्युत्थानदशायां हृदयं विनोदयन्तीत्यर्थः । तत्र स्वच्छता मनोमलराहित्यम् । ऊर्जितता दैन्याभावः । सत्ता सद्रूपता । हृद्यता सर्वप्रियत्वम् । सत्यता अबाध्यत्वम् । ज्ञता ज्ञानिता । आनन्दिता आनन्दस्वरूपता । उपशमिता निर्विकारता । सदोदिता मुदिता च पुण्यकर्मसु प्रीतिः । पूर्णता व्याप्तता । सत्या वास्तव्यु-

पूर्णतोदारता सत्या कान्तिमत्तैकता मता ।
सर्वैकता निर्भयता क्षीणद्वित्वविकल्पिता ॥ ७८ ॥
एता नित्योदिताः स्वस्थाः सुन्दर्यः सुभगोदयाः ।
ममैकात्मरतेर्नित्यं कान्ता हृदयवल्लभाः ॥ ७९ ॥

वसिष्ठ उवाच ॥

इति निर्णीय स तया धिया धवलया मुनिः ।
बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनः ॥ ८० ॥
ओंकारमकरोत्तारस्वरमूर्ध्वगतध्वनिम् ।
सम्यगाहतलाङ्गूलं घण्टाकुण्डमिवारवम् ॥ ८१ ॥
ओमुच्चारयतस्तस्य संवित्तत्त्वे तदुन्मुखे ।
यावदोंकारमूर्ध्वस्थे वितते विमलात्मनि ॥ ८२ ॥
सार्धत्र्यंशात्ममात्रस्य प्रथमेंऽशे स्फुटारवे ।
प्रणवस्य समाक्षुब्धप्राणे रणितदेहके ॥ ८३ ॥

दारता उत्कृष्टता । कान्तिमत्ता ब्रह्मचित्ताभिव्यञ्जिका मुखकान्तिः । एकता भेदाभावः । मता संमता । सर्वैकता सर्वात्मकत्वम् । निर्भयता विश्रम्भः । क्षीणद्वित्वविकल्पिता द्वित्वादिविकल्पाभावः ॥७७॥ ॥ ७८ ॥ ७९ ॥ ८० ॥ ओंकारमिति ॥ सम्यगाहतं ताडितं लाङ्गूलं मध्यलम्बिदण्डो यस्य। अतएव आरवं आसमन्ताद्रवो यस्य तादृशं घण्टाकुण्डमिव कुण्डवन्मण्डलाकारां घण्टामिव तारस्वरमोंकारमूर्ध्वगतध्वनिं ब्रह्मरन्ध्रव्याप्तं नादमकरोत् ॥ ८१ ॥ ओमिति श्लोकत्रयं वाक्यम् । ओमित्युच्चारयतस्तस्योद्दालकस्य संवित्तत्त्वे स्वरूपचैतन्ये तदुन्मुखे ओंकारानुसारिणि यावदोंकारं ओंकारानुवृत्तिपर्यन्तं ऊर्ध्वस्थे ऊर्ध्वमुखे विमलात्मनि वितते व्याप्ते सति ॥८२॥ सार्धवंशात्ममात्रस्य अर्धेन सहितास्त्रयोंऽशा आत्मा स्वरूपं यासां

रेचकाख्येऽखिलं कायं प्राणनिष्क्रमणक्रमः ।
रिक्तीचकार पीताम्बुरगस्त्य इव सागरम् ॥ ८४ ॥
अतिष्ठत्प्राणपवनश्चिद्रसापूरिताम्बरे ।
हृदयाग्निर्ज्वलज्ज्वालो ददाह मलिनं वपुः ॥ ८५ ॥
यावदिच्छमवस्थैषा प्रणवप्रथमे क्रमे ।
बभूव न हठादेव हठयोगो हि दुःखदः ॥ ८६ ॥

ताः सार्धत्र्यंशात्मानः ता मात्रा यस्य तादृशस्य । अर्धमात्राधिकत्रिमात्रस्येत्यर्थः । प्रणवस्य ओंकारस्य समाक्षुब्धप्राणे समः एकप्रकारः अक्षुब्धश्च प्राणः प्राणवायुर्यस्मिंस्तादृशे प्रथमेंऽशे अकारात्मके प्रथमभागे स्फुटारवे व्यक्तध्वनौ रणितदेहके मुखरितशरीरके सति ॥ ८३ ॥ रेचकेति ॥ रेचकाख्यः प्राणनिष्क्रमणक्रमः पीताम्बुरगस्त्यः सागरमिवाखिलं कायं रिक्तीचकार । एतच्च प्रणवस्य सार्धत्रिमात्रत्वं अथर्वशिखायां उपनिषदि—'चतुष्पादिदमक्षरं परं ब्रह्मे'त्यादिना प्रपञ्चितम् । 'वर्णत्रयात्मिका ह्येते रेचपूरककुम्भकाः' इति याज्ञवल्क्यवचनात् रेचकादीनां प्रणवांशभूताकारोकारमकारात्मनां प्रवृत्तिर्युक्तेत्यनुसंधेयम् ॥ ८४ ॥ अतिष्ठदिति ॥ चिद्रसेन चैतन्येनापूरिताम्बरे प्राणपवनः अतिष्ठत् । रेचकेन रेचितः प्राणोऽम्बरे निरुद्धस्तथैवातिष्ठदित्यर्थः । हृदयाग्निश्च रेचकेन संधुक्षितो ज्वलज्ज्वालः सन्मलिनं पापरूपं वपुर्ददाह ॥ ८५ ॥ यावदिति ॥ एषा प्रणवस्य प्राणायामस्य प्रथमे क्रमेऽवस्था रेचकरूपा यावदिच्छं इच्छानुवृत्तिर्यावत्तावदेव बभूव नतु हठाद्बलात्कारादेव । कुतः । हि यस्मात्कारणाद्धठयोगो दुःखदः । हठयोगो नाम महामुद्रादिभिर्ब-

अथेतरांशावसरे प्रणवस्य समास्थितौ ।
निष्पन्दः कुम्भको नाम प्राणानामभवत्क्रमः ॥ ८७ ॥

न बहिर्नान्तरे नाधो नोर्ध्वं नाशासु तत्र ते ।
संक्षोभमगमन्प्राणा इव संस्तम्भिता दृतौ ॥ ८८ ॥

दग्धदेहपुरो वह्निः शशामाशनिवत्क्षणात् ।
अदृश्यत सितं भस्म शरीरं हिमपाण्डुरम् ॥ ८९ ॥

यत्र कर्पूरशय्यायां सुप्तानीव सुखोचितम् ।
शरीरास्थीनि दृश्यन्ते निष्पन्दानि सितानि च ॥ ९० ॥

लात्प्राणनिरोधद्वारा मनोनिरोधः ॥ ८६ ॥ अथेति ॥ अथ प्राणपवनस्य चिद्रसापूरिताम्बरनिरोधानन्तरं समास्थितौ समा चित्तस्य स्थितिर्यस्मात्तस्मिन् प्रणवस्य इतरांशावसरे उकारात्मनो द्वितीयांशस्य मूर्तिध्यानावसरे ओमुच्चारयतस्तस्योद्दालकस्य निष्पन्दो निष्कम्पः कुम्भकः प्राणानां क्रमोऽभवत् । पूर्वं चिद्रसापूरितेऽम्बरे निरुद्धस्य प्राणवायोः तत्रैवान्तरे तत्प्रयत्नवशात्कुम्भकरूपः क्रमोऽभवदित्यर्थः । अत्र च प्रणवस्य अकारादिवर्णत्रयात्मकत्वाच्च तेषां ब्रह्मविष्णुरुद्ररूपत्वात्तत्तन्मूर्तिध्यानपूर्वकं प्रणवजपेन रेचकादिः प्राणायामक्रमः प्रतिपाद्यत इत्यनुसंधेयम् ॥ ८७ ॥ तदेव कुम्भकस्य निष्पन्दत्वमाह—नेति॥वहिः शरीराद्बहिरभ्यन्तरे शरीराभ्यन्तरे। अध ऊर्ध्वमिति। यस्मिन्नाकाशदेशे प्राणनिरोधस्तस्मादध ऊर्ध्वं चेत्यर्थः। तत्र कुम्भके। दृतौ चर्मभस्त्रिकायाम्॥ ८८॥ दग्धेति श्लोकद्वयं वाक्यम् ॥ दग्धं देहरूपं पुरं येन स वह्निः क्षणादशनिवच्छशाम ॥ ८९ ॥ यत्र सिते भस्मनि कर्पूरशय्यायां सुखोचितं सुप्तानीव शरीरास्थीनि

तद्भस्म वायुना नीतं सास्थि वायुरयोजयत् ।
तच्चण्डपवनोद्धूतमावृत्य गगनं क्षणात् ।
शरदीवाभ्रमिहिका क्वापि भस्मास्थिमद्ययौ ॥ ९१ ॥
यावदिच्छमवस्थैषा प्रणवस्यापरे क्रमे ।
बभूव न हठादेव हठयोगो हि दुःखदः ॥ ९२ ॥
ततस्तृतीयावसरे प्रणवस्योपशान्तिदे ।
पूरणात्पूरको नाम प्राणानामभवत्क्रमः ॥ ९३ ॥
तस्मिन्नवसरे प्राणाश्चेतनामृतमध्यगाः ।
व्योम्नि शीतलतामीयुर्हिमसंस्पर्शसुन्दरीम् ॥ ९४ ॥
क्रमाद्गगनमध्यस्थाश्चन्द्रमण्डलतां ययुः ।
धूमा गगनकोशस्थाः शीतलाम्बुदतामिव ॥ ९५ ॥

दृश्यन्ते तादृशं शरीरं भस्मेवादृश्यतेत्यन्वयः ॥ ९० ॥ तदिति ॥ तद-स्थिमद्भस्म चण्डपवनेनोर्ध्वं नीतं सत् शरदि अभ्रमिहिकेव प्रालेय-युतो मेघ इव गगनमावृत्य क्षणात्क्वापि ययौ ॥ ९१ ॥ यावदिति ॥ प्रणवस्य प्रणवात्मकस्य प्राणायामस्यापरे कुम्भकरूपे क्रमे एषावस्था यावदिच्छमेव बभूव ॥ ९२ ॥ तत इति ॥ ततः कुम्भकानन्तरं उपशान्तिदे चित्तस्योपशान्तिहेतौ प्रणवस्य ओंकारस्य तृतीयावसरे मकारात्मकस्य तृतीयांशस्य मूर्तिध्यानावसरे ओमुच्चारयतस्तस्य पूर-णाद्धेतोः पूरको नाम प्राणानां क्रमोऽभवत् ॥ ९३ ॥ तस्मिन्निति ॥ तस्मिन्नवसरे पूरकावसरे प्राणाः प्राणवायवो व्योम्नि चेतनामृतम-ध्यगाः चेतनैवामृतं तस्य मध्यगताः सन्तो हिमसंस्पर्शेन सुन्दरीं शीतलतामीयुर्गतवन्तः ॥ ९४ ॥ क्रमादिति ॥ गगनमध्यस्थास्ते प्राणाः क्रमाच्चन्द्रमण्डलतां ययुः धूमा गगनकोशस्थाः शीतलाम्बु-

कलाकलापसंपूर्णे ते तस्मिंश्चन्द्रमण्डले ।
रसायनमहाधाराः सम्पन्नाः प्राणवायवः ॥ ९६ ॥
सा पपाताम्बराद्धारा शेषे शारीरभस्मनि ।
रसायनी हरशिरःपतितेव पुरापगा ॥ ९७ ॥
उदभूदिन्दुबिम्बाभं चतुर्बाहुधरं शुभम् ।
उद्दालकशरीरं तन्नारायणतयोदितम् ॥ ९८ ॥
रसायनमयाः प्राणास्तच्छरीरमपूरयन् ।
ततः कुण्डलिनीमन्तः पूरयामासुरादृताः ॥ ९९ ॥
अथ पद्मासनगतः कृत्वा देहस्थितिं दृढाम् ।
आलानमिव मातङ्गं निबद्धेन्द्रियपञ्चकम् ॥ १०० ॥
चिन्तया हृदयाम्भोजे चेतो भ्रमरचञ्चलम् ।
बलात्संरोधयामास सेतुर्जलमिव द्रुतम् ॥ १ ॥
निमिमील दृशावर्धं परिपक्ष्मलपक्ष्मके ।
निष्पन्दतारामधुरे संध्याकाल इवाम्बुजे ॥ २ ॥
सौम्यतामनयन्मौनी प्राणापानजवं मुखे ।
इन्द्रियाणीन्द्रियार्थेभ्यः पृथक्चक्रे प्रयत्नतः ॥ ३ ॥

दत्तामिव ॥ ९५ ॥ कलेति ॥ ते प्राणवायवो रसायनस्यामृतस्य महत्यो धाराः संपन्नाः । सुधाधारारूपतां प्राप्ता इत्यर्थः । धाराया एकत्वेऽपि प्रकृतिभूतप्राणप्राधान्यविवक्षया संघीभवन्ति ब्राह्मणा इतिवत्सम्पन्ना इति बहुवचनम् ॥ ९६ ॥ सेति ॥ रसायनी अमृतमयी धारा अम्बरात्पुरा पूर्वं हरशिरःपतिता आपगा भागीरथीव शेषे अवशिष्टे शारीरभस्मनि पपात ॥ ९७ ॥ ९८ ॥ ९९ ॥ ॥ १०० ॥ १ ॥ २ ॥ सौम्यतेति ॥ मौनी सन्मुखे प्राणापानजवं

बाह्यान्स्पर्शानशेषेण जहौ दूरे स धीरधीः ।
विलीनानान्तरांश्चक्रे स्पर्शानुज्झितदर्शनात् ॥ ४ ॥
रुरोध गुदसंकोचान्नवद्वारानिलानथ ।
मुखसंस्थगितः कुम्भो रन्ध्रकोशानिवेतरान् ॥ ५ ॥
आत्मतत्त्वप्रकाशाढ्यां स्पष्टां कुसुमलाञ्छनाम् ।
दधार कन्धरां वीरो मेरुशृङ्गशिखामिव ॥ ६ ॥
बभार हृदयाकाशे मनः संयममागतम् ।
विन्ध्यखात इवोन्मत्तगजं युक्तिवशीकृतम् ॥ ७ ॥
शरन्नभोवदासाद्य विमलामतिसौम्यताम् ।
दुधावाथ विकल्पौघान्प्रतिभासमुपेयुषः ॥ ८ ॥
अगच्छतो यथाकामं प्रतिभासान्पुनःपुनः ।
अच्छिनन्मनसा शूरः खड्गेनेव रणे रिपून् ॥ ९ ॥
विकल्पौघे परे लूने सोऽपश्यद्धृदयान्तरे ।
तमश्छन्नविवेकार्कं लोलकज्जलमेचकम् ॥ ११० ॥

उच्छ्वासनिःश्वासरूपं सौम्यतां प्रशान्तत्वमनयत् । इन्द्रियार्थेभ्यः इन्द्रियाणि पृथक्चक्रे । प्रत्याजहारेत्यर्थः ॥ ३ ॥ बाह्येति ॥ स्पर्शान्विषयान् । दर्शनं वृत्तिज्ञानम् ॥ ४ ॥ रुरोधेति ॥ अथ गुदसङ्कोचाद्वज्रासनादिना मूलाधारनिरोधात् नवद्वारानिलान् रुरोध । मुखेति ॥ मुखे संस्थगित आवृतः कुम्भः इतरान् रन्ध्रकोशानिव । मुखे स्थगिते कुम्भस्य सूक्ष्मरन्ध्रेषु वायुर्यथा निरुध्यते तद्वदित्यर्थः ॥ ५ ॥ ॥ ६ ॥ बभारेति ॥ संयमं शिक्षामागतं प्राप्तं मनः हृदयाकाशे दहराख्ये बभार दधार । युक्तिभिरुपायैर्वशीकृतमुन्मत्तं गजं विन्ध्यस्य खाते बिल इव ॥ ७ ॥ शरदिव दुधाव निरस्तवान् ॥ ८ ॥ ॥ ९ ॥ विकल्पेति ॥ तमो विकल्पहेतुभूतमज्ञानं लोलकज्जलवन्म-

तदप्युच्छेदयामास सम्यक्स्वान्तर्विवस्वता ।
तमस्युपरते कान्तं तेजःपुञ्जं ददर्श सः ॥
तल्लुलाव स्थलाब्जानां वनं बाल इव द्विपः ॥ ११ ॥
तेजस्युपरते तस्य घूर्णमानं मनो मुनेः ।
निशाब्जवदगान्निद्रां तामप्याशु लुलाव सः ॥ १२ ॥
निद्राव्यपगमे तस्य व्योमसंवित्समुद्ययौ ।
व्योमसंविदि नष्टायां मूढं तस्याभवन्मनः ॥
मूढमप्येष मनसस्तं ममार्ज महाशयः ॥ १३ ॥
ततस्तेजस्तमोनिद्रामोहादिपरिवर्जिताम् ।
कामप्यवस्थामासाद्य विशश्राम मनः क्षणम् ॥ १४ ॥
विश्राम्याशु पपाताङ्गसंविदं विश्वरूपिणीम् ।
सेतुरुद्धं सरोवारि प्रतीपं स्वमिवास्पदम् ॥ १५ ॥

र्दितमषीवन्मेचकं मलिनवर्णम् ॥ ११० ॥ तदपीति ॥ तत्तमोऽपि स्वान्तःकरणगतविवेकत उत्सादयामास । ततस्तमस्युपरते तेजः प्रकाशरूपां सत्त्वगुणवृत्तिं ददर्श । दृष्ट्वा च तदपि तेजो लुलाव चिच्छेद ॥ ११ ॥ तेजसीति ॥ तेजसि सत्त्ववृत्तावुपरते तस्य मनो घूर्णमानं विश्रान्तिमलभमानं पुनरपि निद्रां तामसीं वृत्तिमगात् । सत्त्वादिगुणानां परस्पराभिभवेन परिणममानत्वात् । यदुक्तं सांख्ये—'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणा' इति ॥ १२ ॥ निद्रेति ॥ व्योमसंविच्छून्याकारा संवित्मूढं अप्रतिपत्तिजडम् ॥१३॥ तत इति ॥ तेजस्तमोनिद्रामोहादिपरिवार्जितां तेजःप्रभृतीनां सत्त्वादिगुणपरिणामिरूपत्वात्तद्रहितां कामप्यवस्थां निर्विकल्पां समाध्यवस्थामासाद्य मनो विशश्राम आत्मनि तस्थौ ॥ १४ ॥ विश्राम्येति ॥

चिरानुसंधानवशात्स्वादनाच्च स्वसंविदः ।
मनश्चिन्मयतामागाद्धेमनूपुरतामिव ॥ १६ ॥

चित्तत्वमथ संत्यज्य चित्तं चित्तत्त्वमागतम् ।
अन्यदेव बभूवाशु पङ्कः कुम्भस्थितो यथा ॥ १७ ॥

चेत्यं संत्यज्य चिच्छुद्धा चित्सामान्यमथाययौ ।
त्यक्तवीच्यादिभेदोऽब्धिर्वाःसामान्यमिवैकधीः ॥ १८ ॥

त्यक्तभोगौघमननं ततो विश्वम्भरं महत् ।
चिदाकाशं ततः शुद्धं सोऽभवद्बोधमागतः ॥ १९ ॥

विश्वरूपिणीं सर्वात्मिकां । अङ्गसंविदं स्वस्वरूपचैतन्यपूर्णाम् । ब्रह्मात्मैक्यसंविदमित्यर्थः । सेतुना रुद्धं सरोवारि प्रतीपं प्रत्यावृत्तं सत् स्वमास्पदं मूलस्थानभूतं सर इव ॥ १५ ॥ चिरेति ॥ चिरं स्वरूपानुसंधानवशात्स्वसंविदः स्वरूपानन्दसंविदः स्वादनादास्वादनाच्च हेमनूपुरतामिव मनश्चिन्मयतामागात् ॥ १६ ॥ चित्तत्वमिति ॥ अथानन्तरं चित्तं कर्तृ चित्तत्वं चित्तरूपतां संत्यज्य चित्तत्त्वं चितः पारमार्थिकं रूपं आगतं सत् अन्यदेव बभूव । चिदेव बभूवेत्यर्थः । कुम्भस्थितः पङ्को यथा कालातिक्रमाज्जलविलये सति पङ्करूपं परित्यज्य कुम्भाकारां लोष्टतां याति तद्वदिति ॥ १७ ॥ चेत्यमिति ॥ चित्कर्त्री चेत्यं संत्यज्य शुद्धा सती चित्सामान्यं सर्वानुवृत्तिचिन्मात्ररूपमाययौ त्यक्तवीच्यादिभेदत्वात् । एकधीरेकाकारबुद्धिगोचरः सन्नब्धिः वाःसामान्यं शुद्धजलभावमिव ॥ १८ ॥ त्यक्तेति ॥ बोधं स्वरूपसाक्षात्कारं आगतः त्यक्तभोगौघमननं संत्यक्तबाह्यान्तरिन्द्रियवृत्तिकं विश्वंभरं शुद्धं महच्चिदाकाशमभवत् ॥ १९ ॥

तत्र प्रापदथानन्दं दृश्यदर्शनवर्जितम् ।
अनन्तमुत्तमास्वादं रसायनमिवार्णवम् ॥ १२० ॥
शरीरात्समतीतोऽसौ काम्प्यवनिमागतः ।
सत्तासामान्यरूपात्मा बभूवानन्दसागरः ॥ २१ ॥
द्विजचेतनहंसोऽसावानन्दसरसि स्थिरः ।
अतिष्ठच्छरदच्छे खे कलापूर्ण इवोडुपः ॥ २२ ॥
बभूवावातदीपाभो लिपिकर्मार्पितोपमः ।
अवीच्यम्बुनिधिप्रख्यो वृष्टमूकाम्बुदस्थितिः ॥ २३ ॥
अथैतास्मिन्महालोकेऽतिष्ठदुद्दालकश्चिरम् ।
अपश्यद्व्योमगान्सिद्धानमरानपि भूरिशः ॥ २४ ॥
आगतानि विचित्राणि सिद्धिजालानि चाभितः ।
तानि नादरयांचक्रे सिद्धिवृन्दानि स द्विजः ॥ २५ ॥
सिद्धिसार्थमनादृत्य तस्मिन्स्वानन्दमन्दिरे ।
अतिष्ठदथ षण्मासानद्रिकूट इवोत्तरे ॥ २६ ॥
जीवन्मुक्तपदं तत्तु यत्स संप्राप्तवान्द्विजः ।
तत्र सिद्धाः सुराः साध्याः स्थिता ब्रह्महरादयः ॥ २७ ॥

तत्रेति ॥ तत्र चिदाकाशे रसायनममृतरूपमर्णवमिव दृश्यदर्शनवर्जितमुत्तमास्वादमनन्तमानन्दं प्रापत् ॥ १२० ॥ शरीरादिति ॥ शरीरात्समतीतः जीवभावादुत्तीर्णः काम्प्यवनिं चिदाकाशरूपाम् ॥ २१ ॥ द्विजेति ॥ द्विजचेतनहंसः परमात्महंसभावमापन्न उद्दालकद्विजरूपश्चेतन इत्यर्थः । उडुपश्चन्द्रमाः ॥ २२ ॥ बभूवेति ॥ वृष्टमूकाम्बुदस्थितिः वृष्टो मुक्तवर्षो मूको निःशब्दश्च योऽम्बुदस्तस्येव स्थितिर्यस्य ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ आनन्देति ॥

आनन्दपरिणामित्वादनानन्दपदं गतः ।
आनन्दे न निरानन्दे ततस्तत्संविदावभौ ॥ २८ ॥
तत्पदं सा गतिः शंभोस्तच्छ्रेयः शाश्वतं शिवम् ।
तत्पदं साधवः प्राप्य क्षणं वर्षशतं च वा ॥ २९ ॥
दृश्यदृष्टिं समायान्ति न पुनर्भवकारिणीम् ॥ १३० ॥
उद्दालकोऽत्र षण्मासान्दूरोत्सारितसिद्धिभूः ।
उषित्वोन्मिषितोऽपश्यत्सिद्धांश्चन्द्रवपुर्धरान् ॥ ३१ ॥
विद्याधरीभिर्वलितान्विद्याधरपतीनपि ।
ते तमूचुर्महात्मानमुद्दालकमुनिं तदा ॥ ३२ ॥
प्रसादेन प्रणामान्ते भगवन्नवलोकय ।
आरुह्येदं विमानं त्वमेहि त्रैविष्टपं पुरम् ॥ ३३ ॥
स्वर्ग एव हि सीमान्तो जगत्संभोगसंपदाम् ।
आकल्पमुचितान्भुङ्क्ष्व भोगानभिमतान्विभो ॥ ३४ ॥

यतः कारणात्स उद्दालकः आनन्दपरिणामित्वादानन्दरूपेण परिणतत्वात् अनानन्दपदं स्वरूपव्यतिरिक्तानन्दरहितं पदं गतस्ततः कारणात्तत्संवित् उद्दालकस्य संविन्निरानन्दे आनन्दविषयानावभौ न भातिस्म । स्वरूपातिरिक्तस्यानन्दस्याभावात् निरानन्दे निरानन्दवस्तुविषया च नावभौ । स्वरूपस्यैवानन्दात्मना सर्वत्रावभासमानत्वात् ॥ २८ ॥ तत्पदमिति ॥ तत्पदं जीवन्मुक्तिरूपम् ॥ २९ ॥ दृश्येति ॥ पुनर्भवकारिणीं संसारहेतुं दृश्यदृष्टिं प्रपञ्चस्फुरणाम् ॥ १३० ॥ उद्दालक इति ॥ अत्र समाधौ दूरोत्सारितसिद्धिभूः दूरमुत्सारिता निरस्ता सिद्धिभूः स्वर्गादिर्येन । चन्द्रवपुर्धरांश्चन्द्रवन्मनोहरान् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

एवं कथयतः सिद्धानतिथीनित्यसौ मुनिः ।
परिपूज्य यथान्यायमतिष्ठद्गतसंभ्रमम् ॥ ३५ ॥
नाभ्यनन्दत तत्याज तां विभूतिं स धीरधीः ।
भोः सिद्धा व्रजतेत्युक्त्वा स्वव्यापारपरोऽभवत् ॥ ३६ ॥
अथ स्वकर्मनिरतं भोगेष्वरतिमागतम् ।
तमुपास्यं ययुः सिद्धा दिनैः कतिपयैः स्वयम् ॥ ३७ ॥
जीवन्मुक्तः स च मुनिर्विजहार यथासुखम् ।
यावदिच्छं वनान्तेषु मुनीनामाश्रमेषु च ॥ ३८ ॥
कदाचिदह्ना मासेन कदाचिद्वत्सरेण च ।
कदाचिद्वत्सरौघेण ध्यानासक्तो व्यबुध्यत ॥ ३९ ॥
चित्तत्त्वैकघनाभ्यासान्महाचित्त्वमुपैत्य सः ।
चित्सामान्यचिराभ्यासात्सत्तासामान्यमाययौ ॥ १४० ॥

समरसपदलाभप्राप्तिसंशान्तचेता
गलितजनविलापः क्षीणसंदेहदोलः ।
शरदिनमिव शान्तं व्याततं चोर्जितं च
स्फुटममलमचेतस्तद्वपुः स्वं बभार ॥ ४१ ॥

राम उवाच ॥

आत्मज्ञानदिनैकार्क मत्संशयतृणानल ।
अज्ञानदाहशीतांशो सत्तासामान्यमीश किम् ॥ ४२ ॥

॥ ३८ ॥ ३९ ॥ चित्तत्त्वेति ॥ चित्तत्वैकघनाभ्यासात् चित्तत्त्वस्य एकस्यैव घनो निरन्तरो योऽभ्यासोऽनुसंधानं तस्मान्महाचित्त्वं परिपूर्णचितो भावं चिदिति सत्तासामान्यं रामप्रश्नानन्तरं स्वयमेव वक्ष्यति ॥ १४० ॥ समेति ॥ समरसपदं जीवन्मुक्तिपदम्

वसिष्ठ उवाच ॥

यदा संक्षीयते चित्तमभावात्यन्तभावनात् ।
चित्सामान्यस्वरूपस्य सत्तासामान्यता तदा ॥ ४३ ॥

नूनं चेत्यांशरहिता चिद्यदात्मनि लीयते ।
असद्रूपवदत्यच्छा सत्तासामान्यता तदा ॥ ४४ ॥

यदा सर्वमिदं किंचित्सबाह्याभ्यन्तरात्मकम् ।
अपलप्य वसेच्चेतः सत्तासामान्यता तदा ॥ ४५ ॥

कूर्मोऽङ्गानीव दृश्यानि लीयन्ते स्वात्मनात्मनि ।
अभावितान्येव यदा सत्तासामान्यता तदा ॥ ४६ ॥

॥ ४१ ॥ ४२ ॥ यदेति ॥ अभावात्यन्तभावनात् अनुसंधानात् कालत्रयेऽपि दृश्यं वस्तुतो नास्तीति श्रुतियुक्त्यनुभवैः निरन्तरमनुसंधानाद्धेतोः यदा चित्तं सम्यक्क्षीयते विलीयते तदा चित्सामान्यस्वरूपस्यात्मनः सत्तासामान्यता संपद्यते । विक्षेपहेतोश्चित्तस्याभावादात्मनः स्वरूपसत्तैवावशिष्यत इत्यर्थः ॥ ४३ ॥ नूनमिति ॥ यदा मनोविलये सति चिच्चित्तवृत्तिप्रतिफलितचैतन्यं चेत्यांशरहिता घटकस्य चित्तस्याभावात् चेत्यसंबन्धरहिता सती अत्यच्छा असद्रूपवदविद्यमानरूपवदात्मनि लीयते तदा आत्मनो घनीभूतचितः सत्तासामान्यता संपद्यते ॥ ४४ ॥ यदेति ॥ सबाह्याभ्यन्तरात्मकं इदं सर्वं किंचिदपि अपलप्य निर्हृत्य । नास्तीति निश्चित्येत्यर्थः । चेतः कर्तृ यदा आत्मनि वसेत् लीयते तदा सत्तासामान्यता ॥ ४५ ॥ कूर्मेति ॥ दृश्यानि चित्तस्यान्तर्मुखत्वादभावितान्येव अननुसंहितान्येव सन्ति । यदा कूर्मोऽङ्गानीव आत्मनि स्वात्मनैव प्रयत्नं विनैव

दृष्टिरेषा हि परमा सदेहादेहयोः सदा ।
मुक्तयोः संभवत्येव तुर्यातीतपदाभिधा ॥ ४७ ॥
व्युत्थितस्य भवत्येषा समाधिस्थस्य चानघ ।
ज्ञस्य केवलमज्ञस्य न भवत्येव बोधजा ॥ ४८ ॥
अस्यां दृष्टौ स्थिताः सर्वे भुवि मुक्ता महारसाः ।
अस्मत्प्रभृतयः सर्वे नारदाद्याश्च राघव ॥ ४९ ॥
ब्रह्मविष्ण्वीश्वराद्याश्च दृष्टावस्यां व्यवस्थिताः ।
एतामालम्ब्य पदवीं समस्तभयनाशिनीम् ॥ १५० ॥
उद्दालकोऽसाववसद्यावदिच्छं जगद्गृहे ।
अथ कालेन महता बुद्धिस्तस्य बभूव ह ॥ ५१ ॥
विदेहमुक्तस्तिष्ठामि देहं त्यक्त्वेति निश्चला ।
एवं चिन्तितवानद्रेर्गुहायां पल्लवासने ॥ ५२ ॥
बद्धपद्मासनस्तस्थावर्धोन्मीलितलोचनः ॥ ५३ ॥
संयम्य गुदसंरोधाद्द्वाराणि नव चेतसा ।
मात्रास्पर्शान्विचिन्वानो भावितस्वात्मचिद्घनः ॥ ५४ ॥

लीयन्ते तदा सत्तासामान्यता ॥ ४६ ॥ दृष्टिरिति ॥ तुर्यातीतपदाभिधा एषा परमा दृष्टिर्ज्ञानावस्था । सदेहादेहयोर्मुक्तयोः संभवत्येव । जाग्रदाद्यवस्थात्रयेऽनुवृत्तं साक्षिचैतन्यं तुर्यं विश्वतैजसप्राज्ञरूपजाग्रदाद्यभिमानिचैतन्यापेक्षया चतुर्थमित्यर्थः । इयं तु ज्ञानदशा तच्चतुष्टयातीतत्वात्तुर्यातीतशब्दवाच्या ॥ ४७ ॥ व्युत्थितस्येति ॥ एषा पूर्वोक्ता अवबोधजा स्वरूपज्ञानजनिता दृष्टिर्ज्ञस्य व्युत्थितस्य समाधिस्थस्य च केवलं भवति । अज्ञस्य तु न भवत्येव ॥ ४८ ॥ अस्यामिति ॥ भुवि रसाः षड्रसा इव ॥ ४९ ॥ १५० ॥ ॥ ५१ ॥ ५२ ॥ ५३ ॥ संयम्येति सार्धश्लोकचतुष्टयं वाक्यम् ।

संरुद्धप्राणपवनः समसंस्थानकन्धरः।
तालुमूलान्तरालग्नजिह्वामूलोल्लसन्मुखः ॥ ५५ ॥
न बहिर्नान्तरे नाधो नोर्ध्वमर्थे न शून्यके।
संयोजितमनोदृष्टिर्दन्तैर्दन्तानसंस्पृशन् ॥ ५६ ॥
प्राणप्रवाहसंरोधसमस्वच्छाननच्छविः ॥ ५७ ॥
अङ्गचित्संविदुत्थानरोमकण्टकिताङ्गभूः।
अङ्गचित्संविदाभ्यासाच्चित्सामान्यमुपाददे ॥ ५८ ॥

मात्रास्पर्शान् मीयन्ते आभिर्विषया इति मात्रा इन्द्रियाणि स्पृशन्त इति स्पर्शा विषयाः मात्राश्च स्पर्शाश्च तानिन्द्रियाणि विषयांश्च विचिन्वानः प्रत्याहरन् भावितस्वात्मचिद्घनः भावितः स्वात्मा स्वस्वरूपभूतः चिद्घनो येन ॥ ५४ ॥ समसंस्थानकन्धरः सममकुटिलं संस्थानं संनिवेशो यस्यास्तादृशी कन्धरा ग्रीवा यस्य। तालुमूलान्तरालग्नजिह्वामूलः तालुमूलयोः काकुदमूलदेशयोः आन्तरे लग्नं आलग्नं जिह्वामूलं यस्येत्यनेन नभोमुद्रा दर्शिता। या हि खेचरीत्युच्यते। तदुक्तं विवेकमार्तण्डे—'महामुद्रां नभोमुद्रामुड्डियानं जलन्धरम्। मूलबन्धं च यो वेत्ति स योगी सिद्धिभाजन'मित्युपक्रम्य—'कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवोरन्तरगा दृष्टिर्मुद्रा भवति खेचरी'इति ॥ ५५ ॥ न बहिरिति ॥ विषयान्तरेण संयोजिते मनोदृष्टी येन तादृशः सन्नर्थे भाविरूपे शून्ये अभावरूपे च। दन्तैर्दन्तानसंस्पृशन्नित्यपि खेचर्या आनुगुण्यमुक्तम् ॥ ५६ ॥ ५७ ॥ अङ्गचित्संविदुत्थानरोमकण्टकिताङ्गभूः अङ्गचित्स्वरूपचैतन्यं तस्याः संवित्साक्षात्कारः तस्या उत्थानमुदयस्तेन रोमकण्टकिता संजातहर्षा अङ्गभूः शरीरं यस्य। स्वस्वरूपसाक्षात्कारहर्षेण रोमाञ्चित-

तदभ्यासादवापान्तरानन्दस्पन्दमुत्तमम् ।
तदास्वादनतो लीनचित्सामान्यदशाक्रमम् ॥ ५९ ॥

विश्वंभरमनन्तात्म सत्तासामान्यमाययौ ।
शुद्धचित्संविदभ्यासाच्चित्सामान्यमुपाययौ ॥ १६० ॥

तस्थौ समशमाभोगः परां विश्रान्तिमागतः ॥ ६१ ॥

अनानन्दशमानन्दमुग्धमुग्धमुखद्युतिः ।
संशान्तानन्दपुलकः पदं प्राप्यामलं तदा ॥ ६२ ॥

चिरकालपरिक्षीणमननादिभवभ्रमः ।
बभूव स महासत्त्वो लिपिकर्मार्पितोपमः ॥ ६३ ॥

गात्र इत्यर्थः । अङ्गचित्संविदाभ्यासात्स्वरूपानुसंधाननैरन्तर्याच्चित्सामान्यं सर्वानुवृत्तं चिन्मात्रमुपाददे ॥ ५८ ॥ तदित्यर्धं वाक्यम् ॥ तदभ्यासाच्चित्साम्यानुसंधानात् ॥ तदेति ॥ तदास्वादनतः परानन्दानुभवात् लीनचित्सामान्यदशाक्रमं विलीनचिद्वृत्तिस्फुरणम् ॥ ५९ ॥ विश्वंभरं परिपूर्णं अनन्तात्म अपरिच्छिन्नं सत्तासामान्यमाययौ ॥ १६० ॥ तस्थाविति अर्धमेकं वाक्यम् । समशमाभोगः एकाकारशमविस्तारः ॥ ६१ ॥ अनानन्देति सार्धश्लोकद्वयं वाक्यम् ॥ अनानन्दशमानन्दमुग्धमुग्धमुखद्युतिः अनानन्दस्य निरानन्दस्य वस्तुनः शमादुचिता आनन्दमुग्धा आनन्दमयी मुग्धा मनोहरा मुखच्छविर्यस्य । आनन्दजा मुखच्छविरपि रोमहर्षाद्यानन्दविकाराभावादानन्दजन्येति न ज्ञायत इत्यर्थः । सानन्दमपि सुखं निर्विकारतया निरानन्दमिवाभूदिति यावत् । लिपिकर्मार्पितोपम इति निर्विकारत्वे दृष्टान्तः । शरदिन्दुना सम इति तु प्रकाशानन्द-

उपशशाम शनैर्दिवसैरसौ
कतिपयैः स्वपदे विमलात्मनि ।
तरुरसः शरदन्त इवामले
रविकरौजसि जन्मदशातिगः ॥ ६४ ॥

गतसकलविकल्पो निर्विकाराभिरामो
निखिलभयविनाशोपाधिनिर्मुक्तमूर्तिः ।
विगलितमुखमाद्यं तत्सुखं प्राप यस्मि-
स्तृणमिव जलराशावूह्यते शक्रलक्ष्मीः ॥ ६५ ॥

अपरिमितनभोऽन्तर्व्यापिदिग्व्यापि पूर्णं
भुवनभरणशीलं भूरिभव्योपसेव्यम् ।
कथितगुणमतीतं सत्यमानन्दमाद्यं
सुखममृतमनन्तं ब्रह्मणोऽसौ बभूव ॥ १६६ ॥

इति श्रीवाल्मीकीये मोक्षोपाय उपशमप्रकरण उद्दालकोपाख्यानं
नाम षष्ठः सर्गः ॥ ६ ॥

---

मयत्वे ॥ ६२ ॥ ६३ ॥ उपशशामेति ॥ असौ उद्दालकः जन्मदशातिगः संसारदशामतिक्रान्तः सन् विमलात्मनि स्वपदे स्वस्वरूप एवोपशशाम । शरदन्ते शरत्कालावसाने तरुरसः अमले रविकरौजसीव सूर्यतेजसीव । 'आदित्याज्जायते वृष्टि'रिति स्मरणात् । तरुरसस्य आदित्यतेजसि स्वकारणे लयो युज्यते ॥ ६४ ॥ गतेति ॥ यस्मिन्सुखे शक्रलक्ष्मीरपि जलराशौ तृणमिव तुच्छत्वेनोह्यते उत्प्रेक्षते तदाद्यं सुखं प्राप ॥ ६५ ॥ अपरिमितेति ॥ पूर्वश्लोके सुखं प्रापेति भेदप्रतीतेरपरितोषात् इह श्लोके स ब्रह्मणः पूर्णं सुखं बभूवेत्यभेदः प्रतिपाद्यते ॥ १६६ ॥ इति श्रीवासिष्ठरामायणे मोक्षोपाय उपशमप्रकरणे षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः

वसिष्ठ उवाच ॥

क्रमेणानेन विहरन्विचार्यात्मानमात्मना ।
विश्रान्तिमेहि वितते पदे पद्मदलेक्षण ॥ १ ॥
शास्त्रार्थगुरुचेतोभिस्तावत्तावद्विचार्यते ।
सर्वदृश्यक्षयाभ्यासाद्यावदासाद्यते पदम् ॥ २ ॥
वैराग्याभ्यासशास्त्रार्थप्रज्ञागुरुयमक्रमैः ।
पदमासाद्यते पुण्यं प्रज्ञयैवैकयाथवा ॥ ३ ॥
संप्रबोधवती तीक्ष्णा कलङ्करहिता मतिः ।
सर्वसामग्र्यहीनापि प्राप्यं प्राप्नोति शाश्वतम् ॥ ४ ॥

राम उवाच ॥

भगवन्भूतभव्यज्ञ कश्चिज्ज्ञातसमाधिकः ।
प्रबुद्ध इव विश्रान्तो व्यवहारपरोऽपि सन् ॥ ५ ॥

पूर्वं योगाभ्यासदार्ढ्येन चित्तविश्रान्तिः स्यात्सैव समाधेरुत्तमावस्थेत्युक्तम् । इदानीं सैव चित्तविश्रान्तिः जीवन्मुक्तिसीमेति सुरघूपाख्यानेन प्रतिपाद्यते । तत्र तावद्धितमुपदिशति—क्रमेणेत्यादिना ॥ अनेन क्रमेण पूर्वोक्तेनोद्दालकसमाचारक्रमेण ॥ १ ॥ २ ॥ वैराग्येति ॥ वैराग्यं वैतृष्ण्यं अभ्यासः सर्वदृश्यक्षयानुसंधानं शास्त्रार्थः अध्यात्मशास्त्रतत्त्वज्ञानं प्रज्ञा त्रैकालिकी वस्तुतत्त्वपरीक्षा गुरुर्गुरूपदेशः यमक्रमः यमनियमादिक्रमः तैः । प्रज्ञयैवेति । परिपक्वान्तःकरणेन प्रज्ञयैकया परं पदमासाद्यत इत्यर्थः ॥ ३ ॥ प्रज्ञयैवेत्येतदुपपादयितुमाह—संप्रबोधेति ॥ तीक्ष्णा वस्तुस्वरूपपरिच्छेदिका । सर्वसामग्र्यं नाम पूर्वोक्तं वैराग्यादिकम् ॥ ४ ॥ भगवन्निति श्लोकद्वयेन प्रश्नः । कश्चिन्मुमुक्षुः जातसमाधिकः कदाचित्प्राप्तसमा-

कश्चिदेकान्तमाश्रित्य समाधिनियमस्थितः ।
तयोस्तु कतरः श्रेयानिति मे भगवन्वद ॥ ६ ॥

वसिष्ठ उवाच ॥

इमं गुणसमाहारमनात्मत्वेन पश्यतः ।
अन्तःशीतलता यासौ समाधिरिति कथ्यते ॥ ७ ॥
दृश्यैर्मम न संबन्ध इति निश्चित्य शीतलः ।
व्यवहारे स्थितः कश्चित्कश्चिद्ध्यानव्यवस्थितः ॥ ८ ॥
द्वावेतौ राम सुखिनावन्तश्चेत्परिशीतलौ ।
अन्तःशीतलता या स्यात्तदनन्ततपःफलम् ॥ ९ ॥
समाधिस्थानसंस्थस्य चेतश्चेद्वृत्तिचञ्चलम् ।
तत्तस्य यत्समाधानं सममुन्मत्तताण्डवैः ॥ १० ॥

धिसुखः प्रबुद्ध इव सुप्तोत्थित इव व्यवहारपरोऽपि सन् विश्रान्तः स्वात्मन्येवाभिरमते ॥ ५ ॥ कश्चित्पुनरेकान्तमाश्रित्य समाधौ नियमस्थितः तयोर्मध्ये कतरः श्रेयानित्येतद्वद ॥ ६ ॥ इममिति ॥ गुणसमाहारं सत्त्वादिगुणसमुदायरूपं इमं प्रपञ्चमनात्मत्वेन पश्यतः पुरुषस्य यान्तःशीतलता अमृतसागरनिमग्नस्येव या संतापनिवृत्तिः असौ समाधिरिति कथ्यते ॥ ७ ॥ दृश्यैरिति श्लोकद्वयं वाक्यम् ॥ यस्मात्कारणादन्तःशीतलतैवानन्तस्य तपसः फलं तस्मादन्तःशीतलत्वे सति द्वयोः सामान्यमेवेति पूर्वेणैवान्वयः ॥ ८ ॥ ९ ॥ चित्तविश्रान्तेरेव शीतलतारूपायाः प्राधान्यमन्वयव्यतिरेकाभ्यां श्लोकद्वयेनाह—समाधीति ॥ वृत्तिचञ्चलं हर्षविषादादिभिः क्षुभितं तर्हि । यदुक्तं भगवता—'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यत' इति ।

उन्मत्तताण्डवस्थस्य चेतश्चेत्क्षीणवासनम् ।
तदस्योन्मत्तनृत्यं तु समं बुद्धसमाधिना ॥ ११ ॥
व्यवहारी प्रबुद्धो यः प्रबुद्धो यो वने स्थितः ।
द्वावेतौ सुसमौ नूनमसन्देहपदं गतौ ॥ १२ ॥
अकर्तृ कुर्वदप्येतच्चेतः प्रतनुवासनम् ।
दूरंगतमना जन्तुः कथासंश्रवणे यथा ॥ १३ ॥
अकुर्वदपि कर्त्रैव चेतः प्रघनवासनम् ।
निष्पन्दाङ्गमपि स्वप्ने श्वभ्रपातस्थिताविव ॥ १४ ॥
चेतसो यदकर्तृत्वं तत्समाधानमुत्तमम् ।
तं विद्धि केवलीभावं सा शुभा निर्वृतिः परा ॥ १५ ॥
चेतश्चलाचलत्वेन परमं कारणं स्मृतम् ।
ध्यानाध्यानदशोस्तेन तदेवानङ्कुरं कुरु ॥ १६ ॥

॥ १० ॥ ११ ॥ व्यवहारीति ॥ प्रबुद्धः अवगतात्मतत्त्वः । असंदेहपदं असंदिग्धमात्मतत्त्वम् । 'छिद्यन्ते सर्वसंशयाः' इति श्रुतेः ॥ १२ ॥ अकर्तृ इति ॥ चेतः प्रतनुवासनं चेत्कुर्वदपि शरीरेन्द्रियाणि प्रवर्तयदपि अकर्त्रैव । कथासंश्रवणे दूरंगतमना जन्तुर्यथा । स हि पुराणकथामासन्नतया शृण्वन्नपि न शृणोत्येव ॥ १३ ॥ अकुर्वदिति ॥ चेतः प्रघनवासनं चेदकुर्वदपि कर्त्रैव । यथा स्वप्ने श्वभ्रपातस्थितौ श्वभ्रे पुराणकूपादौ पतामीत्येवंप्रतीतौ निष्पन्दाङ्गमपि शरीरे क्रियामनुत्पादयदपि चेतः कर्त्रैव भयकम्पादिहेतुत्वात् तद्वदिति ॥ १४ ॥ १५ ॥ चेत इति ॥ चेत एवाचञ्चलत्वेन ध्यानदशः कारणम् । चञ्चलत्वेनाध्यानदशः कारणमित्यर्थः । पाठक्रमादर्थक्रमो बलीयानिति न्यायात् । अनङ्कुरं निर्वासनम्

अवासनं स्थिरं प्रोक्तं मनोध्यानं तदेव च ।
स एव केवलीभावः शान्ततैव च तत्सदा ॥ १७ ॥
तनुवासनमत्युच्चैःपदायोद्यतमुच्यते ।
अवासनं मनः कर्तुं पदं तस्मादवाप्यते ॥ १८ ॥
घनवासनमेतत्तु चेतःकर्तृत्वभावनम् ।
सर्वदुःखप्रदं तस्माद्वासनां तनुतां नयेत् ॥ १९ ॥
चेतसा संपरित्यज्य सर्वभावात्मभावनाम् ।
यथा तिष्ठसि तिष्ठ त्वं तथा शैले गृहेऽथवा ॥ २० ॥
गृहमेव गृहस्थानां सुसमाहितचेतसाम् ।
शान्ताहंकृतिदोषाणां विजना वनभूमयः ॥ २१ ॥
यथा विपणिगा लोका विहरन्तोऽप्यसत्समाः ।
असंबन्धात्तथा ज्ञस्य ग्रामोऽपि विपिनोपमः ॥ २२ ॥

॥ १६ ॥ अवासनमिति ॥ शान्ततैव च तत्सदा तदेव स्थिरं मनः शान्तता चेत्यर्थः । 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गभाञ्जि भवन्ती'ति न्यायेन स एव केवलीभाव इत्यत्र विधेयलिङ्गोपादानं, तदेव शान्ततेत्यत्रोद्देश्यलिङ्गोपादानमिति द्रष्टव्यम् ॥ १७ ॥ तनुवासनमिति श्लोकद्वयेन । वासनातानवं चित्तकर्तृत्वभावं कर्तृत्वं भावयत् ॥ १८ ॥ १९ ॥ चेतसेति ॥ सर्वभावात्मभावनां सर्वभावात्मिकां वासनाम् ॥२०॥२१॥ यथेति ॥ विपणिगाः पण्यवीथिगताः लोका जनाः विहरन्तोऽपि देशान्तरादागतस्य पान्थस्य यथा असत्समाः असन्त इव नोपकुर्वन्ति । कुतः । असंबन्धात् तैः सह संबन्धाभावात् । तथा ज्ञस्य ज्ञानिनो ग्रामोऽपि विपिनोपमः । अरण्यमिव न विक्षेपहेतुरित्यर्थः

अन्तर्मुखमना नित्यं सुप्तो बुद्धो व्रजन्नटन् ।
पुरं जनपदं ग्राममरण्यमिव पश्यति ।
सर्वमाकाशतामेति नित्यमन्तर्मुखस्थितेः ॥ २३ ॥
अन्तःशीतलतायां तु लब्धायां शीतलं जगत् ।
अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत् ॥ २४ ॥
भवत्यखिलजन्तूनां यदन्तस्तद्बहिःस्थितम् ।
द्यौः क्ष्मा वायुराकाशं पर्वताः सरितो दिशः ।
अन्तःकरणतत्त्वस्य भागा बहिरिव स्थिताः ॥ २५ ॥
यस्त्वात्मरतिरेवान्तः कुर्वन्कर्मेन्द्रियैः क्रियाः ।
न वशो हर्षशोकाभ्यां स समाहित उच्यते ॥ २६ ॥
आत्मवत्सर्वभूतानि परद्रव्याणि लोष्टवत् ।
स्वभावादेव न भयाद्यः पश्यति स पश्यति ॥ २७ ॥
अद्यैव मृतिरायातु कल्पान्तो निश्चयेन वा ।
नासौ कलङ्कमाप्नोति हेम पङ्कगतं यथा ॥ २८ ॥

॥ २२ ॥ अन्तरिति सार्धश्लोको वाक्यम् ॥ यस्मादन्तर्मुखस्थितेः सर्वमाकाशतामेति तस्मादसौ पुरादिकं सर्वमरण्यमिव पश्यतीत्यन्वयः ॥ २३ ॥ अन्तरिति ॥ चित्ते शीतले जगच्छीतलत्वं तप्तेऽनुतप्तत्वमित्यर्थः ॥ २४ ॥ तदेवोपपादयितुमाह—भवतीत्यर्धत्रयमेकं वाक्यम् । यस्मादखिलजन्तूनां अन्तर्यद्वर्तते तदेव बहिः स्थितं भवति । द्यौरित्यादयोऽपि अन्तःकरणतत्त्वस्य भागा एव बहिरिव स्थिताः । तस्मादन्तःकरणवृत्तिरेव प्रधानमित्यर्थः । द्यौः स्वर्लोकः । आकाशमन्तरिक्षम् ॥ २५ ॥ यस्त्विवति ॥ यस्तु इन्द्रियैः कर्म कुर्वन्नपि आत्मरतिरात्मनिष्ठ एव हर्षशोकाभ्यां हेतुभ्यां न वशस्तत्साधनाधीनो न भवति स समाहित इत्यन्वयः ॥ २६ ॥ २७ ॥ २८ ॥

सर्वं प्रशान्तमजमेकमनादिमध्य-
माभास्वरं स्वदनमात्रमचिन्त्यचित्तम् ।
सर्वं प्रशान्तमिति शब्दमयी तु दृष्टि-
र्बोधार्थमेव हि मुधैव तदोमितीदम् ॥ २९ ॥

वसिष्ठ उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
किरातेशस्य सुरघोर्वृत्तान्तं विस्मयास्पदम् ॥ ३० ॥
हिमाद्रेः शृङ्गमस्तीह कैलासो नाम पर्वतः ।
तस्य हेमजटा नाम किराताः संस्थितास्तले ॥ ३१ ॥
आसीत्तेषामुदारात्मा राजा परपुरंजयः ।
सुरघुर्नाम बलवान्सुरयोधादिदर्पहा ॥ ३२ ॥
स चक्रे राजकार्याणि निग्रहानुग्रहक्रमैः ।
तज्जाभ्यां सुखदुःखाभ्यां मतिस्तस्याभ्यभूयत ॥ ३३ ॥
किमत्र पीडयाम्येवं तिलान्यन्त्रमिवौजसा ।
सर्वेषामेव भूतानां ममैषार्तिः प्रजायते ॥ ३४ ॥
अथ वा निग्रहं प्राप्तं करोम्येतेन वै विना ।

सर्वमिति ॥ आभास्वरं सर्वत्र प्रकाशमानं स्वदनमात्रं सर्वरसास्वाद-हेतुः । पूर्वार्धविशेषणैर्बहुभिरभिसंबन्धात् अद्वैतभङ्गमाशङ्क्याह । सर्वं प्रशान्तमित्यादिभिर्विशेषणैर्या भेदोल्लेखिनी शब्दमयी दृष्टिः सा बोधार्थमेव कल्पिता हि । ततो हेतोर्मुधैव । तत्तस्मादिदं सर्वमो-मित्येव वक्तव्यम् । ओंकारस्यैव परब्रह्मत्वप्रतिपादकत्वात् ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ किमर्थमिति ॥ एवं लोके यन्त्र-मिव तैलाकर्षणाय कल्पितं तिलयन्त्रमिव ॥ ३४ ॥ अथेति ॥

वर्तते न प्रजा चेयं विना वारि सरिद्यथा ॥ ३५ ॥
इति दोलायितं चेतो न विशश्राम भूपतेः ।
अथैकदा गृहं तस्य माण्डव्यो मुनिराययौ ॥ ३६ ॥
तमसौ पूजयामास पप्रच्छ च महामुनिम् ।
भवदागमनेनास्मि मुने निर्वृतिमागतः ॥ ३७ ॥
अद्य तिष्ठाम्यहं नाथ धन्यानां धुरि धर्मतः ।
भगवन्सर्वधर्मज्ञ चिरं विश्रान्तवानसि ॥ ३८ ॥
तदमुं संशयं छिन्धि ममार्कस्तिमिरं यथा ।
महतां संगमेनार्तिः कस्य नाम न नश्यति ॥ ३९ ॥
संदेहं तु परामार्तिमाहुरार्तिविदो जनाः ।
सन्निग्रहानुग्रहजा मद्भृत्यवपुषि स्थिताः ॥ ४० ॥
कर्षन्ति मामलं चिन्ता गजं हरिनखा इव ।
तद्यथा समतोदेति सूर्यांशुरिव सर्वगः ॥ ४१ ॥
त्वत्तो मम मुने मान्यो नान्योऽस्ति करुणां कुरु ॥ ४२ ॥

माण्डव्य उवाच ॥

स्वयत्नेन स्वसंस्थेन स्वेनोपायेन भूपते ।
एषा मनःपेलवता हिमवत्प्रविलीयते ॥ ४३ ॥

अथवा प्राप्तं निग्रहं करोमि । यस्य यो दण्डो धर्मः शास्त्रे योग्यतया निरूपितः तस्य तं दण्डं करोमीत्यर्थः । यस्माद्धेतोरनेन निग्रहेण विना सरिद्वा कर्त्री वारि विनेव प्रजा स्वमार्गे न वर्तते । कामक्रोधादिभिः परस्परबाधार्थं प्रवृत्तत्वात् । यदाह कामन्दकः—'जगद्वेतन्निरानन्दं कामलोभादिभिर्बलात् । निमज्ज्यमानं निरये राज्ञा दण्डेन धार्यते' इति॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

स्वविचारणयैवाशु शाम्यत्यन्तर्मनोमलम् ।
कोऽहं कथमिदं किं वा कथं मरणजन्मनी ॥ ४४ ॥

विचारयान्तरेव त्वं महतामलमेष्यसि ।
विचारेण परिज्ञातस्वभावस्य सतस्तव ॥ ४५ ॥

मनः स्वरूपमुत्सृज्य शममेष्यति विज्वरम् ।
तिष्ठदेव मनोरूपं परित्यक्ष्यति तेऽनघ ॥ ४६ ॥

कृपणं हि मनो राजन्पेलवेऽपि निमज्जति ।
कार्ये गोष्पदतोयेऽपि जीर्णाङ्गो मशको यथा ॥ ४७ ॥

यावद्यावत्परालोकः परमात्मैव शिष्यते ।
तावत्तावन्महाबाहो स्वयं संत्यज्यतेऽखिलम् ॥ ४८ ॥

यावत्सर्वं न संत्यक्तं तावदात्मा न लभ्यते ।
सर्ववस्तुपरित्यागे शेष आत्मेति कथ्यते ॥ ४९ ॥

यावदन्यन्न संत्यक्तं तावत्सामान्यमेव हि ।
वस्तु नासाद्यते साधो स्वात्मलाभे तु का कथा ॥ ५० ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ यावदिति ॥ अखिलं दृश्यं यावद्यावदल्पमनल्पं वा स्वयं संत्यज्यते अन्यबुद्ध्या स्वयमेवोपेक्ष्यते तावत्तावत्परित्यक्तदृश्यानुरूपं यथातथा परालोकः प्रकृष्टप्रकाशः परमात्मैव शिष्यते ॥ ४८ ॥ दृश्यपरित्यागे दृगेव परिशिष्यत इति भावः ॥ ४९ ॥ यावदिति ॥ अन्यद्वस्तु यावन्न संत्यक्तं तावत्सामान्यमेव साधारणमपि रत्नं सुवर्णरजतादिकमपि वस्तु न आसाद्यते । हि यस्माद्धेतोः स्वात्मलाभे तु का कथा । अन्यद्वस्तु संत्यक्तव्यमिति किमुच्यत इत्यर्थः । नह्यन्यपरत्वे

आत्मावलोकनार्थं तु तस्मात्सर्वं परित्यजेत् ।
सर्वं ह्येतत्परित्यज्य यावच्छिष्टं परं पदम् ॥ ५१ ॥

सकलकारणकार्यपरम्परा-
मपि जगद्गतवस्तुविजृम्भितम् ।
अलमपास्य मनः स्ववपुस्ततः
परिविधूय च यच्छुभमस्तु तत् ॥ ५२ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा भगवानेनं सुरघुं रघुनन्दन ।
ययौ स्वमेव रुचिरं माण्डव्यो मौनमण्डलम् ॥ ५३ ॥
गते वरमुनौ राजा गत्वैकान्तमनिन्दितम् ।
धिया संचिन्तयामास को नामाहमिति स्वयम् ॥ ५४ ॥
देहमात्रमहं मन्ये हस्तपादादिसंयुतम् ।
न मे तत्तावदाश्वन्तरलमालोकयाम्यहम् ॥ ५५ ॥
तदत्र तावन्मांसास्थि नाहमेतदचेतनम् ।
कर्मेन्द्रियाणि नैवाहं न च कर्मेन्द्रियाणि मे ॥ ५६ ॥
जडान्यतत्स्वरूपाणि न च बुद्धीन्द्रियाण्यहम् ।
नाहमेवं शरीरादि शिष्टमालोकयाम्यहम् ॥ ५७ ॥
शेषो विकल्परहितो विशुद्धश्चिदहं ततः ।
ब्रह्माण्डे च यथा वायुः सर्वभूतगणे तथा ॥ ५८ ॥

सिसाधयिषितं वस्तु किंचिदपि सिध्यतीति भावः ॥ ५० ॥ ५१ ॥ सकलेति ॥ कार्यकारणात्मजगद्वस्तुवासितं मनः अपास्य अनात्मत्वेन निरस्य ततः स्ववपुः परिधूय अनात्मतया परिच्छिद्य यच्छुभं वस्त्ववस्थाप्यते तदेवास्तु ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

स एव भगवानात्मा तन्तुर्मुक्तास्विव स्थितः ।
चिच्छक्तिरमला सैषा चेत्यामयविवर्जिता ।
भरिताशेषदिक्कुम्भा भैरवाकारधारिणी ॥ ५९ ॥
सर्वभावगता सूक्ष्मा भावाभावविवर्जिता ।
आब्रह्मभुवनान्तःस्था सर्वशक्तिसमुद्गिका ॥ ६० ॥
सर्वं किंचिदिदं दृश्यं दृश्यते यज्जगद्गतम् ।
चिन्निष्पन्दांशमात्रं तन्नान्यत्किंचन शाश्वतम् ॥ ६१ ॥
विगतरञ्जननिर्विषयस्थिति-
र्गतभवभ्रम ईहितवर्जितः ।
स्थिरसुषुप्तकलाभिगतस्ततः
शमसमं निवसाम्यहमात्मनि ॥ ६२ ॥

वसिष्ठ उवाच ॥

इति हेमजटाधीशो लेभे पदमनुत्तमम् ।
विवेकाध्यवसायेन ब्राह्मण्यमिव गाधिजः ॥ ६३ ॥

॥ ५८ ॥ ५९ ॥ ६० ॥ सर्वमिति ॥ जगति दृश्यमानं सर्वमपि चिन्निष्पन्दांशमात्रम्। चितोनिष्पन्दः स्फूर्तिः तदंश एव। अन्यच्छाश्वतं किंचन वस्तु नास्ति ॥ ६१ ॥ विगतेति ॥ विगतरञ्जननिर्विषयस्थितिः रज्यते येन तद्रञ्जनं वासनाजालं विगतं रञ्जनं यस्मात्सः। अतएव निर्विषया विषयेभ्यो निर्गता स्थितिर्यस्य विगतरञ्जनश्चासौ निर्विषयस्थितिश्चेति तथा। स्थिरसुषुप्तकलाभिगतो गाढसुषुप्तदशां प्राप्तः। शमेन सममात्मनि स्वरूपे निवसामि ॥ ६२ ॥ इतीति ॥ गाधिजो विश्वामित्रः। स हि वसिष्ठेन स्पर्धमानः तपोभिर्ब्रह्मर्षित्वमेव लब्धवानिति रामायणादौ प्रपञ्चितम् ॥ ६३ ॥

सुषुप्तपदधर्मिण्या चित्तवृत्त्या व्यराजत ॥ ६४ ॥
न निर्घृणो दयावान्नो न द्वन्द्वी नाप्यमत्सरी ।
न सुधीर्नासुधीर्नार्थी नानर्थी स बभूव ह ॥ ६५ ॥
शृणु तस्याथ सुरघोः प्रबुद्धस्य सतस्तदा ।
पर्णादस्य च राजर्षेः संवादमिममद्भुतम् ॥ ६६ ॥
बभूव पारसीकानां पार्थिवः परवीरहा ।
परिघो नाम विख्यातः परिघः स्यन्दने यथा ॥ ६७ ॥
स बभूव परं मित्रं सुरघो रघुनन्दन ।
कदाचित्परिघस्यासीदकाण्डं मण्डलं महत् ॥ ६८ ॥
विनेशुर्जनतास्तत्र बह्व्यः क्षुत्क्षतजीविताः ।
तद्दुःखं परिघो दृष्ट्वा प्रतीकारेष्वशक्तिमान् ॥ ६९ ॥
स तत्याजाखिलं राज्यं जगाम तपसे वनम् ।
तपश्चरञ्शान्तमतिः शुष्कपर्णान्यभक्षयत् ॥ ७० ॥
ततः प्रभृति पर्णाद इति ख्यातिमसौ ययौ ।
ततो वर्षसहस्रेण तपसा दारुणात्मना ॥ ७१ ॥

॥ ६४ ॥ सुषुप्तदशावन्निर्विकारया चित्तवृत्त्या व्यराजतेत्युक्तं । तदेव निर्विकारत्वमाह—नेति॥सः सुरघुः निर्घृणः क्रूरो नच बभूव दयावांश्च न। दयायाः परदुःखप्रहाणेच्छारूपत्वात् तस्य च रागादिरहितत्वात्। अतएवामत्सरः द्वेषरहितः सुधीरसुधीश्च न शुभाशुभसर्वबुद्धिरहितत्वात्। अर्थी न अनर्थी च न रागद्वेषयोरसत्त्वात्। अतो द्वन्द्वहीनो बभूवेति योज्यम् ॥ ६५ ॥ ६६ ॥ बभूवेति ॥ परिघः स्यन्दने यथा। परिघो नामायुधविशेषः परितो हन्यतेऽनेनेति व्युत्पत्त्या यथा स्यन्दने रथे परान्वीरान्हन्तीति विख्यातस्तद्वदसावपीत्यर्थः ॥ ६७ ॥

आपदभ्यासवशतो ज्ञानमात्मप्रसादजम् ।
बभूव विगतद्वन्द्वो नीरुजः समदर्शनः ॥ ७२ ॥
विजहार यथाकामं त्रिलोकीमठिकामिमाम् ।
एकदा तस्य सदनं हेमचूडापतिर्ययौ ॥ ७३ ॥
ते तत्र प्राक्तने मित्रे अन्योन्यमिदमूचतुः ।
परमानन्दमायातं चेतस्त्वद्दर्शनेन मे ।
अहो नु बत कल्याणैः फलितं मम पावनैः ॥ ७४ ॥

परिघ उवाच ॥

ज्ञानमेतन्मया प्राप्तं त्वया ज्ञानं यथानघ ।
कच्चित्करोषि सुधिया सुप्रसन्नगभीरया ॥ ७५ ॥
दृष्ट्वा सुभग कार्याणि कर्माण्येव नराधिप ।
आधिव्याधिविहीनेयं कच्चित्कायलता तव ॥ ७६ ॥
आपातरमणीये तु कच्चिद्भोगे न मज्जसि ।
कच्चित्संकल्परहितं परविश्रमणास्पदम् ॥ ७७ ॥
परमोपशमं श्रेयः समाधिमनुतिष्ठसि ॥ ७८ ॥

सुरघुरुवाच ॥

योऽज्ञो महात्मन्सततं तूष्णीं व्यवहरंश्च वा ।
असमाहितचित्तोऽसौ कदा भवति मे वद ॥ ७९ ॥

॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ॥ ७६ ॥ ७७ ॥ ७८ ॥ य इति ॥ यः पुमानज्ञः आत्मज्ञो न भवति सोऽसौ तूष्णीं तिष्ठन् व्यवहरंश्च वा कदा समाहितचित्तो भवति । न कदापीत्यर्थः । अज्ञस्य समाधिरेव न संभवतीति भावः । असमाहितचित्त इति पाठे योऽज्ञ इत्यत्र ज्ञ इति पद-

नित्यप्रबुद्धचित्तत्वात्कुर्वन्तोऽपि जगत्क्रियाः ।
आत्मैकतत्त्वतन्निष्ठाः सदैव सुसमाधयः ॥ ८० ॥
बद्धपद्मासनस्यापि कृतब्रह्माञ्जलेरपि ।
अविश्रान्तस्वभावस्य कः समाधिः कथं च वा ॥ ८१ ॥
तत्त्वावबोधो भगवन्सर्वाशातृणपावकः ।
प्रोक्तः समाधिशब्देन न च तूष्णीमवस्थितिः ॥ ८२ ॥
समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी ।
साधो समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ ८३ ॥
अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी ।
प्रोक्ता समाधिशब्देन मेरोः स्थिरतरा स्थितिः ॥ ८४ ॥

च्छेदः । ज्ञः कदा असमाहितचित्तो भवति । न कदापीत्यर्थः । ज्ञानिनः सर्वदा समाधिरेवेति भावः ॥ ७९ ॥ एतदेवान्वयव्यतिरेकाभ्यामुपपादयति--नित्येत्यादिना । आत्मैकतत्त्वतन्निष्ठाः आत्मना स्वात्मना एकमैक्यापन्नं तत्त्वं यस्य तादृशे तच्छब्दप्रतिपाद्ये ब्रह्मणि निष्ठा येषां ते । 'ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीतोक्तेः ॥ ८० ॥ बद्धेति ॥ बद्धपद्मासनस्यापि बद्धं पद्मासनं येन तस्यापि । बद्धपद्मासनस्थस्येति पाठे कृतब्रह्माञ्जलेरपीति न संगच्छेत् । बद्धपद्मासनस्य हस्तयोरङ्गुष्ठग्रहणे विनियोगात् । यथाह याज्ञवल्क्यः--'ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे । अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु । पद्मासनं भवेदेतत्सर्वेषामपि पूजितम्' इति । केवलपद्मासनस्य ब्रह्माञ्जलेश्च लक्षणमुक्तं पुरस्तात् ॥ ८१ ॥ ८२ ॥ ८३ ॥ अक्षुब्धेति ॥ मेरोरिति पञ्चम्यन्तम् । तत्रापि स्थिरतरा या चेतनस्य स्थितिः सैव समाधिरिति प्रोक्ता

निश्चिन्ता विगताभीष्टा हेयोपादेयवर्जिता ।
प्रोक्ता समाधिशब्देन परिपूर्णा मनोगतिः ॥ ८५ ॥
न विस्मरत्यविरतं यथा कालः कलागतिम् ।
न विस्मरत्यविरतं स्वात्मानं प्राज्ञधीस्तथा ॥ ८६ ॥
न विस्मरति सर्वत्र यथा सततगो गतिम् ।
न विस्मरति निश्चित्य चिन्मात्रं प्राज्ञधीस्तथा ॥ ८७ ॥
नित्यं समाहितधियः सुसमा महान्त-
स्तिष्ठन्ति कार्यपरिणामविभागमुक्ताः ।
तेनासमाहितसमाहितभेदभङ्ग्या
मिथ्योदितः क नु स उत्तम वाक्प्रपञ्चः ॥ ८८ ॥

॥ ८४ ॥ निश्चिन्तेति ॥ मनोगतिः हेयोपादेयवर्जिता इदं हेयं इदमुपादेयमिति भेदभावनारहिता । अतएव विगताभीष्टा अतश्च निश्चिन्ता सैव परिपूर्णा मनोगतिः समाधिः ॥ ८५ ॥ नेति ॥ कालो यथा कलागतिं कलाकाष्ठादिरूपां स्वगतिं न विस्मरति तथा प्राज्ञधीरपि स्वात्मानं स्वस्वरूपं न विस्मरति॥ ८६ ॥ नेति ॥ सततगो वायुः ॥ ८७ ॥ नित्यमिति ॥ महान्तः परिपूर्णज्ञानरूपाः । कार्यपरिणामविभागमुक्ताः कार्याणां परिणामः सुखदुःखादिरूपो विकारः तेन यो विभागो भेदभावना तेन मुक्ताः अतः सुसमाः सर्वत्र समदृशः अतो नित्यं समाहितधियस्तिष्ठन्ति । तेन हेतुना असमाहितसमाहितभेदभङ्ग्या असमाहिताः समाहिता इति या भेदभङ्गिः भेदकलना तया मिथ्यैवोदितः स वाक्प्रपञ्चः क नु

परिघ उवाच ॥

राजन्नूनं प्रबुद्धोऽसि प्राप्तवानसि तत्पदम् ।
संशीतलान्तःकरणो गम्भीरप्रकटाशयः ॥ ८९ ॥
निर्मलो विततः पूर्णो गताहंकारविक्लवः ।
सर्वत्र लक्ष्यसे स्वस्थो राजन्सर्वत्र राजसे ॥ ९० ॥
अलमतिविततैर्वचःप्रपञ्चै-
रियमुदितेह सुखाय दृष्टिरेका ।
उपशमितरसं समं मनोऽन्त-
र्यदि मुदितं तदनुत्तमा प्रतिष्ठा ॥ ९१ ॥

इति श्रीवाल्मीकीये मोक्षोपाय उपशमप्रकरणे सुरघूपाख्यानं नाम सप्तमः सर्गः ॥ ७ ॥

---

## अष्टमः सर्गः

वसिष्ठ उवाच ॥

सुरघुः परिघश्चैव विचार्येति जगत्क्रमम् ।
मिथः प्रपूजितौ तुष्टौ स्वव्यापारपरौ गतौ ॥ १ ॥

न क्वापीत्यर्थः । उत्तमेति परिघसंबोधनम् ॥ ८८ ॥ ८९ ॥ ९० ॥ अलमिति ॥ इयमित्यन्त्यपद्ये निरूप्यमाणा । मनः कर्तृ उपशमितरसं निवृत्तविषयौत्सुक्यं अतएव समं समरसं सदन्तः स्वात्मसुखे यदि मुदितं तृप्तं तत्तर्हीयमन्तर्मुखी दृष्टिरेका सुखायोदितोक्ता । इयमेव च दृष्टिरनुत्तमा सर्वोत्तमा प्रतिष्टा जीवन्मुक्तिरपीत्यर्थः ॥ ९१ ॥ इति श्रीवासिष्ठविवरण उपशमप्रकरणे सुरघूपाख्यानं नाम सप्तमः सर्गः ७

पूर्वं चित्तविश्रान्तिरेव जीवन्मुक्तिसीमेत्युक्तम् । इदानीं विश्रान्त्यभावे बहुविधः प्रयास इति भासविलाससंवादो निरूप्यते ॥ १ ॥ य इति ॥ अध्यात्ममयः आत्मन्यधि अध्यात्मं

योो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी ।
नित्यं चिदनुसंधानः स न शोकेन बाध्यते ॥ २ ॥
आशापाशशतैर्बद्धं भोगोलपसुलालसम् ।
व्यूढदुःखमहाभारं मोहपल्वलशायिनम् ॥ ३ ॥
रोगदंशावलीदष्टं कृष्टं तृष्णावरत्रया ।
कुकर्मकर्दमालिप्तं संसारारण्यचारिणम् ॥ ४ ॥
अलब्धशीतलच्छायं गमागमपिपासितम् ।
राम जीवबलीवर्दमिमं संसारपल्वलात् ॥
परमं यत्नमास्थाय चिरमुत्तारयेद्बलात् ॥ ५ ॥
महानुभावसंपर्कात्संसारार्णवलङ्घने ।
युक्तिः संप्राप्यते राम स्फुटा नौरिव नाविकात् ॥ ६ ॥
यस्मिन्देशे गिरौ तज्ज्ञो नास्ति सज्जनपादपः ।
सफलः शीतलच्छायो न तत्र निवसेद्बुधः ॥ ७ ॥

अध्यात्मशास्त्रं तन्मयस्तदनुसंधानपरः ॥ २ ॥ आशेति श्लोकत्रयं वाक्यम् ॥ भोगोलपसुलालसं भुज्यन्त इति भोगा विषयाः त एवोलपानि प्रतानवन्ति तृणानि तेषु सुलालसं समुत्सुकम् । रोगा एव दंशावली तया दष्टम् । तृष्णावरत्रया तृष्णैव वरत्रा चर्ममयी रज्जुः तया कृष्टमाकृष्टम् । कुकर्म पापं तदेव कर्दमः पङ्कस्तेन लिप्तं । मोहपल्वलशायिनं मुह्यत्यस्मिन्निति मोहः संसारः स एव पल्वलं अल्पं सरः तच्छायिनम् ॥ ३ ॥ ४ ॥ अलब्धशीतलच्छायं अप्राप्तविश्रान्तिस्थानं इमं जीवरूपं बलीवर्दं अनड्वाहं ओघादिगुणयोगात्परमं यत्नं पूर्वोक्तमास्थाय संसारपल्वलादुत्तारयेत् ॥ ५ ॥ ६ ॥ ७ ॥

न धनानि न मित्राणि न शास्त्राणि न बान्धवाः ।
नराणामुपकुर्वन्ति मग्नस्वात्मसमुद्धृतौ ॥ ८ ॥
मनोमात्रेण सुहृदा सदैव सहवासिना ।
सह किंचित्परामृश्य भवत्यात्मा समुद्धृतः ॥ ९ ॥
एतावतैव देवेशः परमात्मावगम्यते ।
काष्ठलोष्टसमत्वेन देहो यदवलोक्यते ॥ १० ॥
परिपूर्णार्णवप्रख्यो न वाग्गोचरमेति सः ।
नोपमानमुपादत्ते नानुधावति रञ्जनम् ॥ ११ ॥
केवलं चित्प्रकाशांशकलिता स्थिरतां गता ।
तुर्या चेत्प्राप्यते दृष्टिस्तत्तया सोपमीयते ॥ १२ ॥

नेति ॥ मग्नस्वात्मसमुद्धृतौ संसारे निमग्नस्य स्वात्मनः समुद्धरणे देहेन्द्रियादौ तादात्म्यमापन्नस्य स्वरूपस्य विविक्ततया निश्चये धनादीनि नोपकुर्वन्ति ॥ ८ ॥ किं तर्ह्युपकरोतीत्यत्राह—मनोमात्रेणेति ॥ किंचित्परामृश्य कोऽहमित्यादिविचार्यात्मा समुद्धृतो भवति ॥ ९ ॥ एतावतेति ॥ देहस्य काष्ठादिवदनात्मत्वनिश्चयेनैवात्मनः परमात्मत्वमवगम्यत इत्यर्थः ॥ १० ॥ परीति ॥ नोपमानमुपादत्ते । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः । नानुधावति रञ्जनं रञ्जकं संस्कारकं वस्तु नापेक्षते ॥ ११ ॥ किंचित्सादृश्यादुपमानमपि संभवतीत्याह—केवलमिति श्लोकत्रयं वाक्यम् ॥ मनोहंकारविलये सति सर्वभावान्तरस्थिता परानन्दा पारमेश्वरी या तनुः स्वरूपं समुदेति सा तनुः चित्प्रकाशांशकलिता चितश्चैतन्यस्य प्रकाशरूपेणैवांशेन कलिता प्रकाशस्य लक्षणेनांशान्तरेण कलिता स्थिरतां गता तुर्या दृष्टिः प्राप्यते चेत् तत्तर्हि तया दृष्ट्या उपमीयते । गगनश्री-

अदूरगतसादृश्या सुषुप्तिः सोपलक्ष्यते ।
सावस्था भरिताकारा गगनश्रीरिवातता ॥ १३ ॥
मनोहंकारविलये सर्वभावान्तरस्थिता ।
समुदेति परानन्दा या तनुः पारमेश्वरी ॥ १४ ॥
सा स्वयं योगसंसिद्धा सुषुप्ताऽदूरभाविता ।
न गम्या वचसां राम हृद्येवेहानुभूयते ॥ १५ ॥

अखिलमिदमनन्तमात्मतत्त्वं
दृढपरिणामिनि चेतसि स्थितोऽन्तः ।
बहिरुपशमिते चराचरात्मा
स्वयमनुभूयत एव देवदेवः ॥ १६ ॥
तदनु विषयवासनाविनाश-
स्तदनु शुभः परमस्फुटप्रकाशः ।

रिव आतता भरिताकारा पूर्णाकारा सा परमात्मभावदशा सुषु-प्तावस्थया अदूरगतसादृश्यान्निर्विकारचिन्मात्रतया ईषत्सादृश्यादु-पलक्ष्यते ॥ १२ ॥ १३ ॥ १४ ॥ सेति ॥ सा पूर्वोक्ता परमात्म-दशा योगेन समाधिना संसिद्धा सुषुप्ताऽदूरभाविता सुषुप्तावस्थया अदूरत्वेन सादृश्येन भाविता हृद्येवानुभूयते । वचसां न गम्या ॥ १५ ॥ अखिलमिति ॥ अखिलं जगदनन्तमात्मतत्त्वं आत्मस्व-रूपमेव । यस्मात्कारणादृढपरिणामिनि वासनाभूयिष्ठतया प्रगाढ-विचित्रविकारे चेतसि समाधिवशात्प्रशमिते सति अन्तःस्थितः सर्वा-न्तर्यामितया स्थितो देवदेवो बहिरपि चराचरात्मा स्वयमनुभूयत एव स्वयं प्रकाशतएव परिच्छेदकस्य चेतसो विलयादिति ॥ १६ ॥ तदनु अन्तर्बहिश्च परमात्मदृष्ट्यनन्तरं विषयवासनानां विषयसंस्काराणां विनाशः । तदनु विषयवासनाविनाशानन्तरंशुभः परमस्य परमा-

तदनु च समतावशात्स्वरूपे
परिणमनं महतामचिन्त्यरूपम् ॥ १७ ॥
मनसैव मनश्छित्त्वा यद्यात्मा नावलोक्यते ।
तन्न नश्येज्जगद्दुःखं मनश्छेदे सुखात्मधीः ॥ १८ ॥

वसिष्ठ उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
संवादं सुहृदोः सह्यसानौ भासविलासयोः ॥ १९ ॥
अत्युत्सेधजिताकाशः पीठेन जितभूतलः ।
तलेन जितपातालः सह्यो लोकोत्तरो गिरिः ॥ २० ॥
तत्रोत्तरनदे सानावानमत्फलपादपे ।
अत्रेरस्त्याश्रमः श्रीमान्सिद्धश्रमहरो महान् ॥ २१ ॥
महत्यत्र्याश्रमे तस्मिंस्तापसौ द्वौ बभूवतुः ।
कौचिदेव नभोमार्ग इव शुक्रबृहस्पती ॥ २२ ॥

त्मनः स्फुटं यथा तथा प्रकाशस्तदनु च समतावशात्स्वरूपे अचिन्त्यरूपे परिणमनम् । स्वस्यैव परमात्मभावात्स्वरूपनिष्ठतैव संपद्यत इत्यर्थः ॥ १७ ॥ मनसेति ॥ मनसैव शास्त्रसंस्कृतेन विवेकिना मनसैव मनः संसारसक्तं चित्तं छित्त्वा ॥ १८ ॥ १९ ॥ अत्युत्सेधेति ॥ उत्सेधः औन्नत्यम् । जितं व्याप्तम् । पीठं नाम भूमेरुपरितनो विस्तीर्णः पर्वतप्रदेशः येन भूतलं व्याप्नोति । तलं नाम भूम्यां निमग्नः पर्वतमूलभागः । सह्यो नाम कुलाचलः । तदुक्तं वैष्णवे—'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः' इति ॥ २० ॥ २१ ॥

तयोरथैकास्पदयोस्तत्राभूतां सुतावुभौ ।
विलासभासनामानौ वृद्धिमाययतुः क्रमात् ॥ २३ ॥
आस्तामन्योन्यसुस्निग्धौ सुरक्ताविव दम्पती ।
एकं द्वित्वमिवापन्नं सममासीत्तयोर्मनः ॥ २४ ॥
जग्मतुर्देहमुत्सृज्य ततस्तु पितरौ तयोः ।
तत्रौर्ध्वदैहिकं कृत्वा चक्राते परिदेवनम् ॥ २५ ॥
विरक्तौ विपिने कालं क्षपयामासतुः पृथक् ।
तपसा शुष्कसर्वाङ्गावनास्थामागतौ पराम् ॥ २६ ॥
जग्मुर्दिनानि मासाश्च वर्षाण्यपि तयोस्तथा ।
तावेकदा संघटिताविदमन्योन्यमूचतुः ॥ २७ ॥

विलास उवाच ॥

जीविताग्र्यद्रुमफल हृदाश्वासामृताम्बुधे ।
जगत्यस्मिन्महाबन्धो भास स्वागतमस्तु ते ॥ २८ ॥
एतावन्तो दिनानल्पा मद्वियोगवता त्वया ।
वद क्व क्षपिताः साधो कच्चित्ते सफलं तपः ॥ २९ ॥
कच्चित्ते विज्वरा बुद्धिः कच्चिज्ज्ञातस्त्वमात्मवान् ।
कच्चित्फलितविद्यस्त्वं कच्चित्कुशलवानसि ॥ ३० ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ जगतीति ॥ जगति सति। महाबन्धो विश्रामसहाय ॥ २८ ॥ एतावन्त इति ॥ दिनानल्पाः दिनैरनल्पाः भूयिष्ठाः एतावन्तो वत्सराः क्व क्षपिता इत्यर्थः । जग्मुर्दिनानि मासाश्च वर्षाण्येवामितवत्सरपर्यन्तस्य कालस्य प्रस्तुतत्वात्प्रश्नस्य दिनविषयत्वे तु दिनानल्पा इति नोपपद्यते । दिनशब्दस्य नपुंसकत्वात् पुंस्त्वाभ्युपगमेऽपि संहिताया

भास उवाच ॥

साधो स्वागतमद्याङ्ग दिष्ट्या दृष्टोऽसि मानद ।
कुशलं च कुतोऽस्माकं संसारे तिष्ठतामिह ॥ ३१ ॥
यावन्नाधिगतं ज्ञेयं यावत्क्षीणा न चित्तभूः ।
यावत्तीर्णो न संसारस्तावन्नः कुशलं कुतः ॥ ३२ ॥
आशा यावदशेषेण न लूनाश्चित्तसंभवाः ।
वीरुधो दात्रकेणेव तावन्नः कुशलं कुतः ॥ ३३ ॥
यावन्नाधिगतं ज्ञानं यावन्न समतोदिता ।
यावन्नाभ्युदितो बोधस्तावन्नः कुशलं कुतः ॥ ३४ ॥
आत्मलाभं विना साधो विना ज्ञानमहौषधम् ।
उदेति पुनरेवेयं दुःसंसृतिविषूचिका ॥ ३५ ॥
बहुविधसुखदुःखमध्यपाती
विततजरामरणप्रपातभग्नः ।
जगदुदरगिरौ लुठञ्जनोऽयं
गतरसपर्णवदेति जर्जरत्वम् ॥ ३६ ॥

इति श्रीवाल्मीकीये मोक्षोपाय उपशमप्रकरणे भासविलाससंवादो नाम अष्टमः सर्गः ॥ ८ ॥

---

अयोगात् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ आशा इति ॥ वीरुधः प्रतानिन्यो लताः । अत्र किल चित्रम् ॥ ३३ ॥ यावदिति ॥ ज्ञानं शास्त्रजन्यं परोक्षं विज्ञानम् । बोधः साक्षात्कारः ॥ ३४ ॥ ३५ ॥ बह्विति ॥ वितततेषु जरामरणदुःखेष्वेव प्रपातेषु भृगुषु भग्नः भङ्गं प्राप्तवान् । जगदुदर एव गिरौ लुठन् परिभ्रमन् गतरसपर्णवच्छुष्क-पर्णवत् ॥ ३६ ॥ इत्युपशमप्रकरणे अष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः

वसिष्ठ उवाच ॥

एवं तौ कुशलप्रश्नं कृतवन्तौ परस्परम् ।
कालेनासाद्य विमलं ज्ञानं मोक्षमवापतुः ॥ १ ॥
अतो वच्मि महाबाहो यथा ज्ञानेतरा गतिः ।
नास्ति संसारतरणे सङ्गबद्धस्य चेतसः ॥ २ ॥
असक्तं निर्मलं चित्तं मुक्तं संसार्यपि स्फुटम् ।
सक्तं तु दीर्घतपसा युक्तमप्यतिबन्धवत् ॥ ३ ॥
अन्तःसंसक्तिनिर्मुक्तो जीवो मधुरवृत्तिमान् ।
बहिः कुर्वन्नकुर्वन्वा कर्ता भोक्ता नहि क्वचित् ॥ ४ ॥

राम उवाच ॥

कीदृशो भगवन्सङ्गः कश्च बन्धाय वा नृणाम् ।
कश्च मोक्षाय कथितः कथं चैष चिकित्स्यते ॥ ५ ॥

वसिष्ठ उवाच ॥

देहदेहिविभागैकपरित्यागेन भावनात् ।
देहमात्रे तु विश्वासः सङ्गो बन्धार्ह उच्यते ॥ ६ ॥

पूर्वं चित्तविश्रान्त्यभावे बहुविधः प्रयास इत्युक्तम् । इदानीं चित्तविश्रान्तिसिद्ध्यै सङ्गत्यागः प्राणनिरोधः समाध्यभ्यासश्च कर्तव्य इति वीतहव्योपाख्यानेन निरूप्यते ॥ १ ॥ २ ॥ तत्र सङ्गत्यागं प्रस्तौति—असक्तमिति ॥ सङ्गासङ्गौ वक्ष्यमाणलक्षणौ ॥३॥ अन्तरिति ॥ मधुरवृत्तिमान् मधु पुष्परसं राति आदत्त इति मधुरो मधुकरः तस्य वृत्तिमान् । स हि पुष्पेषु यथालाभं मधु गृह्णन् असक्त एव सुखं विहरति तद्वद्वृत्तिरित्यर्थः ॥ ४ ॥ ५ ॥ देहेति ॥ देहदेहिविभागैकपरित्यागेन को देहः को वा देहीति विवेकमेकं परित्य-

अनन्तस्यात्मतत्त्वस्य सपर्यन्तत्वनिश्चये।
यः सुखार्थित्वमन्तः स सङ्गो बन्धार्ह उच्यते ॥ ७ ॥
सर्वमात्मेदमखिलं किं गृह्णामि त्यजामि किम्।
इत्यसङ्गस्थितिं विद्धि जीवन्मुक्तत्वमुत्थिम् ॥ ८ ॥
नाहमस्ति न चान्योऽस्ति मा भवन्तु भवन्तु वा।
सुखान्यसक्त इत्यन्तः कथ्यते मुक्तिभाङ्नरः ॥ ९ ॥
नाभिनन्दति नैष्कर्म्यं न कर्मस्वनुरुध्यते।
सुसमो यः फलत्यागी सोऽसंसक्त इति स्मृतः ॥ १० ॥
सर्वकर्मफलादीनां मनसैव न कर्मणा।
निपुणो यः परित्यागः सोऽसंसक्त इति स्मृतः ॥ ११ ॥

ज्येत्यर्थः। देहमात्रे तु विश्वासः देह एवाहंममाभिमानः सङ्गः। स च बन्धार्ह उच्यते ॥ ६ ॥ अनन्तस्य देशकालादिभिरपरिच्छिन्नस्य आत्मतत्त्वस्य सपर्यन्तत्वनिश्चये देहपरिमितत्वनिश्चये सति अन्तः अन्तःकरणे यत्सुखार्थित्वं वैषयिकसुखेच्छा सङ्गः स च बन्धार्हो बन्धहेतुरुच्यते ॥ ७ ॥ सर्वमिति ॥ इदं जगदहं च सर्वमात्मैव। तथा सति किं वाञ्छामि किं वा त्यजामि इत्येव हेयोपादेयमुक्ततया स्थितिर्न सङ्गस्थितिः। सा च जीवन्मुक्तेषु तिष्ठतीत्यर्थः ॥ ८ ॥ नेति ॥ नाहमस्ति अहंशब्दवाच्यं वस्तु नास्ति आत्मनोऽपरिच्छिन्नत्वात्। अहन्तायाश्च परिच्छिन्नविषयत्वात्। नचान्योऽस्ति आत्मातिरिक्तस्य वस्तुनोऽसत्त्वात्। अतः कारणात् सुखानि मा भवन्तु भवन्तु वेत्येवमन्तरसक्तो मुक्तिभाक्कथ्यते ॥ ९ ॥ नेति ॥ नैष्कर्म्यं कर्मत्यागम्। सुसमः सिद्ध्यसिद्ध्योः सुष्ठु समः। फलत्यागी कर्मफलनिःस्पृहः ॥ १० ॥ सर्वेति ॥ सर्वकर्मफलादीनां कर्माणि ज्योतिष्टोमादीनि फलानि स्वर्गादीनि। आदिशब्देनोपासनाफलानां

असंसङ्गेन सकलाश्चेष्टा नानाविजृम्भिताः ।
चिकित्सिता भवन्त्यङ्ग श्रेयः संपादयन्ति च ॥ १२ ॥
कृमिकीटत्वमायान्ति जायमानाः पुनःपुनः ।
यदिमा जनता जीर्णास्तत्संसक्तिविजृम्भितम् ॥ १३ ॥
भूतानि यदनन्तानि तरङ्गिणि तरङ्गवत् ।
उत्पद्योत्पद्य लीयन्ते तत्संसक्तिविजृम्भणम् ॥ १४ ॥
संसक्तिर्द्विविधा प्रोक्ता वन्ध्या वन्द्या च राघव ।
वन्ध्या सर्वत्र मूढानां वन्द्या तत्त्वविदां निजा ॥ १५ ॥
आत्मतत्त्वावबोधेन हीना देहादिवस्तुजा ।
भूयः संसारदा सक्तिर्दृढा वन्ध्येति कथ्यते ॥ १६ ॥

यमाद्यष्टाङ्गावान्तरफलानां तत्संनिधौ वैरत्याग इत्यादीनां च ग्रहणम् । तेषां सर्वेषां कर्मफलादीनां मनसैव यो निपुणः परित्यागो न कर्मणा सः असक्त इति स्मृतः । परितस्त्यागो यस्येति व्युत्पत्त्या परित्यागशब्देन तद्वान्पुरुषोऽभिधीयते । अन्यथा असंसक्तशब्देन सामानाधिकरण्यासंभवात् । तत्र मनसा परित्यागो नाम फलाभिसन्धिराहित्यं । कर्मणामपि परित्यागस्तु फलसाधनभूतस्य कर्मणोऽननुष्ठानादिति द्रष्टव्यम् ॥ ११ ॥ असंसङ्गेनेति ॥ नानाविजृम्भिताः नानाप्रकारं विजृम्भितं विलासो यासां ताः सकलाश्चेष्टा असंसङ्गेन पूर्वोक्तेन चिकित्सिता भवन्ति श्रेयः कैवल्यं संपादयन्ति ॥ १२ ॥ सङ्गस्य बन्धहेतुत्वमुदाहृत्य दर्शयति द्वाभ्याम्—कृमीति ॥ जनताः जनसमूहाः । संसक्तिः सङ्गः ॥ १३ ॥ तरङ्गिणि समुद्रे । पूर्वं बन्धहेतुरेव सङ्गो निरूपितः ॥ १४ ॥ इदानीं मोक्षहेतुं सङ्गं निरूपयितुमाह—संसक्तिरिति ॥ वन्ध्या निष्फला । वन्द्या मुक्तिप्रदत्वात्स्तुत्या ॥ १५ ॥ तत्र पूर्वोक्तो बन्धार्हः सङ्ग एव वन्ध्या सक्तिरु-

आत्मतत्त्वावबोधेन सत्यभूता विवेकजा ।
वन्द्या हि कथ्यते सक्तिर्भूयः संसारवर्जिता ॥ १७ ॥
शङ्खचक्रगदाहस्तो देहो विविधयेहया ।
वन्द्यसंसक्तिवशतः परिपाति जगत्त्रयम् ॥ १८ ॥
विज्ञानगतयः सिद्धा लोकपालास्तथैव च ।
वन्द्यसंसक्तिवशतस्तिष्ठन्ति जगतां गणे ॥ १९ ॥
मनः पतति भोगेषु गृध्रो मांसलवेष्विव ।
वन्ध्यसंसक्तिवशतो व्यर्थया रम्यशङ्कया ॥ २० ॥
वन्ध्यसक्तिमतामेता रम्यान्तःपुरभूमयः ।
रचिता रौरवावीचिकालसूत्रादिनामिकाः ॥ २१ ॥

च्यते । तस्याः स्वरूपं निरूपितमपि भङ्ग्यन्तरेणाह—आत्मेति ॥ दृढा चिरकालभाविता ॥ १६ ॥ आत्मेति ॥ आत्मतत्त्वावबोधेन आत्मस्वरूपनिश्चयेन हेतुना । विवेकजा आत्मानात्मविवेके सति जाता । सत्यभूता सत्यमबाध्यमात्मतत्त्वं तद्भूता प्राप्ता तद्विषयेति यावत् । भू प्राप्तावित्यस्य स्वरूपम् । एवंविधा भूयः संसारवर्जिता सक्तिर्वन्द्येति कथ्यते ॥ १७ ॥ देहारामता वन्ध्यासक्तिः । आत्मारामता तु वन्द्येति विवेकः । प्रत्यासत्त्या वन्द्यसंसक्तिं तावदुदाहरति—शङ्खेति ॥ शङ्खचक्रगदाहस्तो देहो नाम श्रीविष्णुमूर्तिः । विविधया ईहया मत्स्याद्यवतारप्रवर्तितया चेष्टया ॥ १८ ॥ विज्ञानेति ॥ विज्ञानगतयः विज्ञानात्मकं ब्रह्मैव गतिर्निष्ठा विश्रान्तिपदं येषां ते । जगतां गणे तिष्ठन्तीत्यनेन सर्वेष्वपि जगत्स्वप्रतिहता गतिर्येषां ते ॥ १९ ॥ अथ वन्ध्यसंसक्तिमुदाहरति—मन इति ॥ भोगेषु विषयेषु रम्यशङ्कया रम्या इत्युत्प्रेक्षया । रम्यत्वकल्पनयेति यावत् ॥ २० ॥ वन्ध्येति ॥ रौरवं अवीचिः कालसूत्रमिति नरकभेदाः ।

वन्ध्यसक्तिं जनं दुःखशुष्कमिन्धनसंचयम् ।
ज्वलतां नरकाग्नीनां विद्धि तेन ज्वलन्ति ते ॥ २२ ॥

विद्यादृशि प्रोदयमागतेन
क्षयं त्वविद्याविषये गतेन ।
सर्वत्र संसक्तिविवर्जितेन
स्वचेतसा तिष्ठति यः स मुक्तः ॥ २३ ॥

वसिष्ठ उवाच ॥

सर्वदा सर्वसंस्थेन सर्वेण सह तिष्ठता ।
सर्वकर्मकरेणापि मनः कार्यं विजानता ॥ २४ ॥

देहारामाणां नरका एव विश्रान्तिभूमय इत्यर्थः ॥ २१ ॥ वन्ध्येति ॥ वन्ध्यसक्तिं वन्ध्या सक्तिर्यस्य तं जनं नरकाग्नीनां इन्धनसंचयं विद्धि । यस्मात्ते नरकाग्नयः तेनेन्धनेन ज्वलन्ति ॥ २२ ॥ विद्येति ॥ विद्यादृशि ब्रह्मविद्याविषये प्रोदयमागतेन प्रबुद्धेन अविद्याविषये प्रपञ्चे क्षयं गतेन अनुसन्धानरहितेन अत-एव सर्वत्र दृश्यवस्तुनि संसक्तिविवर्जितेन स्वचेतसा इत्थंभूतो यस्तिष्ठति । तदुक्तं गीतासु—'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः'इति ॥२३॥ सर्वदेत्यष्टभिः श्लोकैर्वाक्यम् ॥ विजानता ज्ञानिना पुरुषेण सर्व-संस्थेन सर्वाः संस्थाः शयनाशनादयोऽवस्था यस्य तेन सर्वेण ज्ञानिना मूर्खेण वा सह तिष्ठता सर्वकर्मकरेणापि नित्यनैमित्तिका-दिकं सर्वं कर्म कुर्वतापि सता मनः चेष्टादिषु विविधेषु विषयेषु सक्तं न कार्यं किंतु किंचिदीषच्चेत्यावलम्ब्यपि तन्मनः केवलं चिति चिन्मात्रे विश्रम्य सर्वत्र वस्तुनि नीरसं तत् आत्मरसं स्वरूपान-न्दास्वादतृप्तं तिष्ठतु । यथैवं तिष्ठति तथा कार्यमित्यन्वयः ॥ २४ ॥

न सक्तमिह चेष्टासु न चिन्तासु न वस्तुषु ।
नाकाशे नाप्यधो नोर्ध्वं न दिक्षु विततासु च ॥ २५ ॥
न बहिर्विपुलाभोगे न चैवेन्द्रियवृत्तिषु ।
नाभ्यन्तरे न च प्राणे न मूर्धनि न तालुनि ॥ २६ ॥
न भ्रूमध्ये न नासान्ते न मुखे न च तारके ।
नान्धकारे न चाभासे न चास्मिन्हृदयाम्बरे ॥ २७ ॥
न जाग्रति न च स्वप्ने न सुप्ते न च निर्मले ।
नासिते न च वा पीते रक्तादौ शबले न च ॥ २८ ॥
न चले न स्थिरे नादौ न मध्ये नेतरत्र च ।
न दूरे नान्तिके नाग्रे न पदार्थे न चात्मनि ॥ २९ ॥
न शब्दस्पर्शरूपेषु न मोहमदवृत्तिषु ।
न गमागमचेष्टासु न कालकलनासु च ॥ ३० ॥
केवलं चिति विश्रम्य किंचिच्चेत्यावलम्ब्यपि ।
सर्वत्र नीरसमिव तिष्ठत्वात्मरसं मनः ॥ ३१ ॥
तत्रस्थो विगतासङ्गो जीवोऽजीवत्वमागतः ।
व्यवहारमिमं सर्वं न करोतु करोतु वा ॥ ३२ ॥

तत्र न वस्तुष्वित्येतस्यैव विवरणं नाकाश इत्यादि ॥ २५ ॥ अभ्यन्तरं शरीराभ्यन्तरम्। तस्यैव प्रपञ्चो न च प्राण इत्यादिना ॥ २६ ॥ तारके अक्षणि । तारका कनीनिका अस्यास्तीति 'अर्शआदिभ्योच्' इत्यचि तारकशब्दोऽक्षिपर्यायः । अन्यथा कनीनिकायां तारकशब्दस्य स्त्रीलिङ्गत्वात्तारके इति नोपपद्येत । आभासे चित्प्रतिबिम्बे ॥ २७ ॥ निर्मले शुद्धे वस्तुनि ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ तत्रेति ॥ तत्रस्थ आत्मनिष्ठः। अजीवत्वं जीवन्मुक्ततामागतः व्यव-

अकुर्वन्नपि कुर्वन्वा जीवः स्वात्मरतिः क्रियाः ।
क्रियाफलैर्न संबन्धमायाति खमिवाम्बुदैः ॥ ३३ ॥
अथवा तमपि त्यक्त्वा चेत्यांशं शान्तचिद्धनः ।
जीवस्तिष्ठतु संशान्तो ज्वलन्मणिरिवात्मनि ॥ ३४ ॥
आत्मारामा महात्मानः प्रबुद्धाः परमोदयाः ।
बहिः पिच्छाग्रतरला अन्तर्मेरुरिवाचलाः ॥ ३५ ॥
चित्ते चेत्यदशाहीने या स्थितिः क्षीणचेतसाम् ।
सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता ॥ ३६ ॥
एषैव राम सौषुप्ती स्थितिरभ्यासयोगतः ।
प्रौढा सती तुर्यमिति कथिता तत्त्वकोविदैः ॥ ३७ ॥

हारं सर्वं मा करोतु करोतु वा । करणाकरणयोर्नास्ति विशेष इत्यर्थः ॥ ३२ ॥ विशेषाभावमाह—अकुर्वन्निति ॥ क्रियाः विहितनिषिद्धरूपाः । क्रियाफलैः स्वर्गनरकादिभिः ॥ ३३ ॥ अथवेति ॥ तमपि चेत्यांशं किंचिच्चेत्यावलम्ब्यपीति । पूर्वमभ्युपगतमपि चेत्यसंबन्धमित्यर्थः । शान्तचिद्धनः निर्विकारचिद्रूपः ॥ ३४ ॥ आत्मारामा इति ॥ आत्मन्येवारमन्ति विश्राम्यन्तीत्यात्मारामाः तादृशा महात्मानः । बहिः बाह्येन्द्रियव्यापारे पिच्छाग्रवत्तरला लक्ष्यन्ते । अन्तः अन्तःकरणे तु मेरुरिवाचलाः आत्मनिष्ठत्वात् ॥ ३५ ॥ चित्त इति ॥ चित्ते चेत्यदशाहीने चेत्यसंबन्धिनीभिर्वृत्तिभी रिक्ते सति क्षीणचेतसां क्षीणवृत्तीनां या स्थितिः शान्तकलना प्रशान्तवासना सैव स्थितिः जाग्रत्येव सुषुप्ततोच्यते ॥ ३६ ॥ एषेति ॥ एषैव सौषुप्ती स्थितिः अभ्यासयोगात्प्रौढा सती तुरीयावस्थेति कथिता । जाग्रदादिविलक्षणत्वेन तत्त्रितयोपेक्षया तुर्यत्वात् ॥ ३७ ॥

अस्यां तु तुर्यावस्थायां स्थितिं प्राप्याविनाशिनीम् ।
आनन्दैकान्तशीलत्वादनानन्दपदं गतः ॥ ३८ ॥
अनानन्दमहानन्दकलातीतस्ततोऽपि हि ।
मुक्त इत्युच्यते योगी तुर्यातीतपदं गतः ॥ ३९ ॥

परिगलितसमस्तजन्मपाशः
सकलविलीनतमोमयाभिमानः ।
परमरसमयीं प्रयाति सत्तां
जलगतसैन्धवखण्डवन्महात्मा ॥ ४० ॥

अस्यामिति श्लोकद्वयं वाक्यम् । अस्यां पूर्वोक्तायां तुर्यावस्थायां अविनाशिनीं निरपायां स्थितिं प्राप्य आनन्दैकान्तशीलत्वात् आनन्द एव एकान्तं नियतं शीलं स्वभावो यस्य, आनन्दमेवैकान्तं शीलयति अभ्यस्यति वा यः तस्य भावात् निरन्तरमानन्दात्मकत्वात् अनानन्दपदं स्वस्वरूपानन्दरहितं पदं ब्रह्मभावं गतः सन् ॥ ३८ ॥ ततोऽनन्तरं अनानन्दमहानन्दकलातीतः अनानन्दो ब्रह्मानन्दानुभवरहितः महानन्दः तद्वदुभयकक्षामतिक्रान्तः निर्विकल्पकतया ब्रह्मानन्दे समरसीभावात् । तस्मात्तादृशो योगी तुर्यातीतपदं गतो मुक्त इत्युच्यते । तुर्यातीतो मुक्त इत्युच्यत इत्यर्थः । तुर्यस्तुर्यातीत इति च सविकल्पकनिर्विकल्पकसमाधिभाजोर्जीवन्मुक्तयोर्नामनी । तत्र जाग्रदाद्यवस्थात्रयं तदभिमानिनश्च विश्वतैजसप्राज्ञरूपाञ्जीवान् स्वव्यतिरिक्ततया पश्यंस्तत्साक्षिणि चित्त्वमेवात्मस्वरूपमनुसंदधानस्तुर्य उच्यते । तद्विकल्परहितस्तु चिन्मात्ररूपस्तुर्यातीत इति ॥ ३९ ॥ परिगलित इति ॥ परिगलिताः समस्ता जन्महेतवः पाशाः मलकर्मादयो यस्मात्सकला विलीनास्तमोमया अज्ञानजनिता अभिमाना

वसिष्ठ उवाच ॥

जडाजडदृशोर्मध्ये यत्तत्त्वं पारमात्मिकम् ।
तदेव बहुशः प्रोक्तं बृहदारण्यकादिषु ॥ ४१ ॥
दृश्यदर्शनसंबन्धे यत्सुखं पारमार्थिकम् ।
अनुभूतिमयं तस्मात्सारं ब्रह्मेति कथ्यते ॥ ४२ ॥
दृश्यदर्शनसंबन्धे सुखसंविदनुत्तमा ।
दृश्यसंवलिता बन्धस्तन्मुक्ता मुक्तिरुच्यते ॥ ४३ ॥

देहेन्द्रियादिष्वहंममाभिमाना यस्मिन्स महात्मा परमरसमयीं परमानन्दरूपां सत्तां प्रयाति जलगतसैन्धवखण्डवत् । स हि सैन्धवो लवणघनो जलस्यान्तर्निहितः सन्परमामुत्कृष्टां रसमयीं द्रवरूपां सत्तां स्वरूपसत्तां प्रयाति तद्वदिति ॥४०॥ जडेति ॥ जडाजडदृशोः इदमिति दृश्यविषया संवित् जडदृष्टिः । अहमिति द्रष्टृविषया संविदजडदृष्टिः । तयोर्मध्ये यत्तत्त्वमस्ति इदन्तया अहन्तया वा तदुभयानुवृत्तं यच्चिन्मात्ररूपं वस्तु प्रकाशते तदेव पारमात्मिकं परमात्मसंबन्धि तत्त्वं स्वरूपमिति बृहदारण्यकादिषूपनिषत्सु बहुशः प्रोक्तम्॥४१॥दृश्येति॥ दृश्यानां रम्यवस्तूनां दर्शनेन वृत्तिज्ञानेन संबन्धे सति यत्पारमार्थिकं परमार्थे स्वात्मनि संभूतमनुभूतिमयं अनुभवात्मकं स्वत एवानुभूयमानं सुखमस्ति तदेव सारं सुखं ब्रह्मेति कथ्यते । कुतः। तस्मात्पूर्वोक्ताद्धेतोः पूर्वमानन्दात्मकस्य चिन्मात्रस्यैव परमात्मस्वरूपत्वेनाभिधानादित्यर्थः ॥४२॥ तर्हि विषयसुखस्यापि स्वात्मरूपत्वे बन्धमोक्षविभागो न स्यादित्यत आह—दृश्येति ॥ दृश्यदर्शनसंबन्धे दृश्यदर्शनयोः संबन्धे या अनुत्तमा सुखसंवित्सा दृश्यसंवलिता चेत् दृश्योपहिता चेद्बन्ध इत्युच्यते । तन्मुक्ता दृश्यासंस्पृष्टा

दृश्यदर्शनसंबन्धे यानुभूतिरनामया ।
तामवष्टभ्य तिष्ठ त्वं सौषुप्तीं भज ते स्थितिम् ॥ ४४ ॥
सैव तुर्यत्वमायाति तस्यां दृष्टौ तु राघव ।
नात्मा स्थूलो न चैवाणुर्न प्रत्यक्षो न चेतरः ॥ ४५ ॥
न चेतनो न च जडो न चैषोऽसन्न सन्मयः ।
नाहं नान्यो न चैवैको न वानेकोऽपि राघव ॥ ४६ ॥
यदिदं दृश्यतां प्राप्तं मनःषष्ठेन्द्रियाश्रयम् ।
सर्वातीतं पदं राम यन्न किंचिदिवेह तत् ॥ ४७ ॥

तत्सुखसंविन्मुक्तिरिति ॥ ४३ ॥ दृश्येति ॥ दृश्यदर्शनसंबन्धे अनामया निरुपद्रवा सुखमयानुभूतिः तामेवानुभूतिमवष्टभ्याव-लम्ब्य तिष्ठ तस्यामेवानुभूतौ विश्रान्तो भव । सौषुप्तीं पूर्वोक्तां ते स्थितिं भज ॥४४॥ सैवेति श्लोकद्वयं वाक्यम् ॥ सैव सौषुप्ती स्थिति-रेव तु यत्र तुर्यावस्थात्वमायाति तस्यां तुर्यात्मिकायां दृष्टौ तु । आत्मा स्थूलो न असूर्तत्वात्, अणुश्च न परिपूर्णत्वात्, प्रत्यक्षो न इन्द्रियाग-म्यत्वात्, इतरः परोक्षश्च न अपरोक्षतया प्रकाशमानत्वात् ॥ ४५ ॥ चेतनो न चैतन्याश्रयत्वात् स्वयमेव चैतन्यरूपत्वात् । चैतन्या-श्रयो हि चेतन उच्यते शौक्ल्याश्रयः शुक्ल इतिवत् । नहि वेदान्तिनां मते चैतन्याद्भिन्नमात्मनः स्वरूपमस्ति । जडश्च न सर्वप्रकाशक-त्वात्, असन्न सद्रूपत्वात्, सन्मयो न अस्तीति प्रतीत्यविषयत्वात्, अहंशब्दवाच्यो न देहेन्द्रियादिभिरपरिच्छिन्नत्वात्, अन्यो न सर्वात्मकत्वात्, एकः एकत्वसंख्याश्रयो न निर्गुणत्वात्, संख्या-याश्च गुणरूपत्वात् अनेकश्च न ॥ ४६ ॥ यदिति ॥ मनःषष्ठेन्द्रि-याश्रयं मनः षष्ठं येषामिन्द्रियाणां चक्षुरादीनां तेषामाश्रयं विषय-

न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥ ४८ ॥
मोक्षो मेऽस्त्विति चिन्तान्तर्जाता चेदुत्थितं मनः ।
मननोत्थे मनस्युच्चैर्बन्धः सांसारिको दृढः ॥ ४९ ॥
आत्मन्यतीते सर्वस्मात्सर्वरूपेऽथवा तते ।
को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ॥ ५० ॥
अध्यात्मरतिराशान्तः पूर्णः पावनमानसः ।
निर्मृष्टकामपङ्काङ्कश्छिन्नबन्धनिजभ्रमः ॥ ५१ ॥
द्वन्द्वदोषभयान्मुक्तस्तीर्णसंसारसागरः ।
प्राप्तानुत्तमविश्रान्तिर्लब्धालभ्यपदस्य हि ॥ ५२ ॥

भूतं दृश्यतां प्राप्तं यदिदं जगत्तज्जगदतीतं अतिक्रान्तं तद्विलक्षणं यस्मात् तत्पदमात्मतत्त्वं तत्तस्मात्कारणात्तदात्मतत्त्वं इह जगति किंचिदिव न भवति। केनापि नोपमीयत इत्यर्थः ॥ ४७॥ नेति ॥ बन्धनिवृत्तिर्हि मोक्षो नाम। स च चेतसो बन्धरूपत्वात् तन्निवृत्तिरूपमेवेति भावः ॥ ४८ ॥ मोक्ष इति ॥ मोक्षो मेऽस्तु भूयादिति चिन्ता अन्तर्जाता चेन्मन उत्थितं स्यात्। मनसि च मननेन संकल्पेनोत्थिते सति सांसारिकः संसारहेतुर्बन्धो दृढः स्यात् ॥ ४९ ॥ आत्मनीति ॥ आत्मनि सर्वस्मादतीते विश्वविलक्षणे अथवा सर्वरूपे सर्वात्मके तते व्याप्ते वा सति को बन्धः कश्च मोक्षः। प्रपञ्चातीतत्वे प्रपञ्चात्मकत्वे वा बन्धमोक्षयोरभावात् । तस्मान्मननं संकल्पं निर्मूलं कुरु ॥ ५० ॥ मननस्य मूलनाशे सति तस्याङ्गं प्रस्तौति त्रिभिः श्लोकैः—अध्यात्मेति ॥ अध्यात्ममात्मनि रतिर्यस्य। आशान्तः प्रशान्तः। पूर्णः परिपूर्णदृष्टिः। पावनमानसः पावनमात्मज्ञाननिर्धूतपापत्वाद्विशुद्धं मानसं यस्य ॥ ५१ ॥ प्राप्ता अनुत्तमा

अनिवृत्तपदं प्राप्तः कर्मणा मनसा गिरा ।
सर्वाप्तिवाञ्छितारम्भो न किंचिदभिवाञ्छति ॥ ५३ ॥
आपत्करञ्जपरशुं पराया निर्वृतेः पदम् ।
पुष्पगुच्छं शमतरोरालम्बस्व निराशताम् ॥ ५४ ॥
गोः पदं पृथिवी मेरुः स्थाणुराशाः समुद्गिकाः ।
तृणं त्रिभुवनं राम नैराश्यालंकृताकृतेः ॥ ५५ ॥
शरीराद्व्यतिरिक्तं ज्ञं पश्यतः प्रविवेकिनः ।
विकर्तिताङ्गकस्यापि न किंचित्प्रविकर्तितम् ॥ ५६ ॥
अनुभूतो गुडः स्वादुरपि दाहविकर्तनैः ।
न शक्यतेऽन्यथा कर्तुं तत्त्वालोकस्तथात्मनः ॥ ५७ ॥

आत्मनि विश्रान्तिर्यस्य स तादृशो न किंचिदभिवाञ्छति ॥ ५२ ॥ ॥ ५३ ॥ आपदिति ॥ पुष्पगुच्छं पुष्पस्तवकम् ॥ ५४ ॥ गोः पदमिति ॥ आशा दिशः । समुद्गिकाः संपुटिकाः ॥ ५५ ॥ नैराश्येऽप्यात्मानुसंधानमेव हेतुरित्याह—शरीरादिति ॥ ज्ञं चेतनमात्मानं विकर्तिताङ्गकस्य विकृत्तावयवस्य शरीरातिरिक्ते सुखस्वरूपे स्वात्मनि विज्ञाते सति शरीरेऽपि किलानादरः किमुत बाह्यार्थेष्विति भावः ॥ ५६ ॥ अनुभूत इति ॥ स्वादुर्गुडोऽनुभूतः सन्दाहविकर्तनैरपि देहसंतापनच्छेदनादिभिरपि दुःखसाधनैरन्यथा कर्तुं यथा न शक्यते अनुभूतस्य गुडस्य स्वादुतयैवानुसन्धीयमानत्वात् तथा आत्मनः स्वत्त्वावलोकोऽप्यनुभूतोऽन्यथा कर्तुं न शक्यते स्वरूपसुखस्य विस्मर्तुमशक्यत्वात् । अतिशयितस्य च सुखान्तरस्याभावात् । यदाह सर्वज्ञयोगी—'यत्सङ्गिसंगतिपरम्परयापि लोकः प्रेमास्पदीभवति सातिशयोपयोगात् । निर्हेतुकानतिशयानवधि स्वधाम किं वर्ण्यते

परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ।
तदेवास्वादयत्यन्तर्नवसङ्गरसायनम् ॥ ५८ ॥
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥ ५९ ॥
असंसर्गात्पदार्थानामन्तःशान्तिर्विमुक्तता ।
सत्यसत्यपि देहे सा संभवत्यनघाकृतेः ॥ ६० ॥
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ।
सस्नेहजीवितो बद्धो मुक्त एव तृतीयकः ॥ ६१ ॥

मम निजं तदखण्डसौख्यम्' इति ॥ ५७ ॥ एतदेव दृष्टान्तं समुपपादयन्नाह—परेति श्लोकद्वयं वाक्यम् ॥ यथा हि परव्यसनिनी परपुरुषासक्ता स्वैरिणी नारी गृहकर्मणि स्वीये गृहकार्ये व्यग्रापि व्यासक्तापि तदेव पूर्वानुभूतमेव नवसङ्गरसायनं नूतनसंभोगसौख्यं आस्वादयति अनुसंधत्ते ॥ ५८ ॥ एवं परे तत्त्वे विश्रान्तिमागतो धीरोऽपि बहिर्देहादौ व्यवहरन्नपि व्यवहारयुक्तोऽपि अन्तश्चित्ते तदेव परं तत्त्वमास्वादयति । तत्त्वनिष्ठस्य बहिर्व्यवहारो न समाधिभङ्गायेति भावः ॥ ५९ ॥ असंसर्गादिति ॥ पदार्थानामसंसर्गाद्धेतोः अन्तः शान्तिः चित्तस्यात्मनि लय एव मुक्तता । सा च देहे सत्यसत्यपि वा अनघाकृतेः निष्पापस्यैव संभवति ॥ ६० ॥ य इति ॥ यो गतस्नेहो बाह्यवस्तुन्यनासक्तः स्वात्मरतिरेव जीवति स जीवन्मुक्त उच्यते। सस्नेहजीवितो बाह्यवस्तुनिष्ठस्तु बद्ध उच्यते। तृतीयकः यो गतस्नेहजीवितो न भवति स स्नेहजीवितश्च न विगतस्नेहत्वाद्विदेहत्वाच्च । स तु मुक्त एव निरुपपदेनैव मुक्तशब्देनोच्यत इत्यर्थः ॥ ६१ ॥ नेति श्लोकषट्कमेकं वाक्यम् ॥ भाविभव-

नापीक्षते भविष्यच्च वर्तमाने न तिष्ठति ।
न संस्मरत्यतीतं च सर्वमेव करोति च ॥ ६२ ॥
अनुबन्धपरे जन्तावसंसक्तमनाः सदा ।
भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ ६३ ॥
बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान् ।
युवा यौवनवृत्तेषु दुःखितेषु स दुःखधीः ॥ ६४ ॥
धीरधीरुदितानन्दः पेशलः पुण्यकीर्तनः ।
प्राज्ञः प्रसन्नमधुरो दैन्यादपगताशयः ॥ ६५ ॥
अपि शीतरुचावर्के सुतप्तेऽपीन्दुमण्डले ।
अप्यधः प्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी ॥ ६६ ॥
चिदात्मन इमा इत्थं प्रसरन्तीह शक्तयः ।
इत्यस्याश्चर्यजालेषु नाभ्युदेति कुतूहलम् ॥ ६७ ॥
यथा जलपरिस्पन्दाद्व्यतिरिक्त इवाम्भसः ।
दृश्यते वर्तुलावर्तश्चित्तस्पन्दात्तथा जगत् ॥ ६८ ॥
यथा व्योम्नीक्षणस्पन्दात्पिच्छमौक्तिकमण्डलम् ।
दृश्यते सदिवासत्यं चित्तस्पन्दात्तथा जगत् ॥ ६९ ॥

द्भूतेषु अनासक्तो व्यवहरन् भक्तशठबालवृद्धादिषु तत्तच्चेष्टामनुकुर्वन्धैर्यादिगुणयुक्तो जीवन्मुक्तोऽर्भकादिषु विपरीतस्वभावेष्वपि विस्मयादिविकारं न प्राप्नोति ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ कस्मात्कारणात् इमाश्चिदात्मनः शक्तय इत्थं बहुधा स्फुरन्तीति चिच्छक्तिविलासमनुसंदधतोऽस्य जीवन्मुक्तस्य आश्चर्यजालेषु कुतूहलं नाभ्युदेतीति संबन्धः ॥ ६७ ॥ यथेति ॥ जलस्य परिस्पन्दात्परितः चलनाद्धेतोर्वर्तुल आवर्तोऽम्भसो व्यतिरिक्त इव दृश्यते ॥ ६८ ॥ तथा चित्तस्य स्पन्दाच्चिदाकाशे जगदसत्यमपि सदिव

राम उवाच ॥

येन प्रस्पन्दते चित्तं येन न स्पन्दतेऽथवा ।
तद्ब्रह्मन्ब्रूहि मे येन चिकित्सेयं तदेव हि ॥ ७० ॥

वसिष्ठ उवाच ॥

यथा शौक्ल्यं हिमे राम तिले तैललवो यथा ।
दृष्टौ राघव संसृष्टौ चित्तस्पन्दौ तथैव हि ॥ ७१ ॥
द्वौ क्रमौ चित्तनाशाय योगो ज्ञानं च राघव ।
योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ ७२ ॥
चित्तं प्राणपरिस्पन्दमाहुरागमभूषणाः ।
तस्मिन्संरोधिते नूनमुपशान्तं भवेन्मनः ॥ ७३ ॥
मनःस्पन्दोपशान्त्यायं संसारः प्रविलीयते ।
सूर्यालोकपरिस्पन्दशान्तौ व्यवहृतिर्यथा ॥ ७४ ॥

राम उवाच ॥

अनिशं चरतां देहगेहे गहनगामिनाम् ।

दृश्यते ॥ ६९ ॥ येनेति ॥ चित्तं येन कारणेन स्पन्दते येन वा न स्पन्दते तत्स्पन्दकारणमस्पन्दकारणं च मे ब्रूहि । येन त्वदुक्तेन प्रकारेण तदेव चित्तं चिकित्सेयं स्पन्दरहितं विदध्याम् ॥ ७० ॥ चित्तस्पन्दनिवृत्त्युपायमुपदिदिक्षुः चित्तस्पन्दनिवृत्तिरेव चित्तनाश इति दर्शयितुं चित्तस्पन्दयोरभेदमाह—यथेति ॥ हिमशौक्ल्ययोरिव तिलतैलयोरिव च चित्तस्पन्दयोरपि विभागो न दृश्यत इत्यर्थः ॥ ७१ ॥ द्वाविति ॥ क्रमादुपायौ तद्वृत्तिरोधश्चित्तवृत्तिनिरोधः । यथा च पातञ्जलं सूत्रम—'योगश्चित्तवृत्तिनिरोधः' इति ॥ ७२ ॥ चित्तमिति श्लोकद्वयं वाक्यम् ॥ प्राणपरिस्पन्दं प्राणेन परिस्पन्दो यस्य तत् । प्राणाधीनस्पन्दमित्यर्थः । तस्मिन् प्राणवायौ ॥ ७३ ॥ ७४ ॥ अनिशमिति ॥

प्राणादीनां परिस्पन्दो वायुना रोध्यते कथम् ॥ ७५ ॥

वसिष्ठ उवाच ॥

शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ।
अनास्थायां कृतास्थायां पूर्वं संसारवृत्तिषु ॥ ७६ ॥
यथाभिवाञ्छितध्यानाच्चिरमेकतयोदितात् ।
एकतत्त्वघनाभ्यासात्प्राणस्पन्दो निरुध्यते ॥ ७७ ॥
पूरकाद्यनिलायामादृढाभ्यासादखेदजात् ।
एकान्तध्यानयोगाच्च प्राणस्पन्दो निरुध्यते ॥ ७८ ॥

गहनगामिनां दुर्बोधगमनानाम् । प्राणादीनामित्यादिशब्देन प्राणापानादिसंग्रहः ॥ ७५ ॥ अथैकादशभिः श्लोकैः प्राणस्पन्दनिरोधप्रकारो निरूप्यते—शास्त्रेति श्लोकद्वयं वाक्यम् ॥ शास्त्रं अध्यात्मशास्त्रम् । सज्जनसंपर्को ब्रह्मवित्सङ्गः । वैराग्यं विषयेष्वरतिः । अभ्यासः समाध्यभ्यासः त एव योगा उपायाः तेभ्यो हेतुभ्यः पूर्वं प्रथमं संसारवृत्तिषु सांसारिकव्यवहारेषु अनास्थायामनादरे कृतास्थायां दृढायां सत्याम् ॥ ७६ ॥ चिरमेकतयोदितात् एकप्रकारतया उद्भूतात् यथाभिवाञ्छितध्यानात् । अभिवाञ्छितमभिवाञ्छा तामनतिक्रम्य ध्यानात् । यत्र यत्र सरसवाहिन्यभिवाञ्छा तस्य तस्य ध्यानाद्धेतोः य एकतत्त्वघनाभ्यासः एकस्यैव वस्तुस्वरूपस्य निरन्तरं पुनःपुनरनुसंधानं तस्मादुपायात्प्राणस्पन्दः प्राणवायोश्चाञ्चल्यं निरुध्यते ॥ ७७ ॥ पूरकेति ॥ दृढाभ्यासादृढं यथातथा पुनःपुनः परिशीलनाद्धेतोः । अखेदतोऽप्रयासजन्यः केवलकुम्भकसिद्धिपर्यन्तो यः पूरकाद्यनिलायामः पूरककुम्भकरेचकप्रकारः प्राणायामः तस्माद्धेतोरेकान्तध्यानयोगाच्च विविक्तप्रवर्तितध्यानयोगाच्च प्राणस्पन्दो निरुध्यते । यथाच

ओंकारोच्चारणप्रान्तशब्दतत्त्वानुभावनात् ।
सुषुप्ते संविदो जाते प्राणस्पन्दो निरुध्यते ॥ ७९ ॥
तालुमूलगतां यत्नाज्जिह्वयाक्रम्य घण्टिकाम् ।
ऊर्ध्वरन्ध्रगते प्राणे प्राणस्पन्दो निरुध्यते ॥ ८० ॥

याज्ञवल्क्यः केवलं कुम्भकं प्रक्रम्याह—'एष प्राणजयोऽपायः सर्वमृत्यूपघातकः' इति ॥ ७८ ॥ ओंकारस्येति ॥ प्रणवोच्चारणे सति प्रान्ते पर्यन्ते यच्छब्दतत्त्वं तस्यानुभावनात् अनुसंधानाद्धेतोः संविदो बहिर्मुखायाश्चित्तवृत्तेः सुषुप्ते निलीने जाते सति प्राणस्पन्दो निरुध्यते। अत्र तु नादानुसंधानस्य मनोलयहेतुत्वात्तद्वारेण प्राणलयहेतुत्वमुक्तं हठप्रदीपिकायाम्—'नासनं सिद्धसदृशं न कुम्भः केवलोपमः। न खेचरीसमा मुद्रा न नादसदृशो लयः' इति। 'काष्ठे प्रवर्तितो वह्निः काष्ठेन सह शाम्यति। नादे प्रवर्तितं चित्तं नादेन सह लीयते॥ विस्मृत्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः। एकीभूयाथ सहसा चिदाकाशे विलीयते' इति ॥ ७९ ॥ तालुमूलेति ॥ जिह्वामूलस्योपरितनौ वक्त्रान्तर्भागौ तालुनी तयोर्मूलं मध्यभागः तद्गतां तत्र स्थितां घण्टिकां लम्बिकां सूक्ष्मजिह्वारूपेण लम्बमानं मांसखण्डं यत्नात्प्रयत्नविशेषात् जिह्वया साधनभूतया आक्रम्य प्राणे ऊर्ध्वरन्ध्रं गते ऊर्ध्वरन्ध्रं कपालकुहरं यद्धि सुषुम्नाया उपरितनं द्वारमुच्यते। यदाह श्रुतिः—'अन्तरेण तालुके य एष स्तन इवावलम्बते सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्तते व्यपोह्य शीर्षकपाले' इति। तादृशमूर्ध्वरन्ध्रं गते सति प्राणस्पन्दो निरुध्यते। अनेन च लम्बिकायोगः प्रदर्शितः। यः खेचरीति नभोमुद्रेति चोच्यते। तदुक्तं विवेकमार्तण्डे—'कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवो-

द्वादशाङ्गुलपर्यन्ते नासाग्रे विमलाम्बरे।
संविद्दृशि प्रशाम्यन्त्यां प्राणस्पन्दो निरुध्यते ॥ ८१ ॥
अभ्यासादूर्ध्वरन्ध्रेण तालूर्ध्वद्वादशान्तगे।
प्राणे गलितसंवित्तौ प्राणस्पन्दो निरुध्यते ॥ ८२ ॥

रन्तरगा दृष्टिर्मुद्रा भवति खेचरी' इति। अत्र च प्रयत्नादित्यनेन जिह्वाया दैर्घ्यसिद्धये चालनदोहनादिरूपो यत्नविशेष उक्तः। तदुक्तं हठप्रदीपिकायाम्—'छेदनचालनदोहैः कलां क्रमेण प्रवर्धयेत्तावत्। सा यावद्भ्रूमध्यं स्पृशति तदानीं हि खेचरीसिद्धिः' इति। कला जिह्वा तस्याश्छेदनं नाम ऊर्ध्वगमनप्रतिबन्धकस्याधोभागस्थितस्य चर्मणश्छेदः। चालनं पुनरार्द्रवस्त्रखण्डवेष्टिताया जिह्वायाः पाणिभ्यां दृढं गृहीत्वा सव्यापसव्यं भ्रामणम्। दोहनं तु पाणिभ्यां पर्यायेण शनैःशनैराकर्षणम् ॥ ८० ॥ द्वादशेति ॥ नासाग्रे नासिकाया अग्रभागे द्वादशाङ्गुलपर्यन्ते नासाग्रमारभ्य द्वादशाङ्गुलपरिमिते विमलाम्बरे निर्मलनभोभागे दृशोर्लक्ष्यभूते संविद्दृशि वृत्तिज्ञाने प्रशाम्यन्त्यां लीयमानायां सत्यां प्राणस्पन्दो निरुध्यते। तथाच याज्ञवल्क्यः—'नासाग्रे धारणं गार्गि वायोर्विजयकारणम्' इति ॥ ८१ ॥ अभ्यासादिति ॥ अभ्यासाद्योगशास्त्रेषु निरूपितात्पवननिरोधाभ्यासात् ऊर्ध्वरन्ध्रेण सुषुम्नामार्गेण प्राणे प्राणवायौ तालूर्ध्वं द्वादशान्तगे। तालुशब्देन षोडशारं विशुद्धाख्यं चक्रमुच्यते। ऊर्ध्वशब्देन ब्रह्मरन्ध्रम्। द्वादशान्तमित्यनाहताख्यं द्वादशारं चक्रम्। तथाच तालुगे ऊर्ध्वगे द्वादशान्तगे वा सति गलितसंवित्तौ विगलितबहिर्मुखसंविदि सति प्राणस्पन्दो निरुध्यते। तत्रच ऊर्ध्वरन्ध्रेण कपालकुहरेण प्राणे तालूर्ध्वद्वादशान्तगे तालुस्थानादूर्ध्वं द्वादशाङ्गुलपर्यन्तं

भ्रूमध्ये तारकालोकशान्तावन्तमुपागते ।
चेतने केतने बद्धे प्राणस्पन्दो निरुध्यते ॥ ८३ ॥

ब्रह्मरन्ध्रं गते सतीति व्याख्यानम् । तालुमूलगतामित्यादिना पूर्वोक्तेन खेचरीयोगेन पुनरुक्तमित्युपेक्षितम् । अत्रच ताल्वादीनां प्राणमर्मस्थानत्वात्तद्गतस्य प्राणस्य तत्र लयो युज्यत इत्यनुसंधेयम् । यदाह याज्ञवल्क्यः—'पादाङ्गुष्ठौ च गुल्फौ च जङ्घामध्यौ तथैव च । स्फिजोर्मूले च जानू च मध्यावूरुद्वयस्य च ॥ पायुमूलं ततः पश्चान्मध्यौ देहस्य मेढ्रकम् । नाभिश्च हृदयं गार्गि कण्ठकूपं तथैव च ॥ तालुमूलं च नासाया मूलं चाक्ष्णोश्च मण्डले । भ्रुवोर्मध्यं ललाटं च मूर्धा च मुनिसत्तमे ॥ मर्मस्थानानि चैतानि' इति । अत्र चाभ्यासशब्देन जितेन्द्रियस्य विविक्तदेशवर्तिनो हितमितमेध्याशिनो गुरूपदिष्टमार्गेण धौतबस्तिप्रमुखैर्मूर्धाधःशोधनैः करणैर्विशुद्धदेहस्य आसनप्राणायामाभ्यां शोधितनाडीकस्य सुषुम्नायां प्राणसंचारहेतुर्महामुद्राद्यभ्यासो विवक्षितः । ताश्च महामुद्रादयो दश मुद्राः । तदुक्तं हठप्रदीपिकायाम्—'महामुद्रा महाबन्धो महावेधश्च खेचरी । उड्डियानं मूलबन्धो बन्धो जालन्धराभिधः ॥ करणी विपरीताख्या वज्रोली शक्तिचालनम् । मुद्राणां दशकं चेदं गोपनीयं प्रयत्नतः' इति । 'खिलापि मध्यमानाडी दृढाभ्यासेन योगिनाम् । आसनप्राणसंयाममुद्राभिः सरला भवेत्' इति च । महामुद्रादिलक्षणं तु ग्रन्थविस्तरभयान्नेह लिखितं तद्ग्रन्थान्तराद्बोध्यम् ॥ ८२ ॥ भ्रूमध्य इति ॥ भ्रुवोर्मध्ये द्व्यस्रं व्योमचक्रं तद्धि चिन्मयस्य ज्योतिष उपलब्धिस्थानम् । तदुक्तम्—'भ्रूयुगमध्यगतं सच्छिखिविद्युत्सूर्यवज्जगद्भाति । केषांचित्पुण्यदृशामुन्मीलति चिन्मयं ज्योतिः' इति ॥ तद्यदा लक्षणं

झटित्येव यदुद्भूतं ज्ञानं तस्मिन्दृढायिते ।
असंस्पृष्टविकल्पांशे प्राणस्पन्दो निरुध्यते ॥ ८४ ॥
चिरकालं हृदैकान्तव्योमसंवेदनान्मुनेः ।
अवासनमनोध्यानात्प्राणस्पन्दो निरुध्यते ॥ ८५ ॥

विधीयते तदा तत्रैव तारकालोकशान्तौ । तारकाक्ष्णः कनीनिका । तारकयोरालोको दर्शनव्यापारः तस्य शान्तावुपरतौ सत्यां केतने केतनं संकेतः अस्य शब्दस्यायमर्थ इति पुरुषकल्पितो वाच्यवाचकनियमः तत्र बद्धं तदनुसारि यच्चेतनम् । विकल्पज्ञानमिति यावत् । तस्मिन्नन्तमुपागते सति प्राणस्पन्दो निरुध्यते । वुद्ध इति पाठे तु केतने शब्दार्थसंवन्धे प्रवुद्धं यच्चेतनं शब्दार्थसंवन्धाननुसंदधद्विकल्पकं विज्ञानं तस्मिन्नन्तमुपागते इति व्याख्येयम् ॥ ८३ ॥ झटितीति ॥ अत्र ज्ञानं झटित्येव उद्भूतं असत्यामेव जिज्ञासायामकस्मादेव समुत्पन्नं वासनावशाद्विषयसंनिधानाद्वा तस्मिञ्ज्ञाने दृढायिते दृढीकृते, तथैव दृढं भाविते असंस्पृष्टविकल्पांशे विगलितविकल्पभागे सति प्राणस्पन्दो निरुध्यते । यदा समुत्पन्नं वृत्तिज्ञानमेव दृढं भाव्यमानं विगलितविषयांशं सन्मात्रं संपद्यते तदापि प्राणस्पन्दनिरोध इति भावः ॥ ८४ ॥ चिरकालमिति ॥ चिरकालं मुनेर्मौनव्रतनिष्ठस्य योगिनो हृदा चित्तेन एकान्तव्योमसंवेदनात् एकान्तं नियतं यद्व्योमसंवेदनमाकाशभावनं तस्मात्संभूतं यदवासनमनोध्यानं विषयवासनाविनिर्मुक्तं चित्तनिर्वृत्तं यद्ध्यानं तस्मादपि प्राणस्पन्दो निरुध्यते । तत्र च हठं विना राजयोगो राजयोगं विना हठो न सिध्यति । 'ततो युग्ममानिष्पतेः समभ्यसे'दिति न्यायात् । 'मारुतस्य विधिं सम्यग्मनोयुक्तं समभ्यसेत् । इतरत्र न कर्तव्या

एभिः क्रमैस्तथान्यैश्च नानासंकल्पकल्पितैः ।
नानादेशिकवक्त्रस्थैः प्राणस्पन्दो निरुध्यते ॥ ८६ ॥
अभ्यासेन निराबाधमेतास्ता योगयुक्तयः ।
उपायतामुपायान्ति भव्यस्य भवभेदने ॥ ८७ ॥
अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ।
मनः प्रशममायाति निर्वाणमवशिष्यते ॥ ८८ ॥

राम उवाच ॥

योगयुक्तस्य चित्तस्य शम एवं निरूपितः ।
सम्यग्ज्ञानमिदानीं मे कथयानुग्रहात्प्रभो ॥ ८९ ॥

मनोवृत्तिर्मनीषिणा' इति वचनाच्च मनोनिरोधेन सहैव प्राणनिरोधोऽभ्यसनीय इति । तत्र तत्र सुषुप्ते संविदो जाते 'संविद्दृशि प्रशाम्यन्त्याम्' इत्यादिना प्रतिपादितमित्यनुसंधेयम् ॥ ८५ ॥ एभिरिति ॥ एभिः पूर्वोक्तैः क्रमैरुपायैः तथा नानासंकल्पकल्पितैः नानादेशिकवक्त्रैर्नानाविधाचार्यप्रोक्तैरन्यैश्च क्रमैः प्राणस्पन्दो निरुध्यते । तत्र चान्यैरित्यनेन स्थानान्तरावलम्बिनो ये प्राणनिरोधोपायाः ये च चित्तलयोपायाः पूर्वाचार्यैः प्रदर्शिताः ते सर्वे संगृह्यन्ते । चित्तलयोपायानां च प्राणलयोपायत्वात् । तदुक्तं हठप्रदीपिकायाम्--'पवनो बध्यते येन मनस्तेनैव बध्यते । मनश्च बध्यते येन पवनस्तेन बध्यते' इति । ते च चित्तलयोपाया आनन्त्यान्न प्रदर्शयितुं शक्यन्ते । तदुक्तं हठप्रदीपिकायाम्—'ते चादिनाथेन सपादकोटिलयप्रकाराः कथिताः सन्ती'ति ॥ ८६ ॥ अभ्यासेनेति ॥ भव्यस्य भाग्यवतो योगिनः ॥ ८७ ॥ अभ्यासेनेति ॥ निर्वाणं कैवल्यरूपमात्मतत्त्वम् ॥ ८८ ॥ योगेति ॥ 'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं चे'त्युक्तयोर्योगज्ञान-

वसिष्ठ उवाच ॥

यथाभूतार्थदर्शित्वमेतावद्भुवनत्रये ।
यदात्मैव जगत्सर्वमिति निश्चित्य पूर्णता ॥ ९० ॥
अभ्यासाद्दृढतां यातो वैराग्यपरिलाञ्छितः ।
यथावासनमायामः प्राणानां सफलः स्मृतः ॥ ९१ ॥
विकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते ।
यतो वाचो निवर्तन्ते समग्रकलनान्विताः ॥ ९२ ॥
इमा घटपटाकारपदार्थशतशक्तयः ।
आत्मैव नान्यदस्तीति निश्चयः सम्यगीक्षणम् ॥ ९३ ॥
अनाद्यन्तावभासात्मा परमात्मेह विद्यते ।
इत्येष निश्चयः स्फारः सम्यग्ज्ञानं विदुर्बुधाः ॥ ९४ ॥
सर्वमात्मैव निर्दिष्टौ भावाभावौ क्व वा स्थितौ ।
क्व बन्धमोक्षकलने किमन्यद्राम शोच्यते ॥ ९५ ॥

योर्मध्ये योगलक्षणोपायवतः पुरुषस्य एवं पूर्वोक्तप्रकारेण चित्तस्य शमो नाशो दर्शित इत्यर्थः ॥ ८९ ॥ यथेति ॥ जगत्सर्वमात्मैवेति निश्चित्य पूर्णता परिपूर्णरूपत्वमिति यत् एतावदेव यथाभूतार्थदर्शित्वं परमार्थदर्शित्वम् ॥ ९० ॥ ९१ ॥ ९२ ॥ इमा इति ॥ घटपटाकारपदार्थशतशक्तयः घटपटाद्याकाराणि यानि पदार्थशतानि याश्च तेषां शक्तयः तत्सर्वमात्मैव । अन्यद्वस्तु नास्तीति निश्चयः सम्यग्ज्ञानमित्यर्थः ॥ ९३ ॥ ९४ ॥ सर्वमिति ॥ दृश्यं सर्वमात्मैव तत्र भावाभावौ कौ निर्दिष्टौ निरूपितौ । सर्वस्यात्मरूपत्वे अयं भावः अयमभावः इति च भेदो निरूपयितुमशक्य इत्यर्थः । क्व वा स्थितावित्यनेन भावाभावयोराश्रयोऽपि निरूपयितुमशक्य इत्याह ।

न चेत्यमन्यन्नो चित्तं ब्रह्मैवेदं विजृम्भते ।
सर्वमेकं परं ब्रह्म को मोक्षः का च बन्धता ॥ ९६ ॥
ब्रह्मेदं ग्रहिताकारं बृहद्बृहदवस्थितम् ।
दूरादस्तमितद्वित्वं भवात्मैव त्वमात्मना ॥ ९७ ॥
सम्यगालोकिते रूपे काष्ठपाषाणवाससाम् ।
मनागपि न भेदोऽस्ति क्वासि संकल्पनोन्मुखः ॥ ९८ ॥
आदावन्ते च संशान्तं स्वरूपमविनाशि यत् ।
वस्तूनामात्मनश्चैतत्तन्मयो भव राघव ॥ ९९ ॥
द्वैताद्वैतसमुद्भेदा जरामरणविभ्रमैः ।
स्फुरत्यात्मभिरात्मैव चित्तैरब्धिवद्वीचिभिः ॥ १०० ॥

किमन्यद्राम शोच्यते । बन्धमोक्षयोरप्यभावान्न शोकावसर इत्यर्थः ॥ ९५ ॥ ९६ ॥ ब्रह्मेति ॥ बृहद्बृहदिति महीमहीधरादिरूपेण स्थूलं स्थूलतममवस्थितम् । अतः कारणात्त्वं आत्मनैव स्वयमेवात्मा भव परिपूर्णः परमात्मा भव ॥ ९७ ॥ सम्यगिति ॥ काष्ठपाषाणवाससां रूपे स्वरूपे सम्यगालोकिते विचारिते सति मनागपि ईषदपि भेदो नास्ति दृश्यभेदस्य दृगायत्तत्वात् दृशः स्वरूपेणाभिन्नत्वात् । तस्मादात्मातिरिक्तस्य वस्तुनोऽभावात् क्व वा वस्तुनि संकल्पोन्मुखोऽसि ॥ ९८ ॥ आदाविति ॥ आदावुत्पत्तेः पूर्वं अन्ते विनाशानन्तरं च वस्तूनामिदन्तया प्रतीयमानानां भावानामात्मनश्च अहन्तास्पदस्य यदेतत्संशान्तं अविनाशि च स्वरूपं चिन्मात्रं त्वं तन्मयो भव ॥ ९९ ॥ द्वैतेति ॥ जरामरणविभ्रमैः जरामरणादिविलासैः ये द्वैताद्वैतसमुद्भेदाः भेदाभेदोन्मेषाः तैरुपलक्षितानि यानि चित्तानि तैरेवात्मभिः स्वरूपैः आत्मैव वीचिभिः अब्धिवद्बहुधा

शुद्धमात्मानमालिङ्ग्य नित्यमन्तःस्थया धिया ।
यः स्थितस्तं कमात्मेहं भोगो बन्धयितुं क्षमः ॥ १ ॥
कृतस्फारविचारस्य मनो भोगादयोऽरयः ।
मनागपि न भिन्दन्ति शैलं मन्दानिला इव ॥ २ ॥

नानात्वमस्ति कलनासु न वस्तुनोऽन्त-
र्नानाविधासु सरसीषु जलादिवान्यत् ।
इत्येकनिश्चयमयः पुरुषो विमुक्त
इत्युच्यते समवलोकितसम्यगर्थः ॥ ३ ॥

वसिष्ठ उवाच ॥

अथेमामपरां राम शृणु दृष्टिं पदप्रदाम् ।
मुनिना वीतहव्येन यथा स्थितमशङ्कितम् ॥ ४ ॥
वीतहव्यो मुनिर्नाम विन्ध्यकाननकन्दरे ।
उषित्वा सुचिरं कालं क्रियाकाण्डपरायणः ॥ ५ ॥
आत्मक्रियाक्रमाद्घोरसंसारभ्रमदायिनः ।
आधिव्याधिमयाकारात्कालेनोद्वेगमाययौ ॥ ६ ॥
निर्विकल्पसमाध्यर्थं संत्यज्य सकलाः क्रियाः ।
विवेश रम्भारचितं निजपर्णोटजान्तरम् ॥ ७ ॥

स्फुरति ॥ १०० ॥ शुद्धमिति ॥ नित्यं सर्वदा अन्तःस्थया अन्तर्मुखया धिया शुद्धं निरुपाधिकं आत्मानमालिङ्ग्य तादात्म्यमापद्य यः स्थितः तमात्मेहं आत्मारामं कं नाम भोगो बन्धयितुं क्षमः । न कमपीत्यर्थः ॥ १ ॥ २ ॥ नानात्वमिति ॥ कलनासु विकल्पबुद्धिषु अन्तरभ्यन्तरे वस्तुनो नानात्वं नास्ति । सरसीषु जलादिवेति एकनिश्चयमयः पुरुषो विमुक्त इत्युच्यते ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

तत्रासने समे शुद्धे स्वास्तीर्णहरिणाजिने ।
बद्धपद्मासनस्तस्थौ पार्ष्ण्योरधिकराङ्गुलिः ॥ ८ ॥
संजहाराञ्जसा लोकं दिग्विकीर्णं मनः शनैः ।
बाह्यानाभ्यन्तरांश्चैव स्पर्शान्परिहरन्क्रमात् ॥ ९ ॥
ततः स्वमनसः स्थैर्यं वाञ्छमानस्तदा मुनिः ।
इदमालोकयामास मनसा विगतैनसा ॥ ११० ॥

वीतहव्य उवाच ॥

अहो न चञ्चलमिदं प्रत्याहृतमपि क्षणात् ।
मनः स्थैर्यं ततो नैति तरङ्गप्रौढपर्णवत् ॥ ११ ॥
घटात्पटमुपायाति पटाच्छकटमुत्कटम् ।
चित्तमर्थेषु चलति पादपेष्विव मर्कटः ।
पञ्च द्वाराणि मनसश्चक्षुरादीन्यमून्यलम् ॥ १२ ॥
तेनात्मना बहुज्ञेन निर्ज्ञाताश्चक्षुरादयः ।
मनागपि न संबद्धाः पातालद्युतलादिवत् ॥ १३ ॥
चित्तचारण चार्वाक चतुर्दिक्कुक्षिभिक्षुक ।
व्यर्थं खेदमनास्थाय नेदं विहर हे जगत् ॥ १४ ॥

॥ ७ ॥ तत्रेति ॥ पार्ष्ण्योः पादपश्चिमभागयोः पद्मासनवशात् अङ्कयोरुपरि वर्तमानयोः अधिकराङ्गुलिः उपरि स्थितोत्तानकराङ्गुलिः ॥ ८ ॥ संजहारेति ॥ स्पर्शान्विषयान् परिहरन् शनैर्दिग्विकीर्णं मनः संजहारेति संबन्धः । उपहरदिति पाठे मनसो विशेषणम् ॥ ९ ॥ ११० ॥ ११ ॥ १२ ॥ तेनेति ॥ निर्ज्ञाताः । निःशब्दो बहिरर्थे वर्तते । आत्मनो बहिर्भावेन ज्ञाताश्चक्षुरादयस्तेनात्मना मनागपि न संबद्धाः पातालद्युतलादिवत् । पातालं दिवस्तलं च यथा परस्परं न संबध्यते तद्वदित्यर्थः ॥ १३ ॥ चित्तेति ॥ चारण-

अहं चेतनमित्येवमसत्या तव वासना ।
अत्यन्तभिन्नयोरैक्यं नास्ति चिन्मनसोः शठ ॥ १५ ॥
जीवः सोऽस्म्यहमित्येषा व्यर्थाहंकारदुर्मतिः ।
अहंकारादयं सोऽस्मीत्येतां संरब्धतां त्यज ।
मिथ्यैव जाता दुःखाय न सत्यासत्यवर्जिता ॥ १६ ॥
एतावदेव ते रूपं साधो यदविचारणम् ।
विचारेणोपशान्तं त्वमालोकेन तमो यथा ॥ १७ ॥
नित्यं पूर्वमभूताय नास्तिरूपाय संप्रति ।
भविष्यते च नोदर्के स्वमनः स्वस्ति ते स्थितिः ॥ १८ ॥
परिनिर्वामि शान्तोऽस्मि दिष्ट्यास्मि विगतज्वरः ।
स्वात्मन्येवावतिष्ठेऽहं तुर्यरूपपदे स्थितः ॥ १९ ॥

देशान्तरसंचरणशील। चार्वाक परलोकपराङ्मुख । चतुर्दिक्कुक्षिभिक्षुक चतसृणां दिशां कुक्षिष्वभ्यन्तरेषु भिक्षणशील हे चित्त, व्यर्थ खेदमनास्थाय इदं जगन्न विहर मा संचर ॥ १४ ॥ अहमिति ॥ हे चित्त, अहमेव चेतनमिति या ते वासना सा असत्या। हे शठ, अत्यन्तभिन्नयोश्चिन्मनसोरैक्यं नास्ति। अत्यन्तं भेदश्च मनसो दृश्यत्वजडत्वादिनेति द्रष्टव्यम् ॥ १५ ॥ जीव इति ॥ हे चित्त, जीवो ह्यहमिति अहंकारदुर्मतिर्व्यर्था । अहंकारात्सोऽस्मि अयमस्मीति या ते संरब्धता संभ्रमः तां त्यज ॥ १६ ॥ एतावदिति ॥ हे चित्त, अविचारणमिति यत्ते रूपं तदेतावदेव । अविद्यात्मकत्वाच्चित्तस्येति भावः । विचारेण पुनस्त्वमुपशान्तं भवसि । आलोकेन तमो यथा ॥ १७ ॥ नित्यमिति ॥ कालत्रयेऽप्यसद्रूपाय ते स्वस्ति । इतः परं मा बाधस्वेत्यर्थः । स्वमन इति संबोधनम् ॥ १८ ॥ परीति ॥ परि-

चिदात्मा भगवान्सर्वं साक्षित्वेन करोत्यजः ।
हन्तेन्द्रियगणा यूयं किं निरर्थकमाकुलाः ॥ १२० ॥
भीतः पान्थ इवाहिभ्यः पुक्कसेभ्य इव द्विजः ।
दूरे तिष्ठति चिन्मात्रमिन्द्रियेभ्यो ह्यनामयम् ॥ २१ ॥
संकल्पोन्मुखता सेयं दुःखदा संविदः स्मृतिः ।
कलनारहिते देवे देहे मनसि वा जडे ।
संवित्संवेद्यनिर्मुक्तासारस्तन्नाम नेतरत् ॥ २२ ॥

वसिष्ठ उवाच ॥

इति निर्णीय स मुनिर्वीतहव्यो विवासनः ।
बलाच्चित्तं समाधाय तस्थावस्पन्दितेन्द्रियः ॥ २३ ॥
अन्तरेव शशामास्य क्रमेण प्राणसंततिः ।
ज्वालाजालपरिस्पन्दो दग्धेन्धन इवानलः ॥ २४ ॥
घ्राणप्रान्तगताल्पाल्पसमालोक इवेक्षणे ।
अर्धकुड्मलितैः पद्मैः श्रियमाययतुः समम् ॥ २५ ॥
समकायशिरोग्रीवस्थानकः स महामतिः ।
आसीच्छैलादिवोत्कीर्णश्चित्रार्पित इवाथवा ॥ २६ ॥
तथैव तिष्ठतस्तस्य संवत्सरशतत्रयम् ।
कोटरे विन्ध्यकक्षस्य ययावर्धमुहूर्तवत् ॥ २७ ॥

निर्वामि परित उपरमामि ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ ॥ २३ ॥ २४ ॥ घ्राणेति ॥ भ्रूमध्ये योजितत्वात् घ्राणप्रान्तं गतः अल्पाल्पः समालोको ययोस्ते इव ॥ २५ ॥ समेति ॥ समकायशिरोग्रीवस्थानकः समं कायशिरोग्रीवं यस्मिन्स्थानके आसनबन्धे तादृशं स्थानकं यस्य ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ १३० ॥

तत्र केनापि कालेन कायस्तस्य महामुनेः ।
प्रावृडोघविनुन्नेन पङ्केनोर्वीतले कृतः ॥ २८ ॥
वर्षत्रयशतेनैवं सोऽबुध्यत महाद्युतिः ।
देहो नैव चचालास्य धराकोटरपीडितः ॥ २९ ॥
संविदेवास्य तं देहं जग्राहोर्वीनिपीडितम् ।
न तु प्राणमयस्पन्दः प्राणसंयमनं विना ।
नाभूत्प्राणपरिस्पन्दः सर्वच्छिद्रावरोधतः ॥ १३० ॥
उत्पत्तिप्रौढिमासाद्य कलना हृदयान्तरे ।
स्वमनोरूपिणी यस्य हृद्येवानुबभूव सा ॥ ३१ ॥
कैलासकानने कान्ते कदम्बस्य तरोस्तले ।
मुनित्वं शतमब्दानां जीवन्मुक्तात्म निर्मलम् ॥ ३२ ॥
विद्याधरत्वं वर्षाणां शतमाधिविवर्जितम् ।
युगपञ्चकमिन्द्रत्वं प्रणतं सुरचारणैः ॥ ३३ ॥
कल्पमेकं गणत्वं स चन्द्रमौलेश्चकार ह ।
प्रतिभासवशादेतद्वीतहव्योऽनुभूतवान् ॥ ३४ ॥
अनन्तरमनन्तात्म वीतहव्याभिधं मनः ।
इच्छां कदाचित्सकलप्राग्जन्मालोकनेऽकरोत् ॥ ३५ ॥
अशेषान्स ददर्शाथ नष्टानष्टान्स्वदेहकान् ।
अनष्टां तामपश्यन्नु वीतहव्याभिधां तनुम् ॥ ३६ ॥
तद्दिदृक्षयैवोद्धर्तुं मग्नदेहेऽभवन्मतिः ॥ ३७ ॥

उत्पत्तीति ॥ यस्य स्वमनोरूपिणी कलना कल्पना हृदयान्तरे हृत्पुण्डरीकमध्ये उत्पत्तिप्रौढिं उत्पत्तयो जन्मान्तराणि तद्विषयां प्रगल्भतामासाद्य हृद्येव तत्रैव हृदये अखिलं जन्मान्तरवृत्तान्तमन्वभूत ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

अथैवं चिन्तयामास कायोऽयं पङ्कपीडितः ।
एतदुद्धरणायाहं प्रविशामि रविं प्रभुम् ॥ ३८ ॥
तदीयः पिङ्गलो देहमुद्धरिष्यति मे ततः ।
इत्यसौ मुनिरादित्यं विवेशानिलरूपधृक् ।
पुर्यष्टकवपुर्भूत्वा भस्त्रापिण्डमिवानिलः ॥ ३९ ॥
भगवान् रविरप्येनं हृद्गतं मुनिनायकम् ।
दृष्ट्वा पिङ्गलमग्रस्थमादिदेशाशु कार्यवित् ॥ १४० ॥
भानुनाथाभ्यनुज्ञातं वीतहव्याभिधं मनः ।
विवेश पिङ्गलाकारं विन्ध्यकन्दरगामिनम् ॥ ४१ ॥
पिङ्गलोऽसौ नभस्त्यक्त्वा कुञ्जकन्दरसुन्दरम् ।
प्राप विन्ध्यवनं प्रावृण्णताभ्रास्वरभास्वरम् ॥ ४२ ॥
ददर्श मुनिदेहं तं तां गत्वा विन्ध्यकन्दराम् ।
उद्धार धराकोशान्नखनिष्कृष्टभूतलः ॥ ४३ ॥
कलेवरं मुनेः कान्तं मृणालमिव सारसः ॥ ४४ ॥

अथेति सार्धश्लोकद्वयं वाक्यम् ॥ तदीयः सूर्यस्य पार्श्ववर्ती परिजनः । 'माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः' इत्यभिधानादसौ मुनिः पुर्यष्टकवपुर्भूत्वा अहंकारकलायुक्तमित्यादिना पूर्वोक्तं सूक्ष्मदेहमालम्ब्य अनिलरूपधृक् प्राणवायौ सर्वेन्द्रियशक्तीरन्तर्भाव्य तद्रूपः सन् भस्त्रापिण्डमनिल इवादित्यं विवेशेत्यन्वयः ॥ ३८ ॥ ३९ ॥ १४० ॥ भानुनेति ॥ अथ वीतहव्याभिधं मनः वीतहव्यपदे शान्तं पुर्यष्टकं वीतहव्यस्य पुर्यष्टकरूपेण प्रविष्टत्वात्तस्य च पुर्यष्टकस्य मनःप्रधानत्वात्तादृशं मनो गच्छेति भानुना अनुज्ञातं सत् विन्ध्यकन्दरगामिनं पिङ्गलं देहं

मौनं पुर्यष्टकमथ स्वं विवेश कलेवरम् ।
जगाम पिङ्गलो व्योम मुनिश्च विमलं सरः ॥ ४५ ॥
वीतहव्यो ममज्जाशु सरस्युद्भिन्नपङ्कजे ।
तत्र स्नात्वा जपं कृत्वा पूजयित्वा दिवाकरम् ॥ ४६ ॥
मनोभूषितया तन्वा पूर्ववत्पुनराबभौ ॥ ४७ ॥

मैत्र्या तया समतया परया च शक्त्या
सत्प्रज्ञया मुदितया कृपया श्रिया च ।
युक्तो मुनिः सकलसङ्गविमुक्तचेता
विन्ध्ये सरित्तटगतो दिवसानि रेमे ॥ ४८ ॥

वसिष्ठ उवाच ॥

कदाचिच्छमसाधातुं पुनरेव मनो मुनिः ।
चेतसा कलयामास दृष्टलोकपरावरः ॥ ४९ ॥
पूर्वमेवेन्द्रियगणो मया परिहृतः स्फुटम् ।
इदानीं चिन्तया नार्थः पुनश्चिन्तिततया मम ॥ १५० ॥
अस्तिनास्तीति कलनां भङ्क्त्वा मृद्वीं लतामिव ।
शेषेऽनुबद्धसंधानस्तिष्ठाम्यचलशृङ्गवत् ॥ ५१ ॥
उदितोऽस्तं गत इव अस्तं गत इवोदितः ।
समः समरसाभासस्तिष्ठामि स्वच्छतां गतः ॥ ५२ ॥

विवेश ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ मौनमिति ॥ मौनं मुनिसंबन्धि ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ १५० ॥ अस्तिनास्तीति ॥ सत्त्वासत्त्वोल्लेखिनीं कलनां भेददृष्टिं मृद्वीं लतामिव भङ्क्त्वा भग्नां कृत्वा शेषे अव्यपदेश्ये चिन्मात्रे अनुबद्धसंधानः अचलशृङ्गवत्तिष्ठामि ॥ ५१ ॥ उदित इति ॥ उदितोऽस्तं गत इव

प्रबुद्धोऽपि सुषुप्तस्थः सुषुप्तस्थः प्रबुद्धवान् ।
तुर्यमालम्ब्य कायान्तस्तिष्ठामि स्तम्भितस्थितिः ॥ ५३ ॥
इति संचिन्त्य संधाने पुनस्तस्थौ दिनानि षट् ।
ततः प्रबोधमापन्नः क्षणं सुप्त इवाध्वगः ॥ ५४ ॥
ततः सिद्धः स भगवान्वीतहव्यो महातपाः ।
विजहार चिरं कालं जीवन्मुक्ततया तया ॥ ५५ ॥
हेयादेयसमासङ्गत्यागादानदृशोः क्षये ।
वीतहव्यमुनेरासीदिच्छानिच्छातिगं मनः ॥ ५६ ॥
विदेहकेवलीभावे सीमान्ते जन्मकर्मणाम् ।
संसारसङ्गसंत्यागे वाञ्छामापाऽतिशायिनीम् ॥ ५७ ॥

प्रकाशमानत्वेऽपि निष्क्रियत्वात् । अस्तं गत उदित इव इन्द्रियागोचरत्वेऽपि सर्वसाक्षित्वात् । सम एकरूपः समरसाभासः इष्टानिष्टादिषु समरस एकप्रकारास्वाद आभासोऽवभासो यस्य तादृशः सन् स्वच्छतां गतो निष्कलङ्कस्तिष्ठामि ॥ ५२ ॥ प्रबुद्ध इति ॥ प्रबुद्धोऽपीन्द्रियैरर्थानुपलभमानोऽपि सुषुप्तस्थो हर्षविषादादिरहितः सुषुप्तस्थः समाधिनिष्ठतया बहिरनुसंधानाभावात्सुषुप्तिदशापन्नः प्रबुद्धवान् स्वस्वरूपे नित्यजागरितवान् । तुर्यं अवस्थात्रयानुवृत्तिचिन्मात्रमालम्ब्य कायान्तर्हृदये स्तम्भितस्थितिर्नियमितचित्तवृत्तिस्तिष्ठामि ॥ ५३ ॥ ५४ ॥ ५५ ॥ हेयेति ॥ हेयमादेयमिति यः समासङ्गोऽभिमानः तस्य त्यक्ष्यामि आदास्यामीति ये दृशौ तयोश्च क्षये सति वीतहव्यमुनेर्मनः इच्छानिच्छातिगं इच्छानिच्छारहितं निर्विकल्पमासीत् ॥ ५६ ॥ विदेहेति ॥ जन्मकर्मणां सीमान्ते परमावधौ संसारसङ्गानां सम्यक्त्यागरूपे विदेहकैवल्ये अतिशायिनीं

एकदा स मुनीशानो विवेश गिरिकन्दरम्।
बद्धपद्मासनः स्थित्वा तत्रोवाचात्मनात्मनि ॥ ५८ ॥
राग नीरागतां गच्छ द्वेष निर्द्वेषतां व्रज।
भवद्भ्यां सुचिरं कालमिह प्रक्रीडितं मया ॥ ५९ ॥
भोगा नमोऽस्तु युष्मभ्यं जन्मकोटिशतान्यहम्।
भवद्भिर्लालितो लोके लालकैरिव बालकः ॥ १६० ॥
इमामपि परां पुण्यां निर्वाणपदवीमहम्।
येन विस्मारितस्तस्मै सुखायास्तु नमो नमः ॥ ६१ ॥
त्वदुत्तप्तेन हे दुःख मयात्मान्विष्ट आदरात्।
तस्मात्त्वदुपदिष्टोऽयं मम मार्गो नमोऽस्तु ते ॥ ६२ ॥
कार्यमित्र मयाद्य त्वं त्यज्यसे चिरबान्धवः।
अधिगम्यात्मविज्ञानं स्वस्य नाशः कृतस्त्वया ॥ ६३ ॥

वाञ्छामाप प्राप्तवान् ॥ ५७ ॥ ५८ ॥ रागेत्यादिना श्लोकाष्टकेन रागादीन्पूर्वसंबन्धिनः सप्रार्थनमुद्वासयति । हे राग, त्वं नीरागतां गच्छ । मद्विषयं रागं मुञ्चेत्यर्थः । मोक्ष्यमाणं मां विसृजेति यावत् । हे द्वेष, त्वं निर्द्वेषतां निर्द्वेषत्वं व्रज । त्वां विसृज्य गच्छन्तं मांप्रति द्वेषं मा कार्षीरित्यर्थः ॥ ५९ ॥ १६० ॥ इमामिति ॥ येन विषयसुखेन अहं इमामपि निरतिशयानन्दरूपां परां निर्वाणपदवीं विस्मारितोऽस्मि तस्मै सुखाय नमोऽस्तु । नमस्कारावृत्तिर्वञ्चकत्वातिशयं द्योतयितुम् ॥ ६१ ॥ त्वदिति ॥ हे दुःख, त्वदुत्तप्तेन मया दुःखशान्तये आत्माऽऽदरादन्विष्टः । 'तरति शोकमात्मविदि'ति श्रुतेः । तत्कारणादयं मोक्षमार्गो मम त्वदुपदिष्टः त्वयैव वैराग्यहेतुना बोधितः अतस्ते गुरुतुल्याय नमोऽस्तु ॥ ६२ ॥ कार्यमित्रेति ॥ हे कार्यमित्र, धर्मादिसाधनत्वात् मया

एकाकिन्या विशुष्यन्त्या प्रशान्ते मयि दीनया ।
त्वया दुःखं न कर्तव्यं मातस्तृष्णे नमोऽस्तु ते ॥ ६४ ॥
क्षन्तव्याः काम भगवन् विपरीतापराधजाः ।
दोषा उपशमैकान्तं व्रजाम्यादिश मङ्गलम् ॥ ६५ ॥
नमः सुकृतदेवाय भवतेऽस्तु त्वया पुरा ।
नरकेभ्यः समुत्तार्य स्वर्गेऽहमभियोजितः ॥ ६६ ॥
एते भवन्तः सहजाः प्राक्तनाः सुहृदो मया ।
क्रमेणाद्योत्कृताः प्राणाः स्वस्ति वोऽस्तु व्रजाम्यहम् ॥६७॥

वसिष्ठ उवाच ॥

एवं कलितवानन्तः प्रशान्तमननैषणः ।
शनैरुच्चारयंस्तारं प्रणवं प्राप्तभूमिकः ॥ ६८ ॥
सबाह्याभ्यन्तरान्भावान्स्थूलान्सूक्ष्मतरानपि ।
त्रैलोक्यसंभवांस्त्यक्त्वा संकल्पैकविकल्पितान् ॥ ६९ ॥
सह प्रणवपर्यन्तदीर्घनिःस्वनतन्तुना ।
जहाविन्द्रियतन्मात्रजालं गन्धमिवानिलः ॥ १७० ॥

आत्मविज्ञानमधिगम्य अद्य त्यज्यसे । त्वयैव स्वस्य नाशः कृतः । मोक्षार्थमुद्यमं कुर्वता त्वयैवायमपराधः कृत इत्यर्थः ॥ ६३ ॥ एकाकिन्येति मातरिति ॥ ६४ ॥ ६५ ॥ वियोगदुःखितां दुहितरमिवोपसान्त्वयन्नाह—नम इति ॥ हे सुकृत, भवते देवाय नमोऽस्तु ॥ ६६ ॥ एत इति ॥ अद्य क्रमेण पर्यायेण उत्कृताः । उत्क्रान्ताः कृता इत्यर्थः ॥ ६७ ॥ एवमिति श्लोकत्रयं वाक्यम् ॥ प्रशान्तानि मननानि संकल्पा एषणाः पुत्रैषणादयश्च यस्य । तारं उच्चतरं श्रुतिम् । प्राप्ता भूमिका योगभूमिका येन ॥ ६८ ॥ ६९ ॥ प्रणवपर्यन्तदीर्घनिःस्वनतन्तुना सह इन्द्रियाणां तन्मात्राणां च शब्दा-

ततो जहौ तमोमात्रं प्रतिभातमिवाम्बरे ।
उत्तिष्ठत्प्रस्फुरद्रूपं प्राज्ञः कोपलवं यथा ॥ ७१ ॥
प्रतिभातं ततस्तेजो निमेषार्धं विचार्य सः ।
जहौ बभूव च तदा न तमो न प्रकाशनम् ॥ ७२ ॥
तामवस्थामथासाद्य मनसा तन्मनस्तृणम् ।
मनागपि प्रस्फुरितं निमेषार्धादथापतत् ॥ ७३ ॥
ततोऽङ्गसंविदं स्वच्छां प्रतिभासमुपागताम् ।
सद्योजातशिशुज्ञानसमानकलनामलाम् ॥ ७४ ॥
निमेषार्धार्धभागेन कालेन कलितां प्रभुः ।
जहौ चितश्चेत्यदशां स्पन्दशक्तिमिवानिलः ॥ ७५ ॥
पश्यन्तीपदमासाद्य सत्तामात्रात्मकं ततः ।
सुषुप्तपदमालम्ब्य तस्थौ गिरिरिवाचलः ॥ ७६ ॥
सुषुप्ते स्थैर्यमासाद्य तुर्यरूपमुपाययौ ।

दीनां जालं जहौ । प्रणवस्य पर्यन्तनादेन सहैव इन्द्रियविषयजालमुपरसमेत्यर्थः ॥ १७० ॥ तत इति ॥ तमोमात्रं गुणत्रयात्मिकाया अपि अविद्यायास्तामसं वृत्तिविशेषम् । अम्बरे चिदाकाशे ॥७१॥ प्रतिभातमिति॥तेजः सात्त्विकं वृत्तिविशेषं न तमो न प्रकाशनं बभूवेति गुणत्रयातीतो बभूवेत्यर्थः ॥ ७२ ॥ तामिति ॥ तामवस्थां निस्त्रैगुण्यावस्थाम् ॥ ७३ ॥ तत इति ॥ अङ्गसंविदं स्वरूपचैतन्यम् । सद्योजातशिशुज्ञानसमानां निर्वासनामित्यर्थः ॥ ७४ ॥ चेत्यदशां निर्विकल्पां चिन्मात्राम् ॥ ७५ ॥ पश्यन्तीशब्दवाच्यं ततः परं सत्तामात्रात्मकं सुषुप्तपदमालम्ब्य गिरिरिवाचलस्तस्थौ ॥ ७६ ॥ सुषुप्त इति ॥ स सुषुप्ते निर्विकल्पसमाधौ स्थैर्यमासाद्य तुर्यरूपं अवस्थात्रयातीतं रूपमुपाययौ तस्यां दशायां स मुनिः निरानन्दः

निरानन्दोऽपि सानन्दः सच्चासच्चापि तत्र सः ।
अचिन्मयश्चिन्मयश्च नेतिनेति यदुच्यते ॥ ७७ ॥
ततस्तत्संबभूवासौ यद्गिरामप्यगोचरम् ।
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां तथा ॥ ७८ ॥
विज्ञानमात्रं विज्ञानविदां यदमलास्पदम् ।
पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ॥ ७९ ॥
शिवः शैवमतस्थानां कालः कालैकवादिनाम् ।
आत्मात्मकस्तद्विदुषां नैरात्म्यं तादृशात्मनाम् ॥ १८० ॥
मध्यं माध्यमिकानां च सर्वं सुसमचेतसाम् ॥ ८१ ॥
यत्सर्वशास्त्रसिद्धान्तो यत्सर्वहृदयानुगम् ।
यत्सर्वं सर्वगं सार्वं यत्तत्तत्सदसौ स्थितः ॥ ८२ ॥
यदनुत्तमनिष्पन्दं दीपकं तेजसामपि ।
स्वानुभूत्येकमानं च यत्तत्तत्सदसौ स्थितः ॥ ८३ ॥

सानन्दश्च बभूव । अपिशब्दः समुच्चये । तत्र निरानन्दत्वं स्वरूपातिरिक्तस्यानन्दस्याभावात् । सानन्दत्वं चानन्दानुभवात् । तथा सद्रूपत्वात् सच्च बभूव । सर्वव्यवहारनिवृत्तेरसच्च बभूव ॥ ७७ ॥ तत इति सार्धश्लोकत्रयं वाक्यम् ॥ ततोऽनन्तरं असौ मुनिः यद्वस्तु गिरामगोचरं अभिधावृत्त्या प्रतिपादयितुं न शक्यते । अथच सर्वैरपि वादिभिः स्वस्वमतानुसारेण शून्यादिशब्दैर्व्यपदिश्यते तत्परमात्मस्वरूपं बभूवेत्यन्वयः ॥ ७८ ॥ ७९ ॥ १८० ॥ ८१ ॥ यदिति ॥ यद्वस्तु सर्वेषां शास्त्राणां सिद्धान्तः तथा पूर्वं प्रतिपादितत्वात् । सर्वहृदयानुगं अन्तर्यामित्वात् । सर्वं सर्वात्मकं सर्वगं व्यापकत्वात् । सार्वं सर्वसंबन्धि अन्तर्यामित्वात् । यच्छब्दवाच्यं तत्तादृशं वस्तु भूत्वा असौ स्थितः ॥ ८२ ॥ यदिति ॥ यद्वस्तु

यदेकं चाप्यनेकं च साञ्जनं च निरञ्जनम् ।
यत्सर्वं चाप्यसर्वं च यद्यत्तत्सदसौ स्थितः ॥ ८४ ॥

अजममरमनाद्यमाद्यमेकं
पदममलं सकलं च निष्कलं च ।
स्थित इति स तदा नभःस्वरूपा-
दपि विमलस्थितिरीश्वरो बभूव ॥ ८५ ॥

त्रिंशद्वर्षसहस्राणि स्फुरित्वा स यथासुखम् ।
वीतहव्यः शशामैवमपुनर्मनसे मुनिः ॥ १८६ ॥

इति श्रीवाल्मीकीये मोक्षोपाय उपशमप्रकरणे वीतहव्योपाख्यानं
नाम नवमः सर्गः ॥ ९ ॥

---

अनुत्तमनिष्पन्दं अत्यन्तनिश्चलम् । तेजसां सूर्यादीनामपि दीपकम् । 'ज्योतिषां ज्योति'रिति श्रुतेः । स्वानुभूतिरेवैकं मानं प्रमाणं यस्य ॥ ८३ ॥ यदिति ॥ यद्वस्तु एकं च वस्तुतोऽद्वितीयत्वात् । अनेकं च मायावशात् । साञ्जनं च श्रुत्या निश्चलं आचार्यवाक्यावगम्यत्वात् । निरञ्जनं स्वयंप्रकाशत्वात् । अञ्जनं व्यञ्जकं प्रकाशकमिति पर्यायः । सर्वं सर्वात्मकत्वात् । असर्वं सर्वप्रपञ्चातीतत्वात् ॥ ८४ ॥ अजमिति ॥ स मुनिः अजममरमनाद्यमादिरहितं आद्यं आदौ भवं सकलं च निष्कलं च रूपद्वयेन वर्तमानं अमलं परं वस्तु भूत्वा स्थित इति हेतोः नभःस्वरूपादपि विमलस्थितिरीश्वरो बभूवेत्यन्वयः ॥ ८५ ॥ त्रिंशदिति ॥ अपुनर्मनसे पुनः मनःसत्त्वाभावाय । जन्मान्तराभावायेत्यर्थः ॥ १८६ ॥ इति श्रीवासिष्ठविवरण उपशमप्रकरणे वितहव्योपाख्यानं नाम नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः

राम उवाच ॥

जीवन्मुक्तशरीराणां कथमात्मविदां वर ।
शक्तयो नेह दृश्यन्ते आकाशगमनादिकाः ॥ १ ॥

वसिष्ठ उवाच ॥

अनात्मविदमुक्तोऽपि नभोविहरणादिकम् ।
द्रव्यमन्त्रक्रियाकालशक्त्याप्नोत्येव राघव ॥ २ ॥
नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्मदृक्स्वयम् ।
आत्मनात्मनि संतृप्तो नाविद्यामनुधावति ॥ ३ ॥
आत्मवानिह सर्वस्मादतीतो विगतैषणः ।
आत्मन्येव हि संतुष्टो न करोति न चेहते ॥ ४ ॥
ये केचन जगद्भावास्तानविद्यामयान्विदुः ।
कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति ॥ ५ ॥

पूर्वं चित्तविश्रान्तिसिद्धये सङ्गत्यागप्राणनिरोधसमाध्यभ्यासा दर्शिताः । इदानीं जीवन्मुक्तस्याकाशगत्यभावादिनिरूपणमुखेन चित्तस्योपशमप्राप्तिमुपसंहरति—जीवन्मुक्तेति ॥ आकाशगमनादिकाः आकाशे गम्यते यया शक्त्या सा आकाशगमना सा आदिर्यासां ताः ॥ १ ॥ अनात्मविदिति ॥ द्रव्यं रसायनादि । मन्त्रस्त्रैपुरादिः । क्रिया दृढाभ्यासादिरूपा । कालश्चिराभ्यासकालः । तेषां शक्त्या ॥ २ ॥ नेति ॥ आत्मज्ञस्य एष आकाशगमनादिर्विषयः साध्यत्वेन बुद्धिगोचरो न भवति । हि यस्मात्कारणादात्मज्ञः सदा आत्मदृक् आत्मज्ञानमनुसंदधत् स्वात्मानन्दतृप्ततया अविद्यामयीं आकाशगमनादिसिद्धिं नानुधावति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

यस्तु वा भावितात्मापि सिद्धिजालानि वाञ्छति ।
स सिद्धिसाधकैर्द्रव्यैस्तानि साधयति क्रमात् ॥ ६ ॥
द्रव्यमन्त्रक्रियाकालशक्तयः साधुसिद्धिदाः ।
परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ॥ ७ ॥
आत्मज्ञस्य तु पूर्णस्य नेच्छा संभवति क्वचित् ।
यस्येच्छा विद्यते काचित्स सिद्धिं साधयत्यलम् ॥ ८ ॥
सर्वेच्छाजालसंशान्तावात्मलाभोदयो हि यः ।
स कथं सिद्धिवाञ्छायां मग्नचित्ते न लभ्यते ॥ ९ ॥

राम उवाच ॥

ब्रह्मन्नतिचिरं कालं कथं जीवन्ति योगिनः ।
एतन्मे संशयं छिन्धि सर्वब्रह्मविदां वर ॥ १० ॥

वसिष्ठ उवाच ॥

प्राणानां स्पन्दनात्स्पन्दस्तच्छान्तौ ते दृषत्समाः ।
यतः स्थिता धारणायां तन्न नश्यन्ति योगिनः ॥ ११ ॥
सबाह्याभ्यन्तरः स्पन्दश्चित्तजो वातजोऽथवा ।
न यस्य विद्यते तस्य दूरस्थौ विकृतिक्षयौ ॥ १२ ॥

॥ ८ ॥ ९ ॥ १० ॥ प्राणानामिति ॥ प्राणानां प्राणादिवायूनां स्पन्दनाच्चलनादेहस्य स्पन्दश्चलनम् । अस्थिरत्वमिति यावत् । तच्छान्तौ प्राणस्पन्दनिवृत्तौ निरुद्धप्राणयोगिनो दृषत्समाः शिलावच्चिरकालस्थायिनः योगिनो यतो धारणायां प्राणनिरोधाभ्यासे स्थितास्तस्मात्कारणान्न नश्यन्ति ॥ ११ ॥ सबाह्येति ॥ यस्य योगिनः सबाह्याभ्यन्तरो बाह्यश्चाभ्यन्तरश्च चित्तजो वातजो वा स्पन्दो न विद्यते तस्य निरुद्धचित्तप्राणस्य विकृतिक्षयौ जरामरणरूपौ दूरस्थौ ॥ १२ ॥

सबाह्याभ्यन्तरे शान्ते स्पन्दे पवनचेतसोः ।
धातवः संस्थितिं देहे न त्यजन्ति कदाचन ॥ १३ ॥
ये हि विज्ञातविषया वीतरागा महाधियः ।
विच्छिन्नग्रन्थयः सर्वे ते स्वतन्त्रास्तनौ स्थिताः ॥ १४ ॥

राम उवाच ॥

विवेकाभ्युदयाच्चित्तस्वरूपेऽन्तर्हिते मुनेः ।
मैत्र्यादयो गुणाः कुत्र जायन्ते योगिनां वद ॥ १५ ॥

वसिष्ठ उवाच ॥

द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
जीवन्मुक्तौ सरूपः स्यादरूपो देहमुक्तिजः ॥ १६ ॥
चित्तसत्तेह दुःखाय चित्तनाशः सुखाय तु ।
चित्तसत्तां क्षयं नीत्वा चित्तनाशमुपानयेत् ॥ १७ ॥
प्राकृतं गुणसंभारं ममेति बहु मन्यते ।
यत्तु चित्तमतत्त्वज्ञं दुःखितं जीव उच्यते ॥ १८ ॥
सुखदुःखाद्यवष्टब्धमसीत्येव विनिश्चलम् ।
विद्यमानं मनो विद्धि संसारद्रुमदोहदम् ॥ १९ ॥

॥ १३ ॥ ये हीति ॥ विच्छिन्नग्रन्थयः प्राणनिरोधात् सुषुम्नासुखभेदने सति भिन्नब्रह्मविष्णुरुद्रग्रन्थय इत्यर्थः । प्राणधारणायाः प्रकृतत्वात् ते सर्वे योगिनः तनौ देहे स्वतन्त्राः स्थिताः । स्वेच्छयैव त्यजन्ति गृह्णन्ति चेत्यर्थः ॥ १४ ॥ विवेकेति ॥ मैत्र्यादयः कुत्र जायन्ते आत्मनो निर्गुणत्वात् चित्तस्य च विलीनत्वात् ॥ १५ ॥ ॥ १६ ॥ १७ ॥ प्राकृतमिति ॥ प्राकृतं गुणसंभारं सत्त्वादिगुणसमुदायं ममेति यच्चित्तमतज्ज्ञत्वाद्बहुमन्यते । दुःखितं संसारदुःखभाजनं तच्चित्तं जीव उच्यते ॥ १८ ॥ सुखेति ॥ यन्मनः सुख-

चेतसः कथिता सत्ता मया रघुकुलोद्वह ।
तस्य नाशमिदानीं त्वं शृणु प्रश्नविदां वर ॥ २० ॥
सुखदुःखदशा धीरं साम्यान्न प्रोद्धरन्ति यम् ।
निःश्वासा इव शैलेन्द्रं चित्तं तस्य मृतं विदुः ॥ २१ ॥
आपत्कार्पण्यमुत्साहो मदो मान्द्यं महोत्सवः ।
यं नयन्ति न वैरूप्यं तस्य नष्टं मनो विदुः ॥ २२ ॥
मनस्तां मूढतां विद्धि यदा नश्यति राघव ।
चित्तनाशाभिधानं हि तदा सत्त्वमुदेत्यलम् ॥ २३ ॥
मैत्र्यादिभिर्गुणैर्युक्तं भवत्युत्तमवासनम् ।
भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ॥ २४ ॥

दुःखादिभिरवष्टब्धमाश्रितं अस्मीत्येव सुख्यहं दुःख्यहमस्मीत्येव निश्चलं दृढाभिमानं संसारद्रुमदोहदं संसारवृक्षस्य पल्लवकुसुमफलोत्पादकं मनो विद्यमानं विद्धि ॥ १९ ॥ २० ॥ सुखेति ॥ यं धीरं ज्ञानिनं सुखदुःखदशाः साम्यान्न प्रोद्धरन्ति न चालयन्ति । निःश्वासवायवः शैलेन्द्रमिव तस्य धीरस्य चित्तं मृतं विदुः ॥ २१ ॥ अस्यैव विवरणम् आपदिति ॥ आपत्पुत्रादिविपत्तिः । कार्पण्यं दारिद्र्यम् । उत्साहः पुत्रोत्पत्त्यादिजन्यो हर्षः । मदः प्रसिद्धः । मान्द्यमपाटवम् । महोत्सवो विवाहादिः । वैरूप्यं विकारस्ताम् ॥ २२ ॥ मनस्तामिति ॥ मनस्ता मनःसत्ता तामेव मूढतां विद्धि । सा मनःसत्ता यदा नश्यति तदा चित्तनाशरूपं सत्त्वं ज्ञानमुदेति । गुणत्रयात्मके मनसि रजस्तमोमयी मूढता यदा विनश्यति तदा ज्ञानिनो मनः शुद्धसत्त्वात्मकं संपद्यत इत्यर्थः ॥ २३ ॥ मैत्रीति ॥ तदेव सत्त्वं मैत्र्यादियुक्तं विशुद्धवासनं जीवन्मुक्तस्य मनो भवति

सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य तत्र हि ।
वसन्त इव मञ्जर्यो भ्रान्तिमैत्र्यादयो गुणाः ॥ २५ ॥
अरूपस्तु मनोनाशो यो मयोक्तो रघूद्वह ।
विदेहमुक्त एवासौ विद्यते निष्कलात्मकः ॥ २६ ॥
समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ।
विदेहमुक्ते विमले पदे परमपावने ॥ २७ ॥
विदेहमुक्तिविषये तस्मिंश्चित्तलयात्मके ।
चित्तनाशे विरूपाख्ये न किंचिदपि विद्यते ॥ २८ ॥
न गुणा नागुणास्तत्र न श्रीर्नाश्रीर्न लोलता ।
न चोदयो नास्तमयो न हर्षामर्षसंविदः ॥ २९ ॥
न तेजो न तमः किंचिन्न संध्यादिर्न रात्रयः ।
न सत्ता नापि वाऽसत्ता न च मध्यं हि तत्पदम् ॥ ३० ॥

॥ २४ ॥ सरूप इति ॥ समानरूपः । आत्मस्वरूपं मनसा भिन्नं स्फुरतीत्यर्थः ॥ २५ ॥ अरूप इति ॥ निष्कलात्मकः निरंशस्वरूपः सत्त्वांशस्यापि विनष्टत्वात् ॥ २६ ॥ समग्राग्र्येति श्लोकचतुष्टयं वाक्यम् ॥ यस्मात्कारणाद्विदेहमुक्तरूपे परमपावने पदे समग्राणामग्र्यगुणानां मैत्र्यादिश्रेष्ठगुणानां आधारभूतं सत्त्वमपि प्रलीयते॥२७॥ तस्माद्विदेहमुक्तिविषये सत्त्वक्षयरूपे तस्मिन्विरूपे चित्तनाशे गुणदोषादिकं किंचिदपि न विद्यते ॥ २८ ॥ गुणा मैत्र्यादयः । अगुणाः मनोदोषाः । श्रीर्गुणानां समृद्धिः । अश्रीर्दोषाणां संपत् ॥ २९ ॥ न सत्ता वाप्यसत्ता च । अस्तिनास्तिव्यवहारयोरभावात् तत्पदं विदेहमुक्तिरूपं मध्यं च न । सदसदात्मकं अनुभवरूपं वा न

ये हि पारं गता बुद्धेः संसाराडम्बरस्य च ।
तेषां तदास्पदं स्फारं पवनानामिवाम्बरम् ॥ ३१ ॥

संशान्तदुःखमजडात्मकमेकसुप्त-
मानन्दमन्थरमपेतरजस्तमो यत् ।
आकाशकोशतनवोऽतनवो महान्त-
स्तस्मिन्पदे गलितचित्तलवा वसन्ति ॥ ३२ ॥

राम उवाच ॥

ब्रह्मन्संसृतिमृद्वीकालता या विततकृतेः ।
किं बीजमथ बीजस्य तस्य किं बीजमुच्यते ॥ ३३ ॥
अथ तस्यापि किं बीजं बीजं तस्यापि किं भवेत् ।
सर्वमेतत्समासेन पुनर्बोधविवृद्धये ।
सिद्धये ज्ञानसारस्य वद मे वदतां वर ॥ ३४ ॥

वसिष्ठ उवाच ॥

अन्तर्लीनसमारम्भशुभाशुभमहाङ्कुरम् ।
संसृतिव्रततेर्बीजं शरीरं विद्धि राघव ॥ ३५ ॥

भवति सत्त्वासत्त्वयोर्विरोधात् ॥३०॥ ये हीति ॥ तत् विदेहकैवल्यं स्फारमास्पन्दं विश्रान्तिस्थानम् ॥ ३१ ॥ संशान्तेति ॥ एकसुप्तं एकं सुषुप्तमेव यस्मिन् । सर्वदा चित्तस्य लीनत्वात् । आनन्दमन्थरं ब्रह्मानन्दनिर्भरं एवंविधं यत्परं विदेहमुक्तिरूपं तस्मिन् पदे आकाशकोशवत्तनवः सूक्ष्माः । स्थूलसूक्ष्मकारणात्मकदेहत्रयाभावात् अतनवः गलितचित्तलवाः विगलितसत्त्वरूपचित्तांशाः महान्तो वसन्ति विश्राम्यन्ति ॥ ३२ ॥ ब्रह्मन्निति श्लोकद्वयं वाक्यम् । मृद्वीका द्राक्षालता ॥ ३३ ॥ ३४ ॥ अन्तरिति ॥ अन्तर्लीनसमारम्भशुभाशुभमहाङ्कुरं अन्तर्गतोद्यमपुण्यपापरूपमहाङ्कुरं शरीरमेव

भावाभावदशाकोशं दुःखरत्नसमुद्गकम् ।
बीजमस्य शरीरस्य चित्तमाशावशानुगम् ॥ ३६ ॥
चित्तादिदमुदेत्युच्चैः सदसच्चाङ्गजालकम् ।
यथा चैतत्स्वयं स्वप्नसंभ्रमेष्वनुभूयते ॥ ३७ ॥
द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।
एकं प्राणपरिस्पन्दो द्वितीयं दृढवासना ॥ ३८ ॥
यदा प्रस्पन्दते प्राणो नाडीसंस्पर्शनोद्यतः ।
तदा संवेदनमयं चित्तमाशु प्रजायते ॥ ३९ ॥
सती सर्वगता संवित्प्राणस्पन्देन बोध्यते ।
संवित्संरोधनं श्रेयः परमं विद्धि राघव ॥ ४० ॥

संसृतिव्रततेर्बीजं संसारस्य शरीरान्वयव्यतिरेकानुविधायकत्वात् ॥ ३५ ॥ भावेति ॥ भावाभावदशाकोशं भावाभावदशानां जन्ममरणाद्यवस्थानां कोशवदाश्रयभूतम् ॥ ३६ ॥ चित्तस्य शरीरबीजत्वमुपपादयति—चित्तादिति ॥ इदं सदसच्च विद्यमानमविद्यमानं वाङ्गजालकमवयवसमष्टिरूपं शरीरं चित्तादेवोदेति । एतच्चार्थस्वरूपं यथा येन प्रकारेण सप्रकारस्वप्नसंभ्रमेषु स्वयमेवानुभूयते । चित्तस्य शरीरपरिकल्पनाहेतुत्वं स्वप्नेषु स्वानुभवसिद्धमित्यर्थः ॥ ३७ ॥ द्वे इति ॥ वृत्तिव्रततिधारिणः वृत्तयः सत्त्वादिगुणपरिणामरूपाः ता एव व्रततयः शाखास्तद्धारिणः ॥ ३८ ॥ प्राणस्पन्दो वासना च चित्तस्य बीजमित्युक्तम् । तत्र प्राणस्पन्दस्य बीजत्वमाह—यदेति ॥ प्राणो यदा नाडीसंस्पर्शनोद्यतः । 'शतं चैका च हृदयस्य नाड्यः' इति श्रुतेः । या नाड्यो मनोवहाः तासु संचारणोद्युक्तः सन्प्रस्पन्दते तदा चित्तमाशु संवेदनमयं वृत्तिज्ञानप्रचुरं संजायते ॥ ३९ ॥ सतीति ॥ सर्वगता सती संवित्प्राणस्पन्देन बोध्यते विक्षोभ्यते ।

संवित्समुदितैवाशु याति संवेद्यमादरात् ।
संवेदनादनन्तानि ततो दुःखानि चेतसः ॥ ४१ ॥
सुप्ता पुनरबोधाय संवित्संतिष्ठते यदा ।
लब्धं भवति लब्धव्यं तदा तदमलं पदम् ॥ ४२ ॥
तस्मात्प्राणपरिस्पन्दैर्वासनाचोदनैस्तथा ।
नोचेत्संविदमुच्छूनां करोषि तदजो भवान् ॥ ४३ ॥
संविदुच्छूनतां विद्धि चित्तं तेनेदमाततम् ।
अनर्थजालमालूनविशीर्णजनजीवकम् ॥ ४४ ॥
योगिनश्चित्तशान्त्यर्थं कुर्वन्ति प्राणरोधनम् ।
प्राणायामैस्तथा ध्यानैः प्रयोगैर्युक्तिकल्पितैः ॥ ४५ ॥

तस्मात्संविदो बहिर्मुखायाः संरोधनमेव परमं श्रेयो विद्धि ॥ ४० ॥ संविदिति ॥ संवित्समुदिता बोधिता विक्षोभितैवाशु संवेद्यं याति । ततः संवेदनात् संवेद्यानुसंधानात् चेतसोऽनन्तानि दुःखानि संभवन्ति ॥ ४१ ॥ सुप्तेति ॥ यदा संवित्पुनरबोधाय पुनरनुत्थानाय सुप्ता संतिष्ठते स्वरूप एव विश्राम्यति तदा लब्धव्यं तदमलं पदं लब्धं भवति ॥ ४२ ॥ तस्मादिति ॥ तस्मात्पूर्वोक्ताद्धेतोः प्राणस्पन्दैः वासनाचोदनैश्च संविदमुच्छूनां संवेद्यगर्भतया स्थूलां नो करोषि चेत्तर्हि भवानजो जन्मादिरहितो भविष्यसि ॥ ४३ ॥ संविदिति ॥ संविदः उच्छूनता विक्षुब्धतैव चित्तं तेन चित्तेनैव इदमालूनविशीर्णजनजीवकं आलूनाः आसमन्ताच्छिन्नाः विशीर्णाः क्षयं प्रापिताश्च जनानां जीवाः प्राणा येन तादृशमिदमनर्थजालं संसाररूपमाततं प्रपञ्चितम् ॥ ४४ ॥ योगिन इति ॥ युक्तिकल्पितैः योग-

चित्तोपशान्तिफलदं परमं साम्यकारणम् ।
सुभगं संविदः स्वास्थ्यं प्राणसंरोधनं विदुः ॥ ४६ ॥
ज्ञानवद्भिः प्रकटितामनुभूतां च राघव ।
चित्तस्योत्पत्तिमपरां वासनाजनितां शृणु ॥ ४७ ॥
दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ ४८ ॥
भावितं तीव्रसंवेगादात्मना यत्तदेव सः ।
भवत्याशु महाबाहो विगतेतरसंस्मृतिः ॥ ४९ ॥

शास्त्रनिरूपितैः प्रयोगैर्महामुद्रादिभिः ॥ ४५ ॥ चित्तेति ॥ प्राणसंरोधनमेव चित्तोपशान्तिफलदं साम्यावस्थाकारणं संविदः स्वास्थ्यं च विदुः ॥ ४६ ॥ ज्ञानेति ॥ पूर्वं प्राणस्पन्दकल्पिता चित्तस्योत्पत्तिरुक्ता । इदानीं वासनाकल्पितामपरां चित्तस्योत्पत्तिं शृणु ॥४७॥ दृढेति ॥ त्यक्तपूर्वापरविचारणं पूर्वं नियतपूर्वभाविकारणं अपरं नियतपश्चाद्भाविकार्यम् । त्यक्तं पूर्वापरयोर्विचारणं यस्मिन् । किमस्य कारणं कार्यं वेति विचारं विनैव पदार्थस्य आदानमुपादानं यद्यस्मात्कारणाद्दृढभावनयैव दीर्घकालं नैरन्तर्यपरिशीलनयैव भवति तस्मात्सैव दृढभावना वासनेति प्रकीर्तिता । सद्योजातस्य सुप्तोत्थितस्य वा सहसा प्रवृत्तौ हेतुर्वासनेत्यर्थः । यद्वा पूर्वं चिरपरिशीलनया संप्रति त्यक्तपूर्वापरविचारणं परिशीलितसजातीयपदार्थादानं यतः संस्काराद्भवति सा वासना प्रकीर्तिता । संस्कारो वासनेत्यर्थः ॥ ४८ ॥ भावितमिति ॥ यद्वस्तु तीव्रसंवेगाद्दृढाभ्यासादात्मना चित्तेन भावितं वासितं भवति स भावितपुरुषो विगतेतरसंस्मृतिः वस्त्वन्तरमचिन्तयन् आशु तदेव वस्तु भवति ॥ ४९ ॥

तादृग्रूपो हि पुरुषो वासनाविवशीकृतः ।
अपश्यति यदेवैतत्सद्वस्त्विति विमुह्यति ॥ ५० ॥
वासनावेगवैवश्यात्स्वरूपं प्रजहाति तत् ।
भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥ ५१ ॥
असम्यग्दर्शने यद्यदनात्मन्यात्मभावने ।
यदवस्तुनि वस्तुत्वं तच्चित्तं विद्धि राघव ॥ ५२ ॥
दृढाभ्यासं पदार्थैकभावनादतिचञ्चलम् ।
चित्तं संजायते जन्मजरामरणकारणम् ॥ ५३ ॥
यदा न भाव्यते किंचिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥ ५४ ॥
अवासनत्वात्सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमोपशमप्रदा ॥ ५५ ॥

तादृगिति ॥ वासनाविवशीकृतः तादृग्रूपः पुरुषो यदेव वस्तु प्रपश्यति भावयति तदेव सद्वस्तु प्रामाणिकं वस्त्विति विमुह्यति ॥ ५० ॥ वासनेति ॥ दुर्दृष्टिः दुर्वासनादूषितदृष्टिः पुरुषो वासनावेगवैवश्यात् तत्प्रसिद्धं वस्तुस्वरूपं प्रजहाति । न गृह्णातीत्यर्थः । मदवशादिव मदपारवश्यादिव सर्वं वस्तु भ्रान्तमन्यथाभूतमेव पश्यति ॥ ५१ ॥ असम्यगिति ॥ यच्छब्दत्रयमव्ययं हेत्वर्थे । असम्यग्दर्शने अनात्मन्यात्मभावने अवस्तुनि वस्तुत्वसंकल्पने च यत्कारणं तदेवान्यथाज्ञाननिमित्तं चित्तमित्यर्थः ॥ ५२ ॥ दृढेति ॥ पदार्थैकभावनात् दृढाभ्यासमतिचञ्चलं चित्तं जन्मादिकारणं संजायते ॥ ५३ ॥ यदेति ॥ यत् हेयोपादेयरूपि तद्वस्तु किंचिदपि यदा न भाव्यते किं तर्हि सकलं त्यक्त्वा तूष्णीं स्थीयते तदा चित्तं न जायते ॥ ५४ ॥ अवासनत्वादिति ॥ मनः कर्तृ न मनुते न संकल्पयति

यदा न भाव्यते भावः क्वचिज्जगति वस्तुनि ।
तदा हृदम्बरे शून्ये कथं चित्तं प्रजायते ॥ ५६ ॥
एतावन्मात्रकं मन्ये रूपं चित्तस्य राघव ।
यद्भावनं वस्तुनोऽन्तर्वस्तुत्वेन रसेन च ॥ ५७ ॥
न किंचित्कलनायोग्यं दृश्यं भावयतः स्वतः ।
आकाशकोशस्वच्छस्य कुतश्चित्तोदयो भवेत् ॥ ५८ ॥
यदभावनमास्थाय यदभावस्य भावनम् ।
यद्यथावस्तुदर्शित्वं तदचित्तत्वमुच्यते ॥ ५९ ॥
सर्वमन्तः परित्यज्य शीतलाशयवर्ति यत् ।
वृत्तिस्थमपि तच्चित्तमसद्रूपमुदाहृतम् ॥ ६० ॥

यदेति ॥ जगति वस्तुनि च क्वचिदपि भावः सत्ता यदा न भाव्यते तदा निर्वासनत्वात् शून्ये हृदम्बरे कथं चित्तं प्रजायते ॥५६॥ एतावदिति ॥ वस्तुनः पदार्थस्य अन्तः अन्तःकरणे वस्तुत्वेन वस्तुस्वरूपेण रसेन आदरेण च । यद्भावनं एतावन्मात्रकमेव चित्तस्य स्वरूपं मन्ये ॥ ५७ ॥ न किंचिदिति ॥ कलनायोग्यं संकल्पादिविषयं दृश्यं किंचिदपि स्वतो न भावयतः अतएवाकाशवत्स्वच्छस्य चित्तोदयः कुतो भवेत् ॥ ५८ ॥ यदिति ॥ आस्थाय आदृत्य दृश्यस्य यदभावनं अनादरवीक्षणमित्यर्थः । अभावस्य दृश्यस्य नास्तित्वस्य वा यद्भावनं यथावस्तुदर्शित्वं 'ब्रह्मैवेदं सर्वम्'इति यथार्थवस्तुदर्शित्वं च यावत् तत्सर्वमचित्तत्वमुच्यते । त्रेधापि चित्तस्य निर्वासनत्वात् ॥ ५९ ॥ सर्वमिति ॥ शीतलं शीतलत्वं ब्रह्मैवेदं सर्वमाशयवर्ति निवृत्तरागद्वेषतया शीतलेनाभिप्रायेण वर्तमानं वृत्तिस्थमपि वृत्तिम-

घना न वासना यस्य पुनर्जननकारिणी ।
जीवन्मुक्तः स तत्त्वस्थश्चक्रभ्रमवदास्थितः ॥ ६१ ॥
भ्रष्टबीजोपमा येषां पुनर्जननवर्जिता ।
वासना रसनिर्हीना जीवन्मुक्ता हि ते स्मृताः ॥ ६२ ॥
सत्त्वरूपपरिप्राप्तचित्तास्ते ज्ञानपारगाः ।
अचित्ता इति कथ्यन्ते देहान्ते व्योमरूपिणः ॥ ६३ ॥
द्वे बीजे राम चित्तस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ ६४ ॥
वासनावशतः प्राणस्पन्दस्तेन च वासना ।
जायते चित्तबीजस्य तेन बीजाङ्कुरक्रमः ॥ ६५ ॥
वासनाप्राणपवनस्पन्दयोरनयोर्द्वयोः ।
संवेद्यं बीजमित्युक्तं स्फुरतस्तौ यतस्ततः ॥ ६६ ॥

दपि ॥ ६० ॥ घनेति ॥ चक्रभ्रमवत् । यथा हि कुलालचक्रस्य भ्रमणं कुलालव्यापारनिवृत्तावपि यावत्संस्कारमनुवर्तते तद्वज्जीवन्मुक्तशरीरमविद्यानिवृत्तावपि तत्संकारशेषात्प्रारब्धभोगपर्यन्तमवतिष्ठत इत्यर्थः ॥ ६१ ॥ भ्रष्टेति ॥ रसनिर्हीना रसो विषयेष्वादरातिशयः तद्रहिता ॥ ६२ ॥ सत्त्वेति ॥ सत्त्वरूपपरिप्राप्तचित्ताः रजस्तमोभागयोर्निवृत्तत्वात् सत्त्वरूपमेव प्राप्तं चित्तं येषां ते जीवन्मुक्ता अचित्ताः कथ्यन्ते। अचित्तत्वादेव देहस्यान्ते व्योमरूपिणः चिदाकाशरूपा भवन्ति ॥ ६३ ॥ द्वे बीजे इति ॥ वासनाप्राणस्पन्दयोः चित्तबीजत्वमुपपाद्य इदानीं बीजाङ्कुरतयोः परस्परहेतुत्वादन्यतरनाशेऽपि द्वयोर्नाश इति श्लोकद्वयेनोच्यते । चित्तबीजस्य चित्तस्य बीजभूतयोर्वासनाप्राणस्पन्दयोरित्यर्थः ॥ ६४ ॥ ६५ ॥ वासनेति ॥ संवेद्यं दृश्यम् । यतः कारणात्तौ वासनाप्राणस्पन्दौ ततः

संवेद्यसंपरित्यागात्प्राणस्पन्दनवासने ।
समूलं नश्यतः क्षिप्रं मूलच्छेदादिव द्रुमः ॥ ६७ ॥
संविदं विद्धि संवेद्यबीजं धीर तया विना ।
न संभवति संवेद्यं तैलहीनस्तिलो यथा ॥ ६८ ॥
न बहिर्नान्तरे किंचित्संवेद्यं विद्यते पृथक् ।
संवित्स्फुरति संकल्प्य संवेद्यं पश्यति स्वतः ॥ ६९ ॥
स्वप्ने यथात्ममरणं तथा देशान्तरस्थितिः ।
स्वचमत्कारयोगेन संवेद्यं संविदस्तथा ॥ ७० ॥
पूर्वदृष्टमदृष्टं वा यदस्याः प्रतिभासते ।
संविदस्तत्प्रयत्नेन मार्जनीयं विजानता ॥ ७१ ॥
तदमार्जनमात्रं हि महासंसारतां गतम् ।
तत्प्रमार्जनमात्रं तु मोक्ष इत्यनुभूयते ॥ ७२ ॥
संवेदनमनन्ताय दुःखाय जननात्मने ।
असंवित्तिरजाड्यस्था सुखायाजननात्मने ॥ ७३ ॥

संवेद्यात्स्फुरतः प्रवर्तेते ॥ ६६ ॥ ६७ ॥ संविदमिति ॥ धीरेति संबोधनम् । तया संविदा ॥ ६८ ॥ न बहिरिति ॥ संवित्कल्पितत्वात्संवेद्यस्य संविदेव बीजमित्यर्थः ॥ ६९ ॥ एतदेव सदृष्टान्तमुपपादयति—स्वप्न इति ॥ यथा स्वप्ने स्वचमत्कारयोगेन स्वस्यैव भावनावशात् असद्भूतमपि स्वमरणं देशान्तरस्थितिश्च प्रतीयते तथा संविद्वशात्संवेद्यमित्यर्थः ॥ ७० ॥ पूर्वेति ॥ यद्वस्तु पूर्वदृष्टमदृष्टं वा अस्याः संविदः सकाशात् प्रतिभासते तत्संवेद्यं वस्तु विजानता पुरुषेण प्रयत्नेन मार्जनीयं निरसनीयम् ॥ ७१ ॥ तदिति ॥ तदमार्जनमात्रं तस्य संवेद्यस्याविस्मरणमेव महान्संसारः । तत्प्रमार्जनमात्रं दृश्यविस्मरणमेव मोक्षः ॥ ७२ ॥ संवेदनमिति ॥

अजडो गलितानन्दस्त्यक्तसंवेदनो भव ।
असंवेद्य प्रबुद्धात्मा यस्तु स त्वं रघूद्वह ॥ ७४ ॥

राम उवाच ॥

असंवित्तिरजाड्यस्था कीदृशी भवति प्रभो ।
असंवित्तौ च जाड्यं तत्कथं वा विनिवार्यते ॥ ७५ ॥

वसिष्ठ उवाच ॥

यः सर्वत्रानवस्थास्थो विश्रान्तास्थो न कुत्रचित् ।
जीवो न विन्दते किंचिदसंविदजडो हि सः ॥ ७६ ॥
संविद्वस्तुदशालम्बः स यस्येह न विद्यते ।
सोऽसंविदजडः प्रोक्तः कुर्वन्कार्यशतान्यपि ॥ ७७ ॥

संवेदनं संवेद्यानुसंधानं अनन्ताय जननात्मने संसाररूपाय दुःखाय भवति । अजाड्यस्था जाड्यसंबन्धरहिता या असंवित्तिः संवेद्याननुसंधानं सा अजननात्मने मोक्षरूपाय सुखाय भवति ॥ ७३ ॥ अजड इति ॥ हे रघूद्वह, त्वं अजडो जाड्यरहितः विगलितानन्दरूपचित्तपरिणामः त्यक्तसंवेदनः हीनसंवेद्यानुसंधानश्च भव । यः असंवेद्य संवेद्यमननुसंधाय प्रबुद्धात्मा प्रकाशमानस्वरूपः स एव परमात्मैव त्वं सत्यं नात्र संदेह इत्यर्थः ॥ ७४ ॥ असंवित्तिरिति ॥ असंवित्तौ संवित्त्यभावे तज्जाड्यं कथं निवार्यते असंवित्तेर्जाड्याविनाभूतत्वस्य अचेतनेषु दृष्टत्वात् ॥ ७५ ॥ य इति ॥ यो जीवः सर्वत्र सर्वेषु दृश्येषु अनवस्थास्थोऽस्थिरादरः । कुत्रचित्कस्मिंश्चिचिदपि दृश्ये विश्रान्तास्थो न भवति अतश्च किंचिदपि संवेद्यं चित्ते न विन्दते नानुसंधत्ते स जीवः असंवित् संवेद्याननुसंधानात् अजडश्चेतनत्वात् ॥ ७६ ॥ संविदिति ॥ वस्तुदशालम्बः चैतन्यस्य

संवेद्येन हृदाकाशं मनागपि न लिप्यते ।
यस्यासावजडोऽसंविज्जीवन्मुक्तः स उच्यते ॥ ७८ ॥
यदा न भाव्यते किंचिन्निर्वासनतयात्मनि ।
बालमूकादिविज्ञानमिव च स्थीयते स्थिरम् ॥ ७९ ॥
तदा जाड्यविनिर्मुक्तमसंवेदनमाततम् ।
आश्रितं भवति प्राज्ञ यस्माद्भूयो न लिप्यते ॥ ८० ॥
समस्तवासनां त्यक्त्वा निर्विकल्पसमाधितः ।
नीलत्वमिव खे स्फारमानन्दित्वं प्रवर्तते ॥ ८१ ॥
योगिनस्तत्र लीनस्य निःसंवेदनसंविदः ।
तन्मयत्वादनाद्यन्ते तदप्यन्तर्विलीयते ॥ ८२ ॥

तदिदमिति भूतादिवस्त्ववस्थानुसंधानं संविदित्युच्यते । सा तादृशी संविद्यस्य न विद्यते स कार्यशतान्यपि कुर्वन्नसंविदजडः प्रोक्तः ॥ ७७ ॥ संवेद्येनेति ॥ हृदाकाशं चित्ताकाशं न लिप्यते निर्वासनत्वात् न श्लिष्यते ॥ ७८ ॥ यदेति श्लोकद्वयं वाक्यम् ॥ यदा निर्वासनतया किंचिदप्यात्मनि न भाव्यते नानुसंधीयते बालमूकादीनां विज्ञानमिव च निर्विकल्पतया स्थिरं स्थीयते स्वरूपेणेति शेषः । बालादिवन्निर्विकल्पज्ञानस्वरूपतया स्थीयत इत्यर्थः ॥ ७९ ॥ तदा जाड्यविनिर्मुक्तं असंवेदनं आश्रितं भवति । यस्मादसंवेदनाश्रयणात् भूयो न लिप्यते पुण्यपापवासनाभिर्न संबध्यते ॥ ८० ॥ समस्तेति ॥ समस्तां वासनां त्यक्त्वा यो निर्विकल्पः समाधिः संभूतः तस्माद्धेतोः खे आकाशे नीलत्वमिव कलितं स्फारमानन्दित्वं प्रवर्तते ॥ ८१ ॥ योगिन इति ॥ तत्र निर्विकल्पसमाधौ लीनस्य अतएव निःसंवेदना संवेद्यानुसंधानरहिता संविद्यस्य तादृशस्य

गच्छंस्तिष्ठन्स्पृशञ्जिघ्रन्नपि तेन स उच्यते ।
अजडो गलितानन्दस्त्यक्तसंवेदनः सुखी ॥ ८३ ॥
एतां दृष्टिमवष्टभ्य कष्टया यत्नचेष्टया ।
तरेद्दुःखाम्बुधेः पारमपारगुणसागरम् ॥ ८४ ॥
अथास्यां संविदो राम सन्मात्रं बीजमुच्यते ।
सन्मात्राद्यदुदेत्येषा प्राकाश्यमिव तेजसः ॥ ८५ ॥
द्वे रूपे तत्र सत्ताया एकं नानाकृति स्थितम् ।
द्वितीयमेकरूपं तु विभागोऽयं तयोः शृणु ॥ ८६ ॥
घटता पटता तत्ता त्वत्ता मत्तेति कथ्यते ।
सत्तारूपं विभागेन यत्तन्नानाकृति स्मृतम् ॥ ८७ ॥
विशेषं संपरित्यज्य सन्मात्रं यदलेपकम् ।
एकरूपं महारूपं सत्तायास्तत्पदं विदुः ॥ ८८ ॥

योगिनः तन्मयत्वात् ध्येयेन वस्तुना सामरस्याद्धेतोरनाद्यन्ते अन्तःस्वरूपे तदपि आनन्दित्वमपि विलीयते ॥ ८२ ॥ ८३ ॥ एतामिति ॥ एतां दृष्टिं जाड्यरहितां संवित्तिरूपां दृष्टिम् ॥ ८४ ॥ अथेति ॥ या हि संवित्संवेद्यस्य बीजं अस्याः संविदः सन्मात्रं अविच्छिन्नं चित्स्वरूपं बीजमुच्यते । यद्यस्मात्कारणादेषा संवित्तेजसस्तेजोद्रव्यात्प्रदीपादेः प्राकाश्यमिव प्रकाश इव सन्मात्रादेवोदेति ॥ ८५ ॥ द्वे इति ॥ सत्तायाः स्वरूपसत्तायाः द्वे रूपे स्तः । तत्र तयोर्मध्ये एकं रूपं नानाकृति नानाप्रकारवत् स्थितं एकरूपमविक्षिप्तं तु रूपं द्वितीयम् ॥ ८६ ॥ घटतेति ॥ यत्सत्तारूपं घटता पटता तत्ता त्वत्तामत्तेति विभागेन कथ्यते तत्सत्ताया रूपं नानाकृतीति स्मृतम् । तदुक्तंहरिणा—'संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः' इति ॥ ८७ ॥ विशेष-

कालसत्ता कलासत्ता वस्तुसत्तेयमित्यपि ।
विभागकलनां त्यक्त्वा सन्मात्रैकपरो भव ॥ ८९ ॥
कालसत्ता स्वसत्ता च प्रोन्मुक्तकलना सती ।
यद्यप्युत्तमसद्रूपा तथाप्येषा न वास्तवी ॥ ९० ॥
विभागकलना यत्र विभिन्नपददायिनी ।
नानात्वकारणं दृष्ट्वा तत्कथं पावनं भवेत् ॥ ९१ ॥
सत्तासामान्यमेवैकं भावयन्केवलं विभुम् ।
परिपूर्णपरानन्दी तिष्ठापूरितदिग्भरः ॥ ९२ ॥

मिति ॥ विशेषं नामजात्यादिभेदं परित्यज्य यत्सन्मात्रमलेपकं निर्दोषं रूपमस्ति तत्सत्ताया महारूपं पदं एकरूपमिति विदुः ॥८८॥ कालेति ॥ कालसत्ता कालकृता भूतभवद्भाविभेदभिन्ना सत्ता । कलासत्ता कला अंशः तद्भेदकृता स्थूलसूक्ष्मदीर्घह्रस्वादिरूपा सत्ता । वस्तुस्वरूपभेदकृता घटपटादिरूपा सत्ता । इयं कालसत्ता इयं कलासत्ता इयं च वस्तुसत्तेत्यपि विभागकलनां भेदभावनां त्यक्त्वा सन्मात्रैकपरो भव ॥ ८९ ॥ कालेति ॥ कालसत्ता। स्वसत्ता स्वरूपसत्ता । चकारात्कलासत्ता प्रोन्मुक्तकलना परित्यक्तविकल्पांशा सती यद्यपि उत्तमसद्रूपा तथापि एषा कालादिसत्ता वास्तवी अविकल्पिता न भवति ॥ ९० ॥ विभागेति ॥ यत्र कालसत्तादौ नानात्वकारणं भेदहेतुमुपाधिं दृष्ट्वा विभागकलना विभिन्नपददायिनी वस्तुस्वरूपभेदबोधिनी भवति तत्कालसत्तादिके सत्तारूपं कथं नाम पावनं शुद्धं भवेत् । औपाधिकत्वादिति भावः ॥ ९१ ॥ सत्तेति ॥ विभुं व्यापकं सत्तासामान्यमेवैकं वस्तु केवलं भावयन् परिपूर्णपरानन्दी आपूरितदिग्भरस्तिष्ठ ॥ ९२ ॥

सत्तासामान्यमात्रस्य या कोटिः कोविदेश्वर ।
सैवास्य बीजतां याता तत एतत्प्रवर्तते ॥ ९३ ॥
सत्तासामान्यपर्यन्ते यत्तत्कलनयोज्झितम् ।
पदमाद्यमनाद्यन्तं तस्य बीजं न विद्यते ॥ ९४ ॥
तत्र सत्ता लयं याति निर्विकारं च तिष्ठति ।
भूयो नावर्तते दुःखं तत्र लब्धपदः पुनः ॥ ९५ ॥
तद्धेतुः सर्वहेतूनां तस्य हेतुर्न विद्यते ।
स सारः सर्वसाराणां तस्मात्सारो न विद्यते ॥ ९६ ॥
तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ ९७ ॥

तदमलमजरं तदात्मतत्त्वं
तदवगतावुपशान्तिमेति चेतः ।
अवगतविततैकतत्स्वरूपो
भवभयमुक्तपदोऽसि तच्चिराय ॥ ९८ ॥

सत्तेति ॥ सत्तासामान्यमात्रस्य या कोटिरुत्कर्षः अविकृतरूपैव अस्य जगतो बीजतां याता तत एतज्जगत्पूर्वोक्तक्रमेण प्रवर्तते । अयं क्रमः- सत्तासामान्यात्संवित्प्रवर्तते, संविदः संवेद्यं संवेद्यात्प्राणस्पन्दवासने ततश्चित्तं ततो देहः ततः संसार इति ॥ ९३ ॥ सत्तेति ॥ सत्तासामान्यस्य पर्यन्ते कोटौ यत्प्रसिद्धं कलनयोज्झितं आद्यमनाद्यन्तं च पदं तस्य वस्तुनो बीजं न विद्यते ॥ ९४ ॥ तत्रेति ॥ तत्र सर्वबीजभूतपूर्वोक्तपदे तिष्ठति ॥ ९५ ॥ ९६ ॥ ९७ ॥ तत्पूर्वोक्तं सत्तासामान्यकोटिस्थं पदम् । अवगतं विततमेकं तत्स्वरूपं येन तादृशस्त्वं भव । भयेन संसारभयेन मुक्तं पदं स्वरूपं यस्य सोऽसि । सम्यगेव तत्संविन्मात्रमात्मतत्त्वम् । चिराय चिरम् ॥ ९८ ॥

राम उवाच ॥

एतानि तानि प्रोक्तानि त्वया बीजानि मानद ।
कतमस्य प्रयोगेण शीघ्रमासाद्यते पदम् ॥ ९९ ॥

वसिष्ठ उवाच ॥

एतेषां दुःखबीजानां प्रोक्तं यद्यन्मयोत्तरम् ।
तस्य तस्य प्रयोगेण शीघ्रमासाद्यते पदम् ॥ १०० ॥
सत्तासामान्यकोटिस्थे द्रागित्येव पदे यदि ।
पौरुषेण प्रयत्नेन बलात्संत्यज्य वासनाः ॥ १ ॥
स्थितिं बध्नासि तत्त्वज्ञ क्षणमप्यक्षयात्मिकाम् ।
क्षणेऽस्मिन्नेव तत्साधुपदमासादयस्यलम् ॥ २ ॥
सत्तासामान्यरूपे वा करोषि स्थितिमङ्ग चेत् ।
तत्किंचिदधिकेनेह यत्नेनाप्नोषि तत्पदम् ॥ ३ ॥
संवित्तत्त्वे कृतध्यानो यदि तिष्ठसि राघव ।
तद्यत्नेनाधिकेनोच्चैरासादयसि तत्पदम् ॥ ४ ॥
संवेद्ये केवले ध्यानं न कार्यं रघुनन्दन ।
संवेद्ये वासनात्यागः सुमेरून्मूलनादपि ॥ ५ ॥

॥ ९९ ॥ एतेषामिति ॥ तस्य तस्य उत्तरोत्तरबीजस्य प्रयोगेण भावनया ॥ १०० ॥ सत्तेति श्लोकद्वयं वाक्यम् । सत्तासामान्यकोटिस्थे परे पदे क्षणमपि स्थितिं समाधिं बध्नासि चेत्तस्मिन्नेव क्षणे तत्पदमासादयसीत्यन्वयः ॥ १ ॥ २ ॥ सत्तेति ॥ सत्तासामान्यनिष्ठायां तु ततोऽपि प्रयत्नविशेषः कर्तव्य इत्यर्थः ॥ ३ ॥ संविदिति ॥ संवित्तत्त्वसमाधौ तु ततोऽप्यधिको यत्नविशेष इत्यर्थः ॥ ४ ॥ संवेद्य इति ॥ केवले संवेद्ये ध्यानमेव न संभवति । अस्याः

यावद्विलीनं न मनो न तावद्वासनाक्षयः।
न क्षीणा वासना ध्यानं न संभवति राघव ॥ ६ ॥
सर्वत्र संभवादस्याः संवित्तेरेव सर्वदा।
वासनासंपरित्यागे यदि यत्नं करोषि वा ॥ ७ ॥
तत्ते शिथिलतां यान्ति सर्वाधिव्याधयः क्षणात् ॥ ८ ॥
पूर्वेभ्यस्तु प्रयत्नेभ्यो विषमोऽयं हि संस्मृतः।
दुःसाध्यो वासनात्यागः सुमेरून्मूलनादपि ॥ ९ ॥
यावद्विलीनं न मनो न तावद्वासनाक्षयः।
न क्षीणा वासना यावत्तावच्चित्तं न शाम्यति ॥ ११० ॥
यावन्न तत्त्वविज्ञानं न तावच्चित्तसंक्षयः।
यावन्न चित्तोपशमो न तावत्तत्त्ववेदनम् ॥ ११ ॥
यावन्न वासनानाशस्तावत्तत्त्वागमः कुतः।
यावन्न तत्त्वसंप्राप्तिर्न तावद्वासनाक्षयः ॥ १२ ॥
तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च।
मिथः कारणतां गत्वा दुःसाध्यानि स्थितान्यतः ॥ १३ ॥
तस्माद्राघव यत्नेन पौरुषेण विवेकतः।
भोगेच्छां दूरतः कृत्वा त्रयमेतत्समाश्रयेत् ॥ १४ ॥

संवित्तेरेव सर्वत्र सर्वदा संभवात् कैवल्यस्य संवेद्यस्यासंभवादिति भावः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ पूर्वेभ्य इति श्लोकषट्कं वाक्यम्। अयं वासनात्यागविषयः प्रयत्नः। वासनाक्षयमनोनाशतत्त्वज्ञानानामन्योन्यसापेक्षत्वात् एकैकशः साधयितुमशक्यत्वात् त्रयमपि सममेवाभ्यसेदित्यर्थः ॥ ९ ॥ ११० ॥ ११ ॥ १२ ॥ १३ ॥

त्रय एते समं यावन्न स्वभ्यस्ता मुहुर्मुहुः ।
तावन्न तत्त्वसंप्राप्तिर्भवत्यपि समाशतैः ॥ १५ ॥
वासनाक्षयविज्ञानमनोनाशा महामते ।
समकालं समभ्यस्ता भवन्ति फलदा मुनेः ॥ १६ ॥
एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम् ।
तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकीर्तिता इव ॥ १७ ॥
त्रिभिरेभिश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः ।
निःशङ्कमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव ॥ १८ ॥
जन्मान्तरशताभ्यस्ता राम संसारसंस्थितिः ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ १९ ॥
वासनासंपरित्यागसमं प्राणनिरोधनम् ।
विदुस्तत्त्वविदस्तस्मात्तदप्येवं समाहरेत् ॥ १२० ॥
वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ।
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु ॥ २१ ॥
प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया ।
आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥ २२ ॥

॥ १४ ॥ १५ ॥ १६ ॥ एकैकश इति ॥ मन्त्राः संकीर्तिता इव शिवशक्तिमन्त्राणां परस्परसापेक्षाणामेकैकशः पुरश्चरणं यथा न फलदं तद्वदित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ वासनेति ॥ वासनाप्राणस्पन्दयोर्मिलित्वा चित्तबीजत्वात् वासनात्यागेन समं प्राणनिरोधनं विदुः । तस्मात्कारणात्तदपि प्राणनिरोधनमपि एवं वासनात्यागादित्रयेण सममेव समाहरेत् समभ्यसेत् ॥ १२० ॥ वासनेति ॥ चित्तनाशे वासनात्यागः प्राणनिरोधो वा हेतुरित्यर्थः ॥२१॥ तत्र प्राणनिरोधोपायमाह—प्राणेति ॥ युक्त्या पूर्वोक्तेन योगेन

निःसङ्गव्यवहारित्वाद्भवभावनवर्जनात् ।
शरीरनाशदर्शित्वाद्वासना न प्रवर्तते ॥ २३ ॥
वासनाभिभवे नष्टे न चित्तं संप्रवर्तते ।
संशान्तपवनस्पन्दे यथा पांसुर्नभःस्थले ॥ २४ ॥
यः प्राणपवनस्पन्दश्चित्तस्पन्दः स एव हि ।
प्राणस्पन्दजये यत्नः कर्तव्यो धीमतोच्चकैः ॥ २५ ॥
उपविश्योपविश्यैकचित्तकेन मुहुर्मुहुः ।
न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥ २६ ॥
अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः ॥ २७ ॥
अध्यात्मविद्याधिगमः साधुसंगम एव च ।
वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ॥ २८ ॥
एतास्तु युक्तयः पुष्टाः सन्ति चित्तजये किल ।
आभिस्तज्जीयते क्षिप्रं धाराभिरिव भूरजः ॥ २९ ॥
सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये ।
चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ॥ १३० ॥
विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् ।
ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ॥ ३१ ॥

आसनाशनयोगेन आसनं पद्मादि अशनं शरीरादि तदेव योग उपायस्तेन ॥ २२ ॥ वासनाक्षये उपायमाह—निःसङ्गेति ॥ भवभावनवर्जनात् भवभावनानि संसारहेतवो मलिनवासनाः तद्वर्जनात् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ चित्तनाशोपायमाह ॥ अध्यात्मेति श्लोकद्वयं वाक्यम् ॥ २८ ॥ आभिर्युक्तिभिः तच्चित्तम्

मतिरालूनशीर्णाङ्गी यदीया पेलवाङ्गिका ।
न क्वचिद्याति विश्वासं मृगी ग्रामगता यथा ॥ ३२ ॥
कालं यज्ञतपोदानतीर्थदेवार्चनभ्रमैः ।
चिरमाधिशतोपेताः क्षपयन्ति मृगा इव ॥ ३३ ॥
तस्मादेतां परित्यज्य दुर्दृष्टिं रघुनन्दन ।
शुद्धां संविदमाश्रित्य वीतरागः स्थिरो भव ॥ ३४ ॥
संवेद्यवर्जितमनुत्तममाद्यमेकं
संवित्पदं विकलनं कलयन्महात्मन् ।
हृद्येव तिष्ठ कलनारहितः क्रियां तु
कुर्वन्नकर्तृपदमेत्य शमोदितश्रीः ॥ ३५ ॥

वसिष्ठ उवाच ॥

मनागपि विचारेण चेतसः स्वस्य निग्रहः ।
मनागपि कृतो येन तेनाप्तं जन्मनः फलम् ॥ ३६ ॥
विचारकणिका यैषा हृदि स्फुरति पेलवा ।
एषैवाभ्यासयोगेन प्रयाति शतशाखताम् ॥ ३७ ॥
आगृहीतं महापीठं विचारकुसुमद्रुमम् ।
चिन्तावात्या विधुन्वन्ति न स्थिरस्थिति सुस्थितम् ॥ ३८ ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
न विचारपरं चेतो यस्यासौ मृत एव सः ॥ ३९ ॥

॥ २९ ॥ १३० ॥ ३१ ॥ मतिरिति ॥ यदीया हठयोगसंबन्धिनी ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ आगृहीतेति ॥ आगृहीतं आसमन्तात्स्वीकृतं महापीठं महती प्रतिष्ठा येन तम् । रूढमूलमित्यर्थः । अत एव स्थिरस्थिति सुस्थितं स्थिरप्रतिष्ठत्वादचलं विचाररूपं कुसुमद्रुमं चिन्तावात्या न विधुन्वन्ति ॥ ३८ ॥ ३९ ॥ १४० ॥ ४१ ॥

किमिदं स्याज्जगत्किं स्यादहमित्यनिशं शनैः।
विचारयाध्यात्मदृशा स्वयं वा सज्जनैः सह ॥ १४० ॥
विचारोऽध्यात्मविद्यानां ज्ञानमङ्ग विदुर्बुधाः।
ज्ञेयं तस्यान्तरेवास्ति माधुर्यं पयसो यथा ॥ ४१ ॥
सम्यग्ज्ञानसमालोकः पुंसो ज्ञेयसमः स्वयम्।
न बिभेति न चादत्ते वैवश्यं न च दीनताम् ॥ ४२ ॥
भवत्यापीतमैरेयः सदा मदमयो यथा।
समं चिद्रूपममलं ज्ञेयं ब्रह्म परं विदुः।
ज्ञानाभिगममात्रेण तत्स्वयं संप्रसीदति ॥ ४३ ॥
अपवित्रमपथ्यं च विषसिक्तं मलाद्यपि।
भुक्त्वा जरयति क्षिप्रं क्लिन्नं नष्टं च मृष्टवत् ॥ ४४ ॥
विषप्रतिविषाकल्कक्षीरेषु सलिलेऽन्धसि।
असक्तबुद्धिस्तत्त्वज्ञो भवत्यास्वादने समः ॥ ४५ ॥
जीवितस्यापि हर्तारं दातारं चैकरूपया।
दृशा प्रसादमाधुर्यशालिन्या परिपश्यति ॥ ४६ ॥

सम्यगिति श्लोकद्वयं वाक्यम् ॥ सम्यग्ज्ञानेन समालोकः समदृष्टिः। ज्ञेयसमः ज्ञेयेन वस्तुना समः ॥ ४२ ॥ ४३ ॥ अपवित्रमिति ॥ मृष्टवदपवित्रादिकं क्षिप्रं जरयति। समदृष्टितया निःसङ्गत्वादिति भावः। तत्र अपवित्रं उच्छिष्टादि। अपथ्यं वैद्यशास्त्रविरुद्धम्। क्लिन्नं चिरपर्युषितत्वात्। आर्द्राक्लिष्टमितिपाठे क्लिष्टमिति पक्वनष्टं स्वस्वरूपेण नष्टं रूपान्तरापन्नमित्यर्थः। मृष्टं निर्दोषं गुणवच्च। मृज शौचालंकारयोरिति धातुः ॥ ४४ ॥ विषेति ॥ विषं प्रसिद्धम्। प्रतिविषं विषनिवर्तकं प्रतिविषाधिकारे निरूपितं द्रव्यान्तरम्। अकल्कं अक-

स कस्यचिन्नो कदाचिदक्षस्य विषयस्थितौ ।
ददाति प्रसरं साधुराधिप्रोज्झितया धिया ॥ ४७ ॥
अतत्त्वज्ञमविश्रान्तमलब्धात्मानमस्थितिम् ।
निगिरन्तीन्द्रियाण्याशु हरिणा इव पल्लवम् ॥ ४८ ॥
सङ्गः कारणमर्थानां सङ्गः संसारकारणम् ।
सङ्गः कारणमाशानां सङ्गः कारणमापदाम् ॥ ४९ ॥
सङ्गत्यागं विदुर्मोक्षं सङ्गत्यागादजन्मता ।
सङ्गं त्यज त्वं भावानां जीवन्मुक्तो भवानघ ॥ १५० ॥

राम उवाच ॥

सर्वसंशयनीहारशरन्मारुत हे मुने ।
सङ्गः किमुच्यते ब्रूहि समासेन मम प्रभो ॥ ५१ ॥

वसिष्ठ उवाच ॥

भावाभावपदार्थानां हर्षामर्षविकारदा ।
मलिना वासना यैषा सा सङ्ग इति कथ्यते ॥ ५२ ॥
जीवन्मुक्तशरीराणामपुनर्जन्मकारिणी ।
मुक्ता हर्षविषादाभ्यां शुद्धा भवति वासना ॥ ५३ ॥
अजीवन्मुक्तरूपाणां दीनानां मूढचेतसाम् ।
कथ्यते सङ्गशब्देन वासना भवकारिणी ॥ ५४ ॥

त्मषं यत्क्षीरं तत्र च । अन्धसि अन्ने ॥ ४५ ॥ ४६ ॥ स इति ॥ सः समदृष्टिः । अक्षस्य इन्द्रियस्य । प्रसरं आसक्तिम् ॥ ४७ ॥ अतत्त्वज्ञमिति ॥ निगिरन्ति ग्रसन्ति ॥ ४८ ॥ निःसङ्गव्यवहारित्वादित्यादौ प्रस्तुतत्वात् । सङ्गनिरूपणाय तं सङ्गमवश्यहेयत्वेन प्रस्तौति—सङ्ग इत्यादिना ॥ ४९ ॥ १५० ॥ रामप्रश्नानन्तरं च मलिनवासनैव सङ्ग इति तत्स्वरूपं च निरूपयिष्यति ॥ ५१ ॥ ५२ ॥

हर्षामर्षविषादानां यदि गच्छसि वश्यताम् ।
ततो हर्षविषादाभ्यां बन्धनी वासना भवेत् ॥ ५५ ॥
मुक्तो हर्षविषादाभ्यां यदि गच्छसि नान्यताम् ।
वीतरागभयक्रोधस्तदसङ्गोऽसि राघव ॥ ५६ ॥
दुःखैर्न ग्लानिमायासि यदि हृष्यसि नो सुखैः ।
आशावैवश्यमुत्सृज्य तदसङ्गोऽसि राघव ॥ ५७ ॥
संपद्विपदि चैवात्मा यदि ते लक्ष्यते समः ।
यथाप्राप्तानुवर्ती च तदसङ्गोऽसि राघव ॥ ५८ ॥

सदा समस्तेऽपि हि वस्तुजाते
समाशयो ह्यन्तरदीनसत्त्वः ।
यदेव किंचित्प्रकृतं तदेव
कुर्वन्नसङ्गः सुखमास्व राम ॥ १५९ ॥

इति श्रीवाल्मीकीये मोक्षोपाय उपशमप्रकरण आकाशगत्यभावादिनिरूपणं नाम दशमः सर्गः ॥ १० ॥

॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ १५९ ॥ इति श्रीवासिष्ठविवरण उपशमप्रकरण आकाशगत्यभावादिनिरूपणं नाम दशमः सर्गः ॥ १० ॥

समाप्तमिदमुपशमप्रकरणम् ॥ ५ ॥

---

# निर्वाणप्रकरणम्



## प्रथमः सर्गः

वसिष्ठ उवाच ॥

दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ।
चिन्मात्रमक्षयं शान्तमेकं ब्रह्मास्मि नेतरत् ॥ १ ॥
इति मत्वाहमित्यन्तर्मुक्तामुक्तवपुर्महान् ।
एकरूपः प्रशान्तात्मा मौनी स्वात्मसुखो भव ॥ २ ॥
यावदज्ञानकलना यावदब्रह्मभावना ।
यावदास्था जगज्जाले तावच्चित्तादिकल्पना ॥ ३ ॥

अथ निर्वाणप्रकरणं निरूप्यते । तत्र पञ्चदशाख्यानानि—भुशुण्डः देवपूजा बिल्वफलं शिला अर्जुनः शतरुद्राः वेतालः भगीरथः किरातचिन्तामणिगजाख्योपाख्यानत्रयगर्भः शिखिध्वजः कचः मिथ्याभृङ्गी इक्ष्वाकुः व्याधः भूमिकाश्चेति । तत्र प्राणवृत्त्यनुसन्धानाच्चित्तविश्रान्त्या निर्वाणमिति भुशुण्डोपाख्यानेन निरूप्यते । तत्र हितमुपदिशति—दिक्कालेति श्लोकद्वयं वाक्यम् । अहं दिगादिभिरनवच्छिन्नमाद्यन्तरहितं चिन्मात्रं ब्रह्मैवास्मि इतरद्देहादिकं नास्तीत्यन्तर्मत्वा निश्चित्य मुक्तामुक्तवपुः अभिमानपरित्यागान्मुक्तं प्रारब्धवशादमुक्तं च वपुर्येन तादृशः सन्स्वात्मसुखः आत्मारामो भव । अस्ति मुक्त्वेति पाठे एकं ब्रह्मैवास्ति इतरन्नेति मत्वा अन्तरहमित्यहन्तां मुक्त्वा अमुक्तवपुर्जीवन्नेव स्वात्मसुखो भवेति योजना ॥१॥ ॥ २ ॥ अन्यथा संसारो न निवर्तत इत्याह—यावदिति ॥ ब्रह्मभावना ब्रह्मैवेदं सर्वमिति भावनाया अभावो यावदनुवर्तते अतएवा-

नास्ति चित्तं न चाविद्या न मनो नास्ति जीवकः ।
एताश्च कलना राम कृता ब्रह्मण एव ताः ।
ब्रह्मैवैकमनाद्यन्तमब्धिवत्प्रतिजृम्भते ॥ ४ ॥
देहे यावदहंभावो दृश्येऽस्मिन्यावदात्मता ।
यावन्ममेदमित्यास्था तावच्चित्तादिविभ्रमः ॥ ५ ॥
अन्तर्मुखतया सर्वं चिद्वह्नौ त्रिजगत्तृणम् ।
जुह्वतोऽन्तर्निवर्तन्ते मुनेश्चित्तादिविभ्रमाः ॥ ६ ॥
चिदात्मास्मि निरंशोऽस्मि पारावारविवर्जितः ।
रूपं स्मर निजं स्फारं माऽस्मृत्या संमितो भव ॥ ७ ॥

ज्ञानकलनाऽज्ञानमयो बन्धश्च यावदनुवर्तते अतश्च जगज्जाले आस्था यावत्तावदेव चित्तादिकल्पना चित्तं जीवो विद्येत्यादिभेदकल्पना प्रवर्तते ॥ ३ ॥ वस्तुतस्तु न काचिद्भेदकल्पनेत्याह—नास्तीति ॥ चित्तं शुद्धसत्त्वप्रधानमन्तःकरणम् । मनस्तु रजोगुणप्रचुरं संकल्पविकल्पात्मकमन्तःकरणम् ॥ ४ ॥ देह इति ॥ पूर्वोक्तस्यैव प्रपञ्चः दृश्ये परकीयदेहादौ आत्मता चेतनत्वबुद्धिः । यद्वा । दृश्ये प्रतिमादौ आत्मता परमात्मभावः । देवताबुद्धिरित्यर्थः ॥ ५ ॥ चित्तादिकल्पनाया निवृत्त्युपायमाह—अन्तरिति ॥ अन्तर्मुखतया सर्वात्मकोऽहमिति परिपूर्णात्मभावनया त्रिजगत्तृणं तृणवदुपेक्षणीयं दृश्यं चिद्वह्नौ सर्वप्रपञ्चाधिष्ठानभूते स्वात्मचैतन्ये जुह्वतः दृग्व्यतिरेकेण दृश्यस्याभावात् विलापयतो मुनेश्चित्तादिविभ्रमा निवर्तन्ते ॥ ६ ॥ कैषा अन्तर्मुखतेत्याकाङ्क्षायां चित्स्वरूपमाह—चिदात्मेति ॥ पारावारविवर्जितः पूर्वोत्तरावधिरहितो निरंशश्चिदात्मासीति निजं स्फारं व्याप्तं रूपं स्मर अनुसंधत्स्व । इयमेवान्तर्मुखतेति भावः ।

य एवातितरां शत्रुः सत्वरं मरणोद्यतः ।
तमेवाकृत्रिमं मित्रं यः पश्यति स पश्यति ॥ ८ ॥
समूलकाषं कषति नदी तट इव द्रुमम् ।
यः सौहृदं मत्सरं च स हर्षामर्षदोषहा ॥ ९ ॥
अध्यात्मशास्त्रमन्त्रेण तृष्णाविषविषूचिका ।
क्षीयते भावितेनान्तः शरदा मिहिका यथा ॥ १० ॥
यत्रोपादेयवाक्यत्वं भावितं स्वेन चेतसा ।
तद्वचोऽन्तर्विशत्युच्चैस्तप्ते क्षेत्रे यथा पयः ॥ ११ ॥

अस्मृत्या निजस्वरूपविस्मरणेन संमितः परिच्छिन्नो मा भव । असीति पाठे यतश्चिदात्मासि अतो निजं स्फारं रूपं स्मरेति योजना ॥ ७ ॥ य इति ॥ यः अतितरां शत्रुः सत्वरं मारणोद्यतश्च तमेव तथाविधमेव शत्रुं यो रागद्वेषरहिततया अकृत्रिमं मित्रं पश्यति स शत्रुमित्रयोः समदर्शी पुमान् पश्यति । जानात्यात्मतत्त्वमित्यर्थः ॥ ८ ॥ समूलेति ॥ यः सौहृदं मत्सरं च रागं द्वेषं च समूलकाषं कषति सवासनं परित्यजति स पुमान् हर्षामर्षादिदोषान् हन्ति ॥ ९ ॥ अध्यात्मेति ॥ अन्तः अन्तःकरणे भावितेन चिरं वासितेन अध्यात्मशास्त्रमन्त्रेण तृष्णाविषविषूचिका तृष्णारूपा विषजन्या विषूचिका क्षीयते । शरदा मिहिका यथा शरत्कालेन हिममिव ॥ १० ॥ अध्यात्मशास्त्रमध्यात्मविन्मुखादेव श्रुतं चित्ते लगति नान्यथेत्याह— यत्रेति ॥ यत्र यस्मिन्पुरुषे उपादेयवाक्यत्वं आप्तत्वेन स्वचेतसा भावितं निश्चितं तद्वचस्तस्यैवाप्तस्य वाक्यं उच्चैः प्रकर्षेण अन्तः अन्तःकरणे विशति प्रविशति । तप्ते क्षेत्रे पयो जलमिव ॥ ११ ॥

अपर्यालोचितात्मार्था अपरामृष्टसंविदः ।
स्पन्दन्ते चेतनोन्मुक्तास्तृणवन्मूढबुद्धयः ॥ १२ ॥
सर्वेषामेव चैतेषां स्थितैवैषा चिदव्यया ।
किंत्ववबोधवशादस्याः परां कृपणतां गताः ॥ १३ ॥
तर्जनं गर्जनं मूढाद्धनुर्दण्डगुणादिव ।
श्रूयते मरणायैव चिद्बोधपरिवर्जितम् ॥ १४ ॥
तस्मिन्यदधमे दत्तं तत्त्यक्तं सान्द्रकर्दमे ।
तेन सार्धं कथा या सा कौलेयाह्वानमम्बरे ॥ १५ ॥

गुरुमुखेन स्वानुभवेन च विचाराभावे संशय एव पर्यवस्यतीत्याह—अपर्यालोचितेति ॥ अपर्यालोचितात्मार्थाः आत्मैवार्थः प्रतिपाद्यो यस्मिन् शास्त्रे तदात्मार्थमध्यात्मशास्त्रं तदपर्यालोचितमविचारितं यैस्ते । अपरामृष्टसंविदः अविचारितस्वरूपसंविदश्च मूढबुद्धयः सर्वे तृणवत्स्पन्दन्ते इतस्ततश्चलन्ति । संदिहन्त इत्यर्थः ॥ १२ ॥ ननु सर्वेषामपि जीवानां चिद्रूपत्वात्कथं केषांचित्संदेह इत्यत्राह—सर्वेषामिति ॥ सत्यं सर्वेषामेवैतेषां जीवानामव्यया चिदेषा स्थितैव स्वरूपत्वेनावस्थितैव । किंत्वस्याः स्वरूपत्वेनावस्थितायाश्चितः अबोधवशादनाद्यविद्यामहिम्ना अननुसंधानवशात् परां निरवधिकां कृपणतां क्षुद्रतां गताः ॥ १३ ॥ तामेव कृपणतां दूषयन्नाह—तर्जनमिति ॥ धनुर्दण्डगुणादिव धनुष्यारोपितायाः मौर्व्या इव मूढादज्ञाज्जनात् चिद्बोधपरिवर्जितं स्वरूपचितोऽवबोधरहितं तर्जनं भर्त्सनं गर्जनं कण्ठकोलाहलश्च मरणायैव भूतद्रोहायैव श्रूयते । धनुर्गुणवन्मूढो हि स्वनन् परेषां नाशायैव कल्पते । अतो न तस्मात्किंचिदपि श्रोतव्यमिति भावः ॥ १४ ॥ स मूढो दानसन्मानादिकं किंचिदपि नार्हतीत्याह—तस्मिन्निति ॥ तस्मिन्नात्मावबोधविधुरे अधमे

अज्ञत्वमापदां निष्ठा का हि नापदजानतः ।
इयं संसारसरणिर्वहत्यज्ञप्रसादतः ॥ १६ ॥
यदेव गोष्पदाकारं ज्ञधियः पेलवं जगत् ।
तदेवापारपर्यन्तमगाधममहात्मनः ॥ १७ ॥
संवेद्येनापरामृष्टं शान्तं सर्वात्मकं च यत् ।
तत्सच्चिदानन्दमयमस्तीह कलनोज्झितम् ॥ १८ ॥
समुदेति स्वतस्तस्मात्कला कलनरूपिणी ।
सूक्ष्मा मध्या तथा स्थूला चेति सा कल्प्यते त्रिधा ॥१९॥

दत्तं धनं कर्दमे क्षारे उप्तमिव तेन सह संकथापि अम्बरे निराव-रणप्रदेशे ॥ १५ ॥ कौलेयकबाधाया अपरिहार्यत्वं दर्शयति । तस्मा-त्सर्वापदां संसारसरणेश्चाज्ञानमेव मूलमित्याह—अज्ञत्वमिति ॥ अज्ञत्वं अज्ञानं आपदां जरामरणादीनां निष्ठा निष्पत्तिहेतुः। कुतः। हि यस्मात्कारणात् अजानतः पुरुषस्य का आपन्न स्यात् । सर्वाप्याप-त्स्यादेव । इयं च संसारसरणिरज्ञानमेव प्रसादतो वहति प्रवर्तते । संसारप्रवृत्तेरज्ञप्रवृत्तिमूलत्वात् ॥ १६ ॥ यदिति ॥ ज्ञधियः ज्ञानिनो बुद्धेर्यदेव जगद्गोष्पदाकारं गोष्पदमिव पेलवमल्पमवभासते तदेव जगत् असहात्मनोऽज्ञस्य अगाधमपारपर्यन्तं च प्रतीयते । दुस्तरं भवतीत्यर्थः ॥ १७ ॥ इत्थमात्मज्ञादेव गुरोः श्रोतव्यमित्युक्त्वा तत्त्वं बोधयितुमाह—संवेद्येनेति ॥ संवेद्येन विषयेणापरामृष्टं असंश्लिष्टं शान्तं सर्वात्मकं च यद्वस्तु सच्चिदानन्दमयं कलनोज्झितं निष्कलं तदेव वस्तुतोऽस्ति ॥ १८ ॥ समुदेतीति ॥ तस्मात्परब्रह्मणः सका-शात्कलनरूपिणी बन्धनस्वभावा कला अविद्या स्वत एव न तु परेच्छया वा समुदेति । सा च कलना सूक्ष्मादिभेदात्त्रिधा कल्प्यते

सत्त्वं रजस्तम इति चैषैव प्रकृतिः स्मृता ।
एषैव संसृतिर्जन्तोरस्याः पारं परंपदम् ॥ २० ॥

अत्र ये तु त्रयः प्रोक्ता गुणास्तेऽपि त्रिधा स्मृताः ।
नवधैव विभक्तेयमविद्या गुणरूपिणी ॥ २१ ॥

ऋषयो मुनयः सिद्धा नागा विद्याधराः सुराः ।
इति भागमविद्यायाः सात्त्विकं विद्धि राघव ॥ २२ ॥

सात्त्विकस्यास्य भागस्य नागा विद्याधरास्तमः ।
रजस्तु मुनयः सिद्धाः सत्त्वं देवा हरादयः ॥ २३ ॥

॥ १९ ॥ सत्त्वमिति ॥ एषा सूक्ष्मादिभेदभिन्ना कलैव सत्त्वादिगुणत्रयात्मिका प्रकृतिः स्मृता । एषैव गुणत्रयात्मकप्रकृतिरूपा कलैव जन्तोः संसृतिर्बन्धहेतुः । अस्या एव पारं निवृत्तिः परंपदं कैवल्यम् ॥ २० ॥ अत्रेति ॥ अस्यां प्रकृतौ गुणाः ते प्रत्येकं त्रिधा स्मृताः । सत्त्वादीनां गुणान्तरैः सह व्यामिश्रितत्वात् । तथाहि सत्त्वं शुद्धं रजोमिश्रं तमोमिश्रं चेति त्रिविधं । इत्थं रजस्तमसी चेति । एवं गुणत्रयात्मिकेयमविद्या कलाशब्दवाच्या नवधा विभक्ता ॥ २१ ॥ ऋषय इति ॥ अत्र मन्त्रद्रष्टारो वसिष्ठविश्वामित्रादय ऋषयः । मौननिष्ठा मुनयः । ऋष्यादयो मिलित्वा अविद्यायाः सात्त्विको भाग इत्यर्थः ॥ २२ ॥ तत्रावान्तरविभागमाह—सात्त्विकस्येति ॥ सात्त्विकस्यास्य भागस्य मध्ये नागा वासुकितक्षकप्रमुखाः फणीन्द्राः विद्याधराः खड्गलाङ्गुलिकाञ्जनादिविद्याधारिणो जीमूतकेतुप्रभृतयश्च तमः तमोमिश्रसत्त्वांशाः मोहभूयिष्ठत्वात् । मुनयः सिद्धाश्च रजः रजोमिश्रः सत्त्वांशः तपोनिष्ठतया प्रवृत्तिभूयिष्ठत्वात् । हरादयो देवाः सत्त्वं सात्त्विकभागः सत्त्वांशज्ञानभूयिष्ठत्वात् ॥ २३ ॥

भाग एष त्वविद्याया एवं विद्यात्वमागतः ।
शुद्धं सत्त्वं ह्यविद्याया भागोऽविद्येति कथ्यते ॥ २४ ॥
राजसी तामसी चेति सृष्टिरेवं त्रिधा त्रिधा ।
मौर्ख्यपिण्डः स्थावरादिः प्राप्तस्तामससीमताम् ॥ २५ ॥

राम उवाच ॥

मौर्ख्यमत्यन्तघनतामागतं समुपस्थितम् ।
स्थावरादितनुं प्राप्तं कीदृशं भवति प्रभो ॥ २६ ॥

वसिष्ठ उवाच ॥

अमनस्त्वमसंप्राप्तं मनस्त्वादपि विच्युतम् ।
तटस्थं रूपमाश्रित्य स्थितैषा स्थावरेषु चित् ॥ २७ ॥

भाग इति ॥ अविद्याया मध्ये अविद्याप्रभेदानां नवानां मध्ये एष भागः सात्त्विकभागस्य सत्त्वांशो विद्याशब्दवाच्यत्वमागतः । यस्मात्कारणात् शुद्धं सत्त्वं शुद्धसत्त्वरूपो विद्याभाग एव विद्येति कथ्यते ॥ २४ ॥ उक्तन्यायमन्यत्रातिदिशति—राजसीति ॥ एवमुक्तप्रकारेण राजसी तामसी च सृष्टिस्त्रिविधोक्ता । तथाहि । मनुष्याणामपि सर्वेषां राजसत्वे ज्ञानप्रधाना ब्राह्मणाः सत्त्वांशः । युद्धादिप्रवृत्तिप्रधानाः क्षत्रियादयो रजोंऽशः । मोहबहुलाः सच्छूद्रादयस्तमोंऽशः । एवं तामसेषु तिर्यक्ष्वपि प्रकाशप्रवृत्तिमोहबाहुल्याद्गवादिषु त्रैविध्यं वेदितव्यम् । मौर्ख्यपिण्डः पिण्डीभूताज्ञानरूपः स्थावरादिः सर्गविशेषः । तामससीमतां तामससृष्टेः परमावधित्वं प्राप्तः ॥ २५ ॥ मौर्ख्यमिति ॥ अत्यन्तघनतामतिसान्द्रतामागतं मौर्ख्यमज्ञानं स्थावरादितनुं प्राप्तं सत्कीदृशं समुपस्थितं भवति केन प्रकारेणावस्थितं भवति ॥ २६ ॥ अमनस्त्वमिति ॥ अमनस्त्वं पाषाणादिवन्निर्म-

राम उवाच ॥

मनस्त्वाद्विच्युता यत्र संस्थिता स्थावरेषु चित् ।
तत्रादूरस्थितां मुक्तिं मन्ये वेदविदांवर ॥ २८ ॥

वसिष्ठ उवाच ॥

सुप्तपुर्यष्टका यत्र चितिस्थिता सुखदायिनी ।
मूकान्धजडवत्तत्र सत्तामात्रेण तिष्ठति ॥ २९ ॥

राम उवाच ॥

सत्ताद्वैततया यत्र संस्थिता स्थावरेषु चित् ।
तत्रादूरस्थितां मुक्तिं मन्ये वेदविदांवर ॥ ३० ॥

वसिष्ठ उवाच ॥

बुद्धिपूर्वं विचार्येदं यथावस्त्ववलोकनात् ।

नस्कतां असंप्राप्तं हिताहितप्राप्तिपरिहारार्थायाः प्रवृत्तेरसंभवात् । मनस्त्वादपि मनोव्यापारादपि विच्युतं स्मरणाद्यभावात् । इत्थं तटस्थं मनस्त्वामनस्त्वमध्यवर्ति यन्मौर्ख्यं तादृशं रूपमाश्रित्य चिदेषा स्थावरेषु स्थिता ॥ २७ ॥ २८ ॥ सुप्तेति ॥ यत्र स्थावरेषु चिच्चैतन्यं सुप्तपुर्यष्टकाख्यं अहंकारकलायुक्तं बुद्धिबीजसमन्वितं तत्पुर्यष्टकमित्युक्तम् । शैवागमे तु 'स्यात्पुर्यष्टकमन्तःकरणं धीकर्मकरणादि'त्यत उक्तं तादृशं पुर्यष्टकमिन्द्रियसमष्टिरूपं सुप्तं निलीनं यस्यां सा तादृशी सती सुखदायिनी सुषुप्ताविव सुखाविर्भावहेतुः स्थिता । तत्र स्थावरेषु मूकान्धजडेष्विव चित् सत्तामात्रेण तिष्ठति न पुनः प्रकटतया प्रकाशते ॥ २९ ॥ सत्तेति ॥ यत्र स्थावरेषु सत्ता चित्सत्ताद्वैततया सत्तया सहाभिन्नतया । सत्तामात्ररूपतयेति यावत् । संस्थिता संकल्पविकल्पाद्यभावात् तत्र स्थावरेषु मुक्तिमदूरस्थितां संनिहितां मन्ये । समाध्यवस्थासादृश्यादिति भावः ॥ ३० ॥ बुद्धीति ॥

सत्तासामान्यबोधो यः स मोक्षः स्यादनन्तकः ॥ ३१ ॥
परिज्ञाय परित्यागो वासनानां य उत्तमः ।
सत्तासामान्यरूपत्वात्तत्कैवल्यपदं विदुः ॥ ३२ ॥
विचार्यार्यैः सहालोक्य शास्त्राण्यध्यात्मभावनात् ।
सत्तासामान्यनिष्ठत्वं तत्तद्ब्रह्म परं विदुः ॥ ३३ ॥
अन्तः सुप्ता स्थिता मन्दा यत्र बीज इवाङ्कुरः ।
वासना तत्सुषुप्तत्वं विद्धि जन्मप्रदं पुनः ॥ ३४ ॥
अन्तः संलीनमननं परितः सुप्तवासनम् ।

इदं जगद्विचार्य श्रुतियुक्तिविद्वदनुभवैः पर्यालोच्य यथावस्त्ववलोकनात् परमार्थनिश्चयात् बुद्धिपूर्वं यः सत्तासामान्यबोधः सत्तामात्रपर्यवसितो बोधः स एवानन्तः पुनरावृत्तिरहितो मोक्षः स्यात्। अन्यथा महापातकैरेव कायिकैः स्थावरत्वसिद्धेर्मोक्षस्य सुलभत्वात् मोक्षशास्त्राणां वैयर्थ्यं स्यादिति भावः॥ ३१ ॥ एतदेवाह—परीति ॥ परिज्ञाय विचार्य हेयत्वाद्वासनानां संसारहेतूनां यः उत्तमः परित्यागः संसारप्राप्तिरहितः परित्यागः। कुतः। सत्तासामान्यरूपत्वात् चैतन्यस्य सर्वोपाधिविनिर्मुक्तत्वात् तदेव कैवल्यरूपं विदुः॥ ३२॥ विचार्येति पूर्वोक्तस्यैव प्रपञ्चः । शास्त्राण्यध्यात्मशास्त्राणि आलोक्य गुरुमुखादवधार्य आर्यैः ब्रह्मवादिभिः सह विचार्य युक्तिभिः अनुचिन्त्य अध्यात्मभावनात्स्वचित्तेऽनुसंधानात् यत्सत्तासामान्यनिष्ठत्वं तदेव परं ब्रह्म विदुः ॥ ३३ ॥ अन्तरिति ॥ यत्र यस्यां स्थावरदशायां वासना बीजाङ्कुर इव अन्तरन्तःकरणे सुप्ता निलीना तन्द्रा स्थिता तत्सुषुप्तत्वं गाढनिद्रासादृश्यात् । तत्पुनर्जन्मप्रदं विद्धि वासनाया निक्षिप्तधनवन्निगूढमवस्थानात् ॥ ३४ ॥ अन्तरिति ॥ अन्तः अभ्यन्तरे संलीनमननं निलीनमनोव्यापारं परितः सुप्तवा-

सुषुप्तं जडधर्मत्वाज्जन्मदुःखशतप्रदम् ॥ ३५ ॥
स्थावरादय एते हि समस्ता जडधर्मिणः ।
सुषुप्तपदमारूढा जन्मयोग्याः पुनः पुनः ॥ ३६ ॥
यथा बीजेषु पुष्पाणि मृदो राशौ घटा यथा ।
तथान्तःसंस्थिताः साधो स्थावरेषु स्ववासनाः ॥ ३७ ॥
यत्रास्ति वासनाबीजं तत्सुषुप्तं न सिद्धये ।
निर्बीजा वासना यत्र तत्तुर्यं सिद्धिदं स्मृतम् ॥ ३८ ॥
वासनायास्तथा वह्नेर्ऋणव्याधिद्विषामपि ।
स्नेहवैरिविषाणां च शेषः स्वल्पोऽपि बाधते ॥ ३९ ॥

सनं च यत् सुषुप्तं सुषुप्तसदृशी दशा तज्जडधर्मत्वात् जडेष्वेव वर्तमानत्वात् जन्मदुःखशतप्रदं जन्मनां दुःखशतानां च हेतुः ॥३५॥ स्थावरादय इति ॥ अन्तःकरणादेते स्थावरादयो जडधर्मिणः समस्ताः सुषुप्तपदमारूढा इति कृत्वा पुनःपुनः जन्मयोग्याः । सुषुप्ता हि पुनःपुनः संसरन्ति ॥ ३६ ॥ यथेति ॥ बीजेषु चूतादिबीजेषु यथा अन्तः पुष्पाणि सूक्ष्मरूपतया संस्थितानि । पुष्पग्रहणमुपलक्षणं फलादीनाम् । यथा च मृदो राशौ मृत्तिकासमूहे घटाः संस्थिताः । घटग्रहणं च शरावोदञ्चनादीनामुपलक्षणम् । तथा स्थावरेषु स्ववासनाः स्वीयाः पुण्यापुण्यसंस्काररूपा जन्मान्तरहेतवः अन्तः स्थिताः ॥ ३७ ॥ यत्रेति ॥ यत्र स्थावरदशायां वासना च तद्बीजमज्ञानं च संसारकारणमस्ति तत्सुषुप्तत्वमेव न तुर्यावस्था । तच्च सिद्धये कैवल्याय न भवति । यत्र यस्मिञ्जीवन्मुक्तपदे निर्बीजा निर्गतं बीजमज्ञानरूपं यस्याः सा शुद्धवासना प्रवर्तते तत्तुर्यं पदं सिद्धिदं स्मृतम् ॥ ३८ ॥ वासनाया इति ॥ वह्न्यादीनामिव वासनायाः शेषः स्वल्पोऽपि

निर्दग्धवासनाबीजः सत्तासामान्यरूपवान् ।
सदेहोऽपि विदेहो वा न भूयो दुःखभाग्भवेत् ॥ ४० ॥
चिच्छक्तिर्वासनाबीजरूपिणी सर्वदेहिनाम् ।
अस्यास्त्वदर्शनं यत्तदविद्येत्युच्यते बुधैः ॥ ४१ ॥
अविद्यायास्तु भागेन प्रधानेनेतरं दहेत् ।
तावद्यावन्मिथो घर्षाद्द्वयं शाम्येच्छिवं भवेत् ॥ ४२ ॥
एतावदेवाविद्यात्वं नेदं ब्रह्मेति निश्चयः ।
एष एव क्षयोऽस्या यद्ब्रह्मेदमिति निश्चयः ॥ ४३ ॥

बाधत इत्यर्थः ॥ ३९ ॥ निर्दग्धेति ॥ निर्दग्धवासनाबीजः निर्दग्धा वासना तद्बीजमज्ञानं च येन तादृशः सत्तासामान्यनिष्ठत्वात् तद्रूपवान्पुरुषः सत्यसति वा देहे भूयो दुःखभाङ् भवेत् ॥ ४० ॥ चिच्छक्तिरिति ॥ या खलु चिच्छक्तिः ब्रह्मचैतन्यरूपायाश्रितः शक्तिः वासनाबीजरूपिणी वासनारूपा तद्बीजाज्ञानरूपा च स्वापधर्मिणी निद्राहेतुश्च विद्यते । यत् अस्याश्चिच्छक्तेर्हेतोश्चितः स्वरूपस्य तत्प्रसिद्धमदर्शनं अप्रतीतिः सा आवरणशक्तिरविद्येत्युच्यते । यत्तदविद्येति पाठे तद्दर्शनकारणमविद्येत्युद्देश्यगतलिङ्गोपादानान्नपुंसकत्वम् ॥ ४१ ॥ अविद्याया इति ॥ अविद्याया उक्तलक्षणायाः गुणत्रयात्मकत्वाद्गुणानां च प्रत्येकं त्रिविधत्वान्नवधा विभक्तायाः प्रधानभूतो यो भागः शुद्धसत्त्वरूपः तेन विद्याशब्दवाच्येन भागेन इतरमविद्याभागं तावद्दहेत् । यावद्भागद्वयं विद्याविद्यारूपं मिथो-घर्षात् परस्पराभिभवाद्दृढं सम्यक् शाम्येत् विद्यया अविद्यानिवर्त्यमाना विद्यामपि निवर्तयति अन्त्यशब्देनोपान्त्यशब्द इवेति भावः ॥ ४२ ॥ एतावदिति ॥ इदं जगद्ब्रह्म न ब्रह्मात्मकं न भवति किं तर्हि वियदादिरूपमेवेति यो निश्चयः एतावदेवाविद्यात्वं अविद्याव्यापारः

निश्चयो यो हरादीनां हृदि तिष्ठति निर्मलः ।
ऋषीणां नारदादीनां स ते भवतु राघव ॥ ४४ ॥

राम उवाच ॥

येनैते भगवन्धीरा निश्चयेन महाधियः ।
विशोकाः संस्थितास्तन्मे ब्रह्मन्प्रब्रूहि तत्त्वतः ॥ ४५ ॥

वसिष्ठ उवाच ॥

यदिदं किंचिदाभोगि जगज्जालं प्रदृश्यते ।
तत्सर्वममलं ब्रह्म बृंहदेतद्व्यवस्थितम् ॥ ४६ ॥
ब्रह्म चिद्ब्रह्म भुवनं ब्रह्म भूतपरम्परा ।
ब्रह्माहं ब्रह्म मच्छत्रुर्ब्रह्म मन्मित्रबान्धवाः ॥ ४७ ॥
अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगत् ।
अन्धं भुवनमन्धस्य प्रकाशं तु सुचक्षुषः ॥ ४८ ॥

इदं ब्रह्मेति यो निश्चयः एष एव तस्या अविद्यायाः क्षय इति संक्षेपः ॥ ४३ ॥ प्रकृतमनुसरति—निश्चय इति ॥ हरादीनां देवतानां नारदादीनामृषीणां च हृदि निर्मलो यो निश्चयो वर्तते स निश्चयस्ते भवतु । त्वमपि तमेव जीवन्मुक्तमार्गमवलम्ब्वस्वेत्यर्थः ॥ ४४ ॥ येनेति ॥ एते हरादयो येन निश्चयेन विशोका जीवन्मुक्ताः संस्थिताः तं निश्चयं तत्त्वतो मे ब्रूहि ॥ ४५ ॥ यदिति ॥ प्रतीयमानं दृश्यमखिलं ब्रह्मैवेति हरादीनां निश्चय इत्यर्थः ॥ ४६ ॥ एतदेव प्रपञ्चयति—ब्रह्मेति ॥ प्रकाशिका चित् । प्रकाश्यं च चेतनाचेतनात्मकं ब्रह्मेत्यर्थः । भूतपरम्परा वियदादिमहाभूतसमूहः । अहमिति मच्छत्रुरिति च हरादीनां निश्चयः स्वरूपाभिनयः ॥ ४७ ॥ नन्वेकमेवेदं जगत्तत्कथं कस्यचिद्दुःखाय कस्यचित्सुखाय च स्यादित्याशङ्क्य दृष्टान्तेनोपपादयन्नाह—अज्ञस्येति ॥ ज्ञानाज्ञानकृतोऽयं विशेष इत्यर्थः

सर्वमेव हि ब्रह्मेति भाविते ब्रह्म वै पुमान्।
पीतेऽमृतेऽमृतमयः को नाम न भवेत्किल ॥ ४९ ॥
आभासमात्रममलं सर्वभूतावबोधकम्।
सर्वत्रावस्थितं शान्तं चिद्ब्रह्मेत्यनुभूयते ॥ ५० ॥
असंस्तुताध्वगालोके मनस्यन्यत्र संस्थिते।
या प्रतीतिरनागस्का तच्चिद्ब्रह्मास्मि सर्वगः ॥ ५१ ॥
सर्वसंकल्पफलदं सर्वतेजःप्रकाशकम्।
सर्वोपादेयसीमान्तं चिदात्मानमुपास्महे ॥ ५२ ॥

॥ ४८ ॥ ज्ञानप्रकारमेव सदृष्टान्तमाह—सर्वमिति ॥ ब्रह्मैवेति भाविते निश्चिते ॥ ४९ ॥ आभासमात्रमिति ॥ आभासमात्रं विषयासंस्पृष्टज्ञानरूपं यद्वस्तु तच्चिद्ब्रह्मेति चिद्रूपं परं ब्रह्मेत्यनुभूयते। चिद्ग्रहणं शब्दब्रह्मणो निवृत्त्यर्थम् ॥ ५० ॥ एतदेवोदाहरणेन स्पष्टयन्नाह—असंस्तुतेति ॥ असंस्तुतस्य पूर्वमपरिचितस्याध्वगस्यालोके दर्शने सति मनसि चान्यत्र वस्त्वन्तरे स्वाभिमते संस्थिते सति अनागस्का निखिलविकल्पनिर्मुक्ता या प्रतीतिरस्ति तत्सर्वगं चिद्ब्रह्मास्मि। अत्रासंस्तुतेत्यनेन पूर्वानुभवजनितसंस्कारमहिम्ना विकल्पानां नोदय इत्युक्तम्। अध्वगेत्यनेन कालविलम्बाभावात् विकल्पोदयस्यावकाशो नास्तीति दर्शितम्। मनसोऽन्यत्रावस्थानकथनात्तात्कालिकविकल्पकल्पनापि न संभवतीति सूचितमित्यनुसंधेयम्। नच प्रतीतिरेव नोदेतीति वक्तुं बाह्येन्द्रियप्रनाडिकया बहिर्मुखायाः संविदः प्रकाशकत्वाव्यभिचारात्। अन्यथा निर्विकल्पकाभावे तन्मूलस्य सविकल्पस्याप्यनुदयप्रसङ्गात् कालान्तरे किमत्र कश्चिदागत इति पृष्टस्य तद्विषयस्मरणसंभवाच्च। तस्मान्निर्विकल्पतया विषयदोषनिर्मुक्ता निर्मला प्रतीतिरस्तीत्यभ्युपगन्तव्यम् ॥५१॥ सर्वेति ॥

प्रशान्तसर्वसंकल्पं विगताखिलकौतुकम् ।
विगताशेषसंरम्भं चिदात्मानमुपास्महे ॥ ५३ ॥
इति निश्चयवन्तस्ते महान्तो विगतैनसः ।
सत्याः सत्ये पदे शान्ते समे सुखमवस्थिताः ॥ ५४ ॥
इति पूर्णधियो धीराः समनीरागचेतसः ।
न नन्दन्ति न निन्दन्ति जीवितं मरणं तथा ॥ ५५ ॥

राम उवाच ॥

सम्यग्ज्ञानविलासेन वासनाविलयोदये ।
जीवन्मुक्तपदे ब्रह्मन्नूनं विश्रान्तवानहम् ॥ ५६ ॥
प्राणस्पन्दनिरोधेन वासनाविलयोदये ।
जीवन्मुक्तपदे ब्रह्मन्वद विश्रम्यते कथम् ॥ ५७ ॥

सर्वेषां संकल्पानां फलदं जगत्स्वामित्वात्तादृशं चिदात्मानमुपास्महे ॥ ५२ ॥ ५३ ॥ इतीति ॥ इति निश्चयवन्तः पूर्वोक्तप्रकारनिश्चययुक्ताः अतएव विगतैनसः निष्पापाः सत्याः सति सद्रूपे ब्रह्मणि साधवः ते नारदादयो महान्तः समे एकरूपे शान्ते निर्विकारे सत्ये अबाध्यस्वरूपे परे ब्रह्मणि सुखं यथा तथा अवस्थिताः । सत्यासत्य इति पाठे दृग्रूपत्वात् सत्ये दृश्यरूपत्वात् असत्य इति व्याख्येयम् ॥ ५४ ॥ इतीति ॥ इति अनेन प्रकारेण पूर्णधियः परिपूर्णबुद्धयः ब्रह्मनिष्ठत्वात् । अतएव समं नीरागं च चेतो येषां ते धीरा जीवितं न नन्दन्ति मरणं च न निन्दन्ति आत्मारामत्वात् ॥ ५५ ॥ सम्यगिति ॥ सम्यग्ज्ञानस्य विलासेन महिम्ना प्राणनिरोधेन वा कथं केन प्रकारेण वासनाविलये सति जीवन्मुक्तौ विश्रम्यते ॥ ५६ ॥ ५७ ॥

वसिष्ठ उवाच ॥

संसारोत्तरणे युक्तिर्योगशब्देन कथ्यते ।
आत्मज्ञानप्रकारोऽस्य प्राणानां संयमस्तथा ॥ ५८ ॥
प्रकारौ द्वावपि प्रोक्तौ योगशब्देन यद्यपि ।
तथापि रूढिमायातः प्राणयुक्तावसौ भृशम् ॥ ५९ ॥
असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ।
प्रकारौ द्वौ ततो देवो जगाद परमः शिवः ॥ ६० ॥
तत्प्रोक्तं भवते ज्ञानं योगक्रममथो शृणु ।
अत्र ते कथयिष्यामि वृत्तान्तं परमाद्भुतम् ॥ ६१ ॥
अहं कदाचिदास्थाने स्वर्गेऽतिष्ठं शतक्रतोः ।
श्रुतवान्नारदादिभ्यः कथास्ताश्चिरजीविनाम् ॥ ६२ ॥
कथाप्रसङ्गे कस्मिंश्चिदथ तत्राभ्युवाच ह ।
शातातपो नाम मुनिः प्रस्तावे चिरजीविनाम् ॥ ६३ ॥
मेरोरीशानकोणस्थे पद्मरागमयोद्भिदि ।
अस्ति कल्पतरुः श्रीमान् शृङ्गे सर्वमनोरमे ॥ ६४ ॥

संसारेति ॥ संसारस्योत्तरणे या युक्तिः उपायः स एव योगः स च आत्मज्ञानं प्राणनिरोधनमिति द्विविधः ॥ ५८ ॥ प्रकाराविति ॥ प्रकारद्वयसाधारणोऽपि योगशब्दः प्राणनिरोधे भृशं रूढ इत्यर्थः ॥ ५९ ॥ ६० ॥ तदिति अर्धवाक्यम् ॥ तत्संसारोत्तरणसाधनं ज्ञानं भवते पूर्वमेव प्रोक्तम् । अतः परं योगक्रमं प्राणनिरोधस्योपायभावं शृणु ॥ ६१ ॥ ६२ ॥ ६३ ॥ मेरोरिति ॥ पद्मरागमयोद्भिदि पद्मरागमणिमया उद्भिदः तरुगुल्मादयो यस्मिंस्तस्मिन् मेरोः शृङ्गे कल्पतरुरस्तीति संवन्धः । पद्मरागमये दिवीति पाठे पद्मरागमये मेरोः

तस्य कल्पतरोर्मूर्ध्नि दक्षिणे स्कन्धकोटरे ।
कलधौतलताप्रोते विद्यते विमलाशयः ॥ ६५ ॥
तस्मिन्निवसति श्रीमान्भुशुण्डो नाम वायसः ।
वीतरागो बृहत्कोशो ब्रह्मेव निजपञ्जरे ॥ ६६ ॥
स यथा जगतां कोशे जीवतीह सुराश्चिरम् ।
चिरंजीवी तथा स्वर्गे न भूतो न भविष्यति ॥ ६७ ॥
स दीर्घायुः स नीरोगः स श्रीमान्स महामतिः ।
स विश्रान्तमतिः शान्तः स कान्तः कालकोविदः ॥ ६८ ॥
इति तेन भुशुण्डोऽसौ भूयः पृष्टेन वर्णितः ।
यथा च देवदेवानां सभायां सत्यमुक्तवान् ॥ ६९ ॥
कथावसरसंशान्तावथ याते सुरव्रजे ।
भुशुण्डं विहगं द्रष्टुमहं यातः कुतूहलात् ॥ ७० ॥
भुशुण्डः संस्थितो यत्र मेरोः शृङ्गोत्तमोत्तमे ।
कल्पद्रुमस्थमद्राक्षं शाखाचक्रमिव स्थितम् ॥ ७१ ॥
तस्य कच्छेषु कुञ्जेषु लतापत्रेषु पर्वसु ।
पुष्पेष्वालयसंलीनान्विहगान्दृष्टवानहम् ॥ ७२ ॥

शृङ्गे या द्यौः स्वर्गस्तत्र कल्पतरुरस्तीति योजना । 'एकविंशा अमी स्वर्गा निविष्टा मेरुमूर्धनी'ति स्वर्गाणां बाहुल्यश्रवणात् ॥ ६४ ॥ ६५ ॥ तस्मिन्निति ॥ तस्मिन् विहगालये भुशुण्डो नाम भुवनेषु सर्वेष्वपि सुखं डयते विहरतीति भुशुण्ड इति प्रसिद्धः ॥ ६६ ॥ ६७ ॥ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ तस्येति ॥ कच्छाः जलप्रायाः कोटरप्रदेशाः । कुञ्जाः लतादिभिः पिहितप्रदेशाः । लताः शाखाः । पत्राणि पलाशानि । पर्वाणि ग्रन्थयस्तेष्वालयान्विधाय तत्र संलीनान्विहगान् दृष्टवान् । भुशुण्डान्वेषणार्थमित्यर्थः ॥ ७२ ॥

निशानाथकलाखण्डमृणालशकलैधितान् ।
विरिञ्चिरथ हंसानां पोतकान्सामगायिनः ॥ ७३ ॥
उद्गीर्णमन्त्रनिचयान्स्वाहाकारनिभस्वनान् ।
शुकान्काकान्कोकिलांश्च पक्षिणोऽन्याननेकशः ॥ ७४ ॥
गौरीकवरबर्हौघान्कौमारान्वरबर्हिणः ।
स्कन्दोपन्यस्तनिःशेषशैवविज्ञानकोविदान् ॥ ७५ ॥
तत्र पश्याम्यहं यावदेकान्ते स्कन्धकोटरे ।
अपरिक्षुभिताकाराः सभायां वायसाः स्थिताः ॥ ७६ ॥
तेषां मध्ये स्थितः श्रीमान्भुशुण्डः प्रोन्नताकृतिः ।
परिपूर्णमना मौनी समः सर्वाङ्गसुन्दरः ॥ ७७ ॥
प्राणस्पन्दावधानेन नित्यमन्तर्मुखः सुखी ।
प्रसन्नगम्भीरमनाः पेशलः स्निग्धवाक्सुधीः ॥ ७८ ॥
अथ तस्याहमपतं दीप्यमानवपुः पुरः ।
चुक्षोभ वायसं स्थानं नीलोत्पलसरः क्षणम् ॥ ७९ ॥
अशङ्कितमपि प्राप्तं ददर्श मामनन्तरम् ।
भुशुण्डस्तु वसिष्ठोऽयं प्राप्त इत्यवबुद्धवान् ॥ ८० ॥
पत्रपुञ्जात्समुत्तस्थौ मेघशाव इवाचलात् ।

निशानाथेति चतुर्भिः श्लोकैर्वाक्यम् ॥ विरिञ्चिरथ हंसपोतकादीन् पक्षिणो यावत्पश्यामि तावदेकत्र स्कन्धकोटरे सभायां वायसा अपरिक्षुभिताकाराः स्थिता इत्यन्वयः । अपरिक्षुभितत्वं च गुरुसंनिधौ चापलानौचित्यात् अन्तर्मुखत्वाद्वेति वेदितव्यम् । हंसादीनां सामगायनमन्त्रोच्चारणशैवागमविज्ञानादिकं ब्रह्मलोकादौ महर्षिभिः सामगानादौ सहवासादिति द्रष्टव्यम् ॥ ७३ ॥ ७४ ॥ ७५ ॥

हे मुने स्वागतमिति प्रोवाच मधुराक्षरम् ।
मामुवाच महातेजाः सौहार्दान्मधुराक्षरम् ॥ ८१ ॥
संकल्पमात्रजाताभ्यां कराभ्यां कुसुमाञ्जलिम् ।
मह्यमाशु तदैवादान्मेघो हैममिवोत्करम् ॥ ८२ ॥
इदमासनमित्युक्त्वा नवं कल्पतरुच्छदम् ।
उपानिन्ये महाबुद्धिः स्वयमेव खगाधिपः ॥ ८३ ॥
समन्तात्खगवृन्देषु दर्शनोन्मुखदृष्टिषु ।
तस्मिन्कल्पलतापुञ्जे ह्युपविष्टोऽहमासने ॥ ८४ ॥
अर्घ्यपाद्यादि संपाद्य भुशुण्डस्तुष्टमानसः ।
मामुवाच महातेजाः सौहार्दमधुराक्षरम् ॥ ८५ ॥

भुशुण्ड उवाच ॥

अहो भगवतास्माकं प्रसादो दर्शितश्चिरात् ।
दर्शनामृतसेकेन यत्सिक्ताः सद्रुमा वयम् ॥ ८६ ॥
किमर्थमद्यागमनं क्लेशेनात्मा कदर्थितः ।
वचनश्रवणोत्कानामाज्ञां नो दातुमर्हसि ॥ ८७ ॥
त्वत्पाददर्शनादेव सर्वं ज्ञातं मया मुने ।
चिरजीवितचर्चाभिर्वयं वः स्मृतिमागताः ॥ ८८ ॥
ज्ञातत्वदागमोऽप्येवं यत्त्वां पृच्छाम्यहं मुने ।
भवद्वाक्यामृतास्वादवाञ्छैव मयि जृम्भते ॥ ८९ ॥

॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ संकल्पेति ॥ सत्यसंकल्पतया संकल्पमात्रेण करौ प्रादुर्भूतावित्यर्थः । हैममुत्करमिव सौवर्णं पुष्पप्रकरमिव ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ज्ञातेति ज्ञातत्वदागमोऽपि अवगतत्व-

इत्युक्तवानसौ पक्षी भुशुण्डश्चिरजीवितः ।
त्रिकालामलसंवेदी तत्र प्रोक्तमिदं मया ॥ ९० ॥
विहंगम महाराज सत्यमेतत्त्वयोच्यते ।
द्रष्टुमभ्यागतोऽस्म्यद्य त्वामेव चिरजीविनम् ॥ ९१ ॥
तदेवं संशयं छिन्धि भगवन्मम तत्त्वतः ।
कस्मिन्कुले भवाञ्जातो ज्ञातज्ञेयः कथं भवान् ॥ ९२ ॥
कियदायुश्च ते साधो वृत्तं स्मरसि किंच वा ।
केनायं वा निवासस्ते निर्दिष्टो दीर्घदर्शिना ॥ ९३ ॥
अथ राम भुशुण्डोऽसौ न प्रहृष्टो न वक्रधीः ।
यत्पृच्छसि मुने सर्वं शृणु तत्कथयाम्यहम् ॥ ९४ ॥
भवादृशामिमामाज्ञां को विलङ्घयितुं क्षमः ।
इत्युक्त्वा विहगाधीशः सर्वं कथितवानिदम् ॥ ९५ ॥

भुशुण्ड उवाच ॥

अस्त्यस्मिञ्जगति श्रेष्ठः सर्वनाकनिवासिनाम् ।
देवदेवो हरो नाम देवदेवाभिवन्दितः ॥ ९६ ॥
शिरःखुराः खुरकराः करदन्ता मुखोदराः ।
ऋक्षोष्ट्राजेभवक्राश्च प्रमथा यस्य लालकाः ॥ ९७ ॥

दागमननिमित्तोऽपि । एवमनेन प्रकारेण त्वां यद्यस्मात्कारणात् पृच्छामि सेयं कारणभूता भवद्वाक्यामृतास्वादवाञ्छैव मयि जृम्भते । भवद्वाक्यश्रवणवाञ्छयैव भवदागमननिमित्तं जानन्नपि पृच्छामीत्यर्थः ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ॥ ९६ ॥ शिरःखुरा इति ॥ शिरसि खुराः शफानि येषां ते । खुरेषु करा येषां ते खुरकराः । खुराकाराः करा येषां ते वा । करदन्ताः करस्था

यथा गणास्तथैवान्या परिवारा हि मातरः ।
नृत्यन्ति मातरस्तस्य पुरो भूतगणा नताः ॥ ९८ ॥
वसन्ति गिरिकूटेषु व्योम्नि लोकान्तरेषु च ।
अवटेषु श्मशानेषु शरीरेषु च देहिनाम् ॥ ९९ ॥
जया च विजया चैव जयन्ती चापराजिता ।
सिद्धा रक्ताऽलम्बुषा च उत्पला चेति देवताः ॥ १०० ॥
सर्वासामेव मातॄणामष्टावेतास्तु नायिकाः ।
आसामनुगतास्त्वन्यास्तासामनुगताः पराः ॥ १ ॥
तासां मध्ये महार्हाणां मातॄणां मुनिनायक ।
अलम्बुषेति विख्याता माता मानद विद्यते ॥ २ ॥
वज्रास्थितुण्डश्चण्डाख्य इन्द्रनीलाचलोपमः ।
तस्यास्तु वाहनः काको वैष्णव्या गरुडो यथा ॥ ३ ॥
इत्यष्टैश्वर्ययुक्तास्ता मातरो रौद्रचेष्टिताः ।
कदाचिन्मिलिता व्योम्नि सर्वाः केनापि हेतुना ॥ ४ ॥
उत्सवं परमं चक्रुः परमार्थप्रकाशकम् ।
जहसुर्ननृतुश्चैव पपुरुच्चैर्जगुस्तथा ॥ ५ ॥

दन्ता येषां ते च । मुखोदराः मुखान्युदरेषु येषां ते च । ऋक्षोष्ट्राजेभवक्त्राश्च ऋक्षाः भल्लूकाः उष्ट्राः क्रमेलकाः अजाः छागाः इभा गजाः तेषां वक्त्राणीव वक्त्राणि येषां ते तादृशाश्च । नानारूपाः प्रमथा यस्य देवस्य लालकाः क्रीडाहेतवः ॥ ९७ ॥ ॥ ९८ ॥ ९९ ॥ १०० ॥ १ ॥ २ ॥ वज्रेति ॥ वज्रास्थितुण्डः वज्रं वज्रवत्कठिनं अस्थितुण्डं अस्थिमयं मुखं यस्य सः । चण्डाख्यः चण्ड इत्याख्या यस्य तादृशः काकः तस्या अलम्बुषाया वाहनमस्ति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

इत्युत्सवे वर्तमाने तासां वाहास्तथोत्तमाः ।
तथैव मत्ता जहसुर्ननृतुः पपुरासवम् ॥ ६ ॥
तत्रैकत्रासवोन्मत्ताः क्वचिन्ननृतुरम्बरे ।
रथहंस्यः स्थिता ब्राह्म्यः काकश्चालम्बुषारथः ॥ ७ ॥
संजातरतयस्तत्र सर्वा हंस्यो मदाकुलाः ।
रेमिरे सह काकेन चण्डकेनाथ तास्तदा ॥ ८ ॥
अथ ता गर्भधारिण्यो बभूवुरतितोषिताः ।
देव्यश्च कृतनृत्यास्ताः प्रशान्तमदतां ययुः ॥ ९ ॥
ततो देव्यो हरश्चैव परिवारसमन्विताः ।
सर्वाः संतुष्टमनसः स्वां स्वामुपययुर्दिशम् ॥ ११० ॥
अन्तर्वत्न्यो बभूवुस्ता ब्राह्म्यो हंस्यो मुनीश्वर ।
वृत्तान्तं कथयामासुर्ब्राह्म्या देव्या यथास्थितम् ॥ ११ ॥
हे वत्स्यः सांप्रतं वत्सवत्यो मे रथकर्मणि ।
न समर्था भवन्त्यो हि स्वैरं चरत सांप्रतम् ॥ १२ ॥
इति गर्भालसा हंसीरुक्त्वा देवी दयापरा ।
निर्विकल्पसमाधाने ब्राह्मी तस्थौ यथासुखम् ॥ १३ ॥
हंस्योऽपि पक्वगर्भास्ताः सुवते स्म यथाक्रमम् ।
वैरञ्चे सरसि स्फारे तनयानेकविंशतिः ॥ १४ ॥
एवं ताभ्यस्तु हंसीभ्यो जाता वयमिमे मुने ।
भ्रातरश्चण्डतनया वायसा एकविंशतिः ॥ १५ ॥
मातृभिः सह हंसीभिर्ब्राह्मी भगवती ततः ।
चिरमाराधितास्माभिः समाधिविरता सती ॥ १६ ॥

॥ ७ ॥ ८ ॥ ९ ॥ ११० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

प्रसादपरया काले भगवत्या ततः स्वयम् ।
तथैवानुगृहीताः स्मो यथा मुक्ता वयं स्थिताः ॥ १७ ॥
संतृप्तमनसः शान्तास्त्वेकान्ते ध्यानसंस्थितौ ।
तिष्ठाम इति निश्चित्य पितुः पार्श्वे वयं गताः ॥ १८ ॥
वन्दित्वा पितरं तत्र नत्वा देवीमलम्बुषाम् ।
तया दृष्टाः प्रसादेन प्रोक्तवन्तस्तदा वयम् ॥ १९ ॥
तात ज्ञातमलं ज्ञेयं ब्राह्म्या देव्याः प्रसादतः ।
किंत्वेकान्तस्थितेः स्थानमभिवाञ्छाम उत्तमम् ॥ १२० ॥
तेनायं सर्वबाधानामगम्यः कल्पपादपः ।
कथितं स्थानमस्माकं ज्ञानिना सर्वदर्शिना ॥ २१ ॥
ततः कृतनमस्कारास्तस्माद्देशाद्विनिर्गताः ।
इमं कल्पतरुं प्राप्य तिष्ठामो विगतज्वराः ॥ २२ ॥
अद्य मे फलितं पुण्यैश्चिरकालोपसंभृतैः ।
निर्विघ्नमेव पश्यामि यद्भवन्तं मुनीश्वरम् ॥ २३ ॥
रसायनमयी शान्ता परमानन्ददायिनी ।
नानन्दयति कं नाम साधुसंगतिचन्द्रिका ॥ २४ ॥
नातः परतरं किंचिन्मन्ये कुशलमात्मनः ।
सन्तो यदनुगम्यन्ते संत्यक्तसकलैषणाः ॥ २५ ॥
अधिगतपरमात्मनोऽपि मन्ये
भवदवलोकनशान्तदुष्कृतस्य ।

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ १२० ॥ २१ ॥ २२ ॥ ॥ २३ ॥ रसायनेति ॥ रसायनमयी रागादिदोषनिवर्तकत्वात् । शान्ता तापत्रयापाकरणात् । परमानन्ददायिनी ज्ञानोपदेशहेतुत्वात् । इत्थंभूता सा साधूनां संगतिरूपा चन्द्रिका कं नाम नान-

मम सफलमिहाद्य जन्म साधो
सकलभयापहरो हि साधुसङ्गः ॥ २६ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वार्घ्यं च पाद्यं च भूयो दत्तवति स्वयम् ।
भुशुण्डविहगे तस्मिन्निदं रामाहमुक्तवान् ॥ २७ ॥
भ्रातरस्ते विहङ्गेश तादृक्त्वा महाधियः ।
इह कस्मान्न दृश्यन्ते त्वमेवैको हि दृश्यसे ॥ २८ ॥

भुशुण्ड उवाच ॥

तिष्ठतामिह नः कालो भूयानतिगतो मुने ।
युगानां पङ्क्तयः क्षीणाः कल्पानां च महामते ॥ २९ ॥
एतावता च कालेन सर्व एव ममानुजाः ।
तनूस्तृणमिव त्यक्त्वा शिवे परिणताः पदे ॥ १३० ॥
दीर्घायुषो महान्तोऽपि सन्तोऽपि बलिनोऽपि वा ।
सर्व एव निगीर्यन्ते कालेनाकलितात्मना ॥ ३१ ॥

अहमुवाच ॥

कल्पान्तेषु महाबुद्धे वहत्स्वग्न्यम्बुवायुषु ।
प्रतपत्सु तथार्केषु कथं तिष्ठसि विज्वरः ॥ ३२ ॥

भुशुण्ड उवाच ॥

यदा शाम्यति कल्पान्ते व्यवहारो जगद्गतः ।
कृतघ्न इव मन्मित्रं तदा नीडं त्यजाम्यहम् ॥ ३३ ॥
आकाश एव तिष्ठामि विगताखिलकल्पनम् ।
स्तब्धप्रकृतिसर्वाङ्गो मनो निर्वासनं यथा ॥ ३४ ॥

न्दयति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ १३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥ आकाश इति ॥ स्तब्धप्रकृतिसर्वाङ्गः

प्रतपन्ति यदादित्या व्योमाङ्गणगतो ह्यहम् ।
वारुणीं धारणां बद्ध्वा तदा तिष्ठामि धीरधीः ॥ ३५ ॥
यदा शकलिताद्रीन्द्रा वान्ति प्रलयवायवः ।
पार्वतीं धारणां बध्वा खे तिष्ठाम्यचलं तदा ॥ ३६ ॥
जगद्गलति मेर्वादि यात्येकार्णवतां यदा ।
वायवीं धारणां बध्वा संप्लवेऽचलधीस्तदा ॥ ३७ ॥

स्तब्धा निश्चला प्रकृतिः शरीरं सर्वाङ्गानि सर्वावयवाश्च यस्य तादृशः सन् निर्वासनं मन इव वासनाविहीनं जीवन्मुक्तचित्तमिव विगताखिलकल्पनं विगता अखिलाः कल्पना यस्मिन्कर्मणि तत्सर्वकल्पनारहितं यथा तथा तिष्ठामि । दग्धप्रकृतिसर्वाङ्गमिति पाठे ज्ञानाग्निना दग्धा प्रकृतिरविद्या सर्वाङ्गानि च कामसंकल्पविचिकित्सादीनि यस्येति मनोविशेषणं वेदितव्यम् ॥३४॥ प्रतपन्तीति ॥ यदा प्रलयसमये आदित्या द्वादशापि युगपदेवोदिताः प्रतपन्ति तदा व्योमाङ्गणे गतोऽहं वारुणीं वरुणसंबन्धिनीं धारणां भावनां च बध्वा धीरधीर्निश्चलबुद्धिस्तिष्ठामि । वरुणो यथा अपां मध्यमध्यासीनो बाह्यमातपसंतापं नावगच्छति तद्वद्भुशुण्डोऽहमपि वरुणभावनया तन्मयत्वमासाद्य तद्वदेव बाह्यं संतापं नानुभवामीत्यर्थः ॥ ३५ ॥ यदेति ॥ यदा प्रलयवायवः शकलिताद्रीन्द्रा वान्ति तदा पार्वतीं धारणां बध्वा आकाशे अचलं तिष्ठामि । भूमिष्ठानामेव पर्वतानां संहार्यत्वेन तत्रैव प्रलयवायुसंरम्भात् तत्संरम्भाविषये ब्रह्माण्डबहिराकाशे साधारणवायुसंक्षोभाभावाय पार्वतीं धारणामालम्ब्य सुखं तिष्ठामीत्यर्थः ॥ ३६ ॥ जगदिति ॥ एकार्णवसमयेऽपि वायुधारणायाः संप्लवे उपर्येव तरामि ॥ ३७ ॥

ब्रह्माण्डपारमासाद्य तत्त्वान्ते विमले पदे ।
सुषुप्तावस्थया तावत्तिष्ठाम्यचलरूपया ॥ ३८ ॥
यावत्पुनः कमलजः सृष्टिकर्मणि तिष्ठति ।
तत्र प्रविश्य ब्रह्माण्डं तिष्ठामि विहगालये ॥ ३९ ॥
मत्संकल्पवशेनैव कल्पे कल्पे पुनः पुनः ।
अस्मिन्नेव गिरेः शृङ्गे तरुरित्थं भवत्ययम् ॥ १४० ॥

वसिष्ठ उवाच ॥

यथा तिष्ठसि पक्षीन्द्र धारणाभिरखण्डितः ।
कल्पान्तेषु तथा कस्मान्नान्ये तिष्ठन्ति योगिनः ॥ ४१ ॥

भुशुण्ड उवाच ॥

ब्रह्मन्नियतिरेषा हि दुर्लङ्घ्या पारमेश्वरी ।
मयेदृशेन वै भाव्यं भाव्यमन्यैश्च तादृशैः ॥ ४२ ॥
न शक्यते चालयितुमवश्यं भवितव्यता ।
यद्यथा तत्तथैतद्धि स्वभावस्यैष निश्चयः ॥ ४३ ॥

ब्रह्माण्डेति श्लोकद्वयं वाक्यम् ॥ प्रलये सति ब्रह्माण्डस्य पारं बहिर्भाग-मासाद्य तत्त्वान्ते ब्रह्माण्डावरणभूतानां भूम्यप्तेजोवाय्वाकाशाहं-कारमहत्प्रकृतिरूपाणां सप्तानां तत्त्वानामन्ते विमलेपदे सुषुप्ताव-स्थया तावत्तिष्ठामि । यावत्कमलजः पुनः सृष्टिकर्मणि तिष्ठति तदा पुनः सृष्टौ ब्रह्माण्डं प्रविश्य विहगालये तिष्ठामि ॥ ३८ ॥ ॥ ३९ ॥ १४० ॥ ४१ ॥ ब्रह्मन्निति ॥ नियतिर्नियमनात्मिका पारमेश्वरी शक्तिः ॥ ४२ ॥ नेति ॥ विचालयितुं विलङ्घयितुम् । भवितव्यता दैवगतिः । नियतिरिति ईश्वरवादे । भवितव्यतेति निरीश्वरवादे । स्वभावस्यैष निश्चय इति स्वभाववाद इति मत-

वसिष्ठ उवाच ॥

ज्ञानविज्ञानवान्वीरो योगयोग्यमनोगतिः ।
किं किं स्मरसि कल्याण चित्रमस्मिञ्जगत्त्रये ॥ ४४ ॥

भुशुण्ड उवाच ॥

बृहत्तरशिलावृक्षामजाततृणवीरुधम् ।
अशैलवनवृक्षौघां स्मरामीमां धरामधः ॥ ४५ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
भस्मभारभरापूर्णां संस्मरामि धरामधः ॥ ४६ ॥
चतुर्युगान्तमपरां नीरन्ध्रां वनपादपैः ।
चतुर्युगान्तमपरां नीरन्ध्रैरचलैर्वृताम् ॥ ४७ ॥
अनगस्त्यामिमामेकविन्ध्यपर्वततां गताम् ।
चतुर्युगान्तमपरां संस्मरामि जगत्कुटीम् ॥ ४८ ॥

भेदेनोक्तमुररीकृतमित्यनुसंधेयम् ॥ ४३ ॥ ज्ञानेति ॥ तत्र ज्ञानं मोक्षहेतुस्तत्त्वज्ञानं लौकिकनिखिलकलाशास्त्रादिविशेषज्ञानम् । चित्रमाश्चर्यम् ॥ ४४ ॥ बृहत्तरेति ॥ अधः अतीते कल्पान्ते ॥ ४५ ॥ दशवर्षेति ॥ शोषणदहनानन्तरं विलम्बितायामतिसृष्टावेकादशसहस्रवर्षाणि भस्मभारपरिपूर्णैव धरा स्थितेत्यर्थः ॥ ४६ ॥ चतुर्युगान्तमिति श्लोकद्वयं वाक्यम् ॥ अपरां कल्पान्तरगताम् जगत्कुटीं जगदाधारभूतां धरां चतुर्युगान्त एकस्मिंश्चतुर्युगे वनपादपैः नीरन्ध्रां संस्मरामि । अन्यस्मिंश्चतुर्युगे नीरन्ध्रैरचलैर्वृतां संस्मरामि । अन्यस्मिंश्चतुर्युगे अगस्त्येन महर्षिणा शून्यामतएव च नियामकाभावादेकविन्ध्यपर्वततां गतां विन्ध्येनैवैकेन व्याप्तां संस्मरामि॥४७॥४८॥

सुरापब्राह्मणं तात निषिद्धसुरशूद्रकम् ।
स्वैरवृत्तिसतीकं च कंचित्सर्गं स्मराम्यहम् ॥ ४९ ॥
जन्मेन्दुभास्करादीनामिन्द्रोपेन्द्रव्यवस्थितिम् ।
हिरण्याक्षापहरणं वाराहोद्धरणं क्षितेः ॥ १५० ॥
कल्पनं पार्थिवानां च वेदानयनमेव च ।
मन्दरोन्मूलनं चाब्धेरमृतार्थे च मन्थनम् ॥ ५१ ॥
अजातपक्षो गरुडः सागराणां समुद्भवः ।
इत्यादिका याः स्मृतयः स्वल्पातीतजगत्क्रमाः ॥ ५२ ॥
बालैरपि हि तास्तात स्मर्यन्ते तासु को ग्रहः ॥ ५३ ॥
ततो जगति जातेषु भगवन्युष्मदादिषु ।
भरद्वाजपुलस्त्यात्रिनारदेन्द्रमरीचिषु ॥ ५४ ॥

सुरापेति ॥ सुरापा ब्राह्मणा यस्मिन् । निषिद्धसुरावर्जितसुरापानाः शूद्रा यस्मिन् । स्वैरवृत्तयः स्वेच्छाचारिण्यः सत्यः कुलाङ्गना यस्मिंस्तादृशं कंचित्सर्गं सृष्टिं स्मरामि ॥ ४९ ॥ जन्मेति श्लोकत्रयं वाक्यम् ॥ इन्दुभास्करादीनां जन्म उत्पत्तिम् इन्द्रोपेन्द्रव्यवस्थितिं इन्द्रस्योपेन्द्रस्य च मर्यादाम् । क्षितेर्हिरण्याक्षेणापहरणं वराहेण चोद्धरणम् ॥ १५० ॥ पार्थिवानां मन्वन्तराधिपतीनां कल्पनम् । वेदानां सोमकेन सुरारिणापहृतानां मत्स्यावतारेणानयनम् । मन्दरस्य मन्थानत्वपरिकल्पनाय सुरासुरैरुन्मूलनम् । अमृतार्थमब्धेर्मन्थनं च तृतीया स्मृतिरस्ति । उत्पादिका एवमादयः स्वल्पातीता जगत्क्रमा यासु ताः स्मृतयः स्मर्तव्यार्थाः ॥ ५१ ॥ ५२ ॥ बालैरपीति ॥ बालैरपि स्मर्यन्ते अतः कारणात्तासु स्मृतिषु को ग्रहः को वा आदरः । मां प्रत्येतादृशो वृत्तान्तो न प्रष्टव्य इति भावः ॥ ५३ ॥ तत इति

सनत्कुमारभृग्वीशस्कन्देभवदनादिषु ।
गौरीसरस्वतीलक्ष्मीगायत्र्याद्यासु भूरिषु ।
तथाद्यतनसर्गेषु स्मरणे गणनैव का ॥ ५५ ॥
मुने ते ब्रह्मपुत्रस्य जन्माष्टममिदं किल ।
संस्मराम्यष्टमे सर्गे तस्मिंस्त्वं मम संगतः ॥ ५६ ॥
कदाचिज्जायसे व्योम्नः कदाचिज्जायसे जलात् ।
कदाचिज्जायसे शैलात्कदाचिज्जायसेऽनलात् ॥ ५७ ॥
अन्तर्धानं गता धात्री वारपञ्चकमुद्धृता ।
मुने पञ्चसु सर्गेषु कूर्मेणैव पयोदधेः ॥ ५८ ॥
स्मरामि द्वादशं चेदममृताम्भोधिमन्थनम् ।
वारत्रयं हिरण्याक्षो नीतवान्वसुधामधः ॥ ५९ ॥
रेणुकाजन्मतां यातः षष्ठवारमयं हरिः ।
शतं कलियुगानां च हरेर्बुद्धदशाशतम् ॥ १६० ॥
त्रिंशत्त्रिपुरविक्षोभान्द्वौ दक्षाध्वरसंक्षयौ ।

सार्धश्लोकद्वयं वाक्यम् ॥ युष्मदादिषु भरद्वाजादिषु सनत्कुमारादिषु तथाद्यतनसर्गेषु च यत्स्मरणं तत्र स्मरणे का गणना को वा आदरः ॥ ५४ ॥ ५५ ॥ मुने इति ॥ ब्रह्मपुत्रस्य ब्रह्मणो मानसपुत्रस्य ते इदं जन्म अष्टमं किल । अष्टमे जन्मनि ब्रह्मपुत्रस्त्वं जात इत्यर्थः । तस्मिन्नष्टमे सर्गे जन्मनि ते मे च संगतिमिदानीं वर्तमानामपि पूर्वमेव स्मरामि ॥ ५६ ॥ जन्मान्तरेषु कुतो जात इत्यत्राह—कदाचिदिति ॥ कदाचित्कस्मिंश्चिन्मन्वन्तरे ॥ ५७ ॥ अन्तरिति ॥ अन्तर्धानं एकार्णवजले तिरोधानं कूर्मेणैव न तु वराहादिना ॥ ५८ ॥ ५९ ॥ १६० ॥ त्रिंशदिति ॥ केनचिदविनयेन

दश शक्रविघातांश्च चन्द्रमौलेः स्मराम्यहम् ।
बाणार्थमष्टौ संग्रामानध्वरप्रमथत्रयम् ॥ ६१ ॥
युगं प्रति धियां पुंसां न्यूनाधिकतया मुने ।
क्रियाङ्गपाठवैचित्र्ययुक्तान्वेदान्स्मराम्यहम् ॥ ६२ ॥
एकार्थानि समग्राणि बहुपाठानि चानघ ।
पुराणानि प्रवर्तन्ते निवृत्तानि युगं प्रति ॥ ६३ ॥
इतिहासं महाश्चर्यमन्यद्रामायणाभिधम् ।
ग्रन्थं लक्षप्रमाणं च ज्ञानशास्त्रं स्मराम्यहम् ॥ ६४ ॥

क्षुब्धाच्चन्द्रमौलेः सकाशाद्दशानां शक्राणां विघातान्पूर्वमनुभूतान् इदानीं स्मरामि ॥ ६१ ॥ युगमिति ॥ युगं प्रति युगापेक्षया पुंसां धियां पुरुषबुद्धीनां न्यूनतया अधिकतया च क्रियाङ्गपाठवैचित्र्ययुक्तान् । क्रिया वेदोक्तकर्मानुष्ठानम् । अङ्गानि व्याकरणादीनि । पाठोऽध्ययनप्रकारः । क्रियावैचित्र्येण पाठवैचित्र्येण युक्तान्वेदान्स्मरामि । द्वापरे कलौ च धर्मह्रासात्पुरुषबुद्धीनां ह्रासे सति तदनुसारेण वेदानां क्रियाङ्गपाठह्रासो भवति। त्रेतायां कृते च धर्मवृद्ध्या पुरुषबुद्धिप्रवृद्धौ सत्यां क्रियादिवृद्धिरिति वैचित्र्यमित्यर्थः ॥ ६२ ॥ एकार्थानीति ॥ निवृत्तानि संप्रदायाभावाद्युगान्ते निवृत्तानि युगं प्रति भारतादियुगापेक्षया पुरुषबुद्धिवैचित्र्यादेकार्थानि समानार्थान्येव बहुपाठानि पुराणानि पुनरपि प्रवर्तन्ते ॥ ६३ ॥ इतिहासमिति ॥ महाश्चर्यं महान्त्याश्चर्याणि यस्मिंस्तादृशं ज्ञानशास्त्रं मोक्षोपायनिरूपणपरं अतएव हेतोः अन्यद्रावणवधार्थात्प्रसिद्धाद्रामायणाद्भिन्नं रामायणाभिधं ग्रन्थं लक्षप्रमाणमिति संस्मरामि । अन्यदिति ज्ञान-

वाल्मीकिनाम्ना जीवेन तेनैवान्येन वा कृतम् ।
एतच्च द्वादशं वारं क्रियते विस्मृतिं गतम् ॥ ६५ ॥
द्वितीयमेतस्य समं भारतं नाम नामतः ।
स्मरामि प्राक्तनं व्यासकृतं जगति विस्मृतम् ॥ ६६ ॥
व्यासाभिधेन जीवेन तेनैवान्येन वा कृतम् ।
एतच्च सप्तमं वारं क्रियते विस्मृतिं गतम् ॥ ६७ ॥
राक्षसक्षतये विष्णोर्महीमवतरिष्यतः ।
अधुनैकादशं जन्म रामनाम्नो भविष्यति ॥ ६८ ॥
वसुदेवगृहे विष्णोर्भुवो भारनिवृत्तये ।
अधुना षोडशं जन्म भविष्यति मुनीश्वर ॥ ६९ ॥

शास्त्रापेक्षया नपुंसकनिर्देशः ॥ ६४ ॥ वाल्मीकीति ॥ तेनैव यः प्रसिद्धस्य रामायणस्य प्रणेता तेनैव । अन्येन तस्मादन्येन वाल्मीकिनाम्ना जीवेन कृतमेतच्च ज्ञानशास्त्ररूपं रामायणं युगान्ते विस्मृतिं गतमिति कृत्वा द्वादशं वारमधुना क्रियते। यः पूर्वं रावणवधार्थानां ज्ञानशास्त्ररूपाणां च रामायणानां प्रणेता स एव वाल्मीकिः संप्रदायप्रवृत्तये परमेश्वराज्ञया पुनःपुनः आविर्भवति। अन्यो वा कश्चिज्जीवः तपोमहिम्ना वाल्मीकिभावमासाद्य रामायणसंप्रदायं प्रवर्तयतीत्यर्थः ॥ ६५ ॥ द्वितीयमिति ॥ एतस्य रामायणस्य समं लक्षप्रमाणं भारतं नाम प्राक्तनं पूर्वकल्पातीतं व्यासकृतं द्वितीयमितिहासं जगति विस्मृतिं गतमपि स्मरामि । गतान्यपि भारतानि स्मरामीत्यर्थः ॥ ६६ ॥ व्यासेति ॥ पूर्ववद्व्याख्येयम् ॥ ६७ ॥ राक्षसेति ॥ रामावतारात्प्रागेव रामायणप्रवृत्तेरवतरिष्यतो भविष्यतीति च भावितया निर्देशः ॥ ६८ ॥ ६९ ॥ जगदिति ॥

जगन्मयी भ्रान्तिरियं न कदाचन विद्यते ।
विद्यते तु कदाचिच्च जलबुद्बुदवत्स्थिता ॥ १७० ॥
दृश्यभ्रान्तिरनिष्टेयमन्तस्था संविदात्मनः ।
जायते लीयते चाशु लोला वीचिरिवाम्भसि ॥ ७१ ॥
नेहाभूदुत्तरा पूर्वं ककुब्नायं च भूधरः ।
दिगुत्तराभूदन्यत्र पूर्वमेष महीधरः ॥ ७२ ॥
अर्कादिऋक्षसंचारान्मेर्वादिस्थानकादिशाम् ।
संस्थानमन्यथा तस्मिन्स्थिते यान्ति दिशोऽन्यथा ॥ ७३ ॥
कलौ कृतयुगाचारान्कृते कलियुगस्थितिम् ।
त्रेतायां द्वापरे चैव विपर्यासं स्मराम्यहम् ॥ ७४ ॥

वसिष्ठ उवाच ॥

अथासौ वायसः श्रेष्ठो जिज्ञासार्थमिदं मया ।

जगद्रूपा भ्रान्तिरियं कदाचित्कल्पान्ते नैव विद्यते । कदाचित्तु स्थितिकाले विद्यते । अतो जलबुद्बुदवत्स्थिता ॥ १७० ॥ दृश्येति ॥ इयमनिष्टा नियता अतिविचित्रत्वात् । अनष्टेति पाठे नाशरहिता पुनरपि प्रादुर्भावात् । दृश्यभ्रान्तिरात्मनोऽन्तस्था संविदेव । अतो वीचिरम्भसीव लोला जायते लीयते च ॥ ७१ ॥ नेहेति ॥ पूर्वमतीते कल्पान्तरे इहास्मिन्प्रदेशे उत्तरा ककुब्नाभूत् । अयं मेरुश्च नाभूत् । अन्यत्रोत्तरा दिगभूत् । अयं महीधरश्चान्यत्राभूत् ॥७२॥ अर्केति ॥ अर्कादिऋक्षसंचारात्सूर्यादिग्रहसंचारात् मेर्वादिस्थानकात् मेरुप्रभृतिमर्यादापर्वतसंस्थानाच्च दिशां संस्थानं संनिवेशस्तस्मिन्मेर्वादिसंस्थाने अन्यथा स्थिते सति दिशोऽन्यथा प्रकारान्तरं यान्ति । दिशामादित्यादिग्रहसंचारं मेर्वादिसंनिवेशं च अपेक्ष्यं कल्पितत्वात् तदन्यथाभावे दिशामपि अन्यथात्वं भवतीति भावः ॥ ७३ ॥

भूयः पृष्टो महाबाहो कल्पवृक्षलताग्रके ॥ ७५ ॥
चरतां जगतः कोशे व्यवहारवतामपि ।
कथं विहगराजेन्द्र देहं मृत्युर्न बाधते ॥ ७६ ॥

भुशुण्ड उवाच ॥

जानन्नपि हि सर्वज्ञ ब्रह्मजिज्ञासयैव माम् ।
पृच्छसि प्रभवो नित्यं भृत्यं वाचालयन्ति हि ॥ ७७ ॥
तथापि यत्पृच्छसि मां तत्ते प्रकटयाम्यहम् ।
आज्ञाचरणमेवाहुर्मुख्यमाराधनं सताम् ॥ ७८ ॥
दोषमुक्ताफलप्रोता वासनातन्तुसंततिः ।
हृदि न ग्रथिता यस्य मृत्युस्तं न जिघांसति ॥ ७९ ॥
विश्वासवृक्षक्रकचाः सर्वदेहलताघुणाः ।
आधयो यं न भिन्दन्ति मृत्युस्तं न जिघांसति ॥ १८० ॥
शरीरतरुसर्पौघाश्चिन्तार्पितशिरःफटाः ।
आशा यं न दहत्यन्तर्मृत्युस्तं न जिघांसति ॥ ८१ ॥

॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ तथापीति ॥ तथापि जानन्नपि यद्यस्मान्मां पृच्छसि तत्तस्मात्ते प्रकथयामि । सतां विदुषामाज्ञाचरणमेव आज्ञापितार्थानुष्ठानमेवाराधनमाहुः ॥ ७८ ॥ दोषेति ॥ दोषै रागद्वेषादिभिरेव मुक्ताफलैः प्रोता वासनारूपा तन्तुसंततिर्यस्य हृदि न ग्रथिता तं मृत्युर्न जिघांसति हन्तुं नेच्छति ॥ ७९ ॥ विश्वासेति ॥ विश्वासवृक्षक्रकचाः विश्वासानां पुत्रमित्रादिविषयाणां विश्रम्भाणामेव वृक्षाणां क्रकचाः विदारणसाधनानि क्रकचपत्राणि । सर्वदेहानामेव लतानां घुणा विलेखनपटवः कृमयः यत्कृते विलेखने घुणाक्षरमिति प्रसिद्धिः । आधयो मानसदुःखानि ॥ १८० ॥ शरीरेति ॥ शरीराणामेव तरूणां सर्पौघाः सर्पसमूहवत्तापहेतवः ।

रागद्वेषविषाघूर्णः स्वमनोबिलमन्दिरः ।
लोभव्यालो न भुङ्क्ते यं मृत्युस्तं न जिघांसति ॥ ८२ ॥
पीताशेषविवेकाम्बुः शरीराम्भोधिवाडवः ।
न निर्दहति यं कोपस्तं मृत्युर्न जिघांसति ॥ ८३ ॥
यन्त्रं तिलानां कठिनं राशिमुग्रमिवाकुलम् ।
यं पीडयति नानङ्गस्तं मृत्युर्न जिघांसति ॥ ८४ ॥
एकस्मिन्निर्मले येन पदे परमपावने ।
संश्रिता चित्तविश्रान्तिस्तं मृत्युर्न जिघांसति ॥ ८५ ॥
एते ब्रह्मन्महादोषाः संसारव्याधिहेतवः ।
मनागपि न लुम्पन्ति चित्तमेकसमाहितम् ॥ ८६ ॥
आधिव्याधिसमुत्थानि चलितानि महाभ्रमैः ।
न विलुम्पन्ति दुःखानि चित्तमेकसमाहितम् ॥ ८७ ॥

आशास्तृष्णाविशेषाश्चिन्तार्पितशिरःफटाः चिन्ताभिरर्पिताः शिरसि फटा यासां ताः । आशारूपाणां सर्पाणां चिन्ता एव शिरोभागस्थिताः फणा इत्यर्थः ॥ ८१ ॥ रागेति ॥ लोभव्यालः लोभरूपः सर्पः ॥८२॥ ॥ ८३ ॥ यन्त्रमिति ॥ कठिनं दार्वादिमयत्वाद्दृढं तिलानां यन्त्रं तिलेभ्यस्तैलनिष्पीडनार्थं यन्त्रं कर्तृ उग्रं उन्नतत्वाद्भीषणम् ॥८४॥ एकस्मिन्निति ॥ संश्रिता संप्राप्ता तं मृत्युर्न जिघांसति ॥८५॥ मृत्युः कं वा न बाधत इति पृष्टे यस्याशयदोषा न सन्ति तं न बाधत इत्युक्तम् । तत्राशयदोषनिवृत्तिः कथमित्याकाङ्क्षायामिदानीं तन्निवृत्त्युपायमाह—एत इति ॥ संसारव्याधिहेतवः एते पूर्वोक्ता महादोषा एकसमाहितं एकस्मिंस्तत्त्वे समाधियुक्तं चित्तं मनागपि न लुम्पन्ति ॥८६॥ आधीति ॥ महाभ्रमैः पुत्रकलत्रादिविषयव्यामोहैश्चलितानि प्रवृत्तानि ॥ ८७ ॥

अन्धीकृतहृदाकाशाः कामकोपविकारजाः ।
चिन्ता न परिहिंसन्ति चित्तमेकसमाहितम् ॥ ८८ ॥
ये दुरर्था दुरारम्भा दुर्गुणा दुरुदाहृताः ।
दुष्क्रमास्ते न कृन्तन्ति चित्तमेकसमाहितम् ॥ ८९ ॥
यदुदर्कहितं सत्यमनुपाधि गतभ्रमम् ।
दुरीहितदशोन्मुक्तं तत्परं कारयेन्मनः ॥ १९० ॥
यदमृष्टमशुद्धेन चिरवैधुर्यदायिना ।
अनेकत्वपिशाचेन तत्परं कारयेन्मनः ॥ ९१ ॥

॥ ८८ ॥ य इति ॥ अर्थाः सांसारिककार्यासिद्धिहेतवः संपदः । आरम्भास्तदर्थमुद्यमाः गुणास्तदनुकूलाः शौर्यादय उदाहृताः । त्यागभोगादिपरितृप्तैः पामरजनैरुदीरिताः कीर्तिता ये दुष्क्रमाः परचित्तरञ्जनक्रमा नीतिशास्त्रोक्तास्तेषां दुःखत्वं दुःखभूयिष्ठत्वं पर्यन्तविरसत्वानित्यत्वादिना पूर्वमेव वैराग्यप्रकरणे निरूपितम् । ते दुरर्थादयः एकसमाहितं चित्तं न हिंसन्ति किं तर्हि विक्षिप्तं चित्तमेव संसारिणमिति ॥ ८९ ॥ एकसमाहितमित्युक्तं कुत्र वा समाहितमित्याकाङ्क्षायां चित्तसमाधेर्विषयं दर्शयितुमाह—यदिति ॥ यद्वस्तु उदर्केहितं उत्तरकाले बन्धमोक्षहेतु गतभ्रमं निवृत्ताविद्यं अतश्च अनुपाध्युपाधिरहितं अतएव दुरीहितदशायाः संसारदशाया उन्मुक्तं अतश्च सत्यमबाध्यं तिष्ठति । मनः कर्म तत्परं तादृक्परब्रह्मनिष्ठं कारयेत् । तथासति न मनोदोषः । असति च दोषकालुष्ये न इत्युभयमिति पूर्वोक्तनिर्वाहः ॥ १९० ॥ यदिति ॥ चिरं वैधुर्यदायिना चिरकालं विरोधहेतुना अशुद्धेन अप्रामाणिकेन अनेकत्वपिशाचेन भेदभ्रमेण यद्वस्तु अस्पृष्टममृष्टम् । 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतेः । मनस्तादृग्ब्रह्मपरं कारयेत् । भेदस्य विरोधहेतुत्वं विशद-

आत्मचिन्ता समस्तानां दुःखानामन्तकारिणी ।
युष्मदादिषु सुप्रापा दुष्प्रापा चास्मदादिषु ॥ ९२ ॥
समस्तकलनातीतं परां कोटिमुपाश्रितम् ।
पदमासादयन्त्येतत्कथं सामान्यबुद्धयः ॥ ९३ ॥
आत्मचिन्तासमानानां विविधानां मुनीश्वर ।
आत्मचिन्तावयस्यानां मध्यादेकतमा मया ॥ ९४ ॥
सर्वदुःखक्षयकरी सर्वसौभाग्यवर्धिनी ।
कारणं जीवितस्येह प्राणचिन्ता समाश्रिता ॥ ९५ ॥
इत्युक्तवन्तं विहगं भुशुण्ड पुनरप्यहम् ।
जानन्नपीदमव्यग्रः पृष्टवान्क्रीडया मुनिः ॥ ९६ ॥

शातातप उवाच ॥

सर्वसंशयविच्छेदिन्नत्यन्तचिरजीवित ।
यथार्थं ब्रूहि मे साधो प्राणचिन्ता किमुच्यते ॥ ९७ ॥

भुशुण्ड उवाच ।

शृणु प्राणसमाधानं वक्ष्यमाणमिदं मया ।
यस्येदं भगवन्सर्वं देहगेहं मनोरमम् ॥ ९८ ॥

यितुमेव श्रुत्या भेदभावनायां भयं प्रतिपाद्यते । 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इति श्रुतिः ॥ ९१ ॥ आत्मेति ॥ अस्मदादिष्विति मन्दबुद्ध्युपलक्षणम् ॥ ९२ ॥ मन्दानां दुष्प्रापत्वमेवाह—समस्तेति ॥ सामान्यबुद्धयो मन्दबुद्धयः ॥ ९३ ॥ आत्मचिन्ताया दुष्प्रापत्वादेव तत्समाना प्राणचिन्ता मयाश्रितेत्याह श्लोकद्वयेन—आत्मेति । आत्मचिन्तासमानत्वादेवंविधानामुपासनान्तराणां तद्वयस्यात्वम् ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ शृण्विति सार्धश्लोकद्वयं वाक्यम् । प्राणसमाधानम् । प्राणगत्यनुसं-

तत्रोर्ध्वाधो द्विसंकेतौ प्रसृतावनिलौ मुने ।
देहस्य मध्ये हृत्पद्मं तत्रैतौ समवस्थितौ ॥ ९९ ॥
प्राणापानाविति ख्यातौ प्रकटौ तौ वरानिलौ ।
तयोरनुसरन्नित्यं मुने गतिरहं स्थितः ॥ २०० ॥
शीतोष्णवपुषोर्नित्यं नित्यमम्बरपान्थयोः ।
कलेवरमहायन्त्रवाहयोः श्रमहीनयोः ॥ १ ॥
हृदाकाशार्कशशिनोरग्नीषोमस्वरूपयोः ।
तयोर्भमानुसरतः प्राणापानाभिधानयोः ॥ २ ॥
गतिः शरीरमरुतोः सशरीरमरुद्धयोः ।
जाग्रत्स्वप्नसुषुप्तेषु सदैव समरूपयोः ।
सुषुप्तसंस्थितस्येव ब्रह्म वाञ्छन्ति वासनाः ॥ ३ ॥
सहस्रविनिकृत्ताङ्गाद्बिसतन्तुलवादपि ।
दुर्लक्ष्या विद्यमानापि गतिः सूक्ष्मतरानयोः ॥ ४ ॥
प्राणोऽयमनिशं ब्रह्मन्स्पन्दशक्तिः सदागतिः ।
सबाह्याभ्यन्तरे देहे प्राणोऽयमूर्ध्वगः स्थितः ॥ ५ ॥

धानमित्यर्थः ॥ ९८ ॥ ९९ ॥ २०० ॥ शीतेति श्लोकत्रयं वाक्यम् ॥ शीतोष्णवपुषोः शीतवपुरपानः । उष्णवपुः प्राणः । हृदाकाशार्कशशिनोः । प्राणोऽर्कः । अपानः शशी ॥ १ ॥ २ ॥ ३ ॥ सहस्रेति ॥ सहस्रविनिकृत्ताङ्गात् सहस्रं विनिकृत्तान्यङ्गानि यस्य तस्मात् । सहस्रधा छिन्नादित्यर्थः । बिसतन्तुलवादपि तयोः प्राणापानयोर्गतिः सूक्ष्मतरा दुर्लक्ष्या च ॥ ४ ॥ प्राण इति ॥ अयं प्राणः अनिशं स्पन्दशक्तिः स्पन्दरूपा चलनात्मिका शक्तिर्यस्य । सदा गतिर्यस्य तादृशस्तिष्ठति । अयं च प्राण ऊर्ध्वगः सन्सबाह्याभ्यन्तरे द्वादशाङ्गुलपर्यन्तं बहिर्निःसरणात् बाह्यनिःसरणात् बाह्यसहितं देहे यद-

अपानोऽप्यनिशं ब्रह्मन्स्पन्दशक्तिः सदागतिः ।
सबाह्याभ्यन्तरे देहे त्वपानोऽयमवाक्स्थितः ॥ ६ ॥
जाग्रतः स्वपतश्चैव प्राणायामोऽयमुत्तमः ।
प्रवर्तते योऽभिज्ञस्य तं तावच्छ्रेयसे शृणु ॥ ७ ॥
बाह्योन्मुखत्वं प्राणानां यद्धृदम्बुजकोटरात् ।
स्वरसेनास्तयत्नानामन्तस्थं रेचकं विदुः ॥ ८ ॥
द्वादशाङ्गुलपर्यन्तं बाह्यमाक्रमतां ततः ।
प्राणानामङ्गसंस्पर्शो यः स पूरक उच्यते ॥ ९ ॥
बाह्यात्परापतत्यन्तरपाने यत्नवर्जितः ।
योऽङ्गप्रपूरणः स्पर्शो विदुस्तमपि पूरकम् ॥ २१० ॥

भ्यन्तरं तत्र ऊर्ध्वगः स्थितः । पूर्वोत्तरार्धयोर्भिन्नत्वात्प्राणशब्दस्यापौनरुक्त्यम् ॥ ५ ॥ अपान इति ॥ अयमपानस्तु अवाक् अधोगमनस्वभावः स्थित इत्ययमेव विशेषः । अन्यत्तु प्राणवदेवेत्यर्थः ॥ ६ ॥ जाग्रत इति ॥ योऽयमुत्तमः प्राणायामोऽभिज्ञस्य प्राणापानगतिज्ञस्य जाग्रतः स्वपतश्चैव प्रवर्तते तं प्राणायामं तावच्छ्रेयसे शृणु ॥ ७ ॥ ८ ॥ द्वादशेति ॥ द्वादशाङ्गुलपर्यन्तं बाह्यप्रदेशमाक्रमतां प्राणानां प्राणवृत्तीनां ततो विस्तृतो योऽङ्गसंस्पर्शः प्राणावयवानां परस्परसंश्लेषः स पूरको बाह्यरूप उच्यते । शरीरापेक्षया बाह्यस्य द्वादशाङ्गुलपरिमितस्य प्रदेशस्य पूरणात् । स्वत इति पाठे स्वत एव बाह्यमाक्रमतामित्यन्वयः ॥ ९ ॥ बाह्यादिति ॥ अपाने वायौ बाह्यात्प्रदेशादन्तः परापतति सति शरीराभ्यन्तरं प्रविशति सति यत्नवर्जितः अयत्नसिद्धः अङ्गप्रपूरणः शरीरप्रपूरणो यः स्पर्शस्तमपि पूरकं विदुः । अन्तः पूरकं विदुरित्यर्थः । शरीरान्तःपूर-

अपानेऽस्तं गते प्राणो यावन्नाभ्युदितो हृदि ।
तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते ॥ ११ ॥
रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्थितः ।
मृदन्तरस्था निष्पन्नघटवद्या स्थितिर्बहिः ॥ १२ ॥
द्वादशाङ्गुलपर्यन्ते नासाग्रसमसंमुखे ।
व्योम्नि नित्यमपानस्य तं विदुः कुम्भकं बुधाः ॥ १३ ॥
बाह्योन्मुखस्य वायोर्या नासिकाग्रावधिर्गतिः ।
तं बाह्यपूरकं त्वाद्यं विदुर्योगविदो जनाः ॥ १४ ॥
नासाग्रादपि निर्गत्य द्वादशान्तावधिर्गतिः ।
या वायोस्तं विदुर्धीरा अपरं बाह्यपूरकम् ॥ १५ ॥
बहिरस्तं गते प्राणे यावन्नापान उद्गतः ।
तावत्पूर्णसमावस्थं बहिष्ठं कुम्भकं विदुः ॥ १६ ॥

णात् ॥ २१० ॥ अपान इति ॥ अपानवायावस्तं गते सति हृदि प्राणो यावन्नाभ्युदितः तावत्सा वायोर्निश्चला गतिः कुम्भकावस्थोच्यते या योगिभिरनुभूयते अयमवस्थाविशेषोऽन्तःकुम्भक इत्यर्थः शरीरस्यान्तरे च वायोः कुम्भितत्वात् ॥ ११ ॥ १२ ॥ १३ ॥ बाह्येति ॥ बाह्योन्मुखस्य प्राणवायोः या नासिकाग्रावधिर्गतिरस्ति तं गतिविशेषं आद्यं बाह्यपूरकं विदुः । अपरस्यापि बाह्यपूरकस्य वक्ष्यमाणत्वादाद्यव्यपदेशः । नासिकाग्रलक्षणबाह्यदेशस्य पूरणाद्बाह्यपूरकत्वम् ॥ १४ ॥ नासेति ॥ नासाग्रादपि निर्गत्य वायोर्या द्वादशान्तावधिर्गतिरस्ति तं गतिविशेषमपरं बाह्यपूरकं विदुः ॥ १५ ॥ बहिरिति ॥ प्राणे बहिरस्तं गते सति यावदपानो वायुरन्तराकर्षणशीलो नोद्गतः तावत्पूर्णसमावस्थं पूर्णकुम्भतुल्यमवस्थाविशेषं बहिष्ठं कुम्भकं विदुः शरीराद्बहिरेव वायोः कुम्भितत्वात् ॥ १६ ॥

अन्तर्मुखत्वं वायोर्यदपानोदयरूपकम् ।
तं बाह्यरेचकं विद्याच्चिन्त्यमानं विमुक्तिदम् ॥ १७ ॥
द्वादशान्तात्समुत्थाय रूपपीवरता परा ।
अपानस्य बहिष्ठं तमपरं पूरकं विदुः ॥ १८ ॥
बाह्यानाभ्यन्तरांश्चैव कुम्भकादीननारतम् ।
प्राणापानस्वभावांस्तान्बुध्वा भूयो न जायते ॥ १९ ॥
अष्टावेते महाबुद्धे रात्रिंदिवमनुस्मृताः ।
स्वभावा देहवायूनां कथिता मुक्तिदा मया ॥ २२० ॥
अव्यग्रमस्मिन्व्यापारे बाह्यं परिजहन्मनः ।
दिनैः कतिपयैरेव पदमाप्नोति केवलम् ॥ २१ ॥
एतदभ्यसतः पुंसो बहिर्विषयवृत्तिषु ।
न बध्नाति रतिं चेतः श्वदृतौ ब्राह्मणो यथा ॥ २२ ॥
एतां दृष्टिमवष्टभ्य ये स्थिताः स्थिरबुद्धयः ।
प्राप्तं प्राप्तव्यमखिलं तैरखिन्नास्त एव हि ॥ २३ ॥
तिष्ठता गच्छता नित्यं जाग्रता स्वपताथवा ।
एषा चेत्क्रियते दृष्टिस्तन्न बन्धनमाप्यते ॥ २४ ॥

अन्तरिति ॥ वायोरपानोदयरूपकं यदन्तर्मुखत्वं तं बाह्यरेचकं विद्यात् । बहिः कुम्भितस्य वायोः अन्तर्मुखतया रेचनात् ॥ १७ ॥ ॥ १८ ॥ १९ ॥ अष्टाविति ॥ बाह्याः पूरकाद्यास्त्रयः आन्तराश्च त्रयः अतिरिक्तौ तौ द्वौ बाह्यपूरकावित्यष्टविधत्वम् । तत्राद्यश्लोकद्वयेन स्थूलां प्राणापानगतिमाश्रित्य भेदद्वयमुक्तम् । अनन्तरश्लोकषट्केन सूक्ष्मां गतिमाश्रित्य षड्भेदा निरूपिता इति विवेकः ॥ २२० ॥ ॥ २१ ॥ एतदिति ॥ श्वदृतौ शुनकचर्मनिर्मितायां भस्त्रिकायाम्

प्राणस्याभ्युदयो ब्रह्मन्पद्मयन्त्राद्धृदि स्थितात् ।
द्वादशाङ्गुलपर्यन्ते प्राणोऽस्तं यात्ययं बहिः ॥ २५ ॥
अपानस्योदयो बाह्याद्द्वादशान्तान्महामुने ।
अस्तंगतिरथाम्भोजमध्ये हृदयसंस्थिते ॥ २६ ॥
अपानश्चन्द्रमा देहमाप्याययति बाह्यतः ।
प्राणः सूर्योऽग्निरथवा पचत्यन्तरिदं वपुः ॥ २७ ॥
अपानशशिनोऽन्तःस्था कला प्राणविवस्वता ।
यत्र ग्रस्ता तदासाद्य न भूयो जन्मभाङ्नरः ॥ २८ ॥
प्राणार्कस्य तथान्तःस्था यत्रापानसितांशुना ।

॥ २२ ॥ २३ ॥ २४ ॥ प्राणस्येति ॥ हृदि स्थितात्पद्मयन्त्रात् प्राणस्याभ्युदय उद्गमनं अयं प्राणो बहिर्द्वादशाङ्गुलपर्यन्ते अस्तं याति ॥ २५ ॥ अपानस्येति ॥ यत्र प्राणस्य लयः तस्माद्बाह्यद्वादशान्तात् अपानस्योदयः । यतश्च प्राणस्योदयः तत्र हृत्पद्मेऽपानस्य लय इत्यर्थः ॥ २६ ॥ अपान इति ॥ अपानश्चन्द्ररूपत्वाद्देहं द्वादशान्तररूपाद्बाह्यत आगत्योत्थापयति । आप्याययति पुष्णाति । प्राणस्तु सूर्याग्निरूपत्वादिदं वपुः पाकयुक्तं करोति ॥ २७ ॥ इत्थं प्राणापानगतेः प्राणायामरूपेणानुसंधानप्रकारमभिधायेदानीं प्राणगत्यनुसंधानमुखेनात्मानुसंधानप्रकारमाह—अपानेति ॥ अपानशशिनः अपानरूपस्य चन्द्रस्य अन्तःस्था शरीरान्तर्गता कला एकदेशः प्राणविवस्वता प्राणाख्येन सूर्येण यत्र यस्मिन्नात्मतत्त्वे ग्रस्ता यस्य आत्मनः प्रयत्नेन संगता तत्पदं तदात्मतत्त्वमासाद्यानुसंधाय भूयः पुनर्न शोच्यते ॥ २८ ॥ प्राणेति ॥ पूर्ववद्व्याख्येयम् । प्राणापानयोः परस्परोपरोधो यत्प्रयत्नवशाद्भवति तदेवात्मतत्त्वमनुसंधाय मुच्यत

ग्रस्ता तत्पदमासाद्य न भूयो जन्मभाङ्नरः ।
प्राणो गतागती कुर्वन्संधत्ते सूर्यचन्द्रताम् ॥ २९ ॥
प्राणभक्षोन्मुखेऽपाने प्राणे वाऽपानभक्षके ।
उभयोरन्तरालस्थं न भूयो जायते नरः ॥ २३० ॥
प्राणक्षयसमीपस्थ अपानोदयकोटिगः ।
अपानप्राणयोर्मध्यं चिदात्मानमुपास्महे ॥ ३१ ॥
अपानोऽस्तं गतो यत्र प्राणो नाभ्युदितः क्षणम् ।
कलाकलङ्करहितं तच्चित्तत्त्वमुपास्महे ॥ ३२ ॥
नापानोऽभ्युदितो यत्र प्राणश्चास्तमुपागतः ।
नासाग्रगगनावर्तं तच्चित्तत्त्वमुपास्महे ॥ ३३ ॥

इत्यर्थः । प्राणार्कस्य अन्तःस्था कलेति संबन्धः ॥ २९ ॥ प्राणेति ॥ इत्थमपाने प्राणभक्षोन्मुखे सति प्राणे अपानभक्षके सति यत्तत्त्वमुभयोः प्राणापानयोरन्तरालस्थं मध्यस्थं साक्षितया प्रवर्तते तत्पदं तदात्मतत्त्वमासाद्य नरो भूयो न जायत इत्यनुवृत्त्या संबन्धः ॥ २३० ॥ प्राणेति ॥ खलु चिद्रूप आत्मा प्राणक्षयसमीपस्थः प्राणस्य द्वादशान्तरे क्षये सति स्वयं समीपे तिष्ठति साक्षितया संनिधत्ते न तु स्वयं क्षीयते। अपानोदये च कोटिगः समीपगः साक्षी न तु स्वयमुदेति इत्थमपानप्राणयोर्मध्यं साक्षिणं चिदात्मानमुपास्महे अनुसंदध्महे ॥ ३१ ॥ एतदेव विवृणोति—अपान इति ॥ कलाकलङ्करहितं अविद्यासंबन्धरहितम् ॥ ३२ ॥ नापान इति ॥ यत्र चित्तत्त्वे प्राणोऽस्तमुपागतः अपानश्च नाभ्युदितः नासाग्रगगनावर्तं नासिकाया अग्रभागे यद्गगनं द्वादशान्तरूपं तत्रावर्तमानं प्राणापानप्रवर्तकतया गमनागमने कुर्वाणं तत्तादृशचित्तत्त्वमुपास्महे ॥ ३३ ॥

यदखिलकलनाकलङ्कहीनं परिकलितं च सदा कलागणेन ।
अनुभवविभवं पदं तदग्र्यं सकलसुरप्रणतं परं प्रपद्ये ॥ ३४ ॥
एषा हि चिति विश्रान्तिर्मया प्राणसमाधिना ।
क्रमेणानेन संप्राप्ता स्वयमात्मनि निर्मले ॥ ३५ ॥
न भूतं न भविष्यच्च चिन्तयामि कदाचन ।
दृष्टिमालम्ब्य तिष्ठामि वर्तमानामिहात्मना ॥ ३६ ॥
इदमद्य मया लब्धमिदं प्राप्स्यामि सुन्दरम् ।
इति चिन्ता न मे तेन चिरं जीवाम्यनामयः ॥ ३७ ॥
न स्तौमि न च निन्दामि क्वचित्किंचित्कदाचन ।
आत्मनोऽन्यस्य वा साधो तेन जीवाम्यनामयः ॥ ३८ ॥
न तुष्यति शुभप्राप्तौ नाशुभेष्वपि खिद्यते ।
मनो मम समं नित्यं तेन जीवाम्यनामयः ॥ ३९ ॥
परमं त्यागमालम्ब्य सर्वमेव सदैव हि ।
जीवितादि मया त्यक्तं तेन जीवाम्यनामयः ॥ २४० ॥

यदिति॥ तत्पदं अखिलकलनाकलङ्कहीनं परमात्मस्वरूपत्वात् । कलागणेन अविद्याव्यूहेन परिकलितं च परितो व्याप्तं च जीवरूपत्वात् । अनुभवविभवं स्वानुभवैकप्रमाणं तदग्र्यं परं पदं प्रपद्ये ॥ ३४ ॥ एषेति ॥ अनेन पूर्वोक्तेन क्रमेण एषा चिति चिद्रूपे आत्मनि विश्रान्तिर्मया प्राप्तेति संबन्धः ॥ ३५ ॥ नेति ॥ भूतं भविष्यच्च न चिन्तयामि वर्तमानामेव दृष्टिमालम्ब्यात्मना स्वरूपेणैव तिष्ठामि ॥ ३६ ॥ चिरंजीवित्वहेतुमात्मनः चित्तवृत्तिप्रकारमेव प्रपञ्चयितुमाह नवभिः श्लोकैः—इदमिति ॥ सुन्दरं अभिनवं वस्तु ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ परममिति ॥ परमं त्यागं त्यज्यतेऽनेनेति त्यागो

प्रशान्तचालनं वीतशोकमस्तसमीहितम् ।
मनो मम मुने शान्तं तेन जीवाम्यनामयः ॥ ४१ ॥
अयं बन्धुः परश्चायं ममायमयमन्यथा ।
इति ब्रह्मन्न जानामि तेनास्मि चिरजीवितः ॥ ४२ ॥
आशापाशविनुन्नायाश्चित्तवृत्तेः समाहितः ।
संस्पर्शं न ददाम्यन्तस्तेन जीवाम्यनामयः ॥ ४३ ॥
सुखितोऽस्मि सुखापन्ने दुःखितो दुःखिते जने ।
सर्वस्य प्रियमित्रं च तेन जीवाम्यनामयः ॥ ४४ ॥
आपद्यचलधीरोऽस्मि जगन्मित्रं च संपदि ।
भावाभावेषु नैवास्मि तेन जीवाम्यनामयः ॥ ४५ ॥
एतत्ते कथितं ब्रह्मन्यथास्मि चिरजीवितः ।
त्वदाज्ञामात्रसिद्ध्यर्थं धार्ष्ट्येन ज्ञानपारग ॥ ४६ ॥

वसिष्ठ उवाच ॥

अहो नु चित्रं भवता कथितं भूषणं श्रुतेः ।
आत्मोदन्तः प्रकथितः परं विस्मयकारणम् ॥ ४७ ॥

वैराग्यम् । प्रकृष्टवैराग्यमित्यर्थः ॥ २४० ॥ प्रशान्तेति ॥ तत्र चालनं नाम वर्तमानेष्टवस्तुदर्शनकौतूहलम् । तदुक्तम्—'कुतूहलं रम्यदृष्टौ चालनं परिकीर्तितम्' इति । शोको नष्टेष्टवस्तुविषयः । समीहितं भविष्यदिष्टवस्तुवाञ्छितम् ॥ ४१ ॥ ४२ ॥ आशेति ॥ आशापाशपरवशायाः चित्तवृत्तेरन्तः संस्पर्शं यन्न ददामि समाहितत्वात् तेन जीवामि ॥ ४३ ॥ ४४ ॥ आपदीति ॥ आपदि आपत्प्राप्तिसमये अचलवद्धीरोऽस्मि । संपत्प्राप्तौ जगतः सर्वस्य मित्रं च सर्वदा जगतः सर्वस्योपकारणात् भावाभावेषु नैवास्मि । एते भावाभावरूपा इति

तदस्तु तव कल्याणं प्रविशात्मगुहां शुभाम् ।
मध्याह्नसमयोऽयं मे व्रजामि सुरमन्दिरम् ॥ ४८ ॥

अनुव्रज्याकदर्थेन खगेन्द्रालमिति ब्रुवन् ।
विष्टरादहमुत्थाय नभः खगवदाप्लुतः ॥ ४९ ॥

व्योम्नि योजनमात्रे तु मदनुव्रज्ययोगतः ।
मया निवारितः कृच्छ्राद्दुस्त्यजा संगतिः सताम् ॥ २५० ॥

या ते कृतयुगस्यादौ पुनस्तेनास्मि संगतः ।
संगतोऽहं भुशुण्डेन मेरोः शृङ्गद्रुमेऽभवम् ॥ ५१ ॥

अथ राम कृते क्षीणे त्रेता संप्रति वर्तते ।
मध्ये त्रेतायुगस्यास्य जातस्त्वं रिपुसूदन ॥ ५२ ॥

पुनरप्यष्टमे वर्षे तत्रैवोपरि भूभृतः ।
मिलितोऽभूद्भुशुण्डो मे तथैवाजररूपवान् ॥ ५३ ॥

इति संकथितं चित्रं भुशुण्डोदन्तमुत्तमम् ।
श्रुत्वा विचार्य चैवान्तर्यद्युक्तं तत्समाचर ॥ २५४ ॥

इति श्रीवाल्मीकीये मोक्षोपाये निर्वाणप्रकरणे भुशुण्डोपाख्यानं नाम प्रथमः सर्गः ॥ १ ॥

---

पदार्थगतं भेदं नानुसंदधामीत्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ अन्विति ॥ अनुव्रज्याकदर्थेन अनुव्रजनक्लेशेन अलम् । अनुव्रज्यां मा कुर्वित्यर्थः ॥ ४९ ॥ २५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ इतीति ॥ यद्युक्तं तत्समाचर । पूर्वोक्ताख्यानेषु भुशुण्डवृत्तान्ते च यद्युक्तं प्रतीयते तत्समाचरेत्यर्थः ॥ २५४ ॥ इति श्रीवासिष्ठविवरणे निर्वाणप्रकरणे भुशुण्डोपाख्यानं नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः

वसिष्ठ उवाच ॥

आभासमात्रमेवेदमित्थं संप्रति भासते ।
अयं नामाहमित्यन्तरसदेव शरीरकम् ॥ १ ॥
मांसास्थिमयनिर्माणदेहोऽहमिति विभ्रमम् ।
त्यज संकल्पनिर्माणदेहाः सन्ति सहस्रशः ॥ २ ॥
सुखतल्पगतो येन स्वप्नदेहेन दिक्तटान् ।
परिभ्रमसि हे राम स देहस्ते क्व संस्थितः ॥ ३ ॥
जागरायां मनोराज्ये येन स्वर्गपुरान्तरम् ।
परिभ्रमसि मेरुं वा स देहस्ते क्व संस्थितः ॥ ४ ॥

पूर्वं प्राणवृत्त्यनुसंधानाच्चित्तविश्रान्त्या निर्वाणमुक्तम् । इदानीं तद्वदेव देवपूजयापि चित्तविश्रान्तिलक्षणं निर्वाणं भवतीत्युच्यते । तत्र तावद्देहाभिमानस्य सर्वनिर्वाणोपायप्रतिबन्धकत्वात् तन्निवृत्तये हितं किंचिदुपदिशति—आभासमात्रमिति ॥ इदं शरीरं वस्तुत आभासमात्रं प्रतीतिमात्रसिद्धमपि संप्रति अविचारदशायामित्थं अयमित्यहमिति चात्मनो भेदेनाभेदेन चाभिमानविषयतयान्तरन्तः-करणे भासते । विचार्यमाणं पुनरसदेव मिथ्यैव कल्पितत्वात् ॥ १ ॥ मांसेति ॥ मांसास्थिमयं निर्माणं यस्य तादृशो देहोऽहमिति यो विभ्रमः तं त्यज । एवंविधानां संकल्पकल्पितानां देहानां सह-स्रशो विद्यमानत्वादित्यर्थः ॥ २ ॥ देहासत्यत्वमेवाह—सुखेति ॥ सुखतल्पगतस्य ते दिक्तटभ्रमणहेतवो ये स्वप्नदेहास्तेषामसत्यत्वं त्वयाभ्युपगतमेवेत्यर्थः ॥ ३ ॥ जागरायामिति ॥ जाग्रद्दशायामपि मनोरथपथेन प्रवहतश्चित्तस्य देहविस्मरणपर्यवसितं यत्पारवश्यं तन्मनोराज्यम् । तत्रापि मिथ्यादेहेनैव देशान्तरभ्रमणमित्यर्थः॥४॥

दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम् ।
दीर्घं वापि मनोराज्यं संसारं रघुनन्दन ॥ ५ ॥
आभासमात्रमेवेदं न सन्नासज्जगत्त्रयम् ।
इत्यन्यकलनात्यागं सम्यगालोकनं विदुः ॥ ६ ॥
अवश्यमेव हि मया मर्तव्यमिति निश्चयः ।
इत्यात्ममरणप्राप्तौ किं मुधा परितप्यते ॥ ७ ॥
अवश्यमेव जातेन किंचित्सुविभवादिकम् ।
प्राप्तव्यं पुरुषेणेति लाभेष्वर्थेषु को मदः ॥ ८ ॥
प्रविभागं परित्यज्य पदार्थपटलव्रजे ।
आभासमात्रे सामान्यमिदमालोकयानघ ॥ ९ ॥
आभासमात्रमखिलं चित्तामर्शकलङ्कितम् ।
ततस्तदपि संत्यज्य निराभासो भवोत्तम ॥ १० ॥

---

दीर्घेति ॥ दीर्घं वा चित्तविभ्रमं नीलं नभ इतिवच्चिरकालानुवृत्तां भ्रान्तिम् ॥ ५ ॥ अभ्यासमात्रमिति ॥ जगत्त्रयं सन्न बाध्यत्वात् । असन्न प्रतीयमानत्वात् । अतः आभासमात्रं प्रतिभासमात्रमेव न वास्तवमित्यन्यकलनात्यागमेव सम्यगालोकनं विदुः ॥ ६ ॥ अवश्यमिति ॥ मरणस्य जननेनैव आवश्यकत्वनिश्चयात्तत्प्राप्तौ परितापो व्यर्थ इत्यर्थः ॥ ७ ॥ अवश्यमिति ॥ जातेन जीवता पुरुषेण सुविभवादिकं किंचिच्छ्रेयः प्राप्तव्यमिति निश्चयादर्थलाभेषु मदोऽपि नोचित इत्यर्थः ॥ ८ ॥ प्रविभागमिति ॥ पदार्थपटलव्रजे पदार्थवर्गसमुदायात्मके प्रपञ्चे प्रविभागं भेदबुद्धिं परित्यज्य इदमाभासमात्रमेव सामान्यं सर्वानुवृत्तं सच्चिन्मात्रमेवालोकय अनुसंधत्स्व ॥ ९ ॥ आभासेति ॥ यतः कारणादाभासमात्रमपि चित्तामर्शक-

रागो द्वेषश्च सर्पौ द्वौ न विलीनौ मनोबिले ।
यस्य कल्पतरोस्तस्मात्किं नामाङ्ग न लभ्यते ॥ ११ ॥
ये प्रज्ञागर्वमापन्ना विदग्धाः शास्त्रशालिनः ।
रागद्वेषमया मान्यगर्दभास्ते धिगस्तु तान् ॥ १२ ॥
इदं संसारचक्रं हि नाभौ संकल्पमात्रकम् ।
संरोधितायां वहनाद्रघुनन्दन रुध्यते ॥ १३ ॥
क्षोभितायां मनोनाभ्यामिदं संसारचक्रकम् ।
प्रयत्नाद्रोधितमपि प्रवहत्येव वेगतः ॥ १४ ॥
परं पौरुषमाश्रित्य बलं प्रज्ञां च युक्तितः ।
नाभिं संसारचक्रस्य चित्तमेव निरोधयेत् ॥ १५ ॥

लङ्कितं चित्तसंबन्धदूषितं ततः कारणादपि आभासमात्रमपि संत्यज्य निराभासो भव निर्विकल्पो भव ॥ १० ॥ राग इति ॥ रागद्वेषाख्यौ द्वौ सर्पौ मनोबिले न विलीनौ न तावास्थितौ किंतु निर्गतौ स एव कल्पतरुः सर्वपुरुषार्थसाधकत्वात् । तस्माद्रागादिरहितात्पुंसः सकाशाल्लोके किं नाम श्रेयो न लभ्यते । सर्वमपि श्रेयो लभ्यत इत्यर्थः ॥ ११ ॥ य इति ॥ ये पुनः शास्त्रशालिनो विदग्धाः लौकिकवैदिकव्यवहारनिपुणा अपि प्रज्ञागर्वं प्रज्ञावन्तो वयमेवेत्यहंकारमापन्नाः सन्तो रागद्वेषमयाः रागद्वेषभूयिष्ठा भवन्ति ते मान्यगर्दभाः दूरभारवहनक्षमत्वात् बहुमूल्या ये गर्दभास्तत्तुल्याः तान् धिगस्तु । ते न स्प्रष्टव्या इत्यर्थः ॥ १२ ॥ इदमिति ॥ संसारो जननमरणादिप्रवाहः स एव चक्रं भ्रमणशीलत्वात् तस्य संकल्पात्मकं चित्तमेव नाभिः प्रवर्तकत्वात् । अतश्चित्तनिरोधे संसारो निरुध्यते ॥ १३ ॥ क्षोभितायामिति ॥ मनसि क्षोभिते संसारः प्रवहत्येव न तु प्रकारान्तररेण

प्रज्ञासौजन्ययुक्तेन शास्त्रसंवलितेन च ।
पौरुषेण न यत्प्राप्तं न तत्क्वचन लभ्यते ॥ १६ ॥
भयप्रदमकल्याणं धैर्यसर्वस्वहारिणम् ।
मनःपिशाचमुत्सृज्य योऽसि सोऽसि स्थिरो भव ॥ १७ ॥
चित्तयक्षदृढक्रान्तं न शास्त्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं गुरवो न च मानवम् ॥ १८ ॥
संशान्तचित्तवेतालं गुरुशास्त्रार्थबान्धवाः ।
शक्नुवन्ति समुद्धर्तुं स्वल्पपङ्कान्मृगं यथा ॥ १९ ॥
भोगाभोगा बहिष्कार्या आर्यस्यानुसरेत्पदम् ।
प्रविचार्य महार्थं स्वमेकमात्मानमाश्रयेत् ॥ २० ॥
अत्रेमामपरां दृष्टिं महामोहविनाशिनीम् ।
शृणु या कथिता पूर्वं मम कैलासकन्दरे ।
संसारदुःखशान्त्यर्थं देवेनार्धेन्दुमौलिना ॥ २१ ॥
अस्तीन्दुकरसंभारभासुरः परमो दिवः ।
कैलासो नाम शैलेन्द्रो गौरीरमणमन्दिरम् ॥ २२ ॥

रोद्धुं शक्यते ॥ १४ ॥ १५ ॥ प्रज्ञेति ॥ प्रज्ञा प्रतिभा । सौजन्यं शमादिसंपत् । शास्त्रं अध्यात्मविद्या । पौरुषं पुरुषस्य कर्म ॥ १६ ॥ भयेति ॥ मनोविकारे परित्यक्ते स्वरूपमेवावशिष्यत इत्यर्थः ॥ १७ ॥ चित्तेति ॥ मनःपिशाचपरवशस्तु केनापि परित्रातुं न शक्यत इत्यर्थः ॥ १८ ॥ ॥ १९ ॥ भोगेति ॥ भोगाभोगा विषयविस्ताराः । आर्यस्य जीवन्मुक्तस्य महार्थं परमार्थसिद्धमात्मानमेकमाश्रयेत् । अहार्यत्वमिति पाठे स्वात्मन एवमहार्यत्वं प्रविचार्य तमेवात्मानमाश्रयेदित्यर्थः ॥ २० ॥ अत्रेति ॥ अपरां दृष्टिं अन्यं आत्मज्ञानोपायम् ॥ २१ ॥ अस्तीति ॥ दिवः स्वर्गादपि परम उत्कृष्टः ॥ २२ ॥ २३ ॥

तत्रास्ते भगवान्देवो हरश्चन्द्रकलाधरः ।
तं पूजयन्महादेवं तस्मिन्नेव गिरौ पुरा ॥ २३ ॥
कदाचिदवसं गङ्गातटे विरचिताश्रमः ।
तपोऽर्थं तापसाचारे चिराय रचितस्थितिः ॥ २४ ॥
सिद्धसंघातवलितः कृतशास्त्रार्थसंग्रहः ।
पुष्पार्थं स्यूतपुटिकः पुस्तकव्यूहसंग्रही ॥ २५ ॥
एवंगुणविशिष्टस्य कैलासवनकुञ्जके ।
तपः प्रचरतो राम समकालोऽस्य वर्तत ॥ २६ ॥
अथैकः स कदाचित्तु बहुलस्याष्टमे दिने ।
गते श्रावणपक्षस्य रात्र्यग्रे क्षयमागते ॥ २७ ॥
दिक्षु संशान्तरूपासु काष्ठमौनस्थितास्विव ।
खड्गच्छेद्यान्धकारेषु कुञ्जेषु गहनेषु च ॥ २८ ॥
एतस्मिन्समये तत्र यामार्धे प्रथमे गते ।
समाधिं तनुतां नीत्वा स्थितोऽहं बाह्यमग्नदृक् ॥ २९ ॥
अपश्यं कानने तेजो झगित्येव समुत्थितम् ।
शुभ्राभ्रशतसंकाशं चञ्चदिन्दुगणोपमम् ॥ ३० ॥

कदाचिदिति श्लोकद्वयं वाक्यम् ॥२४॥ स्यूतपुटिकः । पुटिका पूजापुष्पनिक्षेपयोग्या पुटिका सा स्यूता प्रोता येन स तथा । पुस्तकव्यूहसंग्रही ज्ञानशास्त्रविषयाणां पुस्तकानां यः समूहस्तत्संग्रहशीलः ॥ २५ ॥ २६ ॥ अथेति श्लोकचतुष्टयं वाक्यम् । कदाचित्तु बहुलस्य श्रावणपक्षस्य गते अतीते अष्टमे दिने रात्रेरग्रभागे क्षयमागते सति स एकोऽहं समाधिं तनुतां नीत्वा बाह्यमग्नदृक्स्थितः सन् ॥ २७ ॥ २८ ॥ २९ ॥ कानने झगित्येव समुत्थितं शुभ्राभ्रश-

प्रकटीकृतदिक्कुञ्जं तदालोक्य मया स्मयात् ।
अन्तःप्रकाशशालिन्या बुद्धिदृष्ट्या विलोकितम् ॥ ३१ ॥
यावत्पश्यामि तं सानुं प्राप्तश्चन्द्रकलाधरः ।
गौरीकरार्पितकरो नन्दिप्रोत्सारिताग्रगः ॥ ३२ ॥
शिष्यानुद्बोध्य तत्रस्थान् गृहीत्वार्घ्यं सुसंयतः ।
अगमं सुमनास्तस्य दृष्टिपूतमहं पुरः ॥ ३३ ॥
तत्र पुष्पाञ्जलिं दत्त्वा दूरादेव त्रिलोचनः ।
दत्त्वार्घ्येण मया देवः संप्रणम्याभिवन्दितः ॥ ३४ ॥
ततश्चन्द्रप्रभासख्या ऋद्ध्या शीतलया तया ।
दृशा सर्वार्तिहारिण्या चिरमस्म्यास्पदीकृतः ॥ ३५ ॥
पुष्पसानूपविष्टाय तस्मै त्रैलोक्यसाक्षिणे ।
अर्घं पुष्पं तथा पाद्यमभ्युपेत्यार्पितं मया ॥ ३६ ॥
मन्दारपुष्पाञ्जलयो विकीर्णा बहवः पुनः ।
नानाविधैर्नमस्कारैः स्तोत्रैश्चाभ्यर्चितः शिवः ॥ ३७ ॥
ततो भगवती गौरी तादृश्यैव सपर्यया ।
संपूजिता सखीयुक्ता गणमण्डलिका तथा ॥ ३८ ॥

तत्संकाशं चक्रवदिन्दुगणोपमं तेजोऽपश्यमित्यन्वयः । झटित्यर्थे झगिति शाकटायनः पपाठ ॥ ३० ॥ ३१ ॥ ३२ ॥ शिष्यानिति ॥ शिष्यानुद्बोध्य समाधेर्व्युत्थाप्य तस्य परमेश्वरस्य दृष्टिपूतं पुरोभागमगमम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ मन्दारेति ॥ नानाविधैस्तत्र नमस्काराणां अष्टाङ्गपञ्चाङ्गादिभेदेन स्तोत्राणां च लौकिकवैदिकभेदेन भिन्नत्वान्नानाविधत्वम् ॥ ३७ ॥ तत इति ॥ तादृश्यैव यादृशी शिवस्य विहिता तादृश्येव गणमण्डलिका प्रमथस-

पूजान्ते पूर्णशीतांशुरश्मिशीतलया गिरा ।
तत्रोपविष्टं प्रोवाच मामर्धेन्दुकलाधरः ॥ ३९ ॥
ब्रह्मन्प्रशमशालिन्यः प्राप्तविश्रान्तयः परे ।
कच्चित्कल्याणकारिण्यः संविदस्ते स्थिराः पदे ॥ ४० ॥
कच्चित्तपस्ते निर्विघ्नं कल्याणमनुवर्तते ।
कच्चित्प्राप्यं मनः प्राप्तं कच्चिच्छाम्यन्ति भीतयः ॥ ४१ ॥
एवंवादिनि देवेशे सर्वलोकैककारणे ।
गिरानुनयशालिन्या मयोक्तं रघुनन्दन ॥ ४२ ॥
त्वदनुस्मृतकल्याणवतामिह महेश्वर ।
न च किंचन दुष्प्रापं न च काश्चन भीतयः ॥ ४३ ॥
त्वदनुस्मरणानन्दपरिपूरितचेतसाम् ।
न ते सन्ति जगत्कोशे प्रणमन्ति न ये पुरः ॥ ४४ ॥
ते देशास्ते जनपदास्ता दिशस्ते च पर्वताः ।
त्वदनुस्मरणैकान्तधियो यत्र स्थिता जनाः ॥ ४५ ॥
फलं भूतस्य पुण्यस्य वर्तमानस्य सेचनम् ।
तनोति चैष्यतो बीजं त्वदनुस्मरणं विभो ॥ ४६ ॥

मूहः ॥ ३८ ॥ ३९ ॥ ब्रह्मन्निति ॥ परे पदे प्राप्तविश्रान्तयः ते संविदः स्थिराः कच्चित् । योगान्तराया न सन्ति कच्चिदित्यर्थः ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ त्वदिति ॥ त्वदनुस्मरणजनितानन्देन परिपूरितचेतसां त्वद्भक्तानां पुरः पुरोभागे ये न प्रणमन्ति ते जगत्कोशे न सन्ति ॥ ४४ ॥ ते देशा इति ॥ देशाः अङ्गवङ्गकलिङ्गादयः । जनपदा ग्रामाः । त्वद्भक्तनिवासा एव देशादयः श्लाघ्या इत्यर्थः ॥ ४५ ॥ फलमिति ॥ त्वदनुस्मरणं भूतस्य पुण्यस्य पुरा

ज्ञानामृतैककलशो धृतिज्योत्स्नानिशाकरः ।
अपवर्गपुरद्वारं त्वदनुस्मरणं प्रभो ॥ ४७ ॥
त्वदनुस्मरणोदारचिन्तामणिमता मया ।
सर्वासामापदां मूर्ध्नि दत्तं भूतपते पदम् ॥ ४८ ॥
इत्युक्त्वा सुप्रसन्नं तं भगवन्तं महेश्वरम् ।
अवोचं प्रणतो भूत्वा यद्राम तदिदं शृणु ॥ ४९ ॥
भगवंस्त्वत्प्रसादेन पूर्णा मे सकला दिशः ।
किंतु पृच्छामि देवेश संदेहं तत्र निर्णयम् ॥ ५० ॥
ब्रूहि प्रसन्नया बुद्ध्या त्यक्तोद्वेगमनामयम् ।
सर्वपापक्षयकरं सर्वकल्याणवर्धनम् ॥ ५१ ॥
देवार्चनविधानं तत्कीदृशं भवति प्रभो ।

महेश्वर उवाच ॥

शृणु ब्रह्मविदांश्रेष्ठ देवार्चनमनुत्तमम् ॥ ५२ ॥
न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः ।
न देवो देहरूपो हि न देवश्चित्तरूपकः ।
अकृत्रिममनाद्यन्तं देवनं देव उच्यते ॥ ५३ ॥

कृतस्य सुकृतस्य फलं अपुण्यस्यासंभवात् । वर्तमानस्य पुण्यस्य सेचनं तनोति । पुण्यं संवर्धयतीत्यर्थः । ईश्वरानुस्मरणेन पुण्यस्य साद्गुण्यात् एष्यतो भविष्यतः पुण्यस्य बीजं ईश्वरस्मरणपूतचेतसः पुण्यकरणेच्छाप्रवृत्तेः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ॥ ५२ ॥ नेति साधत्रयं वाक्यम् । साकारस्य वस्तुनः परिच्छिन्नत्वात् नश्वरत्वाच्चाकृत्रिममनाद्यन्तं देवनं चिन्मात्रमेव देवशब्दार्थः

आकारादिपरिच्छिन्ने मिते वस्तुनि तत्कुतः ।
अकृत्रिममनाद्यन्तं देवनं चिच्छिवं विदुः ॥ ५४ ॥
देवः कः स्यादिति त्वेतत्प्रथमं तावदुच्यते ।
तदेव देवशब्देन कथ्यते तत्प्रपूजयेत् ॥ ५५ ॥
अज्ञातशिवतत्त्वानामाकाराद्यर्चनं कृतम् ।
योजनाध्वन्यशक्तस्य क्रोशाध्वा परिकथ्यते ॥ ५६ ॥
चिद्व्योमैव किलास्तीह पारावारविवर्जितम् ।
सर्वत्रासंभवच्चेत्यं कल्पान्तेषु च शिष्यते ॥ ५७ ॥
बोधः साम्यं शमश्चेति पुष्पाण्यग्र्याणि तस्य तैः ।
शिवं चिन्मात्रममलं पूज्यं पूजाविदो विदुः ॥ ५८ ॥
शमबोधादिभिः पुष्पैर्देव आत्मा यदर्च्यते ।
तत्तु देवार्चनं विद्धि नाकारार्चनमर्चनम् ॥ ५९ ॥
अकृत्रिममनाद्यन्तमद्वितीयमखण्डितम् ।
अबहिःसाधनासाध्यं सुखं तस्मादवाप्यते ॥ ६० ॥

॥ ५३ ॥ आकारेति ॥ आकारादिभिः परिच्छिन्ने मिते वस्तुनि देवत्वेनाभ्युपगम्यमानत्वे सति तदकृत्रिमत्वादिदेवलक्षणं कुतः संभवेत् । तस्मादकृत्रिमत्वादिलक्षणं देवनमेव चिच्छिवं चिद्रूपं शिवं विदुः ॥ ५४ ॥ ५५ ॥ अज्ञातेति ॥ अज्ञातशिवतत्त्वानां ईदृशं चिच्छिवमजानताम् ॥ ५६ ॥ चिदिति ॥ पारावारविवर्जितं उत्तरपूर्वावधिरहितं असंभवच्चेत्यं दृश्यासंस्पृष्टं यद्वस्तु कल्पान्तेषु च शिष्यते तदेव चिद्व्योम सर्वत्रास्ति ॥ ५७ ॥ बोध इति ॥ बोधस्तत्त्वज्ञानं साम्यं तस्य पूर्णतादृष्टिः शमो निर्विकारचित्ततेति । तस्य चिच्छिवस्य अग्र्याणि श्रेष्ठानि पुष्पाणि तैः शिवं पूज्यं विदुः ॥ ५८ ॥ ५९ ॥ अकृत्रिममिति ॥ अबहिःसाधनासाध्यं बहिःसा-

संवित्सर्वकलातीता सर्वभावान्तरस्थिता ।
नित्यं सदसतोर्मध्ये सत्तासामान्यरूपिणी ।
महासत्तात्मतां प्राप्ता देवशब्देन कथ्यते ॥ ६१ ॥
विकल्पकलिता सैव चित्स्वरूपपरिच्युता ।
जाड्यं क्रमाद्भावयन्ती प्रयाति कलनास्पदम् ॥ ६२ ॥
देशकालादिशक्तीनामुल्लासैर्वलिता क्रमात् ।
जीवो भूत्वा भवत्याशु बुद्धिः पश्चादहं मनः ॥ ६३ ॥
मनस्त्वं समुपायाता संसारमवलम्बते ।
चण्डालोऽस्मीति मननाच्चण्डालत्वमिव द्विजः ॥ ६४ ॥

धनादिभिः बाह्यप्रयत्नैः असाध्यं कैवल्यं सुखं तस्मात्पूर्वोक्तादेवार्चनादवाप्यते ॥ ६० ॥ देवपूजाया बाह्याभ्यन्तरभेदेन द्वैविध्यस्य वक्ष्यमाणत्वात् बाह्यपूजां वक्तुं तदुचितां देवतामाह—संविदिति ॥ सर्वकलातीता निवृत्तप्रतिष्ठा विद्याशान्तिशान्त्यतीताख्यपञ्चकलातीता। पञ्चभूतात्मप्रपञ्चातीतेत्यर्थः । यदुक्तमम्बास्तवे—'भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्यानले मरुति शान्तिरतीतशान्तिः । व्योम्नीति ये किल कलाः कलयन्ति तत्त्वं तासां हि दूरतममम्ब पदं त्वदीयम्' इति॥ सदसतोः कारणकार्ययोर्भावाभावयोर्वा मध्ये सत्तासामान्यरूपिणी संविन्महासत्तात्मतां प्राप्ता अन्तर्बहिश्च सर्वत्र परिपूर्णतया महासत्ताशब्दवाच्या सती देवशब्देन कथ्यते ॥६१॥ विकल्पेति ॥ सैव संविद्विकल्पकलिता जाड्यं भावयन्ती क्रमाच्चित्स्वरूपात्परिच्युता सती कलनापदं दृश्यभावं प्रयाति ॥ ६२ ॥ एतदेव विवृणोति—देशेति ॥ देशकालादिशक्तीनामुल्लासैः प्रभावैर्वलिता क्षुभिता सती क्रमाज्जीवो भूत्वा आशु बुद्धिर्भवति पश्चादहंकारो भवति। पश्चान्मनो भवति ॥ ६३ ॥ मनस्त्वमिति ॥ संसा-

इयमस्मीति बोधेन देहस्था परिपातिनी ।
मग्ना मोहमहापङ्के दुःखाद्दुःखं व्रजत्यसौ ॥ ६५ ॥
पुष्टं संकल्पमात्रेण यदिदं दुःखमागतम् ।
तदसंकल्पमात्रेण क्षयि कात्र कदर्थिता ॥ ६६ ॥
यत्किंचिदपि संकल्प्य नरो दुःखे निमज्जति ।
न किंचिदपि संकल्प्य सुखमव्ययमश्नुते ॥ ६७ ॥
स्वविवेकानिलैः कृत्वा संकल्पजलदक्षयम् ।
परां निर्मलतामेहि शरदीव नभोन्तरम् ॥ ६८ ॥
स्वसंकल्पनकालुष्यं विनिवार्यात्मनात्मनः ।
परं प्रसादमासाद्य परमानन्दवान्भव ॥ ६९ ॥
सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवैः ।
संसारं तन्निवृत्तिं च सर्वमासादयत्यलम् ।
समचिन्मात्ररूपस्य सर्वस्यानाकृतेरपि ॥ ७० ॥

रमवलम्बते मनोमूलत्वात्तस्य । यथा हि कश्चिद्द्विजो बाल्य एव देशान्तरे नीतोऽपि विमोहाच्चण्डालैः सह चिरमुषित्वा तदीयान्नपानदूषितब्राह्मण्यः पश्चात्कथंचित्प्रबुध्याहं चण्डालोऽस्मि सततं तत्संबन्धादिति मन्यमानश्चण्डालत्वमवलम्बते तद्वदित्यर्थः ॥ ६४ ॥ इयमिति ॥ असौ संविदियमहमस्मीति परिच्छिन्नभावेन देहस्था सती परिपातिनी देहाभिमानेन तदपायवती दुःखाद्दुःखं व्रजति ॥ ६५ ॥ पुष्टमिति ॥ इदं संसारदुःखं यद्यस्मात्कारणात्संकल्पमात्रेणैवागतं तेनैव पुष्टं संवर्धितं च तत्तस्मात्कारणात् असंकल्पनमात्रेण संकल्पाभावेनैव क्षयि क्षीयते। अतोऽत्र संसारे का कदर्थिता। न काचिदित्यर्थः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ सर्वेति ॥ आत्मा

इच्छासत्ता व्योमसत्ता कालसत्ता तथैव च ।
तथा नियतिसत्ता च महासत्ता च सुव्रत ॥ ७१ ॥
ज्ञानशक्तिः क्रियाशक्तिः कर्तृताऽकर्तृतापि च ।
इत्यादिकानां शक्तीनामन्तो नास्ति परात्मनः ॥ ७२ ॥
उल्लासशक्त्या संसारः सर्वतः संप्रवर्तते ।
निरोधशक्त्या निःशेषमयमायाति संक्षयम् ॥ ७३ ॥
पूजाक्रमेषु सर्वेषु देहदाहे पवित्रकम् ।
त्याज्यदेहावबोधात्मग्राह्यं यत्तात्पवित्रकम् ॥ ७४ ॥
एष देवः स परमः पूज्य एष सदा सताम् ।
पूजनं ध्यानमेवान्तर्नान्यदस्त्यस्य पूजनम् ॥ ७५ ॥
तस्मात्त्रिभुवनाधारं नित्यं ध्यानेन पूजयेत् ।
चिद्रूपं सूर्यलक्षाभं समस्ताभासभासनम् ॥ ७६ ॥

सर्वशक्तिमयत्वाच्छक्तिमण्डलस्य ताण्डवैरुल्लासैः संसारं तन्निवृत्तिं च सर्वमासादयति ॥ ७० ॥ शक्तयः का इत्याशङ्कयाह—इच्छेति श्लोकद्वयं वाक्यम् ॥ इच्छादीनां सत्ताहेतुत्वात् अभेदोपचारेणेच्छैव सत्तेत्येवं सामानाधिकरण्यनिर्देशः । तथाहि कस्यचिद्वस्तुनः इच्छामात्रेणैव सत्ता संपद्यते यथा सुखादेः । कस्यचित्तु व्योम्ना यथा शब्दादेः । कस्यचित्तु कालेन यथा पल्लवकुसुमादेः । कस्यचिन्नियत्या यथा द्वीपान्तर एव । केषांचिद्वस्तूनां महासत्ता पुनः सर्वत्रास्ति प्रत्ययहेतुः आत्मनः स्वरूपसत्ता ॥ ७१ ॥ ज्ञानशक्तिः ज्ञानहेतुः शक्तिरित्थं क्रियाशक्तिः कर्तृता क्रियासमवायहेतुः सत्ताशक्तिः अकर्तृता तद्विपरीता इत्यादीनां परात्मशक्तीनामन्तो नास्ति ॥ ७२ ॥ उल्लासेति ॥ संसारोज्जृम्भणहेतुः उल्लासशक्तिः तन्निवृत्तिहेतुः निरोधशक्तिरित्यर्थः ॥ ७३ ॥ ७४ ॥ ७५ ॥ तस्मादिति श्लोकपञ्चकं

अन्तस्थचित्प्रकाशं स्वं महतां सारमाशये।
अपारपरमाकाशविपुलाभोगकन्धरम् ॥ ७७ ॥
अनन्ताधस्तनाकाशकोशपादसरोरुहम्।
अनन्तदिक्तटाभोगभुजमण्डलमण्डितम् ॥ ७८ ॥
नानाविधमहालोकगृहीतपरमायुधम्।
हृत्कोशकोणविश्रान्तब्रह्माण्डौघपरम्परम् ॥ ७९ ॥
प्रकाशपरमाकाशपारगापारविग्रहम्।
अध ऊर्ध्वं चतुर्दिक्षु विदिक्षु च निरन्तरम् ॥ ८० ॥

वाक्यम् ॥ यस्मादस्य देवस्य ध्यानमेव पूजनं तस्मादित्थं त्रिभुवनाधारं देवं ध्यानेन नित्यं पूजयेदित्यन्वयः। समस्ताभासभासनं सर्वेषां प्रकाशकानां सूर्यादीनामपि प्रकाशकं अन्तस्थचित्प्रकाशं शरीरान्तः स्फुरच्चित्प्रकाशरूपं स्वं सर्वेषां स्वरूपभूतम् आशये हृदये या अहन्ता अहंभावः तस्यां सारं चिदचिदात्मकेऽहंकारे चिद्रूपस्यैव सारभूतत्वात्। तदुक्तं प्रेक्षाणके—'अहमित्यग्रिमबोधे चिदचिद्रूपे यदस्ति चिद्रूपम्। यत्साक्षादपरोक्षं सूक्ष्मं ब्रह्मास्ति सूक्ष्मदृग्वेद्यम्' इति। अपारस्य परमाकाशस्य यो विपुल आभोगो विस्तारः स एव कन्धरा कण्ठदेशो यस्य। अनन्तस्याधस्तनाकाशस्य यः कोशोऽभ्यन्तरविस्तारः स एव पादसरोरुहं यस्य ॥ ७६ ॥ ७७ ॥ ७८ ॥ नानाविधा ये महान्तो लोका भूरादयः त एव गृहीतानि स्वहस्तस्वीकृतानि परमाण्यायुधानि यस्य। हृत्कोशकोणविश्रान्तब्रह्माण्डौघपरम्परमिति सिसृक्षितभाविब्रह्माण्डाभिप्रायेणेति वेदितव्यम् ॥ ७९ ॥ प्रकाशस्य परमाकाशस्य पारगः स्वयमपारश्च विग्रहो

ब्रह्मेन्द्रहरिरुद्रेशप्रमुखामरमण्डितम् ।
इमां भूतश्रियं तस्य रोमालिं प्रविचिन्तयेत् ॥ ८१ ॥
विविधारम्भकारिण्यस्त्रिजगद्यन्त्ररज्जवः ।
इच्छाद्याः शक्तयस्तस्य चिन्तनीयाः शरीरगाः ॥ ८२ ॥
एष देवः स परमः पूज्य एव सदा सताम् ।
चिन्मात्रो ह्यनुभूतात्मा सर्वगः सर्वसंश्रयः ॥ ८३ ॥
अनन्तः स पराधारः सत्तामात्रैकविग्रहः ।
विवर्तितजगज्जालः कालोऽस्य द्वारपालकः ॥ ८४ ॥
सर्वत्रेक्षणशक्त्याढ्यं सर्वतो घ्राणशक्तिकम् ।
सर्वतः स्पर्शनमयं सर्वतो रसनान्वितम् ॥ ८५ ॥

यस्येति ॥ ८० ॥ ब्रह्मेति ॥ भूतपरम्परा तस्य देवस्य रोमालिरित्यर्थः ॥ ८१ ॥ विविधेति ॥ त्रिजगदेव यन्त्रकल्पितं संस्थानं पराधीनक्रियं द्रव्यं तस्य रज्जवः प्रवृत्तिहेतवः । इत्थंभूता इच्छाद्याः पूर्वोक्ताः शक्तयः तस्य शरीरगाश्चिन्तनीयाः ॥ ८२ ॥ ८३ ॥ अनन्त इति ॥ अनन्तः निरवधिकः पराधारः परमात्मनः शक्तिरूपत्वात्तदाश्रयः सत्तामात्रैकविग्रहः तद्रूपत्वात् विवर्तितजगज्जालः विविधं प्रवर्तितं जगज्जालं येन । कानिचिज्जगन्ति बहिर्निःसारयति कानिचित्त्वन्तःप्रवेशयति कानिचित्तु तथैव स्थापयतीति कृत्वा सोऽयं प्रसिद्धः कालोऽस्य देवस्य द्वारपालकः द्वाःस्थ इव ईश्वरेच्छानुसारेण जगतां प्रवर्तनात् ॥ ८४ ॥ सर्वत्रेति सार्धश्लोकद्वयं वाक्यम् । 'विश्वतश्चक्षु'रित्यादिश्रुतेः । सर्वत्र सर्वेन्द्रियशक्तियुक्तं सर्वतो मनोनातीतं मनोव्यापारागम्यं सर्वत्र परमशिवरूपं देवेशमेवं पूर्वोक्तप्र-

सर्वत्र श्रवणाकीर्णं सर्वत्र मननान्वितम् ।
सर्वतो मननातीतं सर्वत्र परमं शिवम् ।
इति संचिन्त्य देवेशमर्चयेद्विधिवत्ततः ॥ ८६ ॥
स्वसंविदात्मा देवोऽयं नोपहारेण पूज्यते ।
नित्यमक्लेशलभ्येन शीतलेनाविनाशिना ।
एकेनैवामृतेनैष बोधेन स्वेन पूज्यते ॥ ८७ ॥
एतदेव परं ध्यानं पूजैषैव परा स्मृता ।
यदनारतमन्तःस्थशुद्धचिन्मात्रवेदनम् ॥ ८८ ॥
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ।
प्रलपन्विसृजन्गृह्णञ्शुद्धसंविन्मयो भवेत् ॥ ८९ ॥

कारेण संचिन्त्य विधिवदर्चयेत् ॥ ८५ ॥ ८६ ॥ पूजाविधौ विशेषं दर्शयितुमाह—स्वसंविदिति सार्धश्लोकत्रयं वाक्यम् ॥ अयं स्वसंविदात्मा देवो बाह्योपहारेण न पूज्यते किंत्वक्लेशलभ्येन शीतलेन चिन्तासंतापरहितेन अविनाशिना एकेनैव बोधामृतेन पूज्यते ॥ ८७ ॥ न केवलं बोधामृतमुपहार एव अपि तु पूजापि तदेवेत्याह—एतदिति ॥ अनारतमविच्छिन्नं अन्तःस्थस्य शुद्धस्य चिन्मात्रस्य वेदनमनुसंधानं यदस्ति एतदेव ध्यानं एषैव परमा पूजा ॥ ८८ ॥ अनारतानुसंधानप्रकारमेवाह—पश्यन्निति ॥ स्वसंनिधानमात्रेण सूर्यवत्सर्वेन्द्रियव्यापारान् प्रवर्तयन् यः सर्वस्य साक्षी स विशुद्धसंविन्मात्ररूपोऽहमिति सर्वदानुसंदध्यादित्यर्थः । तदुक्तं हस्तामलके—'निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः । रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपो-

ध्यानोपहार एवात्मा ध्यानमस्य महार्चनम् ।
विना तेनेतरेणायमात्मा लभ्यत एव नो ॥ ९० ॥
ध्यानेनानेन सुमते निमेषांस्तु त्रयोदश ।
मूढोऽपि पूजयित्वेशं गोप्रदानफलं लभेत् ॥ ९१ ॥
पूजयित्वा निमेषाणां शतमेकमिति प्रभुम् ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ९२ ॥
पूजयित्वा स्वमात्मानं घटिकार्धं त्विति प्रभुम् ।
अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ ९३ ॥
ध्यानबल्युपहारेण स्वयमात्मानमात्मना ।
घटिकां पूजयेद्यस्तु राजसूयं लभेत सः ॥ ९४ ॥
मध्याह्नपूजनादित्थं राजसूयैकलक्षभाक् ।
दिवसं पूजयित्वैवं परे धाम्नि वसेन्नरः ॥ ९५ ॥
एषोऽसौ परमो योग इयं सा परमा क्रिया ।
बाह्यसंपूजनं प्रोक्तमेतदुत्तममात्मनः ।
इदानीं संप्रवक्ष्येऽहमन्तःपूजनमात्मनः ॥ ९६ ॥
नित्यमेव शरीरस्थमिमं ध्यायेत्परं शिवम् ।
शयानमुत्थितं चैव व्रजन्तमथ वा स्थितम् ॥ ९७ ॥

ऽहमात्मेति ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ॥ ९५ ॥ ध्यानकालातिशयेन फलातिशयं निरूप्य बाह्यपूजामुपसंहरन् आभ्यन्तरपूजामुपचक्रमते—एष इति सार्धत्रयं वाक्यम् ॥ परमा क्रिया परमं तपः ॥ ९६ ॥ नित्यमिति श्लोकद्वयं वाक्यम् । शरीरस्थं देहाभिमानिनं जाग्रदाद्यवस्थासु बहुधा व्याप्त-

स्पृशन्तमभितः स्पृश्यं त्यजन्तमथवाभितः ।
भुञ्जानं संत्यजन्तं च भोगानाभोगपीवरान् ॥ ९८ ॥
प्रवाहपतितार्थस्थस्वबोधस्नानशुद्धिमान् ।
नित्यावबोधार्हणया बोधलिङ्गं प्रपूजयेत् ॥ ९९ ॥
मनो मननशक्तिस्थं प्राणापानान्तरोदितम् ।
हृत्कण्ठतालुमध्यस्थं भ्रूनासापुटपीठगम् ।
षट्त्रिंशत्पदकोटिस्थमुन्मन्यन्तदशातिगम् ॥ १०० ॥
सहस्रपादावयवः सकेशनखदन्तकः ।
स्वदेहे संविदाभासो देवोऽयमिति भावयेत् ॥ १ ॥

तमिममेव जीवं परं शिवं ध्यायेदित्यन्वयः ॥ ९७ ॥ ९८ ॥ प्रवाहेति श्लोकद्वयं वाक्यम् ॥ प्रवाहपतितार्थस्थस्वबोधस्नानशुद्धिमान् प्रवाहोऽत्र बहिर्मुखश्चित्तवृत्तिप्रवाहः तत्पतितस्तद्विषयोऽर्थो घटादिः तत्स्थं तत्र प्रतिफलितं तच्च तत्स्थं च स्वरूपचैतन्यं च । घटाद्याकारायां चित्तवृत्तौ प्रतिबिम्बितमात्मचैतन्यमित्यर्थः । तस्य बोधोऽनुसंधानं—तदेव स्नानं हि प्रवाहपतितार्थस्थितस्य स्वरूपस्यावबोधः तेन शुद्धिमान् शुद्धः सन्मनो मननशक्तिस्थं मनसो या मननशक्तिः तत्स्थं तत्प्रवर्तकम् । प्राणापानयोरन्तरे उदितं तयोः प्रवर्तकत्वात् । तदुक्तं सांबेन—'प्राणापानौ वहति च समौ यौ मिथो ग्राससक्तौ देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये' इति । हृत्कण्ठतालुमध्यस्थं हृन्मध्ये कण्ठमध्ये तालुमध्ये च स्थितं हृदादीनां मर्मस्थानतया तत्र विशेषेणाभिव्यक्तं भ्रूनासापुटपीठगं भ्रूमध्ये नासाग्रे चोपास्यं इत्थंभूतं बोधरूपं लिङ्गं नित्यावबोधार्हणया निरन्तरानुसंधानरूपया पूजया प्रपूजयेत् । लिङ्गं हि शक्त्या युक्तं पिण्डिकान्तरे उदितं मध्यस्थं पीठगं च भवति तद्वदिदमिति भावः ॥ ९९ ॥ १०० ॥ सहस्रेति

विचित्राः शक्तयो बह्व्यो नानाचारा मनोदृशाम् ।
उपासते मामनिशं पत्न्यः कान्तमिवोत्तमम् ॥ २ ॥
मनो मे द्वारपालोऽयं निवेदितजगत्त्रयम् ।
चिन्तेयं मे प्रतीहारी द्वारस्था शुद्धरूपिणी ॥ ३ ॥
ज्ञानानि च विचित्राणि भूषणान्यङ्गानि मे ।
कर्मेन्द्रियाणि द्वाराणि बुद्धीन्द्रियगणैः सह ॥ ४ ॥
अयं सोऽहमनन्तात्मा व्यवच्छेदोज्झिताकृतिः ।
तिष्ठामि भरितैकात्मा पूर्णः सर्वावपूरकः ॥ ५ ॥

श्लोकपञ्चकं वाक्यम् ॥ हस्तपादादिसर्वावयवप्राप्तचैतन्यः स्वदेहे वर्तमानो यश्चिदाभासः अहंकारप्रतिविम्बितचैतन्यरूपो जीवः अहमिति प्रतीयते अयमेव देवः विम्बप्रतिविम्बयोरभेदात् ॥ १ ॥ मनोदृशां बाह्येन्द्रियाणां मनसो बाह्यार्थग्रहणसाधनत्वात् मन एव दृग्येषामिति बहुव्रीहिर्वा । मनोविना बाह्येन्द्रियाणां स्वस्वविषयग्रहणासामर्थ्यात् तेषां मनोदृशां नानाचाराः पृथग्भूतव्यापारा अतएव विचित्रा बह्व्यः शक्तयो रूपादिग्रहणसामर्थ्यरूपाः पत्न्यः कान्तं स्ववल्लभमिव मां सर्वेन्द्रियशक्तिप्राणप्रदं जीवात्मरूपं देवमनिशमुपासते ॥ २ ॥ इत्थंभूतस्य देवस्य मे निवेदितजगत्त्रयं विज्ञापितविश्ववृत्तान्तं मन एव द्वारपालः । इत्थं बाह्यार्थविषया चिन्तैव मे द्वारस्था शुद्धरूपिणी विश्वसनीया प्रतीहारी अन्तःपुरस्था ॥ ३ ॥ विचित्राणि विविधवस्तुविषयाणि ज्ञानानि च मे अङ्गानि अवयवगतानि भूषणानि स्वरूपशोभाहेतुत्वात् । कर्मेन्द्रियाणि वागादीनि बुद्धीन्द्रियगणैः सह मे द्वाराणि बहिर्विहारहेतुत्वात् । अत्र च बुद्धीन्द्रियाण्येव गणाः विचित्ररूपत्वाच्चिच्छिवोपासकत्वाच्च ॥ ४ ॥ अयमपरोक्षतया प्रतीयमानः सोऽहं शिवरूपोऽहं व्यवच्छेदोज्झिता-

समः समरसाचारः समाभासः समाकृतिः ।
सौम्यतामलमायाति पूजयित्वैवमव्ययम् ॥ ६ ॥
समया सर्वया बुद्ध्या चिन्मात्रं देववित्परम् ।
यथाप्राप्तक्रमोत्थेन सर्वार्थेन समर्चयेत् ॥ ७ ॥
मनागपि न कर्तव्यो यत्नोऽत्रापूर्ववस्तुनि ।
कामसंवेदनेनाथ पूजयेच्चेतनं शिवम् ॥ ८ ॥
भक्ष्यभोज्यान्नपानेन नानाविभवशालिना ।
शयनासनयानेन यथाप्राप्तेन चार्चयेत् ॥ ९ ॥
कान्तान्नपानसंभोगसंभारादिविलासिना ।
सुखेन सर्वरूपेण संबुद्धात्मानमर्चयेत् ॥ ११० ॥

कृतिः परिच्छेदरहितस्वरूपत्वादनन्तात्मा निरवधिकात्मा पूर्णः सर्वैः पूरितः मयि समस्तवस्तुसंभवात् । सर्वावपूरकः अन्तर्यामितया सर्ववस्तुपूरणात् । इत्थं भरितैकात्मा अखण्डाद्वितीयरूपस्तिष्ठामि इत्येव भावयेदित्यन्वयः ॥ ५ ॥ सम इति ॥ समः पूर्णत्वात्समरसाचारः रागद्वेषरहितत्वादेकप्रकारव्यवहारः । समाभासः सर्वप्राणिनां चित्तेषु ममैवायं प्रिय इत्येकरूपतयावभासमानः । समाकृतिः सर्वदा निर्विकारत्वादित्थंभूतः सन् अव्ययमात्मानमेवं पूर्वोक्तेन प्रकारेण पूजयित्वा अलं सम्यक् सौम्यतां जीवन्मुक्ततामायाति॥६॥ समयेति ॥ देववित्पूर्वोक्तदेवस्वरूपज्ञः चिन्मात्रं परं देवं समया रागादिरहितया सर्वया सर्वेन्द्रियजन्यया बुद्ध्या यथाप्राप्तक्रमोत्थेन समुचितव्यापारसिद्धेन सर्वार्थेन च समर्चयेत् ॥ ७ ॥ मनागिति॥ अत्र पूजाविधौ मनागपि ईषदपि अपूर्ववस्तुनि दुर्लभवस्तुनि लाभाय यत्नो न कर्तव्यः । किं तर्हि कामसंवेदनेन इष्टवस्तुनिवेदनेन चेतनरूपं शिवं पूजयेत् ॥ ८ ॥ ९ ॥ एतदेव विवृणोति—कान्तान्नपा-

आधिव्याधिपरीतेन मोहसंरम्भशालिना ।
सर्वोपद्रवदुःखेन प्राप्तेनात्मानमर्चयेत् ॥ ११ ॥
दारिद्र्येणाथ राज्येन प्रवाहपतितात्मना ।
विचित्रचेष्टापुष्पेण शुद्धात्मानं प्रपूजयेत् ॥ १२ ॥
भोगानामनिषिद्धानां निषिद्धानां च सर्वदा ।
त्यागेन चाथ रागेण स्वात्मानं बुद्धमर्चयेत् ॥ १३ ॥
नष्टं नष्टमुपेक्षेत प्राप्तं प्राप्तमुपाहरेत् ।
निर्विकारतयैतद्धि परमार्चनमात्मनः ॥ १४ ॥
आपातरमणीयं यत्तथाऽऽपातसुदुःसहम् ।
सर्वमात्ममयं कुर्यान्नित्यात्मार्चापरो नरः ॥ १५ ॥

नसंभोगसंभारादिविलासिना । कान्तैर्मनोहरैरन्नैः पानैः संभोगसंभारैः स्रक्चन्दनादिभिरादिशब्दग्राह्यैरन्यैश्च सुखसाधनैर्विलासिना सर्वरूपेण सर्वप्रकारेण सुखेनात्मानं संबुध्य सम्यक् शिवरूपं बुद्ध्वार्चयेत् ॥ ११० ॥ आधीति ॥ अत्र दुःखस्य पापरूपकालुष्यनिर्वर्तकत्वात् उद्वर्तनादिकल्कद्रव्यवत् आत्मोपयोगित्वात्पूजासाधनत्वं द्रष्टव्यम् ॥ ११ ॥ दारिद्र्येणेति ॥ प्रवाहपतितात्मना वासनाप्रवाहादागतेन विचित्रचेष्टापुष्पेण हितेन विचित्रचेष्टाबुद्धिहेतुना दारिद्र्येण राज्येन वा शुद्धात्मानं देहादिव्यतिरिक्तमात्मानं समर्चयेत् ॥१२॥ भोगानामिति ॥ अनिषिद्धानां रागेण निषिद्धानां त्यागेन चेत्यन्वयः ॥१३॥ नष्टमिति॥एतन्नष्टोपेक्षणं प्राप्तोपादानं चेत्यर्थः । निर्विकारतया हर्षविषादादिविकारनिवृत्तिहेतुतया॥१४॥ आपातेति ॥ आपातरमणीयं प्राथमिकदृष्टावुपादेयमिव प्रतीयमानं सुखं तत्साधनं वा यदस्ति तथा आपातसुदुःसहं प्रतिकूलतया प्रतीयमानं दुःखं तत्साधनं च

सर्वदा सर्वरूपेण यत्सर्वत्र स्थितं हितम् ।
सर्वं ब्रह्मेति निश्चित्य नित्यात्मार्चाव्रतं चरेत् ॥ १६ ॥

न वाञ्छता न त्यजता ज्ञेन प्राप्ताः स्वभावतः ।
सरितः सागरेणेव भोक्तव्या भोगभूतयः ॥ १७ ॥

उद्वेगो नानुगन्तव्यस्तुच्छातुच्छासु दृष्टिषु ।
व्योम्ना चित्रपदार्थेषु पतितापतितेष्विव ॥ १८ ॥

देशकालक्रियायोगाद्यदुपैति शुभाशुभम् ।
अविकारगृहीतेन तेनैवात्मानमर्चयेत् ॥ १९ ॥

यत् एतदुभयमपि नित्यात्मार्चापरो नरः आत्ममयं आत्मसमर्पणेन तद्रूपं कुर्यात् ॥ १५ ॥ सर्वदेति ॥ सर्वदा सर्वस्मिन्काले सर्वरूपेण नानारूपेण सर्वत्र अन्तर्बहिर्दिक्षु च यद्वस्तु स्थितं तत्सर्वं ब्रह्मैवेति निश्चित्य नित्यात्मार्चाव्रतं चरेत् । प्रतीतस्य सर्वस्यात्मार्पणेन ब्रह्म-भावनिश्चय एवात्मार्चनव्रतमित्यर्थः ॥ १६ ॥ नेति ॥ ज्ञेन ज्ञानिना अप्राप्तं अवाञ्छता प्राप्तं च न त्यजता स्वभावतः प्राप्ता भोगभूतयः सागरेण सरित इव भोक्तव्याः । तदुक्तं गीतासु—'आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी' इति ॥ १७ ॥ उद्वेग इति ॥ तुच्छातुच्छासु दृष्टिषु शून्याशून्यरूपासु पदार्थप्रतिपत्तिषु तेन उद्वेगश्चित्तविकारो नानुगन्तव्यः । चित्रेषु नानारूपेषु पक्षिमृगादिषु पदार्थेषु पतितेषु अपतितेषु वा व्योम्ना यथा उद्वेगः विकृतिर्नानुगम्यते तद्वत् ॥ १८ ॥ देशेति ॥ देशकालकर्मवशात् शुभमशुभं वा यद्वस्तु समुपैति अविकारगृहीतेन निर्विकारस्वीकृतेन तेनैव शुभा-

मिलित्वैष गणः क्षिप्रं स्मृतिं समनुकल्पयन् ।
मनो भवति शुद्धात्म बीजं संकल्पशाखिनः ॥ ३९ ॥
आतिवाहिकदेहोक्तिभाजनं तद्विदुर्बुधाः ।
परामर्शैकरूपिण्यो ह्यनन्तास्तस्य शक्तयः ।
व्योमादिरूपतामेत्य जगन्नाना विभाति तत् ॥ १४० ॥
शून्य एव हि वेताल इवेत्थं चित्तवासना ।
उदितेयं जगन्नाम्नी तच्छान्तौ शान्तिरक्षता ॥ ४१ ॥
अहन्तायां जगति च मृगतृष्णाजले च यः ।
सास्थस्तं धिग्घतनरं नोपदेश्यस्त्वसाविह ॥ ४२ ॥

जीवरूपा चिच्छक्तिः तथाभूता बुद्धित्वं प्राप्ता अतश्च निश्चयैकविलासिनी बुद्धेर्निश्चयात्मकत्वान्निश्चयेनैकेनैव विलसन्ती शब्दशक्त्यादिभिरनुगम्यते । तत्र शब्दव्यवहारहेतुः शब्दशक्तिः । एवं ज्ञानव्यवहारस्य क्रियाव्यवहारस्य च हेतू ज्ञानक्रियाशक्ती ॥ ३८ ॥ मिलित्वेति ॥ एष गणः पूर्वोक्तोऽहंकारादिसमूहः शब्दशक्त्याद्यनुगतः स्मृतिं स्मरणशक्तिं समनुकल्पयन् संकल्पशाखिनो बीजभूतं शुद्धात्म स्वच्छं मनो भवति । शून्यात्मेति पाठे मायाकल्पिताकारमित्यर्थः ॥ ३९ ॥ आतिवाहिकेति सार्धेन तदेव मनः आतिवाहिकदेहोक्तिभाजनं आतिवाहिकदेह इत्युक्तेरपि विषयं विदुः । मन एव आतिवाहिकदेह इत्यर्थः । तदेव मनः सृष्टिप्रकरणोक्तप्रकारेण व्योमादिरूपतामेत्य नानारूपं सज्जगत्तया विभाति ॥ १४० ॥ शून्य इति ॥ यथाहि वेतालः कल्पितत्वात् शून्य एव न परमार्थः इत्थमनेनैव प्रकारेण चित्तवासनैव जगन्नाम्नी जगद्रूपा उदिता अतस्तस्याश्चित्तवासनायाः शान्तौ सत्यां अक्षता जगतः शान्तिः । कैवल्यमित्यर्थः ॥ ४१ ॥ अहन्तायामिति ॥ यो नरः अहन्तादिषु सास्थः परमार्थबुद्धियुक्तः तं हतनरं

जीवं विवेकिनमिहोपदिशन्ति तज्ज्ञा
नो बालमुद्भ्रमसन्मयमार्यमुक्तम् ।
अज्ञं प्रशास्ति किल यः कनकावदातां
स स्वप्नदृष्टपुरुषाय सुतां ददाति ॥ ४३ ॥

ईश्वर उवाच ॥

यथा पृष्टं मुने प्रोक्तं त्वयि कल्याणमस्तु ते ।
देशं प्रयामोऽभिमतमागच्छोत्तिष्ठ पार्वति ॥ ४४ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा नीलकण्ठोऽसौ त्यक्तपुष्पाञ्जलौ मयि ।
ततार परिवारेण सममम्बरकोटरम् ॥ ४५ ॥
ततः प्रभृति तेनैव क्रमेणार्चनमात्मनः ।
अद्ययावद्गतव्यग्रः कुर्वन्नहमवस्थितः ॥ ४६ ॥
अनेनार्चाविधानेन मयेमा राम वासनाः ।
अखिन्नेनेव वाह्यन्ते व्यवहारपरा अपि ॥ ४७ ॥
यथा प्राप्तक्रियाचारकुसुमैरात्मनोऽर्चनम् ।
व्युच्छिन्नमव्युच्छिन्नं मे न कदाचिदहर्निशम् ॥ ४८ ॥

धिक् । असाविह ब्रह्मविद्यायां नोपदेशार्हः ॥ ४२ ॥ जीवमिति ॥ इह तज्ज्ञाः ब्रह्मविदः विवेकिनमधिकारिणमेवमुपदिशन्ति बोधयन्ति । उद्भ्रमं उद्भूतविपरीतज्ञानम् । अतएवार्यैः सभ्यैः अन्यैर्मुक्तं परित्यक्तं असन्मयं अविद्यमानकल्पं बालं मूर्खं नोपदिशन्ति । यस्माद्धेतोरयोग्यमीदृशं प्रशास्ति स गुरुः स्वप्नदृष्टपुरुषाय कन्यकाप्रदानमिव व्यर्थमित्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ अनेनेति ॥ इमाः संसारवासनाः अखिन्नेनेव विक्षेपरहितेनेव मया अतिवाह्यन्ते नीयन्ते ॥ ४७ ॥ यथेति ॥ यथा प्राप्तक्रिया-

ग्राह्यग्राहकसंबन्धः सामान्यः सर्वजन्तुषु ।
योगिनः सावधानत्वं यत्तदर्चनमात्मनः ॥ ४९ ॥
दृष्ट्यानया रघुपते सङ्गमुक्तेन चेतसा ।
संसारविरलारण्ये विहरास्मिन्न खिद्यसे ॥ १५० ॥

राम उवाच ॥

इदानीं संशयो ब्रह्मन्विनिवृत्तो विशेषतः ।
ज्ञातं ज्ञातव्यमखिलं जाता तृप्तिरकृत्रिमा ॥ ५१ ॥
परामभेद्यामपरैर्दलिताशामतङ्गजाम् ।
संसारसमरे सम्यग्धीरतामागतं मनः ॥ ५२ ॥
परिगलितविकल्पनामुपेतं
प्रशमितवाञ्छमदीनसारसत्वम् ।

णामाचारानुष्ठानानि तैरेव कुसुमैरात्मार्चनं विच्छिन्नमपि लौकिकदृष्ट्या विच्छिन्नतया प्रतीयमानमपि मे निरन्तरानुसंधानवतः अहर्निशं कदाचिदपि न व्युच्छिन्नं भवति ॥ ४८ ॥ नन्वेतादृशमेवात्मार्चनं सर्वसुलभमेवेत्याशङ्क्य योगिनो विशेषमाह—ग्राह्येति ॥ सर्वेषामपि देहिनां ग्राह्यग्राहकसंबन्धः सामान्य एव तथापि पामरा बहिर्मुखतया बुभुक्षापिपासादिभिः पीडिता विचित्रमन्नपानादिकं भोक्ष्यामहे पास्याम इति व्याकुला भवन्ति । योगी तु पूर्वोक्तप्रकारेणात्मैव देवता इयं च विचित्रा भोगसंपदस्यैव पूजेति सावधानो वर्तत इति विशेषः । तस्मादनुसंधानमेव पूर्वोक्तमात्मार्चनमित्यर्थः ॥ ४९ ॥ १५० ॥ ५१ ॥ परामिति ॥ दलिताशामतङ्गजां विदलितदिग्गजां निवर्तितमनोरूपमतङ्गजामिति च ॥ ५२ ॥ परीति ॥ मे मनः विकल्परहितं गलितवाञ्छम् । अदीनं दैन्यरहितं अतएव

त्रिजगति यदतिप्रसन्नरूपं
प्रमुदितमन्तरनुत्तमं मनो मे ॥ १५३ ॥
इति श्रीयोगवासिष्ठसारे मोक्षोपाये निर्वाणप्रकरणे देवपूजोपाख्यानं नाम द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः

राम उवाच ॥

तव वाक्यसुधासेकैर्न तृप्तिरुपजायते ।
भूयः कथय मे ब्रह्मन्कांचित्तत्त्वमयीं कथाम् ॥ १ ॥

वसिष्ठ उवाच ॥

यथा प्राप्तिक्षणे वस्तु प्रथमं तुष्टये तथा ।
न प्राप्त्येकक्षणादूर्ध्वमिति को नानुभूतवान् ॥ २ ॥
वाञ्छाकाले यथा वस्तु तुष्टये नान्यदा तदा ।
तस्मात्क्षणसुखे सक्तिं बालो बध्नाति नेतरः ॥ ३ ॥

सारसत्वं उत्कृष्टज्ञानम् । प्रसन्नरूपं प्रमुदितं च सदनुत्तमं सर्वोत्तमं वर्तत इत्यन्वयः ॥ १५३ ॥ इति संसारतरणिनाम्नि वासिष्ठविवरणे निर्वाणप्रकरणे देवपूजोपाख्यानं नाम द्वितीयः सर्गः ॥ २ ॥

पूर्वमपूर्वेण देवपूजाविधानेन चित्तस्यान्तर्मुखतया निर्वाणमित्युक्तम् । इदानीमद्वितीयं ब्रह्मैवान्तर्भावितसर्वार्थं व्याप्य स्थितमित्यत्र बिल्वफलं निदर्शयन्नाख्यानान्तरमारभते ॥ तत्र चित्तसमाधये प्रकारान्तरेण बोधयितुमुपक्रमते ॥ १ ॥ यथेति ॥ वाञ्छितं वस्तु प्रथमं प्राप्तिक्षणे यथा तुष्टये भवति तथा प्राप्त्येकक्षणात्प्राप्तिसंबन्धिन एकस्मात्क्षणादूर्ध्वं तुष्टये न भवतीति को नानुभूतवान् । अयमर्थः सर्वैरेवानुभूयत इत्यर्थः ॥ २ ॥ तस्मादस्मिन्क्षणसुखे

वाञ्छाक्षणे तु या तुष्टिस्तत्र वाञ्छैव कारणम् ।
तुष्टिस्त्वतुष्टिपर्यन्ता तस्माद्वाञ्छां परित्यज ॥ ४ ॥
आशा यातु निराशत्वमभावं यातु भावना ।
अमनस्त्वं मनो यातु तवासङ्गेन जीवतः ॥ ५ ॥
वासनारहितैरन्तरिन्द्रियैराहरन्क्रियाम् ।
न विक्रियामवाप्नोषि खवत्क्षोभशतैरपि ॥ ६ ॥
चित्तोन्मेषनिमेषाभ्यां संसारप्रलयोदयौ ।
वासनाप्राणसंरोधादनिमेषं मनः कुरु ॥ ७ ॥

बाल एवासक्तिं बध्नाति नेतरः प्रेक्षावान् ॥ ३ ॥ तदपि क्षणसुखं कल्पितमेव न वास्तवमित्याह—वाञ्छेति ॥ वाञ्छाक्षणे तु या तुष्टिरुत्पद्यते तत्र तस्यां तुष्टौ वाञ्छैव कारणम् । वाञ्छान्वयव्यतिरेकानुविधायित्वात्तुष्टेः सा कल्पितापि तुष्टिरतुष्टिपर्यन्ता अतुष्टौ पर्यवस्यति । तस्मादनर्थपर्यवसितां क्षणसुखहेतुं वाञ्छां परित्यज ॥ ४ ॥ आशेति ॥ अतश्च असङ्गेन विषयेष्वनास्थया जीवतो व्यवहारवतस्तव आशा भविष्यदिष्टवस्तुवाञ्छा निराशत्वं निरुद्यमत्वं यातु । भावना विषयवासना च अभावं यातु । मनश्च निर्वासनं सत् अमनस्त्वं निर्विकल्पतां यातु ॥ ५ ॥ वासनेति ॥ अतश्च त्वं वासनारहितैरिन्द्रियैश्चक्षुरादिभिः क्रियासाहरन् अनुतिष्ठन्नप्यन्तरन्तःकरणे विकारं नाप्नोषि । क्षोभशतैर्वातवर्षादिभिः विक्षोभशतैरपि खमाकाशं यथा विकारं नावाप्नोति तद्वत् ॥ ६ ॥ चित्तेति ॥ चित्तस्योन्मेषनिमेषाभ्यामाविर्भावतिरोभावाभ्यामेव संसारप्रलयोदयौ भवतः तस्मात्तदेव मनोवासनासंरोधात्प्राणसंरोधाद्वा पूर्वोक्तादनि-

प्राणोन्मेषनिमेषाभ्यां संसृतेः प्रलयोदयौ ।
तमभ्यासप्रयोगाभ्यामुन्मेषरहितं कुरु ॥ ८ ॥
मौर्ख्योन्मेषनिमेषाभ्यां कर्मणां प्रलयोदयौ ।
तद्विलीनं कुरु बलाद्गुरुशास्त्रार्थसंयमैः ॥ ९ ॥
असंवित्स्पन्दमात्रेण याति चित्तमचित्तताम् ।
प्राणानां वा निरोधेन तदेव परमं पदम् ॥ १० ॥
दृश्यदर्शनसंबन्धे यत्सुखं पारमार्थिकम् ।
तदन्तैकान्तसंवित्त्या ब्रह्मदृष्ट्या मनःक्षयः ॥ ११ ॥

मेषं विलीनं कुरु ॥ ७ ॥ प्राणेति ॥ प्राणस्पन्दस्यापि चित्तस्फुरण-हेतुत्वात्संसृतिहेतुत्वमतस्तमपि प्राणमभ्यासप्रयोगाभ्यां पवननि-रोधाभ्यासात् प्रकृष्टोद्योगात् मनोनिरोधाद्वाऽनिमेषमस्पन्दं कुरु । मनश्च बध्यते येन पवनस्तेन बध्यत इति मनोनिरोधस्यापि प्राण-निरोधहेतुत्वात् ॥ ८ ॥ मौर्ख्येति ॥ मौर्ख्यमज्ञानं तदपि कर्मद्वारा संसारहेतुः । तथाहि । अज्ञानादन्यथाज्ञानं तस्माद्रागद्वेषौ ताभ्यां पुण्यापुण्यरूपा प्रवृत्तिः ततो जन्मादिदुःखमयः संसार इति । तन्मौर्ख्यं गुरुशास्त्रार्थसंयमैः । गुरूपदेशात् शास्त्रार्थानुसंधानात्संय-माच्च बलात्पुरुषप्रयत्नाद्विलीनं प्रनष्टं कुरु ॥ ९ ॥ असंविदिति ॥ चित्तं कर्तृ असंवित्स्पन्दमात्रेण संविदः स्पन्दो बहिर्मुखतया स्फूर्ति-स्तदभावोऽसंवित्स्पन्दः तन्मात्रेण वा प्राणनिरोधेन वा अचित्ततां निर्विकल्पत्वं याति तदेवोचिततत्वमेव परं पदं मुक्तिः ॥ १० ॥ दृश्येति ॥ दृश्यदर्शनसंबन्धे अभिमतविषयाणां इन्द्रियैः संबन्धे सति यत्पारमार्थिकं परमार्थभूतं स्वात्मनि संभूतं सुखमाविर्भवति तदन्तैकान्तसंवित्त्या । अन्तशब्दः स्वरूपवाची तस्य पारमार्थिकसु-

यत्र नाभ्युदितं चित्तं तद्वै सुखमनुत्तमम् ।
क्षयातिशयनिर्मुक्तं नोदेति न च शाम्यति ॥ १२ ॥
ज्ञस्य चित्तं न चित्ताख्यं ज्ञचित्तं सत्यमुच्यते ।
नानार्थान्यत्वभाक्चित्तं बोधात्ताम्रं सुवर्णवत् ॥ १३ ॥
चित्तं चित्तत्वमायाति किंचित्कालं जगत्स्थितौ ।
विहृत्य तुर्यावस्थायां तुर्यातीतं भवत्युत ॥ १४ ॥

स्वस्यान्तःस्वरूपं तस्यैव एकान्तसंवित्त्या निरन्तरानुसंधानेन । ब्रह्मसंवित्त्या स्वरूपसुखसंवित्तिरेव ब्रह्मदृष्टिरित्यर्थः। 'अयमात्मा ब्रह्मे' ति श्रुतेः । तथा ब्रह्मदृष्ट्या मनसः क्षयो लयः स्यात् ॥ ११ ॥ चित्तलये सति तदेव स्वरूपसुखं कैवल्यसुखं संपद्यत इत्याह—यत्रेति ॥ यत्र यस्मिन्सुखे चित्तं नाभ्युदितं चित्तवृत्तयः संकल्पविकल्पादयो नोद्यन्ति तदेवाकृत्रिमं सुखं निजानन्दः । कैवल्यसुखमिति यावत् । तच्च क्षयातिशयनिर्मुक्तं नित्यं निरतिशयं चेति कृत्वा नोदेति न च शाम्यति ॥ १२ ॥ ननु ज्ञानिनश्चित्तलयाभावात् कथं जीवतो मुक्तिरित्यत्राह—ज्ञस्येति ॥ ज्ञस्य चित्तं न चित्ताख्यं चित्तमिति नाख्यायते किंतर्हि ज्ञचित्तं सत्यमुच्यते ब्रह्मैवेत्यर्थः । यस्मात्कारणान्नानार्थान्यत्वभाक् नानारूपैः कामसंकल्पादिभिरर्थैरन्यत्वभाक् ब्रह्मणः सकाशाद्भेदभागेव चित्तं चित्तशब्दार्थः । ज्ञस्य तु चित्तं बोधात् परिपूर्णब्रह्मबोधात् तदभिन्नं सत् संपद्यते । यथा ताम्रं युक्तिवशात्सुवर्णभावमापद्यते तद्वत् ॥ १३ ॥ चित्तमित्ति ॥ चित्तं कर्तृ जगत्स्थितौ किंचित्कालं विहृत्य तुर्यावस्थायां श्रवणमननादिक्रमात् समाध्यवस्थायां सिद्धायां चित्तत्त्वं चित्स्वरूपमायाति । अतः परं तुर्यातीतं भवति । जाग्रदादित्रये सति तदपेक्षया समाध्यवस्थायां

ब्रह्मैव भूरिभुवनभ्रमविभ्रमोच्चै-
रित्थं स्थितं सममनेकतयैकमेव ।
सर्वात्मकं भवति नेतरदङ्ग किंचि-
च्चित्तादिकं च न हृदीव हि संनिवेशः ॥ १५ ॥

वसिष्ठ उवाच ॥

अत्रेमामवबोधाय विस्रयोल्लासशालिनीम् ।
अपूर्वां चैव संक्षेपाद्राम रम्यां कथां शृणु ॥ १६ ॥
योजनानां सहस्राणि विपुलं विमलं स्फुटम् ।
युगैरप्यजरद्रूपमस्ति बिल्वफलं महत् ॥ १७ ॥
पुराणमपि बालेन्दुदलमार्दवसुन्दरम् ।
महाकल्पान्तवात्याया अपि वेगैरचालितम् ॥ १८ ॥
योजनायुतकोटीनां कोटिलक्षशतैरपि ।
वैपुल्येनापरिच्छेद्यं मूलमाद्यं जगत्स्थितेः ॥ १९ ॥

तुर्यत्वं सर्वदा समाधौ जाग्रदाद्यभावात्तुर्यत्वमपि नास्तीत्यर्थः ॥ १४ ॥ ब्रह्मेति ॥ सर्वात्मक ब्रह्मैकमेव भूरिभुवनभ्रमविभ्रमोच्चैर्भूरिभुवनभ्रान्तिविलासपरम्पराभिः इत्थं वियदादिप्रकारेणानेकतया समं युगपदेव स्थितम् । इतरच्चित्तादिकं किंचिदत्र नास्ति । संनिवेशः संस्थानं च व्योमादीनां प्रतीयमानं नास्ति । ननु प्रतीतस्य मिथ्यात्वं क्व दृष्टमित्यत्राह—हृदीवेति । यथा स्वप्नदशायां हृदि चित्ते प्रतीयमानं वस्तु तत्संनिवेशश्च नास्ति तद्वत् ॥ १५ ॥ १६ ॥ योजनानामिति श्लोकत्रयं वाक्यम् ॥ चिद्घनमन्तर्गतसर्वार्थं च ब्रह्मैवापूर्वबिल्वफलत्वेन निरूप्यते । अजरद्रूपं ब्रह्मणो जरादिविकाररहितत्वात् ॥ १७ ॥ पुराणमपि बालेन्दुशकलवन्मार्दवेन सुन्दरं आनन्दमयत्वात् । अचालितं निष्कर्मत्वात् ॥ १८ ॥ वैपुल्येनापरिच्छेद्यं अनन्तत्वात् । जगत्स्थितेराद्यं

तस्य बिल्वफलस्योच्चैर्ब्रह्माण्डानि समीपतः ।
हरन्ति लीलां शैलाधोराजिकाकणपद्धतेः ॥ २० ॥
न कदाचन पाकेन पातान्तेन समेति तत् ।
सदैव पक्वमप्यङ्ग जरसा यन्न बाध्यते ॥ २१ ॥
समस्तफलसारस्य फलस्यास्य महाकृतेः ।
अन्तर्मज्जत्वमायाति संविच्छक्तिचमत्कृतिः ॥ २२ ॥
संविच्छक्त्या तया तत्र ततस्तरलरूपया ।
निज एव समे रूपे दृगित्थं संप्रसारिता ॥ २३ ॥
इदं व्योम महानन्तमियं कालमयी कला ।
इयं नियतिरुद्युक्ता क्रियेयं स्पन्दरूपिणी ॥ २४ ॥

मूलं उपादानत्वात् । इत्थंभूतं महद्बिल्वफलमस्ति ॥१९॥ तस्येति ॥ तस्य बिल्वफलस्य समीपतः उच्चैर्ब्रह्माण्डान्यपि शैलाधः स्थितानां राजिकाकणानां पद्धतेर्लीलां हरन्ति किं वर्ण्यते तन्महत्त्वमित्यर्थः । राजिका कृष्णसर्षपः ॥ २० ॥ नेति ॥ तत्फलं कदाचन पातपर्यन्तेन पाकेन न समेति न संयुज्यते नित्यत्वात् ॥ २१ ॥ समस्तेति ॥ समस्तफलसारस्य परमपुरुषार्थरूपत्वात् । अस्य प्रकृतस्य संविच्छक्तिचमत्कृतिः चिच्छक्तिस्फूर्तिरेव अन्तर्मज्जत्वं अन्तःस्थितसारत्वमायाति ब्रह्मणः संवित्सारत्वात् ॥ २२ ॥ संविदिति ॥ ततः बिल्वफलस्यानन्ततया तरलरूपया बहुविधपरिणामतया स्फुरद्रूपया संविच्छक्त्या समे निज एव रूपे । इत्थं वक्ष्यमाणप्रकारेण दृक् सिसृक्षापूर्विका दृष्टिः संप्रसारिता प्रवर्तिता ॥ २३ ॥ तमेव प्रकारमाह—इदमिति द्वाभ्याम् ॥ उद्युक्ता जगन्ति नियन्तुमुद्यता नियतिरियं स्पन्दरूपिणी चलनस्वभावा क्रियारूपा शक्तिरियम् । निजमज्जाचमत्कृतिः निजायाः संविच्छक्तेः स्फूर्तिः । सर्वस्यापि प्रपञ्चस्य

ब्रह्माण्डमण्डपमिदमिमा आशाः क्रमो ह्ययम् ।
इति सा तस्य बिल्वस्य निजमज्जाचमत्कृतिः ॥ २५ ॥

राम उवाच ॥

भगवन्सर्वसारज्ञ त्वयैषा बिल्वरूपिणी ।
महाचिद्धनसत्तेह कथितेति मतिर्मम ॥ २६ ॥
चिन्मज्जारूपमखिलमहन्तादीदमाततम् ।
न मनागपि भेदोऽस्ति द्वैतैक्यकलनात्मकः ॥ २७ ॥
यथा ब्रह्माण्डकूष्माण्डमज्जामेर्वादिसंस्थितिः ।
तथा चिद्बिल्वमज्जेयं ब्रह्माण्डादिजगत्स्थितिः ॥ २८ ॥

इति श्रीनिर्वाणप्रकरणे बिल्वोपाख्यानं नाम तृतीयः सर्गः ॥ ३ ॥

---

## चतुर्थः सर्गः

वसिष्ठ उवाच ॥

अथेमामिन्दुवदन चित्रां विस्मयकारिणीम् ।
वर्ण्यमानां मया रम्यामन्यामाख्यायिकां शृणु ॥ १ ॥

संविद्विलासरूपत्वात् ॥ २४ ॥ २५ ॥ भगवन्निति ॥ महाचिद्धनसत्ता महती चिद्धनस्य ब्रह्मणः सत्ता ॥ २६ ॥ चिदिति ॥ अहन्तादि अहंकारप्रकृतिमहदादिभिराततं विस्तीर्णमिदमखिलं जगच्चिन्मज्जारूपम् । अतश्च मनागपि तद्द्वैतैक्यकलनात्मको भेदाभेदविचाररूपो भेदो भेददृष्टिर्नास्ति ॥ २७ ॥ २८ ॥ इति श्रीवासिष्ठविवरणे निर्वाणप्रकरणे बिल्वोपाख्यानं नाम तृतीयः सर्गः ॥ ३ ॥

पूर्वमन्तर्भावितसर्वार्थमद्वितीयमेव चैतन्यं बिल्वफलत्वेन निरूपितम् । इदानीं तु विचित्रजगच्चित्रतापि अखण्डैकरसा निर्विकल्पा घनीभूता सैव चिन्महाशिलात्वेन निरूप्यते—अथेत्यादिना ॥

स्निग्धा स्पष्टा मृदुस्पर्शा महाविस्तारशालिनी ।
निबिडा नित्यनीरन्ध्रा क्वचिदस्ति महाशिला ॥ २ ॥
तस्यामन्तः प्रफुल्लानि पद्मानि सुबहून्यपि ।
सरस्यामिव रम्याणि सन्त्यनन्तानि राघव ॥ ३ ॥
अन्योन्यप्रोतपत्राणि मिथो विघटितानि च ।
मिथश्चोपरि रूढानि गूढानि प्रकटानि च ।
ऊर्ध्वमूलान्यधोमूलान्यमूलानीतराणि च ॥ ४ ॥

चित्रामश्रुतपूर्वां अतश्च विस्मयकारिणीम् ॥ १ ॥ स्निग्धेति ॥ स्निग्धा चित्तप्रेमास्पदत्वात् । स्पष्टा स्वयमेव प्रकाशमानत्वात् । मृदुस्पर्शा सुखहेतुत्वात् । महाविस्तारशालिनी निरवधित्वात् । निबिडा संततत्वात् । नित्यनीरन्ध्रा विजातीयवस्त्वमिश्रितत्वात् । इत्थंभूता महाशिला क्वचिदस्ति । स्वव्यतिरिक्तस्याधारस्य निरूपयितुमशक्यत्वात्क्वचिदित्युक्तम् । 'स भगवान् कस्मिन्प्रतिष्ठित इति । स्वे महिम्नि' इति श्रुतेः ॥ २ ॥ तस्यामिति सार्धश्लोकद्वयं वाक्यम् । अत्र पद्मानीत्यनेन भुवनादिविवक्षितानि संकोचविकासयोगित्वात् जीवभ्रमराश्रयत्वाच्च ॥ ३ ॥ तानि कानिचिदन्योन्यप्रोतपत्राणि परस्परसंबन्धवन्ति । कानिचित्तु मिथो विघटितानि संबन्धरहितानि । तेषां च मध्ये कानिचिदूर्ध्वमूलानि अमरादिभुवनानामुपरिस्थितध्रुवमण्डलाश्रयत्वात् । कानिचिदधोमूलानि पातालानां भूलोकस्य बाह्यस्थितकूर्माश्रयत्वात् । कानिचिदमूलानि शिवविष्णुलोकादीनां नित्यत्वात् । इतराणि चेत्यनेन तिर्यङ्मूलान्युच्यन्ते । तिर्यग्गमनस्वभावेन वायुनैव केषांचिद्भुवनानामवष्टब्धत्वात् । इत्थंभूतानि पद्मानि तस्यां शिलायामन्तः सन्तीत्यन्वयः ॥ ४ ॥

तेषां च निकटे सन्ति शङ्खाः शतसहस्रशः ।
चक्रौघाश्च महाकाराः पद्मवत्संनिवेशिनः ॥ ५ ॥

राम उवाच ॥

सत्यमेतन्मया दृष्टा तादृशी सा महाशिला ।
शालग्रामे हरेर्मूर्ध्नि विद्यते तादृशी शिला ॥ ६ ॥

वसिष्ठ उवाच ॥

चिच्छिलैषा मयोक्ता ते यस्यामन्तर्जगत्स्थितिः ।
घनत्वैकात्मकत्वादिवशादेषा शिलैव चित् ॥ ७ ॥
अप्यत्यन्तघनाङ्गायाः सुनीरन्ध्राकृतेरपि ।
विद्यतेऽन्तर्जगद्वृन्दं व्योम्नीव विपुलोऽनिलः ॥ ८ ॥
द्यौः क्ष्मा वायुराकाशः पर्वताः सरितो दिशः ।
सन्ति तस्यां शिला सा च सुषिरा न मनागपि ॥ ९ ॥

तेषामिति ॥ तेषां च पद्मानां निकटे शतसहस्रशः शङ्खाः सन्ति । शङ्खशब्देन नक्षत्रग्रहतारारूपाणि ज्योतिर्मण्डलान्युच्यन्ते । समुद्रवन्नीले नभसि शङ्खसङ्घवद्भासमानत्वात् । चक्रशब्देन मण्डलाकाराणि द्वीपानि । तेषां चक्रधारावदाभासमानैः समुद्रैरुपलक्षितत्वात् ॥ ५ ॥ ६ ॥ चिदिति ॥ घनत्वैकात्मकत्वादिवशात् घनत्वं निबिडत्वम् । एकात्मकत्वमेकरूपत्वम् । आदिशब्दाद्विभुत्वादीनि । तद्वशात्तत्सामर्थ्यादेषा चित्तशिलैव तत्सदृशत्वात् ॥ ७ ॥ अपीति ॥ घनाया नीरन्ध्राया अपि तस्याः शिलाया अन्तः जगद्वृन्दं विद्यते । जगद्वृन्दस्य तदभिन्नत्वेन घनत्वनीरन्ध्रत्वयोर्विरोधाभावात् ॥ ८ ॥ द्यौरिति ॥ सा च मनागपि सुषिरा सरन्ध्रा न भवति । द्युप्रभृतीनां

शङ्खपद्मादिकं लोकं पाषाणे लिप्यते तथा ।
भूतं भवद्भविष्यच्च चिच्छिला शालभञ्जिका ॥ १० ॥
उपलोऽन्तःसंनिवेशो नानात्माप्येकपिण्डताम् ।
तथा चिद्विश्वगर्भाऽपि न मुञ्चत्येकपिण्डताम् ॥ ११ ॥
यथा पद्मः शिलाकोशादभिन्नस्तद्वपुर्मयः ।
तथा सर्गश्चितो रूपादभिन्नः सर्वदैव हि ॥ १२ ॥
शिलान्तः पद्मलेखाली मरीचान्तश्चमत्कृतिः ।
नोदेति नास्तमायाति यथा सर्गस्तथा चितौ ॥ १३ ॥
यथा पुरन्ध्र्यां मर्त्योऽन्तर्मज्जा वा बिल्वगा यथा ।
तथानन्तविकाराढ्या चितौ ब्रह्माण्डमण्डली ॥ १४ ॥

तदभिन्नत्वात् ॥ ९ ॥ शङ्खेति ॥ शङ्खपद्मादिलेखनेऽपि पाषाणः यथा न किंचिद्भिद्यते तथा भूतभवद्भविष्यद्रूपापि चिच्छिलामयी शालभञ्जिका । बहुविधचित्रविचित्रिता प्रकृतिरेव न भिद्यत इत्यर्थः ॥ १० ॥ उपल इति ॥ यथा अन्तःसंनिवेशः अन्तःस्थितः शङ्खपद्मादिसंनिवेश उपलो नानात्मकतया प्रतीयमानोऽपि वस्तुतः एकपिण्डकस्तथा चिद्विश्वगर्भापि जगद्गर्भगतापि एकपिण्डतां न मुञ्चति ॥ ११ ॥ यथेति ॥ शिलायां कल्पितः पद्मः तद्वपुर्मयः शिलामयत्वाच्छिलाकोशाद्यथा अभिन्नः तथा चिति कल्पितः सर्गोऽपि चिद्रूपादभिन्नः ॥ १२ ॥ शिलेति ॥ शिलायां कल्पिता पद्मलेखाली । मरीचान्तश्चमत्कृतिर्मरीचस्यान्तः स्थिता चमत्कारहेतुः कटुरसस्फूर्तिश्च यथा नोदेति स्वाभाविकत्वात् । नास्तमायाति यावद्द्रव्यमविनाशात् तथा चितौ सर्गस्थितिः ॥ १३ ॥ यथेति ॥ पुरन्ध्र्यां गुर्विण्यां मर्त्यो गर्भरूपो यथान्तर्वर्तते । मज्जा सारभू-

सुषुप्तावस्थया चक्रपद्मलेखाः शिलोदरे ।
यथा स्थिताश्चितेरन्तः स्थितेयं जगदावली ॥ १५ ॥
यथा यत्र यदाकारं तथा तत्र तदेव हि ।
ब्रह्म सर्वात्मकं सर्वं सुषुप्तस्थमिव स्थितम् ॥ १६ ॥
भूरिभावविकाराढ्यो योऽयं जगदुरुभ्रमः ।
सुषुप्तमेव तद्विद्धि शिलान्तः पङ्कजादिवत् ॥ १७ ॥
नित्यं सुषुप्तपदमेव जगद्विलासः
सम्यक्प्रशान्तसमचिद्धन आत्मनीदृक् ।
पद्मं शिलान्त इव सर्गदशास्त्वसारा
दृष्टा न देहमुपयान्ति कदाचिदेव ॥ १८ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे शिलोपाख्यानं
नाम चतुर्थः सर्गः ॥ ४ ॥

---

तोंऽशो यथा बिल्बगर्भ बिल्बफलान्तर्गता वर्तते तथैव अनन्तविका-राढ्या ब्रह्माण्डमण्डली चितावन्तर्वर्तते ॥ १४ ॥ सुषुप्तेति ॥ चक्र-पद्मरूपा लेखाः शिलोदरे यथा सुषुप्तावस्थया सुषुप्तवन्निश्चलावस्थया स्थिताः ॥ १५ ॥ यथेति ॥ सर्वात्मकं ब्रह्म यत्र यस्मिन् देशे यदाकारं यद्रूपं यत् यथा प्रवर्तते तत्र तदेव वस्तु तथा तेनैव प्रकारेणोपलक्षितं भवति । अतः सर्वं ब्रह्मैव सुषुप्तस्थमिव सुषुप्तावस्थापन्नमिव निर्वि-कारं स्थितम् । ब्रह्मणः सर्वात्मकत्वात् सत्यसंकल्पत्वाच्च स्वसंक-ल्पानुसारेण नानारूपतयावस्थानं युक्तमिति भावः ॥ १६ ॥ भूरीति ॥ भूरिभिर्भावविकारैः जन्मादिभिराढ्यो योऽयं जगद्रूपः उरुभ्रमस्तच्छिलान्तः पङ्कजादिवत्सुषुप्तं ब्रह्मैव विद्धि ॥ १७ ॥ नित्यमिति ॥ प्रशान्ते समे चिद्धने चात्मनि ईदृक्प्रतीयमानो जग-

## पञ्चमः सर्गः

राम उवाच ॥

ज्ञातं ज्ञातव्यमखिलं दृष्टं द्रष्टव्यमक्षतम् ।
लीलयेदं तु पृच्छामि भूयो बोधाभिवृद्धये ॥ १ ॥
जगत्सहस्रनिर्माणमहिम्नो दर्पणस्य तु ।
पुर्यष्टकस्य भगवन् रूपं कथय कीदृशम् ॥ २ ॥

वसिष्ठ उवाच ॥

अनाद्यन्तं जगद्बीजं यद्ब्रह्मास्ति निरामयम् ।
तदेव कलनायुक्तमत्र जीव इति स्मृतः ॥ ३ ॥
नृरूपं शुद्धचिन्मात्रं कलाकलनवर्जितम् ।
कलनोन्मुखतां यातमत्र जीव इति स्मृतः ॥ ४ ॥

द्विलासः शिलान्तःपद्ममिव सुषुप्तपदमिव ब्रह्मणः सुषुप्तावस्थयाव-स्थानमेव । दृष्टास्तु सर्गदशाः सर्गाद्यवस्थाः असारा निःप्रमाणाः । अतः कदाचिदेव देहं वास्तवं स्वरूपं नोपयान्ति ॥ १८ ॥ इति श्रीवासिष्ठविवरणे शिलोपाख्यानं नाम चतुर्थः सर्गः ॥ ४ ॥

पूर्वं विचित्राप्यखण्डैकरसा चिच्छिलात्वेन निरूपिता । इदानीं तु सर्वं ब्रह्मेति विवेकिनो युद्धादिरपि चित्तविश्रान्तिबाधको न भवतीति दर्शयितुं अर्जुनाख्यायिका वर्ण्यते ॥ १ ॥ जगदिति ॥ जगतां सहस्रस्य निर्माणं महिमा यस्य तस्य दर्पणवन्निर्मलस्य पुर्यष्टकस्य रूपं कीदृशं तत्कथय ॥ २ ॥ अनाद्यन्तमिति श्लोकत्रयं वाक्यम् ॥ जगद्बीजं ब्रह्मैव कलनायुक्तमविद्यायुक्तं सत् जीव इति स्मृतः ॥३॥ नुर्जीवस्य वस्तुतः कला माया तस्याः कलनं ग्रासः तेन वर्जितम् । यदा स्वयमेवाऽविद्योन्मुखतां यातं गतम् । अत्र चिन्मात्रात्मस्वरूपवि-

स जीवः खलु देहेऽस्मिंश्चिनोति स्पन्दते स्फुटम् ।
अहंभावादहंकारो मननान्मन उच्यते ॥ ५ ॥
बोधनिश्चयतो बुद्धिरिन्द्रदृष्टेस्तथेन्द्रियम् ।
देहभावनया देहो घटभावनया घटः ।
एष एव स्वभावात्मा जनैः पुर्यष्टकं स्मृतः ॥ ६ ॥
ज्ञत्वकर्तृत्वभोक्तृत्वसाक्षित्वाद्यभिपातिनी ।
या संविज्जीव इत्युक्ता तद्धि पुर्यष्टकं विदुः ॥ ७ ॥
पुर्यष्टकवशेनैव स्वप्नात्स्वप्नान्तरं यथा ।
असत्यमेव पश्यन्ति जनास्तद्वदिदं जगत् ॥ ८ ॥

स्मरणे ज्ञाते अहंभावादहमित्यभिमानादहंकारः स्मृतः । मननात्संकल्पादिरूपान्मन उच्यते ॥ ४ ॥ ५ ॥ बोधस्य निश्चयरूपाद्व्यापाराद्बुद्धिरुच्यते । तथा इन्द्रदृष्टेः इन्द्र आत्मा तेन दृष्टत्वात्तत्तत्कर्मोपार्जितत्वादिन्द्रियमुच्यते । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टम्' इत्यादिना सूत्रेणेन्द्रियशब्दस्य इन्द्रदृष्टमित्यर्थे निपातितत्वात् । देहरूपभावनया देहो भवति । घटाकारभावनया घटो भवति । एवंस्वभावात्मा एवंप्रकारस्वभावस्वरूप एष एवात्मा तज्ज्ञैर्जनैः पुर्यष्टकमिति स्मृतः । तल्लक्षणं तु—'अहंकारकलायुक्तं बुद्धिजीवसमन्वितम् । तत्पुर्यष्टकमित्युक्तं भूतहृत्पद्मषट्पदः' इति पूर्वमुक्तम् ॥ ६ ॥ इदानीं प्रकारान्तरेण लक्षणमाह—ज्ञत्वेति ॥ ज्ञत्वकर्तृत्वभोक्तृत्वसाक्षित्वाद्यभिपातिनी ज्ञोऽहं कर्ताहं भोक्ताहं साक्ष्यहं इत्याद्यभिमानवती या संविज्जीव इत्युक्ता तदेव संवित्स्वरूपं पुर्यष्टकं विदुः । अन्तःकरणमणिप्रतिबिम्बिता कर्तृत्वभोक्तृत्वाद्यभिमानवती संविदेव जीवः पुर्यष्टकं चेत्यर्थः ॥ ७ ॥ पुर्यष्टकेति ॥ यथा जनाः पुर्यष्टकवशेनैव स्वप्ना-

पुण्डरीकाक्ष निर्दिष्टामसंसक्तिमतिं शुभाम् ।
यामालिङ्ग्य महाबाहो जीवन्मुक्तमना मुनिः ॥ ९ ॥
पाण्डोः सुतोऽर्जुनो नाम सुखं जीवितमात्मनः ।
क्षपयिष्यति निर्दुःखं तथा क्षपय जीवितम् ॥ १० ॥

राम उवाच ॥

भविष्यति कदा ब्रह्मन्सोऽर्जुनः पाण्डुनन्दनः ।
कीदृशीं च हरिस्तस्य कथयिष्यत्यसक्तताम् ॥ ११ ॥

वसिष्ठ उवाच ॥

यमः कदाचिद्भगवान्गते प्रतिचतुर्युगे ।
तपः प्रकुरुते भूतदलनात्पापशङ्कया ॥ १२ ॥
कदाचिदष्टौ वर्षाणि दश द्वादश वापि च ।
कदाचित्पञ्च सप्तापि कदाचित्षोडशापि वा ॥ १३ ॥
उदासीनवदासीने तस्मिन्नियमसंस्थिते ।
न हिनस्ति जगज्जाले मृत्युर्भूतानि कानिचित् ॥ १४ ॥
तेन नीरन्ध्रभूतौघं निःसंचारं महीतलम् ।
भवति प्रावृषि स्वेदी कुञ्जरो मशकैरिव ॥ १५ ॥

त्स्वप्नान्तरमसत्यमेव पश्यन्ति तद्वदिदं जगदपि पश्यन्ति ॥ ८ ॥ इत्थं स्वप्नवत्प्रपञ्चस्य मिथ्यात्वं विनिश्चित्यार्जुनवत्सङ्गेन व्यवहर्तव्यमिति तत्कथां प्रस्तौति—पुण्डरीकाक्षेत्यादिना ॥ ९ ॥ १० ॥ ११ ॥ यम इति श्लोकद्वयं वाक्यम् ॥ भगवान्यमः किल गतेषु चतुर्युगेषु कदाचिद्भूतद्रोहात्पापमाशङ्कमानस्तन्निवृत्तये तपश्चरन् ॥ १२ ॥ कदाचिदष्टौ वर्षाणि तपः कुरुते किल । कदाचिद्दश कदाचिद्द्वादश कदाचित्पञ्च कदाचित्सप्त कदाचित्षोडश वर्षाणि इत्येवं च बहुधा तपः कुरुते ॥ १३ ॥ १४ ॥ तेनेति ॥ तेन मृत्योर्हिंसायामप्रवृत्त्या

अथ तानि विचित्राणि भूतानि बहुयुक्तिभिः ।
क्षपयन्ति सुरा राम भुवो भारनिवृत्तये ॥ १६ ॥
एवं युगसहस्राणि व्यवहारशतानि च ।
समतीतान्यनन्तानि भूतानि च जगन्ति च ॥ १७ ॥
वैवस्वतो नाम यमो य एष पितृनायकः ।
अनेन त्वधुना साधो परिक्षीणेषु केषुचित् ॥ १८ ॥
युगेष्वघविघाताय वर्षाणि द्वादशात्मनि ।
व्रतचर्येह कर्तव्या दूरास्तजनकर्षणा ॥ १९ ॥
तेनेयमुर्वी नीरन्ध्रा भूतैर्मर्त्यैरमृत्युभिः ।
दीना प्रघनगुल्मैव भारभूतैर्भविष्यति ॥ २० ॥
भूभारपरिभूताङ्गी हरिं शरणमेष्यति ।
हरिर्देहद्वयेनाथ महानवतरिष्यति ॥ २१ ॥
वसुदेवसुतस्त्वेको वासुदेव इति श्रुतः ।
देहो भविष्यति हरेर्द्वितीयः पाण्डुनन्दनः ॥ २२ ॥
धृतराष्ट्रसुतैः सार्धं संग्रामेऽत्यन्तदारुणे ।
उपेष्यन्त्यर्जुनेनैते योद्धुं तद्बन्धवोऽखिलाः ॥ २३ ॥
अर्जुनः स्वजनान्दृष्ट्वा तान्सर्वान्मरणोन्मुखान् ।
विषादमेष्यत्युद्योगं युद्धाय न करिष्यति ॥ २४ ॥

हेतुना प्रावृषि मदवशात्स्वेदी कुञ्जरो मशकैरिव भूतलं नीरन्ध्रभूतौघं सत् निःसंचारं संचरितुमशक्यं भवति ॥ १५ ॥ १६ ॥ ॥ १७ ॥ १८ ॥ वैवस्वत इति श्लोकद्वयं वाक्यम् । विवस्वतः सूर्यस्य पुत्रेणापि यमेन तथैवाघविघाताय तथैव द्वादशवर्षाणि दूरास्तजनकर्षणा दूरपरिहृतजनमारणा व्रतचर्या तपश्चर्या कर्तव्या ॥ १९ ॥ तेनेति ॥ प्रघनगुल्मा प्रघना निरन्तरा गुल्माः स्तम्बा यस्यां सा

तमर्जुनाभिधं देहं प्राप्तकार्यैकसिद्धये ।
हरिर्बुद्धेन देहेन बोधयिष्यति युक्तिभिः ॥ २५ ॥

अनन्तमव्यक्तमनादिमध्य-
मात्मानमालोकय राजसिंह ।
संविद्वपुःस्फारमलब्धदोष-
मजोऽसि नित्योऽसि निरामयोऽसि ॥ २६ ॥

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २७ ॥

तथा ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ तमिति ॥ बुद्धेन देहेन बोधवता कृष्णावताररूपेण ॥ २५ ॥ अनन्तमिति ॥ राजसिंहेति शोकवैक्लव्यनिरासाय संबोधनम् । देहादिव्यतिरिक्तमनन्तादिलक्षणमात्मानमेवालोकय विचारय । यतस्त्वमजोऽसि अतएव नित्योऽसि निरामयोऽसि । तत्र संविद्वपुःस्फारमित्येकं पदम् । संविद्रूपेण वपुषा स्फारमभिवृद्धम् । व्याप्तमित्यर्थः ॥ २६ ॥ नेति ॥ अयं देहादिव्यतिरिक्त आत्मा कदाचिदपि न जायते न म्रियते वा । जननमरणयोर्देहधर्मत्वात् । अयमात्मा भूत्वा भवनक्रियामनुभूय भूयः पुनर्न भविता भवनक्रियारहितो न भवति । अयमात्मा न भूत्वा भवनरहितः पुनर्भविता वा न भवतीत्युभयथावापि योजनीयम् । यतोऽयं भूत्वा पुनर्घटादिवन्न भविता अतो न म्रियते । यतश्च पूर्वं न भूत्वा पुनः कालान्तरे भविता वा न भवति । अजो न जायत

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
ब्रह्मार्पितसमाचारो ब्रह्मैव भवसि क्षणात् ॥ २८ ॥
ईश्वरार्पितसर्वार्थ ईश्वरात्मा निरामयः ।
ईश्वरः सर्वभूतात्मा भव भूषितभूतलः ॥ २९ ॥
संन्यस्तसर्वसंकल्पः समः शान्तमना मुनिः ।
संन्यासयोगयुक्तात्मा कुर्वन्मुक्तमतिर्भव ॥ ३० ॥

अर्जुन उवाच ॥

सङ्गत्यागस्य भगवंस्तथा ब्रह्मार्पणस्य च ।
ईश्वरार्पणरूपस्य संन्यासस्य च सर्वशः ॥ ३१ ॥
तथा ज्ञानस्य योगस्य विभागः कीदृशः प्रभो ।
क्रमेण कथयैतन्मे महामोहनिवृत्तये ॥ ३२ ॥

इत्युक्तार्थोपपादनम् । इत्थमजो नित्यश्च नित्यशब्देन कादाचित्कसत्ता-रूपोऽपि विकारो निरस्यते । शाश्वतः अपक्षयरहितः । पुराणः वृद्धि-रहितः । नूतनं हि वस्तु वर्धते । अयमात्मा शरीरे हन्यमानेऽपि स्वयं न हन्यते न विपरिणम्यत इति षड्भावविकारराहित्यमुक्तम् ॥ २७ ॥ योगस्थ इति ॥ सिद्ध्यसिद्ध्योः समत्वं योगः तन्निष्ठः सन्सङ्ग ईश्वरो मे तुष्यत्वित्यपि फलाकाङ्क्षां त्यक्त्वा कर्माणि ईश्वरा-राधनार्थं कुरु । इत्थं ब्रह्मार्पितसमाचारः ब्रह्मार्पितसत्कर्मा त्वं ब्रह्मैव भवसि ॥ २८ ॥ ईश्वरार्पितसर्वार्थः ईश्वरार्पिताः सर्वे अर्थाः शुभाशुभरूपा येन तादृशः सन्नीश्वरात्मा ईश्वरे अर्पित आत्मा येन तथाभूतश्च निरामयः सर्वभूतात्मा भूषितभूतल ईश्वरो भव ॥२९॥ संन्यस्तेति ॥ संन्यासयोगयुक्तात्मा कर्मफलत्यागः संन्यासयोगः

श्रीभगवानुवाच ॥

सर्वसंकल्पसंशान्तौ प्रशान्तघनवासनम् ।
न किंचिद्भावनाकारं तद्ब्रह्म परमं विदुः ॥ ३३ ॥
तदुद्योगं विदुर्ज्ञानं योगं च कृतबुद्धयः ।
ब्रह्म सर्वं जगदहं चेति ब्रह्मार्पणं विदुः ॥ ३४ ॥
कर्मणां यः फलत्यागस्तं संन्यासं विदुर्बुधाः ।
त्यागः संकल्पजालानामसङ्ग इति कथ्यते ॥ ३५ ॥
समस्तकलनाजालस्येश्वरैकत्वभावनम् ।
गलितद्वैतनिर्भासमेतदेवेश्वरार्पणम् ॥ ३६ ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३७ ॥
सामान्यं परमं चेति द्वे रूपे विद्धि मेऽनघ ।
पाण्यादियुक्तं सामान्यं शङ्खचक्रगदाधरम् ॥ ३८ ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ सर्वेति ॥ सर्वेषां संकल्पानां संशान्तौ सत्यां प्रशान्तघनवासनं निर्वासनमतश्च न किंचिद्भावनाकारं न विद्यते किंचिदपि भावनायोग्यं रूपं यस्य तादृशं विशुद्धं चिन्मात्रं यदस्ति तदेव परं ब्रह्म विदुः ॥ ३३ ॥ तदिति ॥ तदर्थमुद्योगस्तदुद्योगस्तम् ॥ ३४ ॥ ३५ ॥ समस्तेति ॥ समस्तकलनाजालस्य सर्वस्यापि संकल्पविकल्पजालस्य गलितद्वैतनिर्भासं भेदावभासरहितं यथा तथा ईश्वरैकत्वभावनं ईश्वर एव सर्वान्तर्यामी तथा प्रवर्तयति तद्विलासोऽयं सर्वो व्यवहार इति यत्तन्मयत्वभावनं एतदेव सर्वव्यवहारस्य तन्निवेदनमेव ईश्वरार्पणम् ॥ ३६ ॥ मन्मना इति ॥ एवमनेन प्रकारेण आत्मानं चित्तं युक्त्वा मयि संयोज्य मत्परायणः सन्मामेवैष्यसि ॥ ३७ ॥ सामान्यमिति श्लोकचतुष्टयं वाक्यम् ॥ साकारं निराकारं च मे द्वे

परं रूपमनाद्यन्तं यन्ममैकमनामयम् ।
ब्रह्मात्मपरमात्मादिशब्दैनैतदुदीर्यते ॥ ३९ ॥
यावदप्रतिबुद्धस्त्वमनात्मज्ञतयास्थितः ।
तावच्चतुर्भुजाकारदेवपूजापरो भव ॥ ४० ॥
तत्क्रमात्संप्रबुद्धस्त्वं ततो ज्ञास्यसि तत्परम् ।
मम रूपमनाद्यन्तं येन भूयो न जायसे ॥ ४१ ॥

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ४२ ॥

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ ४३ ॥
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ।
यथाप्राप्तानुवर्ती च भव भूपितभूतलः ॥ ४४ ॥

रूपे तत्राप्रबुद्धदशायां शङ्खचक्रगदापद्मधराकारं रूपं उपास्यं तदुपासनया च क्रमाच्चित्तवृत्तिद्वारा च परं ब्रह्मरूपं द्वितीयरूपं ज्ञातं कैवल्यपर्यवसितं सिद्ध्यतीत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ निर्मानेति ॥ निर्मानमोहाः मानोऽभिमानोऽहंकार इति यावत् । मोहस्तन्निमित्तमज्ञानं ताभ्यां निष्क्रान्ताः । जितौ सङ्गदोषौ यैस्ते । अध्यात्मनित्या आत्मानुसंधाननिरताः अतश्च विनिवृत्तकामाः सुखदुःखसंज्ञैर्द्वन्द्वैर्विमुक्ता अमूढाः विद्वांसः द्वन्द्वानुसंधानरहिताः तत्पदं गच्छन्ति ॥ ४२ ॥ ४३ ॥ नित्यं स्वगुणनिष्ठो निर्योगक्षेमः इष्टानिष्टप्राप्तिपरिहारयोरुदासीनः आत्मवानप्रमत्तचित्तश्च त्वं यथाप्रा-

अपि स्फुटति विन्ध्याद्रौ वाति वा प्रलयानिले ।
गुरुशास्त्रानुगो मार्गः परित्याज्यो न धीमता ॥ ४५ ॥
अज्ञानादात्मनः साधो सत्तामायाति वासना ।
आत्मज्ञाने महाबोधाद्विलयं याति वासना ॥ ४६ ॥

इति गदितवति त्रिलोकनाथे
क्षणमिव मौनमुपस्थिते पुरस्तात् ।
अथ मधुप इवासिताब्जखण्डे
वचनमुपेष्यति तत्र पाण्डुपुत्रः ॥ ४७ ॥

अर्जुन उवाच ॥

परिगलितसमस्तशोकभारा
परमुदयन्भगवन्मतिर्गतेयम् ।
मम तव वचनेन लोकभर्तु-
र्दिनपतिना परिबोधिताब्जिनीव ॥ ४८ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे अर्जुनोपाख्यानं
नाम पञ्चमः सर्गः ॥ ५ ॥

---

त्वमनुवर्तमानो भूपितभूतलो भव भूपितपृथ्वीतलो भूयाः ॥ ४४ ॥ अपीति ॥ महत्यामप्यापदि गुरूपदिष्टः शास्त्रमार्गो धीमता न परित्याज्यः ॥ ४५ ॥ ४६ ॥ इतीति ॥ वचनमुपेष्यति । वक्ष्यतीत्यर्थः ॥ ४७ ॥ परीति ॥ दिनपतिना अब्जिनीव त्रिलोकभर्तुस्तव वचनेन परिबोधिता मम मतिः परिगलितसमस्तशोकभारा सती परमुदयं प्रकाशं गता ॥ ४८ ॥ इति श्रीवासिष्ठविवरणे निर्वाणप्रकरणेऽर्जुनोपाख्यानं नाम पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः

### वसिष्ठ उवाच ॥

अथ राघव वक्ष्येऽहमितिहासमिमं शृणु ।
यद्वृत्तं कस्यचिद्भिक्षोः किंचिन्मननशालिनः ॥ १ ॥
आसीत्कश्चिन्महाभिक्षुः समाध्यभ्यासतत्परः ।
नित्यं स्वव्यवहारेण क्षपयत्यखिलं दिनम् ॥ २ ॥
समाध्यभ्यासशुद्धं तत्तस्य चित्तं क्षणेन यत् ।
चिन्तयत्याशु यद्भावं गच्छत्यम्बिवव वीचिताम् ॥ ३ ॥
कदाचिच्च समाधानविरतोऽतिष्ठदेकधीः ।
कंचित्संचिन्तयामास स्वासनस्थः क्रियाक्रमम् ॥ ४ ॥
तस्य चिन्तयतो जाता प्रतिभेयमिति स्वतः ।
भावयाम्याशु लीलार्थं सामान्यजनवृत्तिताम् ॥ ५ ॥

पूर्वं विवेकिनो युद्धादिरपि चित्तविश्रान्तिबाधको नेति दर्शयितुमर्जुनाख्यायिका वर्णिता । इदानीमेषा जन्मपरम्परा स्वसंकल्परूपभ्रान्तिपरम्परामात्रसिद्धेति दर्शयितुं दृष्टान्ततया शतरुद्राख्यायिका निरूप्यते ॥ १ ॥ आसीदिति ॥ महाभिक्षुः महान्परिव्राट् । व्यवहारेण समाध्यभ्यासप्रभृतिना ॥ २ ॥ समाधीति ॥ समाध्यभ्यासेन शुद्धं निर्मलं तस्य भिक्षोश्चित्तं यच्चिन्तयति भावयति आशु तस्य वस्तुनो भावं स्वरूपं गच्छति तद्रूपं भवति । अम्बु वीचितामिव ॥ ३ ॥ कदाचिदिति ॥ समाधानविरतः समाधेर्व्युत्थितः । क्रियाक्रमं व्यवहारप्रकारम् ॥ ४ ॥ तस्येति ॥ चिन्तयतस्तस्य लीलार्थं विनोदार्थं सामान्यजनवृत्तितां सामान्यजनः साधारणजनः तद्वृत्तितां भावयामीति स्वत एवेयं प्रतिभा प्रतिज्ञाविशेषो जातः

इति संचिन्त्य चेतोऽस्य स्थितं किंचिन्नरान्तरम् ।
स्पन्दसंस्थानसंत्यागमात्रेणावर्ततेऽम्बिव ॥ ६ ॥
तेन चिन्तानरेणाथ कृतं नामात्मवाञ्छया ।
जीवटोऽस्मीति सहसा काकतालीयवाञ्छितम् ॥ ७ ॥
जीवटो विजहाराथ स स्वप्नपुरुषश्चिरम् ।
स्वप्ननिर्माणनगरे कस्मिंश्चित्पुरवीथिषु ॥ ८ ॥
तत्र पानं पपौ मत्तो मदनिद्रामवाप च ।
स्वप्ने ददर्श विप्रत्वं पाठानुष्ठानतुष्टिमत् ॥ ९ ॥
प्रतिभामात्रसंपन्नं चित्ते देशान्तराप्तिवत् ।
कदाचित्स द्विजश्रेष्ठस्त्वहर्व्यापारनिष्ठया ॥ १० ॥

॥ ५ ॥ इतीति ॥ इति पूर्वोक्तप्रकारेण संचिन्त्य तस्य चेतस्तदा चिन्तानुसारेण नरान्तरं पुरुषान्तरमभूत् । तथाहि चेतश्चिन्तावशात्स्पन्दसंत्यागमात्रेण । स्पन्दश्चलनम् । संस्थानसंत्यागः पूर्वसंनिवेशत्यागः । पूर्ववासनात्याग इत्यर्थः । तन्मात्रेणावर्तते नरान्तरं प्रतिपद्यते अम्बिव । यथा हि जलं वायुवशाच्चलितं सत्पूर्वसंस्थानत्यागेन तरङ्गादिरूपतामापद्यते तद्वत् ॥ ६ ॥ तेनेति ॥ तेन चिन्तानरेण चिन्ताकल्पितपुरुषेण स्वयमेवास्मीति जीवटोऽस्मीति काकतालीयवाञ्छितं यदृच्छयाभिमतं न पुनरभिजनविद्यावृत्तादिना प्राप्तं नाम कृतम् । स्वेनैव काचिदुत्पन्ना संज्ञा कल्पितेत्यर्थः ॥ ७ ॥ जीवट इत्यादि ॥ इयमिह जीवटप्रभृतिरुद्रपर्यन्ता भिक्षोः स्वप्नपरम्परा ॥ ८ ॥ जीवटः स्वप्ने पाठानुष्ठानतुष्टिमत् वेदशास्त्रपाठेन तदुक्ताचरणेन च तुष्टिमत् कृतकृत्यम् ॥ ९ ॥ प्रतिभासमात्रेणैव संपन्न विप्रत्वं ददर्श । चित्ते देशान्तराप्तिवत् । तथाहि चित्ते देशाद्देशान्तरमापद्यते तद्वत् । स च द्विजश्रेष्ठः कदाचिदहर्व्यापारनिष्ठया दिवसव्यापारभरेण श्रान्तिहे-

सुष्वापान्तर्व्यवहृतिर्बीजावस्थामिव द्रुमः ।
द्विजोऽपश्यत्स्वयं स्वप्ने सामन्तत्वमथात्मनि ॥ ११ ॥
स सामन्तः कृताहारः कदाचिद्घननिद्रया ।
अपश्यद्राजतां स्वप्ने ककुब्वलयपालिनीम् ॥ १२ ॥
स कदाचिन्नृपः स्वस्थः सुष्वापास्तमितेहितः ।
अपश्यत्स्वात्मनि स्वप्ने सुरस्त्रीत्वमनिन्दितम् ॥ १३ ॥
सा सुरस्त्री रतिश्रान्ता निद्रां गाढामुपागता ।
अपश्यदात्मनि स्वप्ने मृगीत्वमतिचञ्चलम् ॥ १४ ॥
सा मृगी लोलनयना कदाचिन्निद्रया युता ।
स्वप्ने ददर्श वल्लीत्वं स्वाभ्यासाद्रूढमात्मनि ॥ १५ ॥
तिर्यञ्चोऽपि प्रपश्यन्ति स्वप्नं चित्ते स्वभावतः ।
दृष्टानां च श्रुतानां च चेतःस्मरणमक्षतम् ॥ १६ ॥
सा बभूव लता पुष्पफलपल्लवशालिनी ।
वनदेवीवनक्रीडालतागृहविलासिनी ॥ १७ ॥

तुना वीजरूपतां पादप इव ॥ १० ॥ ११ ॥ घननिद्रामागतः स्वप्ने आत्मनि पताकायुक्तहस्त्यश्वादिसेनयैव जलदमालया युक्तं सामन्तत्वं मण्डलेश्वरत्वमपश्यत् । स च सामन्तः स्वप्ने ककुब्वलयपालिनीं निखिलदिङ्मण्डलपालनसमर्थां राजतां चक्रवर्तितामपश्यत् ॥ १२ ॥ स च नृपः सुरस्त्रीत्वम् ॥ १३ ॥ सा च सुरस्त्री मृगीत्वम् ॥ १४ ॥ सा मृगी वल्लीत्वम् ॥ १५ ॥ ततस्तिर्यञ्चोऽपीत्यर्थान्तरन्यासः । यतो दृष्टानां श्रुतानां च चेतोऽक्षतमनुपहतं स्मरणं स्मृतिः ततो हेतोः संस्कारवशात्तिर्यञ्चोऽपि स्वप्नं पश्यन्ति ॥ १६ ॥ सा च लता वनदेवीनां वनक्रीडासु लतागृहवद्विलासिनी विलसन्ती बभूव ॥ १७॥

वीजान्तःस्थाङ्कुराकारसमज्ञेयाधिरूढया ।
सापश्यदन्तःसंवित्त्या स्फुटं लम्बनमात्मनः ॥ १८ ॥
कंचित्कालं सुषुप्तस्थकलया जडतां घनाम् ।
अनुभूय ददर्शाथ स्वात्मानं भ्रमरं स्थितम् ॥ १९ ॥
स बभूव सरोजिन्यां व्यसनी विसनालगः ।
क्वचिदेव रतिं याति चेतो जडमतेरपि ॥ २० ॥
तामाजगाम नलिनीं परिलोलयितुं गजः ।
रम्यवस्तुक्षयायैव मूढानां जृम्भते पदम् ॥ २१ ॥
नलिन्या स तया सार्धं तत्र चूर्णत्वमाययौ ।
भ्रमरो वारणालोकाद्वारणालोकभावनात् ॥ २२ ॥
ददर्शात्मानमामोदमत्तहस्तितयोदितम् ।
शुष्कसागरगम्भीरे गजः खाते पपात ह ॥ २३ ॥

सा च लता वीजान्तःस्थाङ्कुराकारसमज्ञेयाधिरूढया वीजान्तर्गतस्याङ्कुरस्य य आकारः तत्समेन निगूढेन ज्ञेयवस्तुना अधिरूढया आश्रितया अन्तःसंवित्त्या आत्मनो लतादेहधारिणो लम्बने लताभावोचितं वृक्षादौ क्वचिल्लम्बनमपश्यदिति लतायास्तादृग्दशा दर्शिता ॥ १८ ॥ अथ सैव लता सुषुप्तस्थकलया सुषुप्तस्थस्य यादृशी कला संवित्तिः तादृश्यैव कलया घनां जडतां निद्रारूपं जाड्यमनुभूय स्वप्ने स्वात्मानं भ्रमरं स्थितं ददर्श ॥ १९ ॥ स च भ्रमरः सरोजिन्यां व्यसनी आसक्तः सन् विसनालगो बभूव। तथाहि जडमतेरपि रसानभिज्ञस्य कृमिकीटादेरपि चेतः क्वचिदेव स्त्रीव्यक्तौ रतिं याति ॥ २० ॥ २१ ॥ स च भ्रमरस्तया नलिन्या सार्धं गजेन चूर्ण्यमानस्तद्रूपालोकभावनया ॥ २२ ॥ आत्मानमा-

बभूव वल्लभो राज्ञो बध्वा तेनाशु शिक्षितः ।
क्वचित्समरसंमर्दे घातितोऽस्तमुपाययौ ॥ २४ ॥
गण्डस्थभ्रमराभ्यासाद्गजो भूयोऽप्यभूदलिः ।
पुनः करिखुराक्रान्त्या पद्मिन्या चूर्णतां ययौ ॥ २५ ॥
पार्श्वस्थहंससंवित्त्या बभूव कलहंसकः ।
कलहंसश्चिरतरं योनिष्वन्यासु संलुठन् ॥ २६ ॥
यदृच्छया कदाचित्तु जातः पद्मजसारसः ।
ब्रह्मसारसतां यातो विजहार स सारसः ॥ २७ ॥
स कदाचिद्ददर्शाथ रुद्रं रुद्रपुरे खगः ।
तत्र बुद्धिरभूत्तस्य रुद्रोऽहमिति निश्चिता ॥ २८ ॥
रुद्रभूतवपुस्तत्र विजहार यथेच्छया ।
तैस्तैः शिवपुराचारैर्गणगोष्ठीविलासिभिः ॥ २९ ॥

मोदमत्तहस्तितया आमोदेन गन्धविशेषेण मत्तो यो हस्ती तद्भावेनोदितं ददर्श । स च गजः केनचिद्राज्ञा खाते गर्ते निपात्य ॥ २३ ॥ बद्धः शिक्षितश्च राजवल्लभो भूत्वा क्वचित्समरे हन्यमानः ॥ २४ ॥ गण्डस्थलगतभ्रमरभावनया पुनर्भ्रमरोऽभूत् । स च भ्रमरः करिपदाक्रान्त्या चूर्णितः ॥ २५ ॥ पार्श्वस्थहंससंवित्त्या कलहंसो बभूव । स च कलहंसो योन्यन्तरेषु लुठन् ॥ २६ ॥ यदृच्छया पद्मजस्य ब्रह्मणः सारसो हंसो जातः ॥ २७ ॥ स च खगो हंसः कदाचिच्च ब्रह्मणो रुद्रपुरगमने रुद्रं दृष्ट्वा तद्भावनया रुद्रोऽहमिति संस्कारवशान्निश्चितबुद्धिरभूत् ॥ २८ ॥ रुद्रेति ॥ तत्र रुद्रपुरे वपुः रुद्राकारवपुरयं हंसो गणगोष्ठीविलासिभिः प्रमथपरिषत्संभूतैस्तैः प्रसिद्धैः शिवपुराचारैः रुद्रलोकव्यवहारैः शिवमाहात्म्यवर्णनादिभिः

रुद्रस्त्वनुत्तमज्ञानविलासिन्या तया ततः ।
स्वमशेषमुदन्तं तमपश्यत्प्राक्तनं धिया ॥ ३० ॥
निरावरणविज्ञानवपुः स भगवान्हरः ।
उवाच स्वयमेकान्ते स्वस्वप्नशतविस्मितः ॥ ३१ ॥
अहो विचित्रा मायेयं बत विश्वविमोहिनी ।
असत्यैवापि सद्रूपा सुदृढा मरुवारिवत् ॥ ३२ ॥
एवमत्यन्तचित्रासु संसारारण्यभूमिषु ।
बह्वीष्वहमिति भ्रान्तस्त्वशून्यास्विव भूरिशः ॥ ३३ ॥
कस्मिंश्चिदभवं सर्गे त्वहं जीवटनामकः ।
कस्मिंश्चिद्ब्राह्मणश्रेष्ठः कस्मिंश्चिद्वसुधाधिपः ॥ ३४ ॥
हंसः पद्मवने भूत्वा विन्ध्यकक्षे च वारणः ।
एवं योनिशतं गच्छन्यातोऽहमिति रुद्रताम् ॥ ३५ ॥

यथेच्छया विजहार ॥ २९ ॥ रुद्र इति ॥ स रुद्रः अनुत्तमज्ञानविलासिन्या सर्वोत्तमज्ञानविस्तारया धिया प्राक्तनं पूर्वजन्मसंभूतमशेषतस्तमुदन्तं वृत्तान्तमपश्यत् ॥ ३० ॥ निरावरणेति ॥ निरावरणं जन्मान्तरैरप्यावरणरहितं विज्ञानमेव वपुर्यस्य स भगवान्हरः स्वस्वप्नशतविस्मितः स्वीयेन स्वप्नशतेन विस्मितः सन्नेकान्ते स्वयमेवैवमुवाच ॥ ३१ ॥ अहो इति ॥ इयं माया असत्यैवापि मिथ्याभूतापि मरुवारिवत्सुदृढा सती सद्रूपा विश्वं विमोहयति । बतेति खेदे ॥ ३२ ॥ एवमिति श्लोकत्रयं वाक्यम् ॥ अत्यन्तचित्रासु संसारारण्यभूमिषु बह्वीषु भ्रान्तोऽहं सुमनोमात्रकल्पनादनेकेषु मार्गेषु जीवटादिरूपेण योनिशतं गच्छन्निति देहानां रुद्रतां यातः

अत्र वर्षसहस्राणि चतुर्युगशतानि च ।
समतीतान्यनन्तानि दिनानुचरितानि च ॥ ३६ ॥
तांस्तान्सर्वान्स्वसंसारानुत्थायालोकयाम्यहम् ।
सम्यगालोकदानेन तेभ्य एव करोम्यहम् ॥ ३७ ॥
इति संचिन्त्य रुद्रोऽसौ तं सर्गं प्रजगाम ह ।
यत्र भिक्षुर्विहारस्थः सुप्तः शव इव स्थितः ॥ ३८ ॥
बोधयित्वाथ तं भिक्षुं चेतसा चेतनेन च ।
द्योतयामास सस्मार भिक्षुरप्यात्मनो भ्रमम् ॥ ३९ ॥
रुद्रमात्मानमालोक्य जीवटादिमयं तथा ।
बोधादविस्मयार्होऽपि स भिक्षुर्विस्मयं ययौ ॥ ४० ॥
अथ रुद्रस्तथा भिक्षुर्द्वावेवोत्थाय जग्मतुः ।
क्वापि जीवटसंसारं चिदाकाशैककोणगम् ॥ ४१ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ अत्रेति श्लोकद्वयं वाक्यम् ॥ असौ रुद्रः अत्र जन्मान्तरेषु वर्षसहस्रादिर्भूयान् कालो गतः ॥ ३६ ॥ तस्मात्तांस्तान्नानारूपान् स्वसंसारानुत्थाय गत्वा आलोकयामि तेभ्यश्च सम्यगालोकदानेन सम्यग्ज्ञानप्रदानेन तान्मया सह एकीकरोमि ॥ ३७ ॥ इत्येवं संचिन्त्य यत्र सर्गे भिक्षुर्विहारस्थः मठे स्थितः । विहरन्त्यस्मिन् भिक्षव इति विहारो मठ उच्यते । सुषुप्तः शववदास्ते तं सर्गं प्रजगाम ॥ ३८ ॥ बोधयित्वेति ॥ अथ तं भिक्षुं वोधयित्वा तं बोध्यचेतसा चित्तेन चेतनेन ज्ञानेन च योजयामास । भिक्षुरप्यात्मनो भ्रमं सस्मार ॥ ३९ ॥ रुद्रमिति ॥ स भिक्षुरात्मानं रुद्रमालोक्य तथा जीवटादिमयं चात्मानमालोक्य बोधात्परमार्थावगमात् अविस्मयार्होऽपि मायामहिम्ना विस्मयं ययौ ॥ ४० ॥ अथेत्यादिना ॥ अथ रुद्रेण भिक्षुवज्जीवटादीनामपि प्रबो-

तं प्रबोध्य नियोज्याशु चेतसा चेतनेन च ।
बोधयन्तस्त्रयोऽप्यासन्विस्मिता अप्यविस्मिताः ॥ ४२ ॥
एकरूपास्त्रिरूपास्ते रुद्रभिक्षुकजीवटाः ।
जग्मुर्विप्रादिसंसारांस्तैश्च संमिलितास्तथा ॥ ४३ ॥
दिव्यज्ञाना विरेजुस्ते रुद्रांशाः शतमुत्तमम् ।
रुद्रेण प्रेषिताः सर्वे ते प्रति स्वंस्वमालयम् ॥ ४४ ॥
तेन रुद्रेण तां मायामवलोक्य तथोदिताम् ।
स्वांशास्तामेव संसारस्थितिं संप्रेषिताः पुनः ॥ ४५ ॥
प्रययुः स्वास्पदं तेऽपि जीवटब्राह्मणादयः ।
स्वकलत्रैः समं देहं क्षपयित्वाथ कालतः ।
रुद्रेण सह ते सर्वे देहान्ते रुद्रमाप्नुवन् ॥ ४६ ॥

वसिष्ठ उवाच ॥

सर्वमस्ति चितः कोशे यद्यथालोकयत्यसौ ।
चित्तथा तदवाप्नोति सर्वात्मत्वादसंशयम् ॥ ४७ ॥
यत्स्वप्ने दृश्यते यच्च संकल्पैरवलोक्यते ।
तत्तथा विद्यते तत्र सर्वकालं तदात्मकम् ॥ ४८ ॥

धने सति ते सर्वेऽपि रुद्रवद्दिव्यज्ञानतया रुद्रांशाः सन्तो विरेजिरे । ततो भिक्षोर्जन्मशतोपभोग्यं प्रारब्धशेषमनुसंधाय परमार्थरुद्रेण प्रेषिताः सन्तो जीवटादिसंक्रान्ता रुद्रांशाः स्वं स्वमालयं प्रापुः । रुद्राणां तत्स्थानानां च बहुत्वात् स्वंस्वमिति वीप्सया निर्देशः । तेऽपि जीवटब्राह्मणादयः स्वंस्वमास्पदं प्राप्य स्वकलत्रादिभिः सह स्थित्वा देहान्ते रुद्रमाप्नुवन्निति सार्धश्लोकषट्कार्थः ॥ ४१ ॥ ४२ ॥ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ सर्वमिति ॥ चितः कोशे कोशवत्समस्तवस्तुनिधौ स्वरूपे सर्वं वस्त्विति ॥ ४७ ॥ अतः सर्वो-

संकल्पस्वप्नगं वस्तु यया च दशयाप्यते ।
परमाभ्यासयोगाभ्यां विना त्वेतन्न लभ्यते ॥ ४९ ॥
येषां तु योगविज्ञानदृष्टयः फलिताः स्थिताः ।
सर्वं सर्वत्र पश्यन्ति त एते शङ्करादयः ॥ ५० ॥
सर्वं ह्यभिमतं कार्यमेकनिष्ठस्य सिद्ध्यति ।
दक्षिणां ककुभं पश्यन्कः प्राप्नोत्युत्तरां दिशम् ॥ ५१ ॥
संकल्पार्थपरैरेव संकल्पार्थोऽवगम्यते ।
अग्रस्थार्थपरैरेव अग्रस्थार्थोऽवगम्यते ॥ ५२ ॥
अग्रस्थे बुद्धिसंस्थे यः संकल्पं प्राप्तुमिच्छति ।
तदासावेकनिष्ठत्वाभावात्तन्नाशयेद्द्वयम् ॥ ५३ ॥

त्मत्वादसौ चित् यथा येन प्रकारेण तदात्मकं तद्रूपं तत्सर्वकालं विद्यते सर्वस्यापि संविद्विवर्तत्वात् ॥४८॥ यदि विद्यते तर्हि तत्प्राप्यत इत्यत्राह—संकल्पेति ॥ संकल्पस्वप्नगं संकल्पगतं वस्तु यया दशया प्राप्यते सैव सिद्धदशा अभ्यासयोगाभ्यां वायुनिरोधेन च विना न लभ्यते ॥ ४९ ॥ येषामिति ॥ येषां तु सिद्धानां योगविज्ञानदृष्टयः । योगः समाधिर्विज्ञानमध्यात्मशास्त्रज्ञानं तज्जन्या दृष्टयो दर्शनानि फलिताः फलवत्यः स्थिताः त एते शङ्करादयः स्वसंकल्पानुसारेण सर्वं वस्तु सर्वत्र देशे काले च पश्यन्ति ॥५०॥ अभिमतं सर्वं कार्यमपि एकनिष्ठस्य तदेकनिष्ठस्यैव सिद्ध्यति । दक्षिणां ककुभं पश्यन्को नामोत्तरां दिशं प्राप्नोति ॥ ५१ ॥ संकल्पेति ॥ संकल्पार्थतत्परैरेवावगम्यते अग्रसंस्थितार्थः अग्रेष्वग्रगेषु संस्थितोऽप्यर्थः अग्रस्थार्थपरैः पुरोवर्तिवस्तुतत्परैरेवावगम्यते ॥५२॥ अग्रस्थे इति ॥ यो मूढः अग्रस्थे वस्तुनि बुद्धिसंस्थिते बुद्धौ स्थिते

इह विद्याधरोऽहं स्यामहं स्यामिह वैदिकः ।
इत्येकज्ञानसाफल्यं दृष्टान्तस्त्वर्थसिद्धये ॥ ५४ ॥
तस्मादेकार्थनिष्ठत्वाद्भिक्षुजीवेन रुद्रताम् ।
प्राप्य रुद्रात्मना लब्धा संकल्पार्थस्य सत्यता ॥ ५५ ॥
भिक्षुसंकल्पजीवास्ते प्रत्येकं तत्पृथग्जगत् ।
पश्यन्ति रुद्ररूपत्वात्प्राप्ताः सर्वे च सत्यताम् ॥ ५६ ॥
एवं ते भिक्षुसंकल्पाज्जीवटब्राह्मणादयः ।
रुद्रविज्ञानवशतः स्वसंकल्पपुरीर्गताः ॥ ५७ ॥
ततो रुद्रेण संगत्य विविशुस्तत्परं पदम् ॥ ५८ ॥

राम उवाच ॥

एवं ते भिक्षुसंकल्पाज्जीवटब्राह्मणादयः ।

सति संकल्पे संकल्पितार्थं प्राप्तुमिच्छति तदा अविवेकी एकनिष्ठत्वाभावादेकत्र तात्पर्याभावात् तद्द्वयं अग्रस्थं कल्पितं चोभयं नाश्रयेत् । यद्बुद्धिस्थं न तु प्राप्तुमिच्छति न तद्बुद्धिस्थमित्युभयोरप्यसिद्धेर्विनाशः ॥ ५३ ॥ इहेति ॥ अहं इह देशे काले संकल्पार्थं च विद्याधरः स्यामिति वा अहमिह वैदिकः स्यामिति वा यदेकध्यानसाफल्यं एकवस्तुविषयस्य ध्यानस्य फलसंबन्धः स एव कार्यसिद्धये दृष्टान्तः ॥५४॥ तस्मादिति ॥ तस्मात्पूर्वोक्ताद्धेतोरेकार्थनिष्ठत्वात् संकल्पार्थैकनिष्ठत्वात् भिक्षुरूपेण जीवेन रुद्रतां प्राप्य तेन रुद्रात्मना संकल्पार्थस्य सत्यता प्राप्ता ॥ ५५ ॥ भिक्ष्विति ॥ ते भिक्षुसंकल्पसिद्धा जीवा रुद्ररूपत्वात् संकल्पानां सत्यतां साफल्यं प्राप्तास्ततः प्रत्येकं तज्जगत्पृथक् विलक्षणं पश्यन्ति स्वतन्त्रत्वात्सत्यसंकल्पत्वाच्चेति भावः ॥ ५६ ॥ एवमिति ॥ ते पूर्वोक्ता भिक्षुसंकल्पकल्पिता जीवटब्राह्मणादयः रुद्रस्य महिम्ना स्वसंकल्पपुरीः स्वसंकल्पकल्पितानि स्थानानि

कथं सत्यत्वमायाताः संकल्पार्थे क्व सत्यता ॥ ५९ ॥

वसिष्ठ उवाच ॥

एकः सहस्रं भवति यथा चैष जनार्दनः।
अंशावतारलीलाभिः कुरुते जागतीं स्थितिम् ॥ ६० ॥
एवं ते भिक्षुसंकल्पाज्जीवटब्राह्मणादयः।
संशुद्धसंविदेकांशाः सत्या इव किल स्थिताः ॥ ६१ ॥

इति श्रीयोगवासिष्ठसारे मोक्षोपाये निर्वाणप्रकरणे शतरुद्रोपाख्यानं नाम षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः

वसिष्ठ उवाच ॥

सुषुप्तमौनवान्भूत्वा त्यक्त्वा चित्तविलासिताम्।
कलनामलनिर्मुक्तस्तिष्ठावष्टब्धतत्पदः ॥ १ ॥

राम उवाच ॥

वाङ्मौनमक्षमौनं च काष्ठमौनं च वेद्म्यहम्।
सुषुप्तमौनं मौनेश ब्रह्मन्ब्रूहि किमुच्यते ॥ २ ॥

गताः प्राप्ताः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ इति श्रीवासिष्ठविवरणे निर्वाणप्रकरणे शतरुद्रोपाख्यानं नाम षष्ठः सर्गः ॥ ६ ॥

पूर्वमेषा जन्मपरम्परा स्वसंकल्परूपभ्रान्तिसिद्धेति निदर्शयितुं शतरुद्राख्यानमुक्तम्। इदानीं सौषुप्तमौनसंपादकं कर्कटीप्रश्नसङ्गवद्दुर्घटो वेतालप्रश्नसङ्गो निरूप्यते—सुषुप्तेति ॥ चित्तविलासितां संकल्पादिरूपं चित्तविलासं त्यक्त्वा कलनामलनिर्मुक्तः वासनारूपमलरहितः सुषुप्तमौनवान् वक्ष्यमाणलक्षणसुषुप्तमौनयुक्तो भूत्वा अवष्टब्धतत्पदः अवलम्बितब्रह्मभावस्तिष्ठ ॥ १ ॥ वागिति॥ वाङ्मौना-

वसिष्ठ उवाच ॥

द्विविधः प्रोच्यते राम मुनिर्मुनिवरैरिह ।
एकः काष्ठतपस्वी स्याज्जीवन्मुक्तस्तथेतरः ॥ ३ ॥
अभावितायां शुष्कायां क्रियायां बद्धनिश्चयः ।
हठाज्जितेन्द्रियग्रामो मुनिः स्यात्काष्ठतापसः ॥ ४ ॥
यथा भूतमिदं बुद्ध्वा भावितात्मात्मनि स्थितः ।
लोकोपमोऽपि तृप्तोऽन्तर्यः स मुक्तो मुनिः स्मृतः ॥ ५ ॥
एतयोर्योऽभवद्भावः शान्तयोर्मुनिनाथयोः ।
चित्तनिश्चयरूपात्मा मौनशब्देन कथ्यते ॥ ६ ॥
वाङ्मौनं वचसां रोधो बलादिन्द्रियनिग्रहः ।
अक्षमौनं परित्यागश्चेष्टानां काष्ठसंज्ञकम् ॥ ७ ॥

दीनां लक्षणं वक्ष्यते। हे मौनेश मुनीनां समूहो मौनं तस्येश। मुनिश्रेष्ठेत्यर्थः ॥ २ ॥ ३ ॥ अभावितायां ब्रह्मभावनारहितायां अतश्च शुष्कायां नीरसायां क्रियायां प्राणायामादिरूपायां बद्धनिश्चयः सन् हठयोगाज्जितेन्द्रियग्रामो मुनिः काष्ठतापसः स्यात् ॥ ४ ॥ यथेति ॥ यो मुनिः इदं जगद्यथा भूतं तथा बुद्ध्वा ब्रह्मैवेदं सर्वमिति निश्चित्य भावितात्मा ब्रह्मैवाहमिति निश्चितात्मतत्त्वः आत्मनि स्थितः स्वरूपमेवानुसंदधानो व्यवहारमात्रेण लोकोपमोऽपि अन्तःस्वरूपसुखानुभवात्तृप्तस्तिष्ठति स मुनिर्जीवन्मुक्तः स्मृतः ॥ ५ ॥ उभयानुगतं सामान्यलक्षणमाह—एतयोरिति ॥ शान्तयोर्निर्विकारचित्तयोरेतयोः प्रकृतयोः प्रवृत्तयोर्मुनिनाथयोः चित्तनिश्चयरूपात्मा योगेन तत्त्वज्ञानेन वा यश्चित्तस्य निश्चय एकनिष्ठता तद्रूप आत्मा स्वभावो यस्य तादृशो भावोऽभिप्रायो मौनशब्देन कथ्यते ॥ ६ ॥ सुषुप्तमौननिरूपणाय प्रथमं मौनान्तराणि लक्षयन्नाह—वागिति ॥

प्रस्फुरच्चित्तकलनमेतन्मौनत्रयं स्थितम् ।
एतेषां हठमौनानां विषयः काष्ठतापसः ॥ ८ ॥
अविभागमनायासं यदनाद्यन्तमास्थितम् ।
ध्यायतोऽध्यायतश्चैव सौषुप्तं मौनमुच्यते ॥ ९ ॥
यथाभूतमिदं बुद्ध्वा जगन्नानात्वविभ्रमम् ।
यदास्थितमसंदेहं सौषुप्तं मौनमुच्यते ॥ १० ॥

वचसां निरोधाज्जातं वाङ्मौनं बलाद्धठयोगवशाच्चक्षुरादीन्द्रियनिग्रहोऽक्षमौनम् । तद्वशादेव चेष्टानां शरीरतदवयवक्रियाणां परित्यागः काष्ठमौनम् ॥ ७ ॥ प्रस्फुरदिति ॥ एतत्पूर्वोक्तं मौनत्रयं प्रस्फुरच्चित्तकलनं विलसच्चित्तवासनं स्थितम् । अत एतेषां हठमौनानां काष्ठतापस एव विषय आश्रयो न जीवन्मुक्त इत्यर्थः ॥ ८ ॥ अथ चतुर्भिः श्लोकैः सुषुप्तमौनमाह—अविभागमिति ॥ ध्यायतोऽध्यायतो वा अन्तर्मुखस्य बहिर्मुखस्य वा मुनेरविभागं अविद्यमानजाग्रदादिविभागं अनायासं अविद्यमानकर्मेन्द्रियनिरोधक्लेशं अनाद्यन्तं उपक्रमोपसंहाररहितं यदास्थितं ब्रह्मनिष्ठत्वं एतत्सौषुप्तं सुषुप्तिसंभवं मौनं उच्यते । महायोग एव सुषुप्तमौनमित्यर्थः । यदाह सर्वज्ञयोगी—'प्रपञ्चस्य भानेऽप्यभाने समं यन्न वा विद्ययाऽविद्ययालिङ्गिताङ्गम् । तदात्मस्वरूपं तदानन्दसान्द्रं परंब्रह्मभावं महायोगमाहुः' इति । यथाच शैवे—'शिवः स्वभाव एवैकश्चिन्त्यते निरुपाधिकः । यया सैव मनोवृत्तिर्महायोग इहोच्यते' इति ॥ ९ ॥ यथेति ॥ नानात्वविभ्रमं नानात्वेन परिभ्रान्तमिदं जगद्यथाभूतं येन प्रकारेण निष्पन्नं तं प्रकारं बुद्ध्वा ब्रह्मण्यध्यस्तत्वात्तदात्मकं निश्चित्य असंदेहं निर्विकल्पं यद्ब्रह्मभावेनास्थितं तच्च सौषुप्तं मौनमेव । कचित्तु सौषुप्तं

अनेकसंविद्रूपात्म शिवमेवेदमाततम् ।
इत्यास्थितमनन्तं यत्सौषुप्तं मौनमुच्यते ॥ ११ ॥
आकाशं नैव चाकाशं सर्वमस्ति च नास्ति च ।
इति स्थितं समं शान्तं यत्तन्मौनं सुषुप्तवत् ॥ १२ ॥
सुषुप्तमौनं योगीशैर्द्विविधैः प्राप्यते खलु ।
सांख्ययोगिन एके स्युरपरे योगयोगिनः ॥ १३ ॥
सम्यग्ज्ञानावबोधेन सुसिद्धैकसमाधिनः ।
संख्ययैवावबुद्ध्येयुस्ते सांख्या योगिनः स्मृताः ॥ १४ ॥
प्राणाद्यनिलसंशान्तौ युक्त्या ये पदमागताः ।
अनामयमनाद्यन्तं ते स्मृता योगयोगिनः ॥ १५ ॥

मौनसंगतमिति पाठः । तत्र मौनसंगतं मौनसंस्थानं मौनस्य प्रकारमित्यर्थः ॥ १० ॥ अनेकेति ॥ इदं जगत् अनेकसंविद्रूपात्म अनेकसंविद्रूपा आत्मानः स्वभावा यस्य तादृशमाततं व्याप्तं शिवं ब्रह्मैवेति यदनन्तं निरवधिकमास्थितं ब्रह्मनिष्ठत्वं तत्सौषुप्तं मौनमुच्यते ॥ ११ ॥ आकाशमिति ॥ सर्वं जगत् आकाशं चिदाकाशविवर्तत्वादाकाशं नैव मूर्तिमत्त्वात् तथास्ति च अधिष्ठानसत्तायाः सद्रूपेण प्रतीतेः नास्ति च कल्पितत्वात् इति जगतो ब्रह्मव्यतिरेकेण नास्तित्वं निश्चित्य सममेकाकारं शान्तं निर्विकारं यत्स्थितं या निष्ठा तत्सुषुप्तवन्मौनम्। सुषुप्ततुल्यं मौनमित्यर्थः ॥ १२॥ सुषुप्तेति ॥ सांख्ययोगिनो योगयोगिनश्च वक्ष्यन्ते ॥ १३ ॥ सम्यगिति ॥ सम्यग्ज्ञानावबोधेन तत्त्वज्ञानोदयेन सुसिद्धो य एकसमाधिः एकस्मिन्नद्वितीये ब्रह्मणि चित्तविश्रान्तिस्तदुपलक्षिता ये योगिनः ते संख्ययैव सम्यग्ज्ञानेनैवावबुद्धा इति कृत्वा सांख्ययोगिनः स्मृताः ॥ १४ ॥ प्राणादीति ॥ ये तु युक्त्या अष्टाङ्गयोगेन प्राणादीनामनिलानां संशान्तौ

उपादेयं तु सर्वेषां शान्तं पदमकृत्रिमम् ।
यत्सांख्यैः प्राप्यते स्थानं परं योगैस्तदेव हि ॥ १६ ॥
यत्र प्राणमनोवृत्तिरत्यन्तं नोपलभ्यते ।
वासनावागुराक्रान्ता तद्विद्धि परमं पदम् ॥ १७ ॥
मनो मुधैवाभ्युदितमसदेवानवेक्षणात् ।
स्वप्ने स्वमरणाकारं प्रेक्षमाणं न विद्यते ॥ १८ ॥
एकतत्त्वघनाभ्यासः प्राणानां विलयस्तथा ।
मनोविनिग्रहश्चेति मोक्षशब्दार्थसंग्रहः ॥ १९ ॥
एकार्थाभ्यसनप्राणरोधचित्तपरिक्षयाः ।
एकस्मिन्नेव संसिद्धे संसिद्ध्यन्ति परस्परम् ॥ २० ॥

सत्यां अनामयमनाद्यन्तं च पदमागतास्ते योगयोगिनः स्मृताः॥१५॥ उपादेयमिति ॥ शान्तमकृत्रिमं पदमेव सर्वेषां योगिनामुपादेयं अतो हेतोः सांख्यैर्योगिभिर्यत्स्थानं प्राप्यते योगैरपि तत्परं स्थानं प्राप्यते ॥ १६ ॥ किं तत्पदमित्यत्राह—यत्रेति ॥ यत्र यस्मिन्पदे वासना-वागुराक्रान्ता वासनैव वागुरा बन्धकत्वात् तया आक्रान्ता व्याप्ता प्राणमनसोर्वृत्तिर्व्यापारः अत्यन्तं सम्यङ्नोपलभ्यते तदेवा-त्मस्वरूपं परमं पदं विद्धि परब्रह्मस्वरूपं विद्धि ॥ १७ ॥ मन इति ॥ मनस्तावद्वस्तुतोऽसदेव अनवेक्षणादविचारान्मुधैव स्वप्ने मरणप्रत्ययवदुत्थितं अतः प्रेक्षमाणं विचार्यमाणं सन्न विद्यते । अविचारसिद्धस्य विचारेण निवृत्तिर्युक्तैवेति भावः ॥१८॥ एकेति ॥ एकतत्त्वघनाभ्यासः एकस्यैव स्वाभिमतस्य तत्त्वस्य निरन्तरमनु-संधानं तथा प्राणानां विलयः मनोनिग्रहश्चेति त्रितयमेव मोक्षशब्दस्य संग्रहः । अत एतावदेव मोक्षसाधनमित्यर्थः ॥ १९ ॥ एकेति ॥ एकतत्त्वाभ्यासादीनां त्रयाणां मध्ये एकस्मिन्नपि सिद्धे इतरे अपि

अविनाभाविनी नित्यं जन्तूनां प्राणचेतसी ।
कुसुमामोदवन्मिश्रे तिलतैल इव स्थिते ॥ २१ ॥
आधाराधेयवच्चैव एकाभावे विनश्यतः ।
कुरुतश्च स्वनाशेन कार्यं मोक्षाख्यमुत्तमम् ॥ २२ ॥
एकस्मिन्सुदृढे तत्त्वे तावद्भावं विभावयेत् ।
भावो भावत्वमायाति स्वाभ्यासाद्यावदाततम् ॥ २३ ॥
यदेकतानं भवति चेतस्तद्भवति क्षणात् ।
शान्ताशेषविशेषौघं चिराभ्यासस्वभावतः ॥ २४ ॥

वसिष्ठ उवाच ॥

संसृतिस्वप्नविश्रान्तौ वेतालोदाहृतानिमान् ।
प्रश्नानाकर्णय शुभान्प्रसङ्गात्स्मृतिमागतान् ॥ २५ ॥
अस्ति विन्ध्यमहाटव्यां वेतालो विपुलाकृतिः ।
स कंचिन्मण्डलं गर्वादाजगाम जिघांसया ॥ २६ ॥

सिद्ध्यन्तीत्यर्थः ॥ २० ॥ अविनाभाविनी इति श्लोकद्वयं वाक्यम् ॥ जन्तूनां प्राणचेतसी कर्तृणी अविनाभावित्वात्तिलतैलवत् कुसुमामोदवदाधाराधेयवच्च मिश्रे परस्परसंगते एव स्थिते ॥ २१ ॥ अतो हेतोरेकस्याभावे द्वे अपि नश्यतः स्वनाशेन कारणेन मोक्षाख्यमुत्तमं कार्यं कुरुतश्च ॥ २२ ॥ एकस्मिन्निति ॥ सुदृढे प्रामाणिके एकस्मिंस्तत्त्वे तावद्भावं चित्तवृत्तिं विभावयेत् । यावत्स्वाभ्यासाद्धेतोराततं भावत्वं भाव्यमानस्वरूपत्वमायाति ॥ २३ ॥ यदिति ॥ चेतः चित्तं यदेकतानं यस्मिन्वस्तुनि एकाग्रं भवति चिराभ्यासस्वभावतः चिरकालानुसंधानवशात् शान्ताशेषविशेषौघं निवृत्तनिखिलभेदं सत् क्षणात्तदेव वस्तु भवति ॥ २४ ॥ २५ ॥ अस्तीति ॥ मण्डलं देशम् । जिघांसया भक्षणेच्छया ॥ २६ ॥

उपादेयं तु सर्वेषां शान्तं पदमकृत्रिमम् ।
यत्सांख्यैः प्राप्यते स्थानं परं योगैस्तदेव हि ॥ १६ ॥
यत्र प्राणमनोवृत्तिरत्यन्तं नोपलभ्यते ।
वासनावागुराक्रान्ता तद्विद्धि परमं पदम् ॥ १७ ॥
मनो मुधैवाभ्युदितमसदेवानवेक्षणात् ।
स्वप्ने स्वमरणाकारं प्रेक्षमाणं न विद्यते ॥ १८ ॥
एकतत्त्वघनाभ्यासः प्राणानां विलयस्तथा ।
मनोविनिग्रहश्चेति मोक्षशब्दार्थसंग्रहः ॥ १९ ॥
एकार्थाभ्यसनप्राणरोधचित्तपरिक्षयाः ।
एकस्मिन्नेव संसिद्धे संसिद्ध्यन्ति परस्परम् ॥ २० ॥

सत्यां अनामयमनाद्यन्तं च पदमागतास्ते योगयोगिनः स्मृताः॥१५॥ उपादेयमिति ॥ शान्तमकृत्रिमं पदमेव सर्वेषां योगिनामुपादेयं अतो हेतोः सांख्यैर्योगिभिर्यत्स्थानं प्राप्यते योगैरपि तत्परं स्थानं प्राप्यते ॥ १६ ॥ किं तत्पदमित्यत्राह—यत्रेति ॥ यत्र यस्मिन्पदे वासना-वागुराक्रान्ता वासनैव वागुरा बन्धकत्वात् तया आक्रान्ता व्याप्ता प्राणमनसोर्वृत्तिर्व्यापारः अत्यन्तं सम्यङ्नोपलभ्यते तदेवा-त्मस्वरूपं परमं पदं विद्धि परब्रह्मस्वरूपं विद्धि ॥ १७ ॥ मन इति ॥ मनस्तावद्वस्तुतोऽसदेव अनवेक्षणादविचारान्मुधैव स्वप्ने मरणप्रत्ययवदुत्थितं अतः प्रेक्षमाणं विचार्यमाणं सन्न विद्यते । अविचारसिद्धस्य विचारेण निवृत्तिर्युक्तैवेति भावः ॥१८॥ एकेति ॥ एकतत्त्वघनाभ्यासः एकस्यैव स्वाभिमतस्य तत्त्वस्य निरन्तरमनु-संधानं तथा प्राणानां विलयः मनोनिग्रहश्चेति त्रितयमेव मोक्षशब्दस्य संग्रहः । अत एतावदेव मोक्षसाधनमित्यर्थः ॥ १९ ॥ एकेति ॥ एकतत्त्वाभ्यासादीनां त्रयाणां मध्ये एकस्मिन्नपि सिद्धे इतरे अपि

अविनाभाविनी नित्यं जन्तूनां प्राणचेतसी।
कुसुमामोदवन्मिश्रे तिलतैल इव स्थिते ॥ २१ ॥
आधाराधेयवच्चैव एकाभावे विनश्यतः।
कुरुतश्च स्वनाशेन कार्यं मोक्षाख्यमुत्तमम् ॥ २२ ॥
एकस्मिन्सुदृढे तत्त्वे तावद्भावं विभावयेत्।
भावो भावत्वमायाति स्वाभ्यासाद्यावदाततम् ॥ २३ ॥
यदेकतानं भवति चेतस्तद्भवति क्षणात्।
शान्ताशेषविशेषौघं चिराभ्यासस्वभावतः ॥ २४ ॥

वसिष्ठ उवाच ॥

संसृतिस्वप्नविश्रान्तौ वेतालोदाहृतानिमान्।
प्रश्नानाकर्णय शुभान्प्रसङ्गात्स्मृतिमागतान् ॥ २५ ॥
अस्ति विन्ध्यमहाटव्यां वेतालो विपुलाकृतिः।
स कंचिन्मण्डलं गर्वादाजगाम जिघांसया ॥ २६ ॥

सिद्ध्यन्तीत्यर्थः ॥ २० ॥ अविनाभाविनी इति श्लोकद्वयं वाक्यम् ॥ जन्तूनां प्राणचेतसी कर्तृणी अविनाभावित्वात्तिलतैलवत् कुसुमामोदवदाधाराधेयवच्च मिश्रे परस्परसंगते एव स्थिते ॥ २१ ॥ अतो हेतोरेकस्याभावे द्वे अपि नश्यतः स्वनाशेन कारणेन मोक्षाख्यमुत्तमं कार्यं कुरुतश्च ॥ २२ ॥ एकस्मिन्निति ॥ सुदृढे प्रामाणिके एकस्मिंस्तत्त्वे तावद्भावं चित्तवृत्तिं विभावयेत्। यावत्स्वाभ्यासाद्धेतोराततं भावत्वं भाव्यमानस्वरूपत्वमायाति ॥ २३ ॥ यदिति ॥ चेतः चित्तं यदेकतानं यस्मिन्वस्तुनि एकाग्रं भवति चिराभ्यासस्वभावतः चिरकालानुसंधानवशात् शान्ताशेषविशेषौघं निवृत्तनिखिलभेदं सत् क्षणात्तदेव वस्तु भवति ॥ २४ ॥ २५ ॥ अस्तीति ॥ मण्डलं देशम्। जिघांसया भक्षणेच्छया ॥ २६ ॥

स वेतालोऽवसत्पूर्वं कस्मिंश्चित्सज्जनास्पदे ।
बहुबल्युपहारेण नित्यतृप्ततया सुखी ॥ २७ ॥
निर्निमित्तं निरागस्कं पुरोऽप्यभ्यागतं न सः ।
क्षुधितोऽपि नरं हन्ति सन्तो हि न्यायदर्शकाः ॥ २८ ॥
स कालेनाटवीगेहो जगाम नगरान्तरम् ।
न्याययुक्त्या नरं भोक्तुं क्षुधा समभिनोदितः ॥ २९ ॥
तत्र प्राप स भूपालं रात्रिचर्याविनिर्गतम् ।
तमाह घनघोरेण शब्देनोग्रनिशाचरः ॥ ३० ॥

वेताल उवाच ॥

राजंल्लब्धोऽसि भीमेन वेतालेन मयाधुना ।
क्व गच्छसि विनष्टोऽसि भव भोजनमद्य मे ॥ ३१ ॥

राजोवाच ॥

भो रात्रिंचर निर्न्यायं मां चेदत्सि बलादिह ।
तत्ते सहस्रधा मूर्धा स्फुटिष्यति न संशयः ॥ ३२ ॥

वेताल उवाच ॥

न त्वामद्म्यहमन्यायं न्यायोऽयं हि मयोच्यते ।
राजासि सकलाशाश्च पूरणीयास्त्वयार्थिनाम् ॥ ३३ ॥

बहुबल्युपहारेण मांसादिकल्पितबहुविधबलिसमर्पणेन ॥ २७ ॥ निर्निमित्तमिति ॥ स वेतालः क्षुधितोऽपि निरपराधं नरं पुरोऽभ्यागतमपि निर्निमित्तं न हन्ति । हि यस्मात्कारणात्सन्तो विद्वांसः न्यायदर्शका न्यायस्य प्रवर्तकाः । वेतालो ब्रह्मवित्तया अन्यायेन न हन्तीत्यर्थः ॥ २८ ॥ २९ ॥ तत्रेति ॥ रात्रिचर्याविनिर्गतम् । राजानो हि राज्यस्थितिं विचारयितुमेकाकिनः प्रच्छन्नवेषेण रात्रावटन्ति । तया रात्रिचर्यया विनिर्गतम् ॥ ३० ॥

ममैतामर्थनां राजन्संभवार्थां प्रपूरयन् ।
प्रश्नानिमान्मयोक्तांस्त्वं सम्यगाख्यातुमर्हसि ॥ ३४ ॥
कस्य सूर्यस्य रश्मीनां ब्रह्माण्डानि कृशाणवः ।
कस्मिंस्फुरन्ति पवने महागगनरेणवः ॥ ३५ ॥
स्वप्नात्स्वप्नान्तरं गच्छञ्शतशोऽथ सहस्रशः ।
त्यजन्नत्यजति स्वच्छं कः स्वरूपं प्रभास्वरम् ॥ ३६ ॥
रम्भास्तम्भो यथा पत्रमात्रमेव पुनःपुनः ।
अन्तरन्तस्तथान्तश्च तथा कोऽणुः स एव हि ॥ ३७ ॥
ब्रह्माण्डाकारभूतौ च सूर्यमण्डलमेरवः ।
अपरित्यजतोऽणुत्वं कस्याणोः परमाणवः ॥ ३८ ॥
कस्यानवयवस्यैव परमाणुमहागिरेः ।
शिलान्तर्निबिडैकान्तरूपा मज्ञा जगत्रयी ॥ ३९ ॥

वसिष्ठ उवाच ॥

इत्युक्तवति वेताले वक्तुं प्रश्नान्विहस्य सः ।
उवाच वचनं राजा दन्तांशुधवलाम्बरम् ॥ ४० ॥

राजोवाच ॥

एष चित्सूर्य उदितः सर्वमेतत्तपत्यसौ ।
विज्ञानात्मैष परमो भास्करो भाविताशयः ॥ ४१ ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ममेति ॥ संभवार्थां संभवदर्थाम् ॥ ३४ ॥ अथ श्लोकपञ्चकेन वेतालप्रश्नाः—कस्येति ॥ ते च षडप्युत्तरावसरे स्पष्टीभवन्ति ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ तत्र ब्रह्माण्डानि कस्य सूर्यस्य रश्मीनां कृशाणवः सूक्ष्मा लेशा इति प्रश्नोत्तरं श्लोकद्वयेनाह—एष इति ॥ कस्य सूर्यस्येति पृष्टः सूर्यः

इमे ये भुवनाभोगास्तस्यैव त्रसरेणवः ।
विज्ञानपरमार्कस्य भासा भान्ति भवन्ति च ॥ ४२ ॥
कालसत्ता नभःसत्ता स्पन्दसत्ताथ चिन्मयी ।
शुद्धचेतनसत्ता च सर्वमित्यादि पावनम् ॥ ४३ ॥
परमात्ममये वायौ रजः स्फुरति चञ्चलम् ।
कुसुमाङ्ग इवामोदस्तदतद्रूपकं स्वतः ॥ ४४ ॥

चित्सूर्य एवेति भङ्ग्यन्तरेण त्वयोक्तः । यतोऽसौ चित्सूर्य एवैतत्पूर्वं जगत्तपति प्रकाशयति । 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । एष चित्सूर्य उदित इति क्वचित्पाठः । तत्र उदितः त्वयोक्त इत्ययमेवार्थः । तस्य प्रसिद्धसूर्यवैलक्षण्यमाह । एष विज्ञानात्मा भाविताशयः जीवरूपेण सर्वान्तःकरणप्रवर्तकः परमो भास्करः । भास्करादीनामपि तत्तेजोलेशत्वात् । तदुक्तं गीतासु—'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति ॥ ४१ ॥ इमे भुवनाभोगास्तस्यैव विज्ञानपरमार्कस्य त्रसरेणुतुल्या अंशाः तस्यैव भासा भवन्ति च उत्पद्यन्ते प्रलीयन्ते च ॥ ४२ ॥ कस्मिन्पवने महागगनादयो रेणवः स्फुरन्तीति द्वितीयप्रश्नं श्लोकद्वयेन विवृणोति—कालेति ॥ कालसत्ता कालरूपायाः शक्तेः स्फूर्तिः । इत्थं नभःस्फूर्तिः नभःसत्ता । स्पन्दसत्ता स्पन्दस्वभावस्य वायोः सत्ता । अथ चिन्मयी शुद्धचेतनसत्ता केवलचेतनंसृष्टिश्च इत्यादिचेतनाचेतनात्मकं पावनं चिद्बिम्बितं रूपम् ॥ ४३ ॥ चञ्चलं पञ्चभूतानि रजः कुसुमाङ्गे कुसुमावयवेष्वामोदवदुपरमात्ममये वायौ तदतद्रूपमरूपं च स्वतः स्फुरति तत्र । तद्रूपत्वं स्वरूपत्वात् भासमानत्वात् केनचिदाकारेण प्रतीतिहेतुत्वाच्च । अतद्रूपं त्वविकारित्व-

जगदाख्ये महास्वप्ने स्वप्नात्स्वप्नान्तरं व्रजन् ।
रूपं त्यजति नो शान्तं ब्रह्म शान्तत्वबृंहितम् ॥ ४५ ॥
रम्भास्तम्भो यथा पत्रमात्रमेवोत्तरोत्तरम् ।
अन्तरन्तस्तथैवेदं विश्वं ब्रह्म विवर्त्यपि ॥ ४६ ॥
सूक्ष्मत्वादप्यलभ्यत्वात्परमात्मा परोऽणुकः ।
अनन्तत्वादसावेव प्राप्तो मेर्वादिमूलताम् ॥ ४७ ॥
परमाणुवदाभाति मेर्वादि पुरतोऽस्य तत् ॥ ४८ ॥

जडत्वदुःखमयत्वादिभिरिति द्रष्टव्यम् ॥ ४४ ॥ स्वप्नात्स्वप्नान्तरं शतसहस्रशो गच्छन् पूर्वस्वप्नान् त्यजन्नपि स्वच्छं सुभासुरं च स्वरूपं न त्यजतीति तृतीयप्रश्नं श्लोकेन विवृणोति—जगदिति ॥ जगदेव महास्वप्नः मायामयत्वात् तत्र जन्मानि क्षुद्रस्वप्नाः तादृशान्स्वप्नाननुभवन्नप्यात्मा शान्तत्वबृंहितं ब्रह्मणो निर्विकारस्वरूपे कल्पितं शान्तं रूपं न त्यजति। संसरन्नपि जीवो ब्रह्मभावं न त्यजति संसारस्य कल्पितत्वादिति भावः ॥ ४५ ॥ चतुर्थस्योत्तरमाह—रम्भास्तम्भेति ॥ रम्भास्तम्भः कदलीस्तम्भः स यथा अन्तरन्तर्विविच्य दृश्यमानः पुनःपुनः पत्रमात्रमेव तथा विवर्त्यपि विचित्रतया वर्तमानमपि विश्वमिदमन्तर्विचार्यमाणं ब्रह्मैव ॥ ४६ ॥ ब्रह्माण्डादयो महान्तोऽपि भावा अणुत्वमपरित्यजन्त एव कस्याणोः परमाणव इति पञ्चमं प्रश्नं सार्धेन श्लोकेन विवृणोति—सूक्ष्मत्वादिति ॥ परमात्मा सूक्ष्मत्वादिदन्तया ग्रहीतुमशक्यत्वादलभ्यत्वात् प्राप्तुमशक्यत्वाच्च परोऽणुकः परमाणुतुल्यः । असावेव परमात्मा अनन्तत्वाद्देशकालादिभिरपरिच्छिन्नत्वान्मेर्वादिमूलतां परिच्छिन्नस्य मेर्वादेर्मूलतामुपादानत्वं प्राप्तः ॥ ४७ ॥ तच्च मेर्वादि वस्तु

परोऽणुरेषोऽलभ्यत्वात्पूरकत्वान्महागिरिः ।
सर्वावयवरूपोऽपि निरस्तावयवः पुमान् ॥ ४९ ॥
विज्ञप्तिमात्रसारत्वात्सर्वाधिष्ठानरूपिणः ।
अस्य विज्ञप्तिमात्रस्य मज्जामात्रं जगत्त्रयम् ।
विज्ञानमात्रमध्यं हि विद्धि साधो जगत्त्रयम् ॥ ५० ॥
इति राजमुखाच्छ्रुत्वा वेतालः शान्तिमाययौ ।
भावितात्मतया तत्र विचारोत्थितया तया ॥ ५१ ॥
उपशान्तवपुर्भूत्वा गत्वैकान्तमनिन्दितम् ।
बभूवाविरलध्यानी विस्मृत्य विरलां क्षुधाम् ॥ ५२ ॥

इति श्रीयोगवासिष्ठसारे मोक्षोपाये निर्वाणप्रकरणे वेतालोपाख्यानं नाम सप्तमः सर्गः ॥ ७ ॥

---

तस्य परमात्मनः पुरतः परमाणुवदाभाति । परमात्ममहत्त्वापेक्षया मेर्वादीनामतिसूक्ष्मत्वात् ॥ ४८ ॥ अनवयवस्य परमाणुरूपस्य महागिरेरियं जगत्त्रयी शिलान्तर्गता निविडैकान्तरूपा कठिनैकस्वभावा मज्जा सारभूतोंऽश इति षष्ठं प्रश्नं सार्धश्लोकद्वयेन विवृणोति—पर इति ॥ एष पुमानलभ्यत्वादप्राप्यत्वात्परमाणुशब्दवाच्योऽपि शब्दपूरकत्वात् व्यापकत्वान्महागिरिरपि सर्वावयवरूपोऽपि स्थूलप्रपञ्चाकारतया दृश्यमानोऽपि वस्तुतोऽपि निरस्तावयवः ॥ ४९ ॥ सर्वप्रपञ्चाधिष्ठानरूपिणोऽस्य विज्ञप्तिमात्रसारत्वात् विज्ञानमात्रमेव सारोंऽश इति कृत्वा विज्ञप्तिमात्रस्यास्य पुंसो जगत्त्रयं मज्जामात्रं घनीभूतः सारोंऽश एव । हि यस्मात्कारणाज्जगत्त्रयं विज्ञानमात्रस्य मध्यं मध्ये वर्तते अतो मध्यवर्तित्वान्मज्जारूपत्वं युज्यत इति भावः ॥ ५० ॥ ५१ ॥ ५२ ॥ इति श्रीवासिष्ठविवरणे निर्वाणप्रकरणे वेतालोपाख्यानं नाम सप्तमः सर्गः ॥ ७ ॥

# अष्टमः सर्गः

वसिष्ठ उवाच ॥

संहृत्य सर्वतश्चित्तं स्तिमितेनान्तरात्मना ।
प्रवाहपतितं कुर्वन्निरिच्छस्तिष्ठ शान्तधीः ॥ १ ॥
आकाशविशदं कृत्वा मनसैव मनो मुनिः ।
तिष्ठैकशमशान्तात्मा सर्वत्र समदर्शनः ॥ २ ॥
स्थिरबुद्धेरमूढस्य यथाप्राप्तानुवर्तिनः ।
राज्ञो भगीरथस्येव दुःसाध्यमपि सिद्ध्यति ॥ ३ ॥

राम उवाच ॥

यथा चित्तचमत्कृत्या राज्ञो गङ्गावतारणम् ।
भगीरथस्य संपन्नं तन्मे कथय वै प्रभो ॥ ४ ॥

वसिष्ठ उवाच ॥

आसीद्भगीरथो नाम राजा परमधार्मिकः ।
भुवः समुद्रयुक्ताया मण्डलीतिलकोपमः ॥ ५ ॥
संकल्पानन्तरं प्रापुर्यथाभिमतमर्थिनः ।
चन्द्रप्रसन्नवदनाद्यस्माच्चिन्तामणेरिव ॥ ६ ॥

पूर्वं सौषुप्तमौनसंपादकविवेकप्रदर्शनाय वेतालप्रश्ना निरूपिताः । इदानीं तु दुर्लभापि चित्तविश्रान्तिः स्वप्रयत्नेनैव लभ्यत इति दर्शयितुं भगीरथकथा कथ्यते—संहृत्येति ॥ सर्वतो बाह्यविषयाच्चित्तं संहृत्य प्रत्याहृत्य स्तिमितेन स्वरूपनिष्ठेन अन्तरात्मनान्तःकरणेनोपलक्षितः प्रवाहपतितमाचारक्रमप्राप्तं कर्म कुर्वन्निरिच्छः शान्तधीस्तिष्ठ ॥ १ ॥ आकाशेति ॥ मनसैव विचारतत्परेण स्वचित्तेनैव ॥ २ ॥ ३ ॥ यथेति ॥ चित्तचमत्कृत्या आश्चर्यकारिणी

गङ्गासोपानपद्धत्या येन पातालवासिनः ।
योजिता ब्रह्मणो लोके बान्धवा लोकबन्धुना ॥ ७ ॥
यौवने वर्तमानस्य तस्य भूमीपतेरपि ।
प्रविचारयतो लोकयात्रां पर्याकुलामिमाम् ॥ ८ ॥
सुविरागचमत्कारविचारकणिकोद्भूत् ।
वयस्यपि च तारुण्ये दैवाद्वल्ली मराविव ॥ ९ ॥
एकान्ते चिन्तयामास महीपतिरसावथ ।
जगद्यात्रामिमां नित्यमसमञ्जससंकुलाम् ॥ १० ॥
पुनर्दिनं पुनः श्यामा दानादानशतं पुनः ।
तदेव शुष्कं विरसं लभ्यते कर्म कुर्वता ॥ ११ ॥
येन प्राप्तेन लोकेऽस्मिन्नाप्राप्तमवशिष्यते ।
तत्कृतं सुकृतं मन्ये शेषं कर्म विषूचिका ॥ १२ ॥

चित्तवृत्तिः चित्तचमत्कृतिस्तया ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ यौवन इति श्लोकद्वयं वाक्यम् ॥ सुविरागचमत्कारः शोभनो विरागचमत्कारो वैराग्यनिश्चयो यस्यां सा । विचारकणिका सूक्ष्मो विचारः ॥ ८ ॥ ९ ॥ एकान्त इति ॥ असमञ्जससंकुलां असमञ्जसमन्याय्यं तेन संकुलां व्याकुलाम् ॥ १० ॥ पुनरिति ॥ श्यामा रात्रिः । कर्म सांसारिकं व्यापारम् । शुष्कं विरसं नीरसं विपरीतरसं वा । दानादानशतं लभ्यते त्यागभोगशतं प्राप्यते ॥ ११ ॥ येनेति ॥ येन वस्तुना प्राप्तेन सता अप्राप्तं वाञ्छितं किंचिदपि नावशिष्यते तदेव कृतं सुकृतं मन्ये । शेषमन्यत्कर्म विषूचिकैव । पुनःपुनः प्रवृत्तिहेतुत्वात् । बन्धनिवृत्तिहेतुरेव सत्कर्मेत्यर्थः । यदाह प्रह्लादः— 'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म

पुनः पुनः पर्युषितं कर्म कुर्वन्न लज्जते ।
मूढबुद्धिरमूढस्तु किं कुर्यात्किल बालवत् ॥ १३ ॥
अथैकदोद्विग्नमनाः कदाचित्त्रितुलं गुरुम् ।
एकान्ते संसृतेर्भीतः समपृच्छद्भगीरथः ॥ १४ ॥
जरामरणमोहादिरूपाणां भयकारिणाम् ।
भगवन्सर्वदुःखानां कथमन्तः प्रजायते ॥ १५ ॥

त्रितुल उवाच ॥

चिरसाम्यात्मनोत्थेन निर्विभागविलासिना ।
राजञ्ज्ञेयावबोधेन पूर्णेन भरितात्मना ॥ १६ ॥
क्षीयन्ते सर्वदुःखानि त्रुट्यन्ति ग्रन्थयोऽभितः ।
संशया विलयं यान्ति सर्वकर्माणि चानघ ॥ १७ ॥
ज्ञेयं तु विदुरात्मानं संशुद्धज्ञप्तिरूपिणम् ।
स च सर्वगतो नित्यं नास्तमेति न चोदयम् ॥ १८ ॥

विद्यान्या शिल्पनैपुणम्' इति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ चिरेति श्लोकद्वयं वाक्यम् ॥ चिरसाम्यात्मना चिरं साम्यरूपेण सर्वावगताकारेण । यदुत्थितः यदुदितः तेन निर्विभागविलासिना निर्विशेषं स्फुरता पूर्णेन अखण्डेन भरितात्मना व्याप्तेन ज्ञेयावबोधेन ज्ञेयस्य परतत्त्वस्य साक्षात्कारेण सर्वदुःखानि क्षीयन्ते । ग्रन्थयो बन्धहेतवः अहंकारादयस्त्रुट्यन्ति छिद्यन्ते । संशयाः कैवल्यमस्ति न वा आत्मा परमानन्दरूपो भवति न वेत्येवमादयः शममायान्ति । सर्वकर्माणि पुण्यापुण्यरूपाणि सर्वाण्यपि कर्माणि शममायान्ति । 'भिद्यते हृदयग्रन्थिः' इत्यादिश्रुतेः ॥ १६ ॥ १७ ॥ किं तज्ज्ञेयमित्यत आह—ज्ञेयमिति ॥ ज्ञानस्वरूपो नित्यः सर्वगतश्च विशुद्ध आत्मैव ज्ञेय

भगीरथ उवाच ॥

चिन्मात्रं सर्वगं शान्तमस्ति निर्मलमच्युतम् ।
देहादि नेतरत्किंचिदिति वेद्मि मुनीश्वर ॥ १९ ॥
किंत्वत्र प्रतिपत्तिर्मे स्फुटतामेति न प्रभो ।
एतावन्मात्रसंवित्तिः स्यामहं सर्वदा कथम् ॥ २० ॥

त्रितुल उवाच ॥

ज्ञानेन ज्ञेयनिष्ठत्वमेति चेतो हृदम्बरे ।
ततः सर्ववपुर्भूत्वा भूयो जीवो न जायते ॥ २१ ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ २२ ॥
आत्मनोऽनन्ययोगेन तद्भावनमनारतम् ।

इत्यर्थः ॥ १८ ॥ चिन्मात्रमिति श्लोकद्वयं वाक्यम् ॥ शान्तत्वादिलक्षणं चिन्मात्ररूपं निर्गुणं ब्रह्मैवास्ति । इतरदात्मव्यतिरिक्तं देहादिरूपं वस्तु किंचिदपि वस्तुतो नास्तीति वेद्मि ॥ १९ ॥ किंतु अत्रास्मिन्नर्थे प्रतिपत्तिः ज्ञानं स्थिरप्रतिष्ठां नैति । अतः एतावन्मात्रसंवित्तिः चिन्मात्रानुसंधानमयः कथं केन प्रकारेण स्यां तं प्रकारं निरूपयेत्यर्थः ॥ २० ॥ ज्ञानेनेति ॥ ज्ञानेन वक्ष्यमाणलक्षणेन ज्ञानसाधनेन चेतो यदा हृदम्बरे हृदयाकाशे ज्ञेयनिष्ठत्वं स्वरूपनिष्ठत्वमेति ततस्तदा जीवः सर्ववपुर्भूत्वा सर्वात्मको भूत्वा भूयो न जायते । अन्तर्मुखतया स्वरूपनिष्ठत्वे स्वयमेव सर्वात्मकं ब्रह्म भूत्वा पुनर्जीवभावं नैतीत्यर्थः ॥ २१ ॥ किं तज्ज्ञानमित्यत्राह—असक्तिर्विषयेष्वनासक्तिः । पुत्रदारगृहादिषु अनभिष्वङ्गः ममतारहित्यम् । इष्टानिष्टोपपत्तिषु प्रियाप्रियेषु नित्यं समचित्तत्वं हर्षविषादराहित्यम् ॥ २२ ॥ अनन्ययोगेन अभेदभा-

विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ २३ ॥
अध्यात्मज्ञाननिष्ठत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं स्यादितोऽन्यथा ॥ २४ ॥
रागद्वेषक्षयकरं संसारव्याधिभेषजम् ।
अहंकारोपशान्तौ तद्राजञ्ज्ञानमवाप्यते ॥ २५ ॥

भगीरथ उवाच ॥

शरीरेऽस्मिंश्चिरारूढो गिरौ तरुरिव स्वके ।
अहंभावो महाभाग वद मे त्यज्यते कथम् ॥ २६ ॥

त्रितुल उवाच ॥

पौरुषेण प्रयत्नेन त्यक्त्वा भोगौघभावनाम् ।
गत्वा विकसितां सत्तामहंकारलयं व्रजेत् ॥ २७ ॥

वनया आत्मनः स्वरूपस्य अनारतमविच्छिन्नं तद्भावनं ब्रह्मभावनं ब्रह्मैवाहमित्यनुसंधानम् । विविक्तदेशसेवित्वं विविक्तः पूतो निर्जनश्च यो देशः तत्सेवनशीलत्वम् । जनसंसदि पामरजनसभायां अरतिरनवस्थानम् ॥ २३ ॥ अध्यात्मज्ञाननिष्ठत्वं आत्मविषयकज्ञानतत्परत्वम् । तत्त्वज्ञानार्थदर्शनं तत्त्वज्ञानप्रयोजनस्यात्यन्तिकदुःखोपरमस्यानुसंधानम् । एतत्पूर्वोक्तं ज्ञानसाधनत्वात् ज्ञानमिति प्रोक्तम् । इतोऽन्यथा उक्तसाधनविपरीतं विषयासक्त्यादिकमज्ञानम् । संसारहेतुत्वादित्यर्थः ॥ २४ ॥ रागेति ॥ देहादावहंकारभावत्वस्यात्मज्ञानप्रतिबन्धकत्वात् तदुपशान्तावेवात्मनः स्वरूपमवगम्यत इत्यर्थः ॥ २५ ॥ शरीर इति ॥ संसारस्यानादित्वात्तन्मूलत्वभूतस्याहंकारस्य रूढमूलतया त्यागो दुष्कर इति भावः ॥ २६ ॥ पौरुषेणेति ॥ पौरुषेण प्रयत्नेन वासनाक्षयहेतुः सम्यग्ज्ञानसमाध्य-

यन्त्राणां पञ्जरं यावद्भग्नं लज्जादिनाखिलम् ।
अकिंचनत्वशेषेण स्फुटा तावदहंकृतिः ॥ २८ ॥
सर्वमेतद्धिया त्यक्त्वा यदि तिष्ठसि निश्चलः ।
तदहंकारविलये त्वमेव परमं पदम् ॥ २९ ॥
शान्ताशेषविशेषणो विगतभीः संत्यक्तसर्वैषणो
गत्वा नूनमकिंचनत्वमरिषु त्यक्त्वा समग्रां श्रियम् ।
शान्ताहंकृतिरस्तदेहकलनस्तेष्वेव भिक्षामटन्
मामप्युज्झितवानलं यदि भवस्युच्चैस्तदुच्चैरसि ॥ ३० ॥

भ्यासादिरूपः पौरुषः प्रयत्नः तेन भोगौघभावनां विषयवासनां त्यक्त्वा विकसितां परिपूर्णां सत्तां गत्वा आश्रित्य अहंकारलयं व्रजेत्। साधयेदित्यर्थः ॥ २७ ॥ यन्त्राणामिति ॥ लज्जादि अनुचिते कर्मणि चेतसः संकोचो लज्जा । आदिशब्दाज्जातिकुलाभिमानादिग्रहणम् । तदुक्तम्—'घृणा शङ्का स्पृहा लज्जा जुगुप्सा चेति पञ्चमी । कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः' इति । तादृशं लज्जादिरूपं यन्त्राणां पञ्जरं अकिंचनत्वशेषेण स्वरूपातिरिक्तं किंचिदपि यस्य नास्ति सोऽकिंचनः तद्भावमात्रशेषेण यावदखिलं न भग्नं न त्यक्तं तावदहंकृतिः स्फुटा न निवर्तत इत्यर्थः ॥ २८ ॥ सर्वमिति ॥ एतत्सर्वं लज्जाभिमानादिकं सर्वमित्यर्थः ॥ २९ ॥ शान्तेति ॥ शान्तान्यशेषविशेषणानि ब्राह्मणोऽहं गृहस्थोऽहमित्यादीनि यस्य । विगता भीर्भयहेतुः यस्मात् । संत्यक्ताः सर्वा एषणाः पुत्रकलत्रादिवाञ्छा येन स तादृशः सन् अरिषु समग्रां श्रियं त्यक्त्वा अकिंचनत्वमेव गत्वा आश्रित्य शान्ताहंकृतिरस्तदेहकलनस्तेष्वेवारिषु भिक्षामटन् मामपरित्याज्यं गुरुमपि अलं सम्यगुज्झितवान् यदि भवसि तत्तर्हि उच्चैरस्युच्चैरसि उन्नतादप्युन्नतोऽसि । सर्वोत्कृष्टं ब्रह्मैवासी-

वसिष्ठ उवाच ॥

अथ तस्य गुरोर्वक्यादित्याकर्ण्य भगीरथः ।
मनस्याहितकर्तव्यः स्वव्यापारपरोऽभवत् ॥ ३१ ॥
ततः कतिपयेष्वेव वासरेषु गतेषु सः ।
अग्निष्टोममखं चक्रे सर्वत्यागैकसिद्धये ॥ ३२ ॥
गोभूम्यश्वहिरण्यादि ददौ धनमशेषतः ।
द्विजदेवार्तबन्धुभ्यो गुण्यागुण्यं विचारयन् ॥ ३३ ॥
दिवसत्रयमात्रेण सर्वमेव परित्यजन् ।
स्ववस्त्रमात्रशेषोऽसावासीद्राजा भगीरथः ॥ ३४ ॥
अथ सर्वार्थरिक्तं तु खिन्नप्रकृतिपौरकम् ।
सीमान्तिने तृणमिव राज्यं स्वमरये ददौ ॥ ३५ ॥
आक्रान्ते द्विषता राज्ये मुनिसद्मनि मण्डले ।
अधोवासोऽवशेषोऽसौ निर्जगाम स्वमण्डलात् ॥ ३६ ॥

त्यर्थः ॥ ३० ॥ अथेति ॥ मनस्याहितकर्तव्यः गुरूपदिष्टं कर्तव्यं चित्ते निधायेत्यर्थः । स्वव्यापारपरः राज्यचिन्ता स्वव्यापारः तत्र तात्पर्यवानिवाभूत् ॥ ३१ ॥ तत इति ॥ सर्वत्यागैकसिद्धये सर्वधनत्यागावसरसंपादनायेत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥ अथेति ॥ अथ भगीरथः सर्वार्थरिक्तं सर्वधनशून्यं खिन्नप्रकृतिपौरकं खिन्नाः दीनाः प्रकृतयोऽमात्यादयः पौराः पुरजनाश्च यस्मिंस्तत्स्वं स्वीयं राज्यं तृणमिव सीमान्तिने सीमान्ते वर्तमानाय अरये ददौ । सामन्तिन इति पाठे सामन्ताः समन्तसंभवा देशास्तद्वते । समीपदेशाधिपतय इत्यर्थः ॥ ३५ ॥ आक्रान्त इति ॥ द्विषता राज्ये राज्यभवे सद्मनि स्वगृहे मण्डले स्वराष्ट्रे च आक्रान्ते सति असौ भगीरथः अधोवासोऽवशेषः परिधानमात्रशेषो मुनिः मौननिष्ठः

यत्र न ज्ञायते नाम्ना यत्र न ज्ञायते मुखात् ।
तत्र ग्रामे अरण्येषु पुरेषूवास धैर्यवान् ॥ ३७ ॥
इत्यल्पेनैव कालेन प्रशान्तसकलैषणः ।
परमेण शमेनासौ प्राप विश्रान्तिमात्मनि ॥ ३८ ॥
भ्रमन्द्वीपानि भूपीठे कदाचित्कालयोगतः ।
अवशः शत्रुणाक्रान्तं स्वमेव प्राप तत्पुरम् ॥ ३९ ॥
नानागारांश्च तत्रासौ प्रवाहपतितांश्च तान् ।
पौराणां मन्त्रिणां चैव शनैर्भिक्षामयाचत ॥ ४० ॥
विविदुस्तं नृपं पौरा मन्त्रिणश्च भगीरथम् ।
पूजयामासुरथ तं सविषादं सपर्यया ॥ ४१ ॥
प्रभो राज्यं गृहाणेति प्रार्थितोऽप्यरिणा मुनिः ।
नाददे नावृताशेषं तृणमप्यशनादृते ॥ ४२ ॥
कतिचिद्दिवसांस्तत्र नीत्वान्यत्र जगाम सः ।
भगीरथोऽयं हा कष्टमिति लोकेन शोचितः ॥ ४३ ॥
अथान्यत्रोपशान्तात्मा परिविश्रान्तधीः सुखी ।
आत्मारामः कदाचिच्च स प्राप त्रितुलं गुरुम् ॥ ४४ ॥
स्वमेव स्वागतं कृत्वा तेन सार्धं भगीरथः ।
किंचित्कालमुवासाद्रौ वने ग्रामे पुरे जने ॥ ४५ ॥

स्वमण्डलान्निर्जगाम ॥ ३६ ॥ ३७ ॥ ३८ ॥ भ्रमन्निति ॥ अवशः स्वस्य गन्तव्यदेशाभावात्पथिकानुसारी शत्रुणा आक्रान्तं स्वयमेव तत्पुरं कदाचित्प्रापेत्यर्थः ॥ ३९ ॥ नानेति ॥ प्रवाहपतितान्मनः-प्रवाहानुसारेण प्राप्तान् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ स्वमिति ॥ स्वमेव स्वागतं कृत्वा । स्वोचितं स्वागतादिसत्कारं

समतामुपयातौ तौ गुरुशिष्यौ समौ स्थितौ ।
कलयामासतुः स्वस्थौ विषादं देहधारणे ॥ ४६ ॥
किमयं धार्यते देहः किंवानेनोज्झितेन नौ ।
यथाक्रमं यथाचारं तिष्ठत्वेष यथास्थितम् ॥ ४७ ॥
इति निश्चित्य तिष्ठन्तौ तौ वनाद्वनगामिनौ ।
न ननन्दतुरानन्दं न दुःखं न च मध्यमम् ॥ ४८ ॥
धनानि वाजिविभवाद्यैश्वर्यं चाष्टधोदितम् ।
सिद्धैरप्यर्पितं तुष्टैर्मेनाते जर्जरं तृणम् ॥ ४९ ॥
अथैकदा पुरश्रेष्ठे कस्मिंश्चिन्मण्डलान्तरे ।
अनपत्यं नृपं मृत्युरहरत्स्वमिवामिषम् ॥ ५० ॥
तत्र प्रकृतयः खिन्ना नष्टदेशक्रमा नृपम् ।
अन्विष्यन्तिस्म संयुक्तं गुणलक्ष्म्या विशालया ॥ ५१ ॥
तं भगीरथमासाद्य स्थितं भिक्षाचरं मुनिम् ।
परिज्ञाय समानीय सैन्ये चक्रुर्महीपतिम् ॥ ५२ ॥
भगीरथः क्षणेनैव प्रावृषीवाम्बुना सरः ।
वलितः सेनया गुर्व्या समारोहन्मतङ्गजम् ॥ ५३ ॥

कृत्वेत्यर्थः ॥४५॥ समतामिति ॥ देहधारणं विषादं दुःखहेतुम् ॥४६॥ किमिति श्लोकद्वयं वाक्यम् ॥ आनन्दं आनन्द्यते येन तं सुखहेतुं न ननन्दतुः नाभ्यनन्दताम् । दुःखं दुःखहेतुम् । मध्यमं अनुभवहेतुम् ॥ ४७ ॥ ४८ ॥ धनानीति ॥ धनानि प्रसिद्धानि । वाजिविभवो वाजिसंपत्तिस्तदादि यद्राज्ञामैश्वर्यं तच्च तदप्यष्टधोदितं अणिमादिकं तच्च सिद्धैरष्टमहासिद्धिमद्भिः देवयोनिभेदैस्तुष्टैः प्रीतैरप्यर्पितमपि जर्जरं जीर्णं मेनाते । अन्तरायधियेति भावः ॥४९॥५०॥५१॥५२॥

भगीरथो जगन्नाथो जयतीति जनारवैः ।
नीरन्ध्रतामुपाजग्मुर्गिरीन्द्राणां महागुहाः ॥ ५४ ॥
तत्र तत्पालयन्तं तं राज्यं राजानमादृताः ।
आजग्मुः प्राक्प्रकृतयः प्राहुरित्थं मृताधिपाः ॥ ५५ ॥
राजन्नस्माकमधिपो यस्त्वया स पुरा कृतः ।
मृत्युना विनिगीर्णोऽसौ मत्स्येनेवामिषं मृदु ॥ ५६ ॥
तत्त्वं पालयितुं राज्यं प्रसादं कर्तुमर्हसि ।
अप्रार्थितोपयातानां त्यागोऽर्थानां च नोचितः ॥ ५७ ॥

वसिष्ठ उवाच ॥

इति संप्रार्थितो राजा तदङ्गीकृत्य तद्वचः ।
सप्तसागरचिह्नायाः स बभूव भुवः पतिः ॥ ५८ ॥
समः शान्तमना मौनी वीतरागो विमत्सरः ।
प्राप्तकार्यैककरणरतिराहितविस्मयः ॥ ५९ ॥
अथ वर्षसहस्राणि तपस्तप्त्वा सुदारुणम् ।
स्वपितामहोत्तारणे भुवि गङ्गामयोजयत् ॥ ६० ॥
भगीरथे महीपतौ यशःप्रचारवीथिका ।
तदादि मार्गगा तु सा महीतलं बभूव ह ॥ ६१ ॥

इति श्रीलघुयोगवासिष्ठे मोक्षोपाये निर्वाणप्रकरणे भागीरथोपाख्यानं नाम अष्टमः सर्गः ॥ ८ ॥

---

॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ इतीति ॥ तत्तादृशं तद्वचः तासां प्रकृतीनां वचः ॥ ५८ ॥ ५९ ॥ अथेति ॥ पितामहाः सगरतनयाः तेषामुत्तारणार्थं नरकादुद्धरणार्थम् ॥ ६० ॥ भगीरथ इति ॥ यशःप्रचारवीथिका भगीरथस्य कीर्तिसंचारमार्गः तदादि स

## नवमः सर्गः

वसिष्ठ उवाच ॥

इदं पूर्वं परित्यज्य क्रोडीकृत्य मनःखगम् ।
शान्त आत्मनि तिष्ठ त्वं शिखिध्वज इवाचलः ॥ १ ॥

राम उवाच ॥

कोऽसौ शिखिध्वजो नाम कथं वा लब्धवान्पदम् ।
एतन्मे कथय ब्रह्मन्भूयो बोधविवृद्धये ॥ २ ॥

वसिष्ठ उवाच ॥

द्वापरे पूर्वमभवदतीते सप्तमे मनौ ।
मालवानां पुरे श्रीमाञ्छिखिध्वज इतीश्वरः ॥ ३ ॥
धैर्यौदार्यदयासत्यक्षमादमशमान्वितः ।
शूरः शुभसमाचारो मानी गुणगणाकरः ॥ ४ ॥

भगीरथः आदिर्यस्मिन्कर्मणि तद्यथा भवति तथेति । महीतलं भवन्क्रियाविशेषणम् ॥ ६१ ॥ इति श्रीवासिष्ठविवरणे भगीरथोपाख्यानं नाम अष्टमः सर्गः ॥ ८ ॥

पूर्वं दुर्लभापि चित्तविश्रान्तिः स्वप्रयत्नेनैव लभ्यत इति दर्शयितुं भगीरथकथा कथिता । इदानीं तु प्रतिबन्धकपापसंचयक्षयाभावे दुर्लभमपि स्वात्मज्ञानमाचार्यस्य प्रज्ञातिशयाल्लभ्यत इति दर्शयितुमनेकोपाख्यानगर्भं शिखिध्वजोपाख्यानं प्रारभ्यते—इदमिति ॥ पूर्वमिदं विश्वं परित्यज्य प्रपञ्चदृष्टिं तद्वासनां च त्यक्त्वा मनःखगं पक्षिवत्परिभ्रमणशीलं मनः क्रोडीकृत्य एकनिष्ठं कृत्वा शान्तः सन् शिखिध्वज इवात्मन्यचलस्तिष्ठ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

सुराष्ट्राधिपतेः कन्यां चूडालां नाम नामतः ।
उपयेमे सतीमात्मसदृशीं स शिखिध्वजः ॥ ५ ॥
अवर्धत तयोः प्रीतिरन्योन्यार्पितचेतसोः ।
नित्यमेवाभियुक्तत्वात्प्रियत्वाच्चेष्टितस्य च ॥ ६ ॥
मिथः कलाकलापस्य कोविदौ तौ बभूवतुः ।
स्वरूपमेवमेवैतौ दधतुर्मित्रतां गतौ ॥ ७ ॥
एवं बहूनि वर्षाणि मिथुनं निर्भरस्पृहम् ।
रेमे यौवनलीलाभिरनन्ताभिर्दिने दिने ॥ ८ ॥
अथ यातेषु बहुषु वर्षेष्वावृतिशालिषु ।
शनैर्गलति तारुण्ये भिन्नकुम्भादिवाम्भसि ॥ ९ ॥
पातः पक्वफलस्येव मरणं दुर्निवारणम् ।
हिमाशनिरिवाम्भोजे जरा निपतितोन्मुखी ॥ १० ॥
आयुर्गलत्यविरतं जलं करतलादिव ।
प्रावृषीव लतातुम्बी तृष्णैका दीर्घतां गता ॥ ११ ॥
शैलनद्या रय इव संप्रयात्येव यौवनम् ।
सुखानि प्रपलायन्ते शरा इव धनुश्च्युताः ॥ १२ ॥

॥ ५ ॥ अवर्धतेति ॥ चेष्टितस्य परस्परालोकनसंभाषणादिरूपस्य प्रियत्वादभिमतत्वाच्च तयोः प्रीतिरवर्धतेत्यन्वयः ॥ ६ ॥ मिथ इति ॥ कलाकलापस्य गीतवादित्रनृत्यादिरूपस्य ॥ ७ ॥ ८ ॥ अथेति श्लोकषट्कं वाक्यम् ॥ अथ बहुषु वर्षेषु यातेषु ततः चूडालाशिखिध्वजयोर्युग्मं इति तारुण्ये शनैर्गलति 'जरा निपतितोन्मुखी'त्यादिना प्रकारेण संसारासारतां निर्णीय संसारव्याधिभेषजमध्यात्मशास्त्रं चिरं विचारयामासेत्यन्वयः । तत्र तुम्बीलता अलाबूः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

रम्भागर्भ इवासारो व्यवहारो विरागदः ।
तदिह स्यान्न संसारे तादृक्षमतिशोभनम् ॥ १३ ॥
यदासाद्य पुनश्चेतो दशासु न विदूयते ॥ १४ ॥
इति निर्णीय युग्मं तत्संसारव्याधिभेषजम् ।
चिरं विचारयामास शास्त्रमध्यात्मसंमतम् ॥ १५ ॥
आत्मज्ञानैकमन्त्रेण संसृत्याख्या विषूचिका ।
संशाम्यतीति निश्चित्य तावास्तां तत्परायणौ ॥ १६ ॥
तच्चित्तौ तद्गतप्राणौ तन्निष्ठौ तद्विधाश्रयौ ।
तदा तदर्चनपरौ तदीहौ तौ विरेजतुः ॥ १७ ॥
तत्रैवातिघनाभ्यासौ बोधयन्तौ परस्परम् ।
तत्प्रीतौ तत्समारम्भौ चिरारम्भौ बभूवतुः ॥ १८ ॥
अथ सान्तिरतं राम रमणीयपदक्रमात् ।
श्रुत्वाध्यात्मविदां वक्त्राच्छास्त्रार्थांस्तारणक्षमान् ॥ १९ ॥
इत्थं विचारयामास स्वमात्मानमहर्निशम् ।
अव्यापृता व्यापृता वा धिया धवलयेद्धया ॥ २० ॥

॥१३॥१४॥१५॥१६॥ तच्चित्ताविति ॥ तदित्यात्मज्ञानं परामृश्यते । तद्गतप्राणौ चित्तस्य तद्गतत्वाच्चित्तप्राणयोश्चाविनाभावात् । तन्निष्ठौ तत्रैवात्मज्ञाने निष्ठा नियमो ययोस्तौ। तद्विधाश्रयौ तद्विधाः आत्मज्ञाननिष्ठाः ते आश्रयाः आश्रयणीयाः ययोस्तौ। तदर्चनपरौ आत्मवित्पूजनपरौ । तदीहौ तदुचितचेष्टायुक्तौ ॥ १७ ॥ १८ ॥ अथेति श्लोकद्वयं वाक्यम् ॥ अव्यापृता तूष्णीमासीना व्यापृता वा समुचितं व्यापारं कुर्वाणापि धिया स्वमात्मानमित्थं वक्ष्यमाणप्रकारेण

चूडालोवाच ॥

प्रेक्षे तावत्स्वमात्मानं किमहं स्यामिति स्वयम् ।
कस्यायमागतो मोहः कथमभ्युदितः क्व वा ॥ २१ ॥
देहस्तावज्जडो मूढो नाहमित्येव निश्चयः ।
कर्मेन्द्रियगणश्चास्मादभिन्नो जड एव सः ॥ २२ ॥
बुद्धीन्द्रियगणोऽप्येवं जड एवेति दृश्यते ।
प्रेर्यते मनसा यस्माद्यष्ट्येव भुवि लोष्टकः ॥ २३ ॥
मनस्त्वेवं जडं मन्ये संकल्पात्मकशक्तिमत् ।
क्षेपणैरिव पाषाणः प्रेर्यते बुद्धिनिश्चयैः ॥ २४ ॥
बुद्धिर्निश्चयरूपैव जडा सत्येव निश्चयः ।
खातेनेव सरित्कूलमहंकारेण चाल्यते ॥ २५ ॥
अहंकारोऽपि निःसारो जड एव शवात्मकः ।
जीवेन जन्यते यक्षो बालेनेव भ्रमात्मकः ॥ २६ ॥

विचारयामास ॥ १९ ॥ २० ॥ २१ ॥ देह इति ॥ देहस्तावज्जडः । तत्र हेतुः मूढः विचित्तः । नाहमित्येव निश्चयः । कर्मेन्द्रियगणश्च अस्माद्देहादभिन्न इति जड एव ॥ २२ ॥ बुद्धीति ॥ बुद्धीन्द्रियगणोऽपि यष्ट्यालोके लोष्टक इव मनसा यस्मात्प्रेर्यते तस्माज्जड एवेति दृश्यते निश्चीयते ॥ २३ ॥ मन इति ॥ संकल्पात्मकवशान्मनश्च क्षेपणैः पाषाण इव बुद्धिकृतैर्निश्चयैः प्रेर्यत इति जडं मन्ये । क्षिप्यन्ते एभिरिति क्षेपणानि रज्जुदार्वादिमया यन्त्रविशेषाः ॥ २४ ॥ बुद्धिरिति ॥ निश्चयरूपा बुद्धिश्च खातेन खननजनितश्वभ्रेण सरिदिव अहंकारेण चाल्यते प्रेर्यत इति जडैवेति निश्चयः ॥ २५ ॥ अहंकार इति ॥ निःसारः विपरीतज्ञानरूपत्वान्निःसत्त्वः चेष्टारहित-

जीवश्च कलनाकारो वातात्मा हृदये स्थितः ।
सुकुमारोऽन्तरन्येन केनापि परिजीवति ॥ २७ ॥
आ अहो ज्ञातमेतेन चेत्योल्लेखकलङ्किना ।
जीवो जीवति जीर्णेन चिद्रूपेणात्मरूपिणा ॥ २८ ॥

त्वाच्छवात्मकोऽहंकारोऽपि बालेन भ्रमात्मको यक्ष इव जीवेन जन्यते कल्प्यत इति । जड एव अवशात्मक इति पाठे परवशस्वभाव इत्यर्थः ॥ २६ ॥ जीव इति ॥ हृदये स्थितः अन्तःकरणप्रतिफलितचैतन्यरूपत्वाद्धृदये वर्तमानः । अत एव कलनाकारः कल्पितस्वभावः वातात्मा प्राणमयत्वात्सुकुमारः अध्रुवः प्रत्यहं सुषुप्तावात्मनि लीयमानत्वात् एवंविधो जीवश्च अन्तःस्थेन स्वस्याऽप्यन्तरनुप्रविष्टेन केनाप्यव्यपदेश्येन प्राणप्रदायिना पुरुषेणानुप्राणितः परिजीवति । अतो जीवोऽपि पारमार्थिकमात्मस्वरूपं न भवतीत्यर्थः । एतदुक्तं भवति—यथा घटाद्युपाध्यवच्छिन्नोऽनवच्छिन्नश्चाकाशोऽस्ति तथा सर्वप्राणिनां हृदि जीव ईश्वरश्चास्ति । तथाच व्याससूत्रम् 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति । तत्र च मायाविधेयो जीवः विधेयमाय ईश्वर इति भेदः । तदुक्तं गौडपादाचार्यैः—'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः । कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते' इति ॥ २७ ॥ आ अहो इति ॥ आ इति स्मृतिद्योतकमव्ययम् । अहो इत्याश्चर्ये । अहो मया ज्ञातमेतत् । किं तदित्यत्राह । अयं जीवश्चेत्योल्लेखो दृश्यसंबन्धः तेन कलङ्किना प्रतिबिम्बरूपकलङ्कवता जीर्णेन अनादिना आत्मरूपिणा सर्वेषामात्मभूतेन चिद्रूपेण चित्स्वरूपेणैव जीवति प्राणान् धारयति

चेत्यभ्रमवता जीवश्चिद्रूपेणैव जीवति ।
आमोदः पवनेनेव खातेनेव सरिद्रयः ॥ २९ ॥
असत्यजडचेत्यांशचयनाच्चिद्वपुर्जडम् ।
महाजलगतो ह्यग्निरिव रूपं समुज्झति ॥ ३० ॥
एवं चिद्रूपमप्येतच्चेत्योन्मुखतया स्वयम् ।
जडं शून्यमसत्कल्पं चैतन्येन प्रबोध्यते ॥ ३१ ॥
इदानीमहमीक्षेऽहं केनैषा चित्प्रचेत्यते ।
अहो नु चिरकालेन ज्ञातं ज्ञेयमनामयम् ॥ ३२ ॥
एते हि चिद्विलासान्ता मनोबुद्धीन्द्रियादयः ।
असन्तः सर्व एवाहो अवधानं विनोत्थिताः ॥ ३३ ॥

॥ २८ ॥ एतदेव सदृष्टान्तमाह—चेत्येति ॥ चेत्यभ्रमवता चेत्येषु प्रतिफलनात्तैस्तादात्म्याभिमानवता ॥ २९ ॥ असत्येति ॥ चिद्वपुः चित्स्वरूपं असत्यजडचेत्यांशचयनात् असत्या जडाश्च ये चेत्यांशाः तेषां चयनादुपचयाद्धेतोः जडं सन्महाजलगतोऽग्निरिव स्वरूपं चित्स्वभावमुज्झति अपाकरोति ॥ ३० ॥ एतच्चिद्रूपं एवं पूर्वोक्तप्रकारेण चेत्योन्मुखतया दृश्यभावनया स्वयमेव जडं जाड्ययुक्तं शून्यसमं असत्कल्पं च भूत्वापि पुनश्चैतन्येन अनुप्रविष्टचैतन्येन प्रबोध्यते । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः ॥ ३१ ॥ इदानीमित्यर्धमेकं वाक्यम् । एषा चित्केन हेतुना प्रचेत्यते मनोबुद्ध्यादिरूपेण प्रवर्त्यते इत्येतदिदानीमहमीक्षे विचारये । अहो इति अर्धमेकं वाक्यम् । ज्ञेयं ज्ञातं यज्जिज्ञासितं चिद्विवर्तनिमित्तं ज्ञातव्यं तज्ज्ञातमित्यर्थः ॥ ३२ ॥ एते हीति ॥ चिद्विलासान्ताः जडेषु वस्तुषु चैतन्यकलनं चिद्विलासः तदन्तास्तत्पर्यन्ताः एते मनोबुद्धीन्द्रियादयः सर्व एव

महाचिदेकैवास्तीह महासत्तेति योच्यते।
निष्कलङ्का समा शुद्धा निरहंकाररूपिणी ॥ ३४ ॥
सकृद्विभाति विमला नित्योदयवती समा।
सा ब्रह्मपरमात्मादिनामभिः परिगीयते ॥ ३५ ॥

वसिष्ठ उवाच ॥

दिनानुदिनमित्येषा स्वात्मारामतया तथा।
नित्यमन्तर्मुखतया बभूव प्रकृतिस्थिता ॥ ३६ ॥
नीरागा निरुपासङ्गा निर्द्वन्द्वा निःसमीहिता।
न जहाति न चादत्ते प्रकृताचारचारिणी ॥ ३७ ॥
परमात्ममहालाभपरिपूर्णान्तरान्तरा।
सर्वोत्तमातीततया जगामाव्यपदेश्यताम् ॥ ३८ ॥

वस्तुतोऽसन्तोऽपि अवधानं विना ऐकाग्र्यमवधानं तेन विना तद्भावेन उदिताः प्रादुर्भूताः आत्मनः स्वरूपनिष्ठत्वाभावरूपेण प्रमादेनोदिताः। अनवधानमेव चितो नानारूपत्वविवर्तहेतुरित्यर्थः॥३३॥ महाचिदिति श्लोकद्वयं वाक्यम् ॥ महासत्तापरपर्याया निष्कलङ्का या महाचिदस्ति सैव ब्रह्मपरमात्मादिनामभिर्गीयत इत्यर्थः। समेति द्विरुपादीयते तयोरेकः समशब्दः सर्वशब्दपर्यायः। समा सर्वात्मकेत्यर्थः। अन्यस्त्ववैषम्यवाची समैकरूपेति न पौनरुक्त्यम् ॥ ३४ ॥ ३५ ॥ दिनानुदिनमिति ॥ दिनं पूर्वभावि अनुदिनं पश्चाद्भावि दिनं चानुदिनं च दिनानुदिनम्। सर्वेष्वपि दिनेष्वित्यर्थः। एषा चूडाला ॥ ३६ ॥ नीरागेति ॥ राग इच्छा उपासङ्ग आसक्तिः द्वन्द्वमिष्टानिष्टबुद्धिः समीहितमुद्योगः। न जहाति द्वेषाभावात्। न चादत्ते रागाभावात् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

स्वविवेकधनाभ्यासवशादात्मोदयेन सा ।
शुशुभे शोभना पुष्पलतेवाभिनवोद्गता ॥ ३९ ॥
अथ तामनवद्याङ्गीं कदाचित्स शिखिध्वजः ।
अपूर्वशोभामालोक्य स्मयमान उवाच ह ॥ ४० ॥
भूयो यौवनयुक्तेव मण्डितेव पुनःपुनः ।
अधिकं राजसे तन्वि कान्त्या विमलया तनोः ॥ ४१ ॥
प्रपीतामृतसारेव लब्धालब्धपदेव च ।
आनन्दामृतपूर्णेव राजसे नितरां प्रिये ॥ ४२ ॥
अभोगकृपणं शान्तमूर्जितं समतां गतम् ।
गम्भीरं च प्रसन्नं च चेतः पश्यामि ते प्रिये ॥ ४३ ॥

चूडालोवाच ॥

न किंचित्किंचिदाकारमिदं त्यक्त्वाहमागता ।
न किंचित्किंचिदाकारं तेनास्मि श्रीमती स्थिता ॥ ४४ ॥
इदं सर्वं परित्यज्य सर्वमन्यन्मया श्रितम् ।
यत्तत्सत्यमसत्यं च तेनास्मि श्रीमती स्थिता ॥ ४५ ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ अथाष्टभिः श्लोकैः चूडाला स्वानुभवं भर्त्रे निवेदयति—न किंचिदिति ॥ न किंचिज्जगत्तावत्संभवति । 'नेह नानास्ति' इति बाध्यमानत्वात् । नाप्यसत् प्रतीयमानत्वात् । असतश्च सत्तया वा व्यवहर्तुमयोग्यम् । अतएव किंचिदाकारं महासत्तात्मना केनचिदाकारेणोपलक्षितं परं ब्रह्म येन हेतुना आगता प्राप्ता। न किंचिदाकारं ब्रह्मभावमापन्नेति यावत् । तेन अस्मि अहं श्रीमती कान्तिमती स्थिता। अस्मीत्यहमर्थेऽव्ययम्। श्रीरिह ब्रह्मविद्या। प्रभावः सद्भूतमतिलोकं च दिव्यं तेजः ॥४४॥ एतदेवाह—इदमिति ॥

यत्किंचिद्यन्न किंचिच्च तज्जानामि यथास्थितम् ।
यथोदयं यथानाशं तेनास्मि श्रीमती स्थिता ॥ ४६ ॥
भोगैरभुक्तैस्तुष्यामि भुक्तैरिव सुदूरगैः ।
न हृष्यामि न कुप्यामि तेनाहं श्रीमती स्थिता ॥ ४७ ॥
एकैवाकाशसंकाशे केवले हृदये रमे ।
न रमे राजलीलासु तेनाहं श्रीमती स्थिता ॥ ४८ ॥
जगतां प्रभुरेवास्मि न किंचिन्मात्ररूपिणी ।
इत्यात्मन्येव तुष्यामि तेनाहं श्रीमती स्थिता ॥ ४९ ॥

इदं जगत्सर्वं परित्यज्य अन्यद्धि विश्वविलक्षणं सर्वं सर्वात्मकं सत्यं अबाध्यं असत्यं च असति कल्पिते जगत्यनुप्रविष्टं ब्रह्म यद्यस्मादाश्रितं तेनाहं श्रीमती स्थिता ॥ ४५ ॥ यत्किंचिदिति ॥ यद्वस्तु किंचित् महासत्तारूपत्वात् । न किंचिच्च विश्वविलक्षणत्वात् । तद्वस्तु यथास्थितं यथोदयं यथानाशं च जानामि । सृष्ट्यादिषु यथायथा वर्तते तत्सर्वं जानामीत्यर्थः ॥ ४६ ॥ भोगैरिति ॥ भुक्तैरिव पूर्वमुपभुक्तैरिव सुदूरगैर्विप्रकृष्टैरभुक्तैरपि भोगैस्तुष्यामि । भुक्तानां च विप्रकृष्टत्वाविशेषात् पक्षपाते हेत्वभावादिति भावः । न हृष्यामि न कुप्यामि रागद्वेषयोरभावात् ॥ ४७ ॥ एकेति ॥ आकाशसंकाशे आकाशवत्परिपूर्णे केवले विशुद्धे हृदये हृदयवत्सर्वान्तरे स्वात्मनि एकैव रमे । राजलीलासु राज्ञां लीलासु गीतवाद्यनृत्यादिषु न रमे ॥ ४८ ॥ जगतामिति ॥ न किंचिन्मात्ररूपिणी यद्धि ब्रह्म न किंचित् किंचिदपि न भवति सर्वविलक्षणत्वात्तन्मात्ररूपिणी अस्मि । अहं जगतां प्रभुरेव । सर्वाणि भूतानि योऽन्तरेव यमयतीति सर्वनियामकत्वादित्यनेन प्रकारेणात्मन्येव तुष्यामि ॥ ४९ ॥

तनुविद्वेषरागाभिः प्रज्ञाभिः शास्त्रदृष्टिषु ।
रमे सह वयस्याभिस्तेनाहं श्रीमती स्थिता ॥ ५० ॥
पश्यामि यन्नयनरश्मिभिरिन्द्रियैर्वा
चित्तेन वेह हि तदङ्ग न किंचिदेव ।
पश्यामि तद्विरहितं तु न किंचिदन्तः
पश्यामि सम्यगिति नाथ विनोदयामि ॥ ५१ ॥

वसिष्ठ उवाच ॥

एवमात्मनि विश्रान्तां वदन्तीं तां वराङ्गनाम् ।
अबुध्वा तद्गिरामर्थं विहस्योवाच भूपतिः ॥ ५२ ॥

शिखिध्वज उवाच ॥

असंबद्धप्रलापासि बालासि वरवर्णिनि ।
रमसे राजलीलाभिरहमेवं नृपात्मजे ॥ ५३ ॥

तन्विति ॥ तनुविद्वेषरागाभिः तनू कृशौ विद्वेषरागौ यासु ताभिः शास्त्रदृष्टिषु प्रज्ञाभिः । वीतरागकथाभिरित्यर्थः । ताभिर्वयस्याभिः सखीभिः सह रमे विनोदयामि ॥ ५० ॥ पश्यामीति ॥ यद्वस्तु दूरस्थत्वान्नयनरश्मिभिः पश्यामि यच्च संनिहितत्वात्त्वगादिभिरिन्द्रियैः पश्यामि यच्चातीतमनागतं वा चित्तेन पश्यामि तत्सर्वं किंचिदपि न पश्यामि नानुसंदधामि । तद्विरहितं दृश्यव्यतिरिक्तं तन्न किंचिद्विश्वविलक्षणं परं वस्तु सम्यगन्तः पश्यामि इत्यनेन हेतुना विनोदयामि ॥ ५१ ॥ ५२ ॥ असंबद्धेति ॥ रमसे राजलीलाभिः अहमेवं नृपात्मजे यथाहं एवं त्वमपि रमसे । न रम इति ब्रुवाणा त्वसंबद्धप्रलापासीत्यन्वयः । राजलीलाभी रमस्वावनिपालात्मजेति पाठे यथेदानीं रमसे एवमुत्तरकालमपि रमस्व न रमे

किंचित्त्यक्त्वा न किंचिद्यो गतः प्रत्यक्षसंस्थितम् ।
त्यक्तप्रत्यक्षसद्रूपः स कथं किल शोभते ॥ ५४ ॥
भोगैरभुक्तैस्तुष्टोऽहमिति भोगाञ्जहाति यः ।
दरिद्रवद्दुर्भगः सन्स कथं किल शोभते ॥ ५५ ॥
यत्पश्यामि न पश्यामि तत्पश्याम्यन्यदेव तु ।
प्रलाप इत्यसत्यस्य स कथं किल शोभते ॥ ५६ ॥

इति तु मिथ्याप्रलापिनी माभूरित्यर्थः ॥ ५३ ॥ न किंचित्किंचिदाकारमिदं त्यक्त्वेति यदुक्तं तत्परिहसति—किंचिदिति ॥ यत्प्रत्यक्षसंस्थितं किंचित्पृथिव्यादिरूपं वस्तु त्यक्त्वा न किंचिद्व्यपदेश्यं वस्तु गतः प्राप्तः त्यक्तप्रत्यक्षसद्रूपः त्यक्तं प्रत्यक्षं वस्तु येन स कथं शोभते । प्रामाणिकस्य परित्यागादप्रामाणिकस्य च स्वीकारादिति भावः ॥ ५४ ॥ भोगैरभुक्तैरिति यदुक्तं तत्परिहसति—भोगैरिति ॥ यो मूढः अभुक्तैरेव भोगैस्तुष्ट इति मन्यमानः प्राप्तानपि भोगाञ्जहाति स मूढः प्राप्तभोगत्यागाद्दरिद्रवद्दुर्भगो भाग्यहीनः सन्कथं शोभते । रुषेवासनशय्यायामिति पाठे यथाहि कश्चित्कुपितः परिविष्टेष्वपि भोज्यवस्तुषु संनिहितायामपि स्वकान्तायां रुषा रोषवशादासन एव शय्यायां तिष्ठन् भोगपराङ्मुखः स्यात्तद्वदित्यर्थः ॥ ५५ ॥ यत्पश्यामीति ॥ यद्वस्तु पश्यामि चक्षुरादिभिर्विषयीकरोमि तादृशं वस्तु न पश्यामि नानुसंदधामि । अन्यदेव तु दृश्यव्यतिरिक्तं अन्यदेव वस्तु पश्यामीति यः प्रलापः एतं प्रलापमनर्थकं वचनं अत्यक्त्वा कथं शोभते । प्रलाप इत्यसत्यस्येति पाठे इति एवंरूपोऽसन्नशोभनः प्रलापो यस्य स कथं शोभत इत्यर्थः ॥ ५६ ॥

तस्माद्बालासि मुग्धासि चपलासि विलासिनि ।
नानालापविलासेन क्रीडसे क्रीड सुन्दरि ॥ ५७ ॥

वसिष्ठ उवाच ॥

प्रविहस्याट्टहासेन शिखिध्वज इति प्रियाम् ।
मध्याह्ने स्नातुमुत्थाय निर्जगामाङ्गनागृहात् ॥ ५८ ॥
कष्टं नात्मनि विश्रान्तो मद्वचांसि न बुद्धवान् ।
राजेति खिन्ना चूडाला स्वव्यापारपराभवत् ॥ ५९ ॥
तदा तथाङ्ग तत्राथ तादृशाशययोस्तयोः ।
ताभिः पार्थिवलीलाभिः कालो बहुतिथो ययौ ॥ ६० ॥
एकदा नित्यतृप्ताया निरिच्छाया अपि स्वयम् ।
चूडालाया बभूवेच्छा लीलया खगमागमैः ॥ ६१ ॥
खगमागमसिद्ध्यर्थमथ सा नृपकन्यका ।
सर्वभोगाननादृत्य समागत्य च निर्जनम् ॥ ६२ ॥
एकैवैकान्तनिरता स्वासनावस्थिताङ्गिका ।
ऊर्ध्वगप्राणपवनं चिराभ्यासं चकार ह ॥ ६३ ॥

राम उवाच ॥

कस्य स्पन्दविलासस्य चिराभ्यासस्य मे वद ।
ब्रह्मन्खगमनाद्येतत्फलं यत्नैकशालिनः ॥ ६४ ॥

॥ ५७ ॥ ५८ ॥ ५९ ॥ तदेति ॥ तदा तस्मिन्काले तत्र देशे तस्मिन् देशे तथा तेन प्रकारेणावस्थितयोस्ताभिः पार्थिवलीलाभिः बहुतिथः कालो ययौ । अङ्गेति संबोधनम् ॥ ६० ॥ एकदेति ॥ खगमागमैराकाशगमनागमनैः ॥ ६१ ॥ ६२ ॥ ६३ ॥ कस्येति ॥ स्पन्दविलासस्य प्राणगतिविशेषस्य । चिराभ्यासस्य चिरमभ्यस्तस्य

वसिष्ठ उवाच ॥

अन्तस्था अखिलास्त्यक्त्वा स्वसाध्येतरवासनाः ।
गुदादिस्थानसंकोचात्स्थानकादिक्रियाक्रमैः ॥ ६५ ॥
श्रीमच्छिखिध्वजकथाप्रसङ्गात्पतितामिमाम् ।
प्राणादिपवनाभ्यासक्रियां सिद्धिफलां शृणु ॥ ६६ ॥
भोजनासनशुद्ध्या च साधुशास्त्रार्थभावनात् ।
स्वाचारात्सुजनासङ्गात्सर्वत्यागसुखासनात् ॥ ६७ ॥
प्राणायामघनाभ्यासाद्राम कालेन केनचित् ।
कोपलोभादिसंत्यागाद्भोगत्यागाच्च सुव्रत ॥ ६८ ॥

॥ ६४ ॥ अन्तस्था इति श्लोकचतुष्टयं वाक्यम् । अन्तस्थाश्चित्तगताः स्वसाध्येतरवासनाः स्वसाध्यव्यतिरिक्तवस्तुविषया वासना अखिला अपि त्यक्त्वा समभ्यस्यमानैः द्वारसंकोचादिभिः साधनैस्तस्य पुंसः प्रभुत्वान्नियामकत्वाद्धेतोरखिला अपि प्राणादिवायवो भृत्या इव त्यागादाननिरोधेषु रेचकपूरककुम्भकेषु विधेयतां यान्तीत्यन्वयः । तत्र गुदादिद्वारसंकोचे हेतुमाह—स्थानकादिक्रियाक्रमैरिति । स्थानकानि महामुद्रादयः स्थानविशेषाः । आदिशब्दाद्यमादिग्रहणम् । स्थानकादयश्च ते क्रियाक्रमा उपायभेदाः तैस्तत्र मूलबन्धेन गुदसंकोचः खेचर्या उपरितनद्वारनिरोध इति विवेकः । तत्र मूलबन्धलक्षणम्—'पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदम् । अपानमूर्ध्वमाकृष्य मूलबन्धोऽयमिष्यते' इति । खेचरीलक्षणं तु बहुशः पूर्वमुक्तम् ॥ ६५ ॥ ६६ ॥ भोजनासनशुद्ध्या भोजनस्य भोज्यवस्तुनः शुद्धिर्हितमितमेध्यभावः आसनशुद्धिरासनस्य निर्विकारता । साधुशास्त्रार्थभावनात् योगशास्त्रस्य सम्यगनुसंधानात् । स्वाचारो योगाङ्गानुष्ठानं सुजना योगविदः सर्वत्यागस्तत्पूर्वकात्सुखासनात्

त्यागादाननिरोधेषु भृशं यान्ति विधेयताम् ।
प्राणाः प्रभुत्वात्तज्ज्ञस्य पुंसो भृत्या इवाखिलाः ॥ ६९ ॥
राज्यादिमोक्षपर्यन्ताः समस्ता एव संपदः ।
देहानिलविधेयत्वसाध्याः सर्वस्य राघव ॥ ७० ॥
परिमण्डलिताकारा मर्मस्थानं समाश्रिता ।
आन्त्रवेष्टनिका नाम नाडी नाडीशतान्विता ॥ ७१ ॥
वीणाग्रावर्तसदृशी सलिलावर्तसंनिभा ।
कीटादिष्वब्जजातेषु सर्वेषु प्राणिषूदिता ॥ ७२ ॥
शीतार्तसुप्तभोगीन्द्रभोगवद्बद्धमण्डला ।
अनारतं सा सस्पन्दा पवमानेन तिष्ठति ॥ ७३ ॥

॥ ६७ ॥ ६८ ॥ ६९ ॥ राज्यादीति ॥ देहानिलविधेयत्वसाध्याः प्राणजयेन अणिमादयोऽपि सिध्यन्तीत्यर्थः ॥ ७० ॥ परिमण्डलितेति श्लोकत्रयं वाक्यम् ॥ परितो मण्डलितो मण्डलीकृत आकारो यस्याः सा—'परिमण्डलिताकारा मर्मस्थानं समाश्रिता। तस्योर्ध्वं कुण्डलीस्थानं नाभेस्तिर्यगधोर्ध्वतः । अष्टप्रकृतिरूपा सा ह्यष्टधा कुण्डलीकृता' । इति याज्ञवल्क्येन कन्दस्योर्ध्वं नाभेस्तिर्यगूर्ध्वतश्च कुण्डलीस्थाननिरूपणात् नाभेश्च मर्मस्थानात् नाभिस्थानमाश्रिता मर्मस्थानं समाश्रिता भवति । 'नाभिश्च हृदयं गार्गि कण्ठकूपं तथैवचे' ति याज्ञवल्क्येन मर्मस्थानेषु परिगणनात् ॥ ७१ ॥ वीणाग्रावर्तसदृशी वीणादण्डस्योपरिभागे यस्तन्त्रीसूत्रवेष्टनरूप आवर्तः तत्सदृशी सलिलावर्तसंनिभा ॥ ७२ ॥ यतः शीतार्ततया सुप्तस्य भोगीन्द्रस्य भोगवद्बद्धमण्डला सर्वप्राणगता नाडीशतैरावृता आन्त्रवेष्टनिकानाम आन्त्रवेष्टनिकेति प्रसिद्धा काचिन्नाडी पवमानेन वायुना

तस्यास्त्वभ्यन्तरे तस्मिन्कदलीकोशकोमले ।
पावनी परमा शक्तिः सर्वशक्तिजवप्रदा ॥ ७४ ॥
अनिशं निःश्वसद्रूपा कुपितेव भुजंगमी ।
संस्थितोर्ध्वीकृतमुखी स्पन्दनाहेतुतां गता ॥ ७५ ॥
अस्यां समस्ताः संबद्धा नाड्यो हृदयकोशगाः ।
सातः कुण्डलिनी स्पन्दस्पर्शसंवित्कलामला ॥ ७६ ॥
कलोक्ता कलनेनाशु कथिता चेतनेन चित् ।
जीवनाज्जीवतां याता मननाच्च मनःस्थिता ॥ ७७ ॥
संकल्पात्सैव संकल्पा बोधाद्बुद्धिरिति स्थिता ।
अहङ्कारात्मतां याता सैषा पुर्यष्टकाभिधा ॥ ७८ ॥

अनारतं सस्पन्दा तिष्ठतीत्यन्वयः ॥ ७३ ॥ तस्या इति श्लोकद्वयं वाक्यम् ॥ तस्याः पूर्वोक्ताया नाड्याः कदलीकोशवत्कोमले अभ्यन्तरे कुपिता भुजङ्गमीव अनिशं निःश्वसद्रूपा स्पन्दनाहेतुत्वं गता ऊर्ध्वीकृतमुखी सर्वासां शक्तीनां जवप्रदा उल्लासहेतुः पावनी पवनसंबन्धिनी परमा शक्तिः संस्थिता ॥ ७४ ॥ ७५ ॥ अस्यामिति श्लोकत्रयं वाक्यम् ॥ अस्यामेव प्राणशक्तौ हृदयकोशगाः समस्ता नाड्यः संबद्धाः सिद्धाः स्पन्दस्पर्शसंवित्कलाक्रियाहेतुः स्पर्शानुभवहेतुश्च अमला सैव पावनी शक्तिरतः कुण्डलिनीत्युच्यते ॥ ७६ ॥ कलोक्तेति ॥ सैव कलनेन बन्धनेन हेतुना कलेत्युक्ता । चेतनेन ज्ञानोत्पादनेन चिदित्युक्ता । जीवनादुच्छ्वासनिःश्वासप्रवर्तनात् जीवशब्दवाच्यतां गता । मननात्स्मरणहेतुत्वान्मन इति स्थिता ॥ ७७ ॥ संकल्पाद्विविधात् मनोरथकल्पनात् सा हि संकल्पा इति संकल्पशब्दवाच्या शक्तिरपि बोधनान्निश्चयोत्पादनात् बुद्धिरिति स्मृता ।

स्थिता कुण्डलिनी देहे जीवशक्तिरनुत्तमा ।
प्राणापानस्वरूपत्वादध ऊर्ध्वं व्रजत्यसौ ॥ ७९ ॥
समस्तैवोर्ध्वमायाति समस्ताधोऽथ सा व्रजेत् ।
तत्पुमान्मृतिमायाति सैव प्राणमयी स्मृता ॥ ८० ॥
सर्वथात्मनि तिष्ठेच्चेत्त्यक्त्वोर्ध्वाधो गमागमौ ।
तज्जन्तोर्हीयते व्याधिरन्तर्मारुतरोधतः ॥ ८१ ॥

राम उवाच ॥

किंविनाशाः किमुत्पादाः शरीरेऽस्मिन्मुनीश्वर ।
आधयो व्याधयश्चैव यथावत्कथयाशु मे ॥ ८२ ॥

वसिष्ठ उवाच ॥

देहदुःखं विदुर्व्याधिमाध्याख्यं वासनामयम् ।

सैवाहमित्यभिमानात् अहंकारात्मतां याता सती पुर्यष्टकशब्दवाच्यापीत्यन्वयः ॥ ७८ ॥ स्थितेति ॥ देहे स्थिता कुण्डलिनीशब्दवाच्या अनुत्तमा या जीवशक्तिरस्ति असावेव प्राणापानस्वरूपत्वात् अध ऊर्ध्वं च व्रजति ॥ ७९ ॥ समस्तेति ॥ सा प्राणशक्तिः समस्तैव कदाचिदूर्ध्वमायाति । अथानन्तरं समस्तैवाधो व्रजेत् । तत्तस्मात्प्राणगतेरध्रुवत्वात्पुमान् जीवो मृतिं मरणमायाति । हि यस्मात्कारणात्प्राणमयी स्मृता ॥ ८० ॥ सर्वथेति ॥ सा प्राणशक्तिर्निरोधाभ्यासवशात् ऊर्ध्वाधो गमागमौ त्यक्त्वा आत्मनि देहे सर्वथा सर्वेण प्रकारेण तिष्ठेच्चेत्तर्हि अन्तर्मारुतरोधतः मारुतस्यान्तर्निरुद्धत्वाद्धेतोर्जन्तोर्व्याधिर्हीयते त्यज्यते । व्याधिरित्युपलक्षणम् । जरामरणादयोऽपि हीयन्त इत्यर्थः ॥ ८१ ॥ किमिति ॥ विनाशोत्पत्तिशब्दाभ्यां तद्धेतू लक्ष्येते । को विनाशो येषां क उत्पादो येषामिति बहुव्रीहिः ॥ ८२ ॥ देहेति ॥ देहदुःखं शारीरदुःखहेतुं व्याधिं

मौर्ख्यमूले हि ते विद्यात्तत्त्वज्ञानपरिक्षये ॥ ८३ ॥
अतत्त्वज्ञानवशतस्त्विन्द्रियाक्रमणं विना ।
हृदि तानवमुत्सृज्य रागद्वेषेष्वनारतम् ॥ ८४ ॥
इदं प्राप्तमिदं नेति जाड्यात्सुघनमोहदाः ।
आधयः संप्रवर्तन्ते वर्षासु मिहिका यथा ॥ ८५ ॥
भृशं स्फुरन्तीष्विच्छासु मौर्ख्ये च घनतां गते ।
दुरन्ताभ्यवहारेण दुर्देशाक्रमणेन च ॥ ८६ ॥
दुःकालव्यवहारेण दुःक्रियास्फुरणेन च ।
दुर्जनासङ्गदोषेण दुर्भावोद्भावनेन च ॥ ८७ ॥
क्षीणत्वाद्वातिपूर्णत्वान्नाडीनां रन्ध्रसंततौ ।
प्राणे विधुरतां याते काये च विकलीकृते ॥ ८८ ॥

विदुः । वासनामयं मानसदुःखहेतुमाध्याख्यं विदुः । ते उभे अपि दुःखे तत्त्वज्ञानपरिक्षये तत्त्वज्ञानाभावे सति मौर्ख्यमूले विद्यात् ॥ ८३ ॥ अतत्त्वेति श्लोकद्वयं वाक्यम् ॥ अतत्त्वज्ञानवशतः तत्त्वज्ञानाभावात्स्वेन्द्रियाक्रमणं विना इन्द्रियजयाभावे सति तानवमल्पत्वमुत्सृज्य हृदि रागद्वेषप्रवृत्तेर्हेतोर्जाड्यवशात् इदं वस्तु प्राप्तमिदं नेत्येवंरूपा घनमोहदा आधयः संप्रवर्तन्ते । वर्षासु वर्षर्तौ मिहिका प्रालेयमिव ॥ ८४ ॥ ८५ ॥ भृशमिति श्लोकचतुष्टयं वाक्यम् ॥ इच्छासु पूर्वोक्तास्वाधिरूपासु भृशं स्फुरन्तीषु मौर्ख्ये च घनतां गते दुरन्तस्य दोषोद्रेकहेतोर्दुष्टस्यान्नस्याभ्यवहारेण दुर्देशस्य स्मशानादेराक्रमणेन ॥ ८६ ॥ दुःकाले संध्यादौ भोजनादिव्यवहारेण दुःक्रियायाः शववहनादिरूपायाः स्फुरणेन प्रवर्तनेन कुष्ठादिदूषितजनानामासङ्गदोषेण दुर्भावस्य क्रोधादेरुद्भावनेन च ॥८७॥ नाडीनां प्राणसंचारमार्गाणां क्षीणत्वात् पूर्णत्वाद्वा तद्रन्ध्रसंततौ

दौःस्थित्यकारणाद्दोषाद्व्याधिर्देहात्प्रवर्तते ।
नद्याः प्रावृण्निदाघाभ्यामिवाकारविपर्ययः ॥ ८९ ॥
प्राक्तनी चैहिकी वापि शुभा वाप्यशुभा गतिः ।
यैवाधिका सैव तथा तस्मिन्योजयति क्रमे ॥ ९० ॥
आधयो व्याधयश्चैवं जायन्ते भूतपञ्चके ।
कथं शृणु विनश्यन्ति राघवानां कुलोद्वह ॥ ९१ ॥
द्विविधो ह्याधिरस्तीह सामान्यः सार एव च ।
व्यवहारश्च सामान्यः सारो जन्मनि यः स्मृतः ॥ ९२ ॥
प्राप्तेनाभिमतेनैव नश्यन्ति व्यावहारिकाः ।
आधिक्षये चाधिभवाः क्षीयन्ते व्याधयोऽप्यलम् ॥ ९३ ॥

प्राणे विधुरतां वैषम्यं याते काये च विकलीकृते सति ॥ ८८ ॥ दौःस्थित्यकारणाद्दुःखहेतोर्दोषाद्वातादिरूपाद्देहे व्याधिर्जायते । प्रावृण्निदाघाभ्यां वृद्धिक्षयहेतुभ्यां नद्या आकारविपर्ययो वृद्धिक्षयरूप इवेत्यन्वयः ॥ ८९ ॥ प्राक्तनीति ॥ प्राक्तनी पूर्वजन्मसंभवा ऐहिकी इहजन्मनि संभूता शुभाऽशुभा वा या गतिर्वासना अधिका प्रबला सैव तस्मिन् स्वानुरूपे शुभेऽशुभे वा क्रमे व्यवहारे तथा तेनैव प्रकारेण योजयति प्रवर्तयति । दुर्वासनावशाद्व्याधिहेतुमपचारमाचरतीति भावः ॥ ९० ॥ आधय इति ॥ एवं पूर्वोक्तेन प्रकारेण ॥ ९१ ॥ द्विविध इति ॥ आधिर्द्विविधोऽस्ति सामान्यः सारभूतश्चेति । तत्र यो व्यवहारमात्रहेतुराधिः स सारः स्मृतः । सुदृढत्वाच्छुद्धवासनामय आधिः सामान्यो मलिनवासनामयस्तु सार इति तात्पर्यम् ॥ ९२ ॥ प्राप्तेनेति ॥ व्यावहारिकाः व्यवहारमात्रप्रयोजना आधयः प्राप्तेन सता अभिमतेनैव वस्तुना नश्यन्ति इष्टप्रा-

आत्मज्ञानं विना सारो नाधिर्नश्यति राघव ।
यथा रज्ज्ववबोधेन विना सर्पो न नश्यति ॥ ९४ ॥
अनाधिजा व्याधयस्तु द्रव्यमन्त्रशुभक्रमैः ।
चिकित्सकादिशास्त्रोक्तैर्नश्यन्ति त्वं च वेत्सि तत् ॥ ९५ ॥

राम उवाच ॥

आधिः कथं भवेद्व्याधिः कथं च स विनश्यति ।
इति मे भगवन्ब्रूहि प्रसन्नपदया गिरा ॥ ९६ ॥

वसिष्ठ उवाच ॥

चित्ते विधुरिते देहः संक्षोभमुपयाति हि ।
तथाहि रुषितो जन्तुरग्रमेव न पश्यति ॥ ९७ ॥
अनवेक्ष्य पुरोमार्गममार्गमनुधावति ।
प्रकृतं मार्गमुत्सृज्य शरार्तो हरिणो यथा ॥ ९८ ॥
संक्षोभात्साम्यमुत्सृज्य वहन्ति प्राणवायवः ।
असमे वहति प्राणे नाड्यो यान्ति विसंस्थितिम् ॥ ९९ ॥

स्तिरिच्छानिवृत्तेरुचितत्वात् । आधिभवा व्याधयोऽपि आधिक्षये सति क्षीयन्ते ॥ ९३ ॥ आत्मेति ॥ सारस्त्वाधिः आत्मज्ञानं विना न नश्यति अविद्यामयत्वात् ॥ ९४ ॥ अनाधीति ॥ द्रव्याणि कल्ककषायादिरूपाणिः मन्त्रा आरोग्यहेतवः सौरादयः । शुभक्रमाः देवब्राह्मणसंतर्पणादयः ॥ ९५ ॥ ९६ ॥ चित्त इति श्लोकषट्कं वाक्यम् ॥ चित्ते विधुरिते विक्षिप्ते सति देहः संक्षोभमनुयाति । चित्तायत्तं धातुबद्धं शरीरमित्येतदुपपादयन्नाह—तथाहीति । रुषितः कुपितो जन्तुरग्रं पुरोभागमेव न पश्यति किमुतान्यद्वस्त्विवति शेषः ॥ ९७ ॥ तथा पुरोमार्गमनपेक्ष्य अमार्गमकार्यमेवानुधावति शरेण विद्धो हरिण इव ॥ ९८ ॥ ततश्च देहस्थसप्तधातुमयस्य संक्षोभा-

असम्यक्संस्थिते भूपे यथा वर्णाश्रमक्रमः ।
कुजीर्णत्वमजीर्णत्वमतिजीर्णत्वमेव वा ॥ १०० ॥
दोषायैव प्रयात्यन्नं नाडीप्राणविपर्ययात् ।
यान्यन्नानि विरोधेन तिष्ठन्त्यन्तःशरीरके ॥ १ ॥
तान्येव व्याधितां यान्ति परिणामस्वभावतः ।
एवमाधेर्भवेद्व्याधिराधिनाशाच्च नश्यति ।
यथा मन्त्रैर्विनश्यन्ति व्याधयस्तं क्रमं शृणु ॥ २ ॥
यथा विरेकं कुर्वन्ति हरीतक्यः स्वभावतः ।
भावनावशतः कार्यं तथा यरलवादयः ॥ ३ ॥
शुद्ध्या पुण्यया साधो क्रियया साधुसेवया ।
मनः प्रयाति नैर्मल्यं निकषेणेव काञ्चनम् ॥ ४ ॥

त्प्राणवायवः साम्यमुत्सृज्य विषमं वहन्ति । प्राणे विषमं वहति सति नाड्यो विसंस्थितिं विषमां स्थितिं यान्ति ॥ ९९ ॥ एवं नाडीनां प्राणानां च विपर्ययाद्वैषम्याद्धेतोरन्नमुपभुक्तं दोषायैव दोषोद्रेकं कर्तुं कुजीर्णत्वमजीर्णत्वमेव वा प्रयाति ॥ १०० ॥ एवं यान्यन्नानि शरीरे विरोधेन कुजीर्णत्वादिरूपेण तिष्ठन्ति तान्येव चान्नानि परिणामस्वभावतः विपाकवशाद्व्याधिरूपतां यान्ति ॥ १ ॥ एवमुक्तेन प्रकारेणाधेर्व्याधिर्भवेत् तन्नाशाच्च नश्यति । यथा व्याधयो मन्त्रैर्यथारोग्यहेतुभिर्विनश्यन्ति तं च क्रमं वक्ष्यामि शृण्वित्यन्वयः ॥ २ ॥ यथेति ॥ हरीतक्यः हरीतकीफलानि यथा स्वभावादेव विरेकं मलमोचनं कुर्वन्ति तथैव यरलवादयो मन्त्रवर्णा भावनावशतः आरोग्यसमुचितध्यानवशाद्रोगनिवृत्तिरूपं कार्यं कुर्वन्ति ॥ ३ ॥ तत्तत्फलोपजननीत्यपि भावनैवेति न्यायात् ।

आनन्दो वर्धते देहे शुद्धे चेतसि राघव ।
पूर्णेन्दावुदिते सम्यङ्नैर्मल्यं भुवने यथा ॥ ५ ॥
सत्त्वशुद्धौ वहन्त्येते क्रमेण प्राणवायवः ।
जरयन्ति तथान्नानि व्याधिस्तेन विनश्यति ॥ ६ ॥
आधिव्याध्योरिति प्रोक्तौ नाशोत्पत्तिक्रमौ त्वयि ।
कुण्डलिन्यां कथायोगमधुना प्रकृतं शृणु ॥ ७ ॥
पुर्यष्टकापराख्यस्य जीवस्य प्राणनामिकाम् ।
विद्धि कुण्डलिनीमन्तरामोदस्येव मञ्जरीम् ॥ ८ ॥

आधिनाशात्तज्जन्यो व्याधिर्नश्यतीत्युक्तं तत्कथमित्याकाङ्क्षायां तत्प्रकारमाह—शुद्धयेति श्लोकत्रयं वाक्यम् ॥ शुद्धया निर्दोषया पुण्यया क्रियया शिवार्चनादिरूपया साधुसेवया महापुरुषशुश्रूषया च पापक्षये सति मनो नैर्मल्यं प्रयाति निकषेण घर्षणेन काञ्चनमिव ॥४॥ ततश्चेतसि शुद्धे सति देहे आनन्दः सुखं वर्धते। पूर्णेन्दावुदिते सति भुवने नैर्मल्यं प्रकाश इव ॥ ५ ॥ तथा सत्त्वशुद्धौ चित्तनैर्मल्ये सति प्राणवायवः क्रमेणैव वहन्ति । तथा साम्येन वहन्तः सन्तोऽन्नानि जरयन्ति । तेनान्नानां जरणेन व्याधिर्विनश्यति ॥ ६ ॥ आधीति ॥ आधिव्याध्योर्नाशोत्पत्तिक्रमौ नाशक्रम उत्पत्तिक्रमश्चेति पूर्वोक्तप्रकारेण प्रोक्तौ। अधुना प्रकृतं कुण्डलिन्यां कुण्डलिनीविषयं कथायोगं कथ्यमानं योगं शृणु॥ ७ ॥ पुरीति ॥ अन्तःकुण्डलिनी पूर्वोक्ता । पुर्यष्टकापराख्यस्य पुर्यष्टकमित्यपरा आख्या यस्य जीवस्य प्राणनामिकां प्राणभूतां विद्धि । आमोदस्य मञ्जरीमिव । यथा हि मञ्जर्यां सत्यामेवामोदः प्राणिति तथा कुण्डलिन्यां सत्यामेव जीव इति

तां यदा पूरकाभ्यासादापूर्य स्थीयते समम् ।
तदैति मैरवं स्थैर्यं कायस्य पीनतां तथा ॥ ९ ॥
यदा पूरकपूर्णान्तरायतप्राणमारुतम् ।
नीयते संविदेवोर्ध्वं सोढुं घर्मश्रमक्लमम् ॥ ११० ॥
सर्पीव त्वरितैवोर्ध्वं याति दण्डोपमां गता ।
नाडीः सर्वाः समादाय देहबद्धा लतोपमाः ॥ ११ ॥
तदा समस्तमेवेदमुत्प्लावयति देहकम् ।
नीरन्ध्रपवनापूर्णा भस्त्रेवाम्बुगता नरम् ॥ १२ ॥

भावः ॥ ८ ॥ तामिति ॥ यदा पूरकाभ्यासात् पूरकाभ्यासवशाद्धेतोः तां कुण्डलिनीमापूर्य समं निर्विकारं स्थीयते तदा मैरवं मेरुसंबन्धि स्थैर्यं स्थिरत्वं कायस्य पीनतां स्थौल्यं चैति प्राप्नोति । तादृक्पूरकाभ्यासे कायो मेरुरिव स्थितः स्थूलश्च भवतीत्यर्थः ॥ ९ ॥ यदेति श्लोकत्रयं वाक्यम् ॥ यदा तु सा कुण्डलिनी पूरकपूर्णान्तरायतप्राणमारुतं पूरकैः पूर्णः अन्तरायतो दीर्घश्च प्राणमारुतो यस्मिन्कर्मणि तद्यथा भवति तथा संविदा ऊर्ध्वं गतिभावनया ऊर्ध्वमुपरितनाकाशदेशं नीयते घर्मश्रमक्लमं सोढुमिव । तथाहि केनचिद्धर्मश्रान्तेन कुत्रचिच्छायायां श्रमापनोदनाय शीताख्यं कुम्भकमभ्यस्यता पूरकपूर्णान्तरायतप्राणं यथा तथा कुण्डलिन्यूर्ध्वं नीयते तद्वदित्यर्थः ॥ ११० ॥ तदा सा कुण्डलिनी सर्पीव भुजङ्गीव दण्डोपमां गता सती देहबद्धाः सर्वा नाडीर्लता इव समादाय त्वरिता इवोर्ध्वं याति ॥ ११ ॥ तदा चेदं देहकं समस्तमेवोत्प्लावयति उद्गमयति । नीरन्ध्रपवनापूर्णा नीरन्ध्रं यथा तथा पवनेनापूर्णा भस्त्रा चर्मप्रसेविका

इत्यभ्यासविलासेन योगेन व्योमगामिताम् ।
योगिनः प्राप्नुवन्त्युच्चैर्दीना इन्द्रदशामिव ॥ १३ ॥
ब्रह्मनाडीप्रवाहेण शक्तिः कुण्डलिनी यदा ।
बहिरूर्ध्वं कपाटस्य द्वादशाङ्गुलमूर्धनि ॥ १४ ॥
रेचकेन प्रयोगेण नाड्यन्तरनिरोधिना ।
मुहूर्तं स्थितिमाप्नोति तदा व्योमगदर्शनम् ॥ १५ ॥
विज्ञानादूरसंस्थेन बुद्धिनेत्रेण राघव ।
दृश्यन्ते व्योमगाः सिद्धाः स्वप्नवत्स्वार्थदा अपि ॥ १६ ॥
मुखाद्बहिर्द्वादशान्ते रेचकाभ्यासयुक्तितः ।
प्राणे चिरं स्थितिं नीते प्रविशत्यपरां पुरीम् ॥ १७ ॥

अम्बुगतासती नरं यथोत्प्लावयति तद्वदित्यर्थः ॥ १२ ॥ इतीति॥ इत्यभ्यासविलासेन ईदृशाभ्यासविशेषवता योगेन योगिनो व्योमगामितां प्राप्नुवन्ति । दीना दरिद्रा इन्द्रदशामिन्द्रपदमिवेत्यन्वयः ॥ १३ ॥ ब्रह्मनाडीति श्लोकद्वयं वाक्यम् ॥ यदा सा कुण्डलिनीरूपा प्राणशक्तिः ब्रह्मनाडीप्रवाहेण सुषुम्नान्तःप्रवाहेण ऊर्ध्वं कपाटस्य ब्रह्मरन्ध्रस्य बहिर्भागे द्वादशाङ्गुलमूर्धनि द्वादशाङ्गुलपरिमितस्याकाशदेशस्योपरिभागे नाडीशतनिरोधिना सर्वनाडीनिरोधकेन प्रयोगेण रेचकाभ्यासरूपेण प्रकृष्टेन योगेन मुहूर्तमात्रं स्थितिमवस्थां प्राप्नोति तदा तस्मिन्काले व्योमगदर्शनं सिद्धविद्याधरादीनां खेचराणां दर्शनं भवति ॥ १४ ॥ १५ ॥ दर्शनप्रकारमेवाह—विज्ञानेति ॥ विज्ञानादूरसंस्थेन विज्ञानं स्वरूपचैतन्यं तस्माददूरसंस्थेन सन्निकृष्टेन अतश्चैतन्यसंक्रान्त्या प्रकाशकेन बुद्धिनेत्रेण चक्षुषा व्योमगाः सिद्धाः स्वप्रदशायामिव दृश्यन्ते । न केवलं दर्शनमात्रं स्वार्थदा अपि स्वापेक्षितामणिमादिसिद्धिं च प्रयच्छन्तीत्यर्थः ॥ १६ ॥ परपुरप्रवेशप्रकारमाह—

राम उवाच ॥

सूक्ष्मच्छिद्रादिगत्यर्थं पूरणार्थं च खस्य वा ।
अणुतां स्थूलतां वापि कायोऽयं नीयते कथम् ॥ १८ ॥

वसिष्ठ उवाच ॥

एकं चिन्मात्रमस्तीह शुद्धसौम्यमलेपकम् ।
सूक्ष्मात्सूक्ष्मतरं शान्तं नो जगन्न जगद्गताः ॥ १९ ॥
तच्चिनोत्यात्मनात्मानं संकल्पोन्मुखतां गतम् ।
यदा तदा जीव इति प्रोक्तमाविलतां गतम् ॥ १२० ॥
असत्यमेव संकल्पभ्रमेणेदं शरीरकम् ।
जीवः पश्यति मूढात्मा बालो यक्षमि वोद्धतम् ॥ २१ ॥

मुखादिति ॥ मुखाद्वक्त्राद्बहिः द्वादशान्ते द्वादशाङ्गुलपरिमिताकाशदेशपर्यन्ते रेचकाभ्यासयुक्तितो रेचकाभ्यासरूपाद्योगविशेषाद्धेतोः घ्राणे प्राणवायौ चिरं स्थितिं नीते सति अपरां पुरीं देहान्तरं प्रविशति । परकायप्रवेशसिद्धिर्भवतीत्यर्थः ॥ १७ ॥ सूक्ष्मेति ॥ सूक्ष्मच्छिद्रादिगत्यर्थं गमनसिद्धये खस्याकाशस्य पूरणार्थं व्याप्त्यर्थं वा अयं कायः अणुतां स्थूलतां वापि कथं नीयते कायस्यैकत्वात्परिणामभेदे च भेदप्रसङ्गादिति भावः ॥ १८ ॥ एकमिति ॥ चिन्मात्रमेकमेवास्ति । जगद्गताः पदार्थसमृद्धयोऽपि नो सन्ति ॥ १९ ॥ तदिति ॥ तच्चिन्मात्रं वस्तु संकल्पोन्मुखतां गतं सत् यदा आत्मनैवात्मानं चिनोति उपचितं करोति । परिच्छिन्नमिति यावत् । तदा आविलतां कलुषतां गतं जीव इति प्रोक्तम् ॥१२०॥ असत्यमिति॥ मूढात्मा जीवः स्वसंकल्पभ्रमेण बालो यक्षमिव असत्यमेवेदं शरीरं

एवं हि विदितात्मानो भावयन्ति यथैव यत् ।
तत्तथैवानुपश्यन्ति दृढभावनया तया ॥ २२ ॥
दृढभावानुसंधानाद्विमूढा अपि राघव ।
विषं नयन्त्यमृततताममृतं विषतामपि ॥ २३ ॥
एवं यथावदेवेह भाव्यते दृढभावनात् ।
भूयते हि तदेवाशु तदित्यालोकितं मुहुः ॥ २४ ॥
सत्यभावेन दृष्टोऽयं देहोऽदेहो भवत्यलम् ।
दृष्टस्त्वसत्यभावेन व्योमतां याति देहकः ॥ २५ ॥
अणिमादिपदप्राप्तौ भावनायुक्तिरीदृशी ।
सुलभेयं महाबुद्धे योगसंसिद्धिसंविदाम् ॥ २६ ॥
अणिमादिगुणैश्वर्ययुक्ता सा नृपभामिनी ।
एवं बभूव चूडाला घनाभ्यासवती सती ॥ २७ ॥

पश्यति ॥ २१ ॥ एवमिति ॥ एवं सति विदितात्मानो निश्चितात्मानः पुरुषाः यद्वस्तु यथैव भावयन्ति तथा दृढभावनया तद्वस्तु तथैवाशु पश्यन्ति ॥ २२ ॥ दृढेति ॥ मूढा आत्मज्ञानरहिता अपि दृढभावनानुसंधानाद्भावो भावना दृढभावनायाः सान्तत्याद्विषं दुःखोदर्कं निषिद्धं कर्म अमृततां नयन्ति । अमृतं विहितं कर्म विषतां दुःखहेतुतां नयन्ति ॥ २३ ॥ एवमिति ॥ एवं यद्वस्तु यथा भाव्यते तेन तथैव भूयते । अनुभूयत इत्यर्थः । तदेतदर्थस्वरूपं मुहुरालोकितम् । विचारितमित्यर्थः ॥ २४ ॥ २५ ॥ अणिमादीति ॥ योगसंसिद्धिसंविदां योगे पवनजये संसिद्धा दृढं परिचया संविद्येषां तेषां अणिमादिपदप्राप्तावपि ईदृशी इयं भावनायुक्तिः । सुलभा अणुत्वभावनायामणिमा महत्त्वभावनायां महिमेत्येवमणिमादिसाधिकापि युक्तिः सुखेन लभ्यत इत्यर्थः ॥ २६ ॥ अणिमेति ॥ सा

जगामाकाशमार्गेण विवेशाम्बुधिकोटरम् ।
चचार वसुधापीठं गङ्गेवामृतशीतला ॥ २८ ॥
क्षणमप्यागता भर्तुर्वक्षस्युच्चैर्यदा तदा ।
भर्तारं बोधयामीति तदुपायमवेक्षते ॥ २९ ॥
यत्नेन तं च भर्तारमात्मज्ञानामृतं प्रति ।
बहुशो बोधयामास पिता बालमिवात्मजम् ॥ १३० ॥
न चासावापतद्भर्ता राजा विश्रान्तिमात्मनि ।
मुक्ताफलं सुसंश्लिष्टं मुक्ताफल इवामलम् ॥ ३१ ॥
एतावतापि कालेन तामेवंगुणशालिनीम् ।
बालो विद्यामिव नृपश्चूडालां न विवेद सः ॥ ३२ ॥
साप्यलब्धात्मविश्रान्तेः स्वां सिद्धिं श्रियमात्मनः ।
दर्शयामास नो राज्ञः शूद्रस्येव मखक्रियाम् ॥ ३३ ॥

चूडाला एवं घनाभ्यासवती सती अणिमादिगुणैश्वर्ययुक्ता बभूवेत्यन्वयः ॥ २७ ॥ जगामेति ॥ सा गङ्गेव लोकत्रयेऽपि स्वैरं विजहारेत्यर्थः । तत्राम्बुधिकोटरप्रवेशेन पातालगमनमुच्यते ॥ २८ ॥ क्षणमिति ॥ सा चूडाला भर्तुर्वक्षस्यालिङ्गनार्थं क्षणमपि यदा गता तदा भर्तारं बोधयामीति बुद्ध्या तदुपायं तद्बोधनोपायमेवावेक्षते विचारयति न पुनरालिङ्गनादिकमपेक्षते। विषयसुखेष्वनादरादिति भावः ॥ २९ ॥ १३० ॥ न चेति ॥ मुक्ताफलममले मुक्ताफले सुसंश्लिष्टमपि यथा विश्रान्तिं नापतति तथासौ राजा आत्मनि विश्रान्तिं नापतत् । असंश्लिष्टमिति पाठे मुक्ताफलं असंश्लिष्टं सत् यथा विश्रान्तिं नापतति तद्वदिति भावः ॥ ३१ ॥ ३२ ॥ ३३ ॥

राम उवाच ॥

महत्याः सिद्धयोगिन्यास्तस्या अपि शिखिध्वजः ।
यत्नेन प्राप नो योगं बुध्यतेऽन्यः कथं प्रभो ॥ ३४ ॥

वसिष्ठ उवाच ॥

उपदेशक्रमो राम व्यवस्थामात्रपालनम् ।
ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव केवला ॥ ३५ ॥

## नवमे किराटोपाख्यानम्

राम उवाच ॥

"एवंस्थिते वद मुने कथमेतज्जगत्स्थितौ ।
क्रमो गुरूपदेशाख्य आत्मज्ञानस्य कारणम् ॥ ३६ ॥

वसिष्ठ उवाच ॥

अत्यन्तकृपणः कश्चित्किराटो धनधान्यवान् ।
आस्ते विन्ध्याटवीकच्छे कुटुम्बी ब्राह्मणादिवत् ॥ ३७ ॥

॥ ३४ ॥ उपदेशेति ॥ उपदेशक्रमः गुरूपदेशरूपः उपायः व्यवस्थामात्रपालनं व्यवस्था ज्ञानशास्त्रोक्ता मर्यादा तन्मात्रस्यैव पालनम् । ज्ञप्तेरात्मसाक्षात्कारस्य तु शुद्धा शिष्यप्रज्ञैव कारणमिति ॥ ३५ ॥ एवमिति ॥ एवंस्थिते सति जगत्स्थितौ लोकव्यवहारेषु गुरूपदेशाख्यः क्रमः आत्मज्ञानस्य कारणमित्येतत्कथं केन प्रकारेण तं प्रकारं वदेत्यर्थः ॥ ३६ ॥ अत्यन्तेति ॥ किराटो वैश्यः किरति धनलाभार्थं अटति पुनः प्राप्नोति च तद्द्विगुणत्रिगुणादिरूपेणेति व्युत्पत्तेः । वैश्यविडम्बने 'किराटः कटसंनिभ' इति वचनात् । किरात इति तु न पाठः धनधान्यवत्त्वस्य ब्राह्मणादिवत् कुटुम्बित्वस्य दिनत्रयमरण्ये कपर्दिकान्वेषणस्य च किराते प्रत्यनौचित्यात्

तस्यैकदा निपतिता गच्छतो विन्ध्यजाङ्गले ।
एका वराटिका राम तृणजालसमावृते ॥ ३८ ॥
कार्पण्यात्स प्रयत्नेन सर्वं तृणबुसादिकम् ।
कपर्दिकार्थमभितो दुधाव दिवसत्रयम् ॥ ३९ ॥
ततो दिनत्रयस्यान्ते तेन तस्मात्कुजाङ्गलात् ।
पूर्णेन्दुबिम्बप्रतिमो लब्धश्चिन्तामणिर्महान् ॥ १४० ॥
यथा तत्र किराटेन कपर्दान्वेषणेन तत् ।
रत्नं लब्धं जगन्मूल्यमहोरात्रमखेदिना ॥ ४१ ॥
तथा श्रुतोपदेशेन स्वात्मज्ञानमवाप्यते ।
अन्यदन्विष्यते चान्यल्लभ्यते हि गुरुक्रमात् ॥ ४२ ॥
तत्त्वस्यास्य महार्घस्य गुरूपकथनं गतम् ।
अकारणं कारणतां मणेरिव कपर्दिकः" ॥ ४३ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे नवमसर्गे किराटोपाख्यानम् ॥

---

॥ ३७ ॥ तस्येति ॥ विन्ध्यजाङ्गले जङ्गलमरण्यप्रायोदेशः । जाङ्गलं इति पाठे अल्पोदकं स्वल्पतरुस्थलम् । वराटिका कपर्दिका ॥ ३८ ॥ कार्पण्यादिति ॥ कृपणस्य भावः कार्पण्यम् । लोभातिशय इत्यर्थः । तृणबुसादिकं बुसं कडङ्गरः । कपर्दिकार्थं पतितां वराटिकामन्वेष्टुम् ॥ ३९ ॥ तत इति ॥ कुजाङ्गलात्कुत्सितादरण्यप्रदेशात् ॥ १४० ॥ यथेति श्लोकद्वयं वाक्यम् ॥ यथाहि किराटेन कपर्दान्वेषणाय यज्जगन्मूल्यं रत्नं लब्धं तथा गुरोः श्रुतोपदेशेन शिष्येण स्वात्मज्ञानमवाप्यते । हि यस्मात्कारणात् गुरुक्रमात् गुरूपदिष्टादुपायाद्धेतोः । अन्यदुपहितं वस्त्वन्विष्यते मार्ग्यते अन्यदनुपहितं वस्तु च लभ्यते साक्षात्क्रियते ॥ ४१ ॥ ४२ ॥ तत्त्वस्येति ॥ महार्घस्य

ततः शिखिध्वजो राजा तत्त्वज्ञानपदं विना ।
आजगाम परं मोहं तमोऽन्धत्वमिव प्रजाः ॥ ४४ ॥
दुःखाग्निदीपितमना मनागपि विभूतिषु ।
तास्वभीष्टोपनीतासु न रेमेऽग्निशिखास्विव ॥ ४५ ॥
ददावतितरां दानं तीर्थयात्रां चकार ह ।
तपः कृच्छ्रादिकं चक्रे बभ्राम परितो दिशः ॥ ४६ ॥
सर्वथापि विशोकत्वं न मनागपि लब्धवान् ।
चिन्तापरवशो दीनो राज्यं पश्यन्विषोपमम् ॥ ४७ ॥
अथैकदैकान्तगतश्चूडालामङ्कमास्थिताम् ।
इदं मधुरया वाचा समुवाच शिखिध्वजः ॥ ४८ ॥

शिखिध्वज उवाच ॥

भुक्तं राज्यं चिरं कालं दृष्टा विभवभूमयः ।
अधुनास्मि विरागेण युक्तो गच्छामि काननम् ॥ ४९ ॥
न सुखानि न दुःखानि नापदो न च संपदः ।
क्रोडीकुर्वन्ति तन्वङ्गि मुनिं वननिवासिनम् ॥ १५० ॥

बहुमूल्यस्य अस्य तत्त्वस्य तत्त्वज्ञानस्य गुरूपकथनं गुरूपदेशः अकारणं साक्षादकारणमपि मणेः कपर्दिक इव परम्परया कारणतां गतम् ॥ ४३ ॥ इति श्रीवासिष्ठविवरणे निर्वाणप्रकरणे नवमः सर्गो किराटोपाख्यानम् ॥

तत इति ॥ तत्त्वज्ञानपदं विना तत्त्वज्ञानरूपस्य विश्रान्तिपदस्याभावादित्यर्थः । तमोऽन्धत्वम् । प्रजा जनाः ॥ ४४ ॥ ४५ ॥ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ नेति ॥ क्रोडीकुर्वन्ति स्वाधीनं कुर्वन्ति

न देशभङ्गसंमोहो न संग्रामे जनक्षयः ।
राज्यादप्यधिकं मन्ये सुखं वननिवासिनाम् ॥ ५१ ॥
यथा विविक्तमेकान्ते मनो भवति निर्मलम् ।
न तथा शशिबिम्बेषु न च ब्रह्मेन्द्रसद्मसु ॥ ५२ ॥
अस्मिन्मे मन्त्रणे तन्वि न विघ्नं कर्तुमर्हसि ।
भर्तुर्विघटयन्तीच्छां न स्वप्नेऽपि कुलस्त्रियः ॥ ५३ ॥

चूडालोवाच ॥

प्राप्तकालमिदं कार्यं राजते नाथ नेतरत् ।
वसन्ते राजते पुष्पं फलं शरदि राजते ॥ ५४ ॥
जराजरठदेहानां युक्तो वनसमाश्रयः ।
न यूनां त्वादृशामेव तेनैतन्मे न रोचते ॥ ५५ ॥

शिखिध्वज उवाच ।

अलमुत्पलपत्राक्षि विघ्नेनाभिमतस्य मे ।
विद्धि त्वं मां गतमितो दूरमेकान्तकाननम् ॥ ५६ ॥
बाला त्वमनवद्याङ्गि नागन्तव्यं त्वया वनम् ।
पुंसामपि हि मृद्वङ्गि दुर्विगाह्यो वनाश्रयः ॥ ५७ ॥
भवत्या पालयन्त्येह राज्ये स्थातव्यमुत्तमे ।
कुटुम्बभारोद्वहनं पत्यौ याते व्रतं स्त्रियः ॥ ५८ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा दयितां राजा तामिन्दुवदनां वशी ।
उत्तस्थौ स्नातुमखिलं दिनकार्यं चकार ह ॥ ५९ ॥

॥ १५० ॥ नेति ॥ वनवासिनां देशभङ्गसंमोहो नास्ति न संग्रामे जनक्षयः युद्धनिमित्तः प्राणिनां संक्षयो नास्ति । अतश्च वननिवासिनां सुखं राज्यसुखादप्यधिकं मन्ये ॥ ५१ ॥ ५२ ॥ ५३ ॥

अथोज्झितप्रजाचारो रविरस्ताचलं ययौ ।
यामिनी यौवनं प्राप सरोजमुकुलस्तनी ॥ १६० ॥
कृतसंध्यासमाचारः सहचूडालयेष्टया ।
सुष्वाप शयने भूयो मैनाक इव सागरे ॥ ६१ ॥
अथार्धरात्रिसमये देशे निःशब्दतां गते ।
घननिद्राशिलाकोशे निलीने सकले जने ।
तत्याज दयितां सुप्तामङ्काद्राजाथ निर्ययौ ॥ ६२ ॥
वीरक्रमार्थं यामीति तत्रैवानुचरं निजम् ।
योजयित्वा जगामासौ पुरान्निर्गत्य पूर्णधीः ॥ ६३ ॥
जडे लक्ष्मि नमस्तुभ्यमित्युक्त्वा मण्डलाद्गतः ।
विवेशोग्रामरण्यानीमेको नद इवार्णवम् ॥ ६४ ॥
पुनः प्रातः पुना रात्रिरुषित्वा दश शर्वरीः ।
जवेन लङ्घयामास मण्डलानि गिरीन्नदीः ॥ ६५ ॥
ततो मन्दरशैलस्य तटस्थं जनदुर्गमम् ।
प्राप काननमत्यन्तदूरस्थजनतापुरम् ॥ ६६ ॥
रटत्प्रणालसलिलवापीवलितपादपम् ।
शीर्णवेद्यादिविज्ञानभूतपूर्वद्विजाश्रमम् ॥ ६७ ॥

॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ॥ ६२ ॥ वीरेति ॥ वीरक्रमार्थं वीरचर्यार्थम् ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ तत इति श्लोकद्वयं वाक्यम् ॥ अत्यन्तदूरस्था जनता जनसमूहः पुराणि च यस्माद्रटन्ति ध्वनन्ति प्रणालसलिलानि कुल्याजलानि यासां ताभिर्वापीभिर्दीर्घिकाभिर्वलिताः पादपा यस्मिन् । शीर्णैः शिथिलितैः वेद्यादिभिः वेदिकापर्णशालादिभिः विज्ञाता भूतपूर्वाः पूर्वंभूताः द्विजानां आश्रमा यस्मिंस्तत्तादृशं मन्दरशैलस्य

क्षुद्रप्राणिविनिर्मुक्तं सिद्धसेव्यलतागृहम् ।
तत्रैकस्मिन्समे देशे स चकारोटजालयम् ।
सर्वं संपादितं तद्वद्योग्यं तापसकर्मणि ॥ ६८ ॥
मसृणं वैणवं दण्डं फलभोजनभाजनम् ।
अर्घ्यपात्रं पुष्पभाण्डमक्षमालां कमण्डलुम् ॥ ६९ ॥
कन्थां शीतापनोदाय बृसीमथ मृगाजिनम् ।
आनीयायोजयत्तत्र मठिकामन्दिरे नृपः ॥ १७० ॥
संध्यापूर्वं जपं प्रातः प्रहरे स तदाकरोत् ।
पुष्पोच्चयं द्वितीये तु स्नानं देवार्चनं ततः ॥ ७१ ॥
पश्चाद्वन्यं फलं किंचिद्वनकन्दबिसादि च ।
भुक्त्वा जप्यपरो भूत्वा निनायैकां निशां वशी ॥ ७२ ॥
एवं शिखिध्वजः पर्णमठिकायां वने स्थितः ।
इदानीं शृणु चूडाला सा किंवृत्तवती गृहे ॥ ७३ ॥
तत्रार्धरात्रसमये दूरं याते शिखिध्वजे ।
हरिणी ग्रामसुप्तेव चूडाला बुबुधे भयात् ॥ ७४ ॥
अपश्यत्पतिनिर्हीना शयनं शून्यतां गतम् ।
उत्तस्थौ किंचिदाम्लानवदना खेदशालिनी ॥ ७५ ॥
कुमित्रेव महावल्ली निरुत्साहाङ्गपल्लवा ।
क्षणं शय्योपविष्टैव चिन्तयामास खिन्नधीः ।

तटस्थं काननं प्रापेत्यन्वयः ॥ ६६ ॥ ६७ ॥ ६८ ॥ मसृणमिति श्लोकद्वयं वाक्यम् ॥ मसृणं स्निग्धम् ॥ बृसीम् व्रतिनामासनरूपं मृगाजिनमित्यर्थः ॥ ६९ ॥ १७० ॥ तस्य दिनचर्यामाह—संध्यामिति श्लोकद्वयं वाक्यम् ॥ प्रहरे यामे ॥ ७१ ॥ ७२ ॥ एवमिति ॥ किंवृत्तवती कीदृशचरित्रयुक्ता ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

कष्टं राज्यं प्रभुस्त्यक्त्वा वनं यातो गृहादिति ॥ ७६ ॥
तन्मयेहाद्य किं कार्यं तत्समीपं व्रजाम्यहम् ।
भर्तैव गतिरुद्दिष्टा विधिना प्रकृता स्त्रियाः ॥ ७७ ॥
इति संचिन्त्य भर्तारमनुगन्तुं समुत्थिता ।
चूडाला वातरन्ध्रेण निर्गत्याम्बरमाययौ ॥ ७८ ॥
चकार सिद्धसार्थस्य मुखेनान्येन्दुविभ्रमम् ।
ददर्शाथ यथा यान्तं रात्रौ खड्गधरं पतिम् ॥ ७९ ॥
तादृशं पतिमालोक्य स्थित्वा गगनकोटरे ।
भविष्यं चिन्तयामास सर्वं भर्तुरखण्डितम् ॥ १८० ॥
अवश्यं भवितव्यं तद्दृष्ट्वा भर्तुः पुरःस्थितम् ।
तदेव संपादयितुं गगनात्सा न्यवर्तत ॥ ८१ ॥
आस्तां समाद्य गमनं कालेनातिचिरेण हि ।
मयास्य पार्श्वं गन्तव्यं नियतेरेष निश्चयः ॥ ८२ ॥
इति संचिन्त्य चूडाला प्रविश्यान्तःपुरं पुनः ।
सुष्वाप शयने कान्ता नभसीवैन्दवी कला ॥ ८३ ॥
केनचित्कारणेनासौ गतः संप्रति भूपतिः ।
इति पौरजनं सर्वमाश्वास्यातिष्ठदङ्गना ॥ ८४ ॥
राज्यं ररक्ष भर्तुस्तत्क्रमेण समदर्शिनी ।
जगामाथ दिनं पक्षो मासः संवत्सरस्तथा ॥ ८५ ॥

तदिति श्लोकद्वयं वाक्यम् ॥ विधिना शास्त्रेण स्त्रियाः भर्तैव प्रकृता न्याय्या गतिरुद्दिष्टा । वातरन्ध्रेण गवाक्षेण ॥ ७७ ॥ ७८ ॥ चकारेति ॥ मुखेन स्वमुखेन सिद्धसार्थस्य सिद्धसङ्घस्यान्येन्दुविभ्रमं अन्योऽयमिन्दुरिति भ्रान्तिः ॥ ७९ ॥ तादृशमिति ॥ भविष्यं भाविभर्तुः सर्वं शुभाशुभं अखण्डितमशेषं चिन्तयामास ॥ १८० ॥ ८१ ॥

बहुनात्र किमुक्तेन वर्षाण्यष्टादशाङ्गना ।
चूडालोवास सदने वनं याते शिखिध्वजे ॥ ८६ ॥
भर्तुः समीपगमने मम कालोऽयमित्यथ ।
संचिन्त्य मन्दरप्रातं गन्तुं बुद्धिं चकार सा ॥ ८७ ॥
चचालान्तःपुराद्रात्रौ ततार नभसः पथम् ।
जगाम वातस्कन्धेन प्राप मन्दरकन्दरम् ॥ ८८ ॥
अदृश्यैव नभस्थैव प्रविवेश वनान्तरम् ।
नृपं योगेन बुबुधे देहान्तरमिवास्थितम् ॥ ८९ ॥
हारकेयूरकटककुण्डलादिविवर्जितम् ।
कृशाङ्गं कृष्णवर्णं च पतिं जर्जरतां गतम् ॥ १९० ॥
तमालोक्यानवद्याङ्गी चूडाला पीवरस्तनी ।
किंचिज्ज्ञातविषादैवमुवाचात्मनि चेतसा ॥ ९१ ॥
अहो नु विषमं मौर्ख्यं सर्वशास्त्रार्थदर्शिनः ।
एवंविधाः समायान्ति दुर्दशा यत्प्रमादतः ॥ ९२ ॥
तदवश्यमिहाद्यैव नाथं विदितवेद्यताम् ।
नयाम्येनं न संदेहो भोगमोक्षश्रियं तथा ॥ ९३ ॥
इदं रूपं परित्यज्य रूपेणान्येन केनचित् ।
सकाशमस्य गच्छामि बोधं दातुमनुत्तमम् ॥ ९४ ॥
बालेयं मम कान्तेति मदुक्तं न करिष्यति ।
तस्मात्तापसवेषेण बोधयामि पतिं क्षणात् ॥ ९५ ॥
भर्ता कषायपाकेन परिपक्वमतिः स्थितः ।
चेतस्यस्याद्य विमले स्वतत्त्वं प्रतिबिम्बति ॥ ९६ ॥

॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥
॥ १९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ भर्तेति ॥ कषा-

इति संचिन्त्य चूडाला बभूव द्विजदारकः ।
ईषद्ध्यानाद्गतान्यत्वं भर्तुरग्रे पपात ह ॥ ९७ ॥
ददर्श द्विजपुत्रं तं पुरो यातं शिखिध्वजः ।
द्रवत्कनकगौराङ्गं मुक्ताहारविभूषणम् ॥ ९८ ॥
शुक्लयज्ञोपवीताङ्गं शुक्लाम्बरयुगावृतम् ।
भूमावलग्नचरणं किष्कुमात्रोपरि स्थितम् ॥ ९९ ॥
तमालोक्य द्विजसुतं समुत्तस्थौ शिखिध्वजः ।
देवपुत्रागमधिया संपरित्यक्तपादुकः ॥ २०० ॥
देवपुत्र नमस्कार इदमासनमास्यताम् ।
इत्यस्य दर्शयामास पाणिना पत्रविष्टरम् ॥ १ ॥
हे राजर्षे नमस्तुभ्यमित्युक्त्वा स उपाविशत् ।
तदर्पितां पुष्पवृष्टिं गृह्णन्नुपविवेश ह ॥ २ ॥

शिखिध्वज उवाच ॥

देवपुत्र महाभाग कुत आगमनं कृतम् ।
दिवसं सफलं मन्ये यत्त्वामद्यासि दृष्टवान् ॥ ३ ॥
इत्युक्त्वा पाद्यमर्घ्यं च मालापुष्पाणि चानघ ।
शिखिध्वजस्तदिष्टायै देवतायै ददौ क्रमात् ॥ ४ ॥

यपाकेन कषाया रागादयः तेषां पाको निषिद्धवर्जनेन विहिते प्रवृत्तिः तेन ॥ ९६ ॥ इतीति ॥ द्विजदारकः द्विजपुत्रकः । ईषद्ध्यानात् अल्पादेव ध्यानात् अन्यत्त्वं रूपान्तरम् ॥ ९७ ॥ ददर्शेति श्लोकद्वयं वाक्यम् ॥ किष्कुमात्रोपरि स्थितं भूमिं मुक्त्वा हस्तमात्रादुपरि वर्तमानम् ॥ ९८ ॥ ९९ ॥ २०० ॥ १ ॥ २ ॥ ३ ॥

ब्राह्मण उवाच ॥

पेशलेनानुरूपेण प्रश्रयेणामुनानघ ।
मन्येऽहं नूनमत्यन्तं चिरजीवी भविष्यसि ॥ ५ ॥
शान्तेन मनसोदारमारादुन्मुक्तकल्पनम् ।
निर्वाणार्थं तपः साधो कच्चित्संभृतवानसि ॥ ६ ॥
असिधारासमं सौम्य शान्तव्रतमिदं तव ।
स्फीतं यद्राज्यमुत्सृज्य महावननिषेवणम् ॥ ७ ॥

शिखिध्वज उवाच ॥

जानासि भगवन्सर्वं देवस्त्वं कोऽत्र विस्मयः ।
श्रियैव सर्वोत्तमया ज्ञायसे चिह्नभूतया ॥ ८ ॥
तत्कस्त्वं कस्य पुत्रस्त्वं किमायातोऽस्यनुग्रहात् ।
एवं मे संशयं छिन्धि विमलेन्दुसमानन ॥ ९ ॥

ब्राह्मण उवाच ॥

राजन्मे शृणु वक्ष्यामि यथा पृष्टमखण्डितम् ।
को नाम परिपृच्छन्तं विनीतं वञ्चयेत्पुमान् ॥ २१० ॥
अस्त्यस्मिञ्जगतः कोशे शुद्धात्मा नारदो मुनिः ।
पुण्यलक्ष्म्या मुखे कान्ते कर्पूरतिलकोपमः ॥ ११ ॥

॥ ४ ॥ ५ ॥ शान्तेनेति ॥ आराद्दूरादेव उन्मुक्तकल्पनं यथा तथा शान्तेन मनसा निर्वाणार्थं उदारं महत्तपः संभृतवानसि कच्चित् ॥६॥ असिधारेति ॥ असिधारासमं असिधाराव्रततुल्यम् । तल्लक्षणं तु—'युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गस्तदसिधाराव्रतं विदुः' इति । तत्सादृश्यं च संनिहितायामपि राज्यलक्ष्म्यां भोगसामर्थ्येऽपि भोगत्यागात् ॥ ७ ॥ ८ ॥ ९ ॥ २१० ॥

स कदाचिन्मुनिर्देवो गुहायां ध्यानमास्थितः।
तत्र हेमतटे गङ्गा वहत्युरुतरङ्गिणी ॥ १२ ॥

एकदा नारदमुनिर्ध्यानान्ते सरितस्तटे।
ध्वनद्वलयमश्रौषील्लीलाकलकलारवम् ॥ १३ ॥

किमेतदित्यसौ किंचित्कौतूहलमवाप्तवान्।
हेलयालोकयन्नद्यामपश्यल्ललनागणम् ॥ १४ ॥

रम्भातिलोत्तमाप्रायं नितान्तं जललीलया।
क्रीडन्तं त्यक्तवसनं देशे पुरुषवर्जिते ॥ १५ ॥

सर्वत्र दृष्टसर्वाङ्गं विश्वरूपमिव स्थितम्।
प्रतिबिम्बितसर्वाङ्गमन्योन्यादर्शतां गतम् ॥ १६ ॥

स्त्रैणमालोक्य तत्कान्तं सहसैव मनो मुनेः।
अनाश्रितविवेकं तद्बभूवानन्दितं स्फुरन् ॥ १७ ॥

आनन्दवलिते चित्ते क्षुब्धे प्राणानिले स्थिते।
बभूव तस्य तुष्टस्य मदनस्खलितं तदा ॥ १८ ॥

तादृशोऽपि बहुज्ञोऽपि जीवन्मुक्तोऽप्यसौ मुनिः।
कथमेवंविधां ब्रूहि प्राप्तो मदनवश्यताम् ॥ १९ ॥

ब्राह्मण उवाच ॥

स्वरूपे निर्मले सत्ये निमेषमपि विस्मृते।
दृश्यमुल्लासमायाति प्रावृषीव पयोधरः ॥ २२० ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ पूनश्चूडालावाक्यम् ॥ स्वरूप इति ॥ निर्मले सत्ये आत्मस्वरूपे निमेषमात्रमपि विस्मृते सति दृश्यं जगदुल्लासं प्रादु-

अनारतानुसंधानादप्युन्मेषमविस्मृते ।
स्वरूपे नोल्लसत्येष चिति दृश्यपिशाचकः ॥ २१ ॥
सुखदुःखकलास्पन्दो बन्धो जीवस्य नेतरः ।
तदभावो हि मोक्षः स्यादिति द्वेधा व्यवस्थितिः ॥ २२ ॥
शुद्धेन बोध्यबोधेन स्वात्मज्ञानमयात्मना ।
सुखदुःखादि नास्तीति ज्ञाते ज्ञो याति सौम्यताम् ॥ २३ ॥
सर्वमेव चिदाकाशं ब्रह्मेति घननिश्चये ।
स्थितिं याते समं याति जीवो निःस्नेहदीपवत् ॥ २४ ॥
आत्मस्वभाववशतो जातं जगदिदं महत् ।
स्थितिं वासनयाभ्येत्य धर्माधर्मवशे स्थितम् ॥ २५ ॥

र्भावमाप्नोति ॥ २२० ॥ अनारतेति ॥ चिति चिन्मात्रस्वभावे स्वरूपेऽनारतानुसंधानाद्धेतोरुन्मेषमात्रमप्यविस्मृते सत्येव दृश्यरूपपिशाचक एष नोल्लसति न स्फुरति ॥ २१ ॥ सुखेति ॥ जीवस्य सुखदुःखकलास्पन्दः सुखदुःखलेशस्फुरणमेव बन्धः । तदभावः सुखदुःखकलास्पन्दाभाव एव मोक्षः स्यात् । इत्येवं द्विधा द्वयोर्बन्धमोक्षप्रकारयोः व्यवस्थितिर्निष्कर्षः । द्वेधेति षष्ठीद्विवचनान्तम् ॥ २२ ॥ शुद्धेनेति ॥ स्वात्मज्ञानमयात्मना स्वस्वरूपज्ञानादभिन्नेन शुद्धेन बोध्यबोधेन बोध्यस्य ज्ञेयस्य परतत्त्वस्य बोधेन स्वरूपाभिन्नपरब्रह्मानुभवेन सुखदुःखादिकं नास्तीति ज्ञाते सति ज्ञः ज्ञानी सौम्यतां जीवन्मुक्ततां याति ॥ २३ ॥ सर्वमिति ॥ सर्वमेव जगत् चिदाकाशरूपं ब्रह्मैवेति घननिश्चये स्थितिं याते सति जीवभावः शमं याति ॥ २४ ॥ आत्मेति ॥ इदं जगदात्मस्वरूपं जातं वासनया स्थितिमभ्येत्य धर्माधर्मवशे कर्मपारतन्त्र्ये स्थितम् ॥ २५ ॥

वासनांशमपानीय धर्माधर्मैर्न गृह्यते ।
ततो न जायते जन्तुरिति नो दर्शनं मुने ॥ २६ ॥

शिखिध्वज उवाच ॥

अत्युदारं महाश्चर्यं वक्षि त्वं वदतांवर ।
अनुभूतिमुपारूढं रूढं च परमार्थवत् ॥ २७ ॥
तद्वाक्यविभवेनाद्य श्रुतेनानेन सुन्दर ।
पीतेनेवामृतेनाहमन्तर्यातोऽस्मि शीतताम् ॥ २८ ॥
तत्समासेन तां तावदात्मोत्पत्तिं वदाशु मे ।
ततः श्रोष्यामि यत्नेन ज्ञानगर्भां गिरं तव ॥ २९ ॥
तेन पद्मजपुत्रेण मुनिना नारदेन तत् ।
क्व कृतं वीर्यमार्येण कथयाद्य यथास्थितम् ॥ २३० ॥

ब्राह्मण उवाच ॥

ततो निबध्नता तेन मनोमत्तमतङ्गजम् ।
विवेकविपुलालाने शुद्धबुद्धिवरत्रया ॥ ३१ ॥
मुनिना पार्श्वगे कुम्भे स्फाटिके वीर्यमर्पितम् ।
संकल्पितेन क्षीरेण स कुम्भस्तेन पूरितः ॥ ३२ ॥
अवर्धत ततो मासाद्भिरिगर्भादिवोडुराट् ।
परिपूर्णसमस्ताङ्गः कुम्भाद्गर्भो विनिर्ययौ ॥ ३३ ॥

वासनामिति ॥ अन्तःकरणाद्वासनांशमपानीय धर्माधर्मैर्न गृह्यते न बध्यते ततः कर्मबन्धाभावाज्जन्तुर्न जायते इति एवंविधं नोऽस्माकं दर्शनं सिद्धान्तः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ २३० ॥ तव इति श्लोकद्वयं वाक्यम् ॥ विवेकविपुलालाने । आलानं गजबन्धनस्तम्भः । शुद्धबुद्धिवरत्रया । वरत्रा चर्ममयी रज्जुः ॥ ३१ ॥ ३२ ॥

सर्वसंस्कारसंपन्ने स तस्मिन्नारदो मुनिः ।
भाण्डाद्भाण्ड इवाशेषं विद्याधनमयोजयत् ॥ ३४ ॥
अथैनं पुत्रमादाय जगाम ब्रह्मणोऽन्तिकम् ।
पौत्रं तं भगवान्वेधाश्चकार ज्ञानपारगम् ॥ ३५ ॥
साधो सोऽयमहं नाम कुम्भनामास्मि कुम्भजः ।
चत्वारः सुहृदो वेदा मम लीलाविवासिनः ॥ ३६ ॥
मातृष्वसा मे गायत्री माता मम सरस्वती ।
यथाकाममशेषेण जगन्ति विचराम्यहम् ॥ ३७ ॥

शिखिध्वज उवाच ॥

अद्य तिष्ठाम्यहं साधो धन्यानां धुरि धर्मतः ।
अमृतस्पन्दिवचसा यस्त्वयास्मि समागतः ॥ ३८ ॥
न केचन तथा भावाश्चेतः शीतलयन्ति मे ।
राज्यलाभादयोऽप्येते यथा साधुसमागमः ॥ ३९ ॥

कुम्भ उवाच ॥

आस्तामेषा कथा तावत्सर्वं ते कथितं मया ।
त्वं मे कथय हे साधो कस्त्वमद्रौ करोषि किम् ॥ २४० ॥

शिखिध्वज उवाच ॥

देवपुत्रोऽसि जानासि पृष्टश्चेद्वच्म्यहं शृणु ।
संसारभयभीतत्वान्निवसामि वनान्तरे ॥ ४१ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ साधो इति श्लोकद्वयं वाक्यम् ॥ चत्वारो वेदाः मम सुहृद इत्यनेन वेदार्थतत्त्वज्ञानं सूचयति । गायत्री मे मातृष्वसा। माता सरस्वती पोषयित्रीतिकृत्वा तस्याः स्वसा भगिनी गायत्रीत्यनेन च सरस्वतीप्रसादलब्धं सार्वज्ञ्यं सूचयति कुम्भवाक्यम् ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ २४० ॥ ४१ ॥

शिखिध्वजोऽहं भूपालस्त्यक्त्वा राज्यमिह स्थितः ।
भृशं भीतोऽस्मि तत्त्वज्ञ संसृतौ जन्मनः पुनः ॥ ४२ ॥
इमामखण्डितां सम्यक् क्रियां संपादयन्नपि ।
दुःखाद्गच्छामि दुःखौघममृतं मे विषं स्थितम् ॥ ४३ ॥

कुम्भ उवाच ॥

ज्ञानं हि परमं श्रेयः कैवल्यं तेन वेत्त्यलम् ।
कालातिवाहनायैव विनोदाय क्रियोदिता ॥ ४४ ॥
अलब्धज्ञानदृष्टीनां क्रियामृतपरायणम् ।
वासनामात्रसारत्वादज्ञस्य सफलाः क्रियाः ।
सर्वा एवाफलाज्ञस्य वासनामात्रसंक्षयात् ॥ ४५ ॥
ऋत्वन्तरे यथा याति विलयं पूर्वमार्तवम् ।
तथैव वासनानाशे नाशमेति क्रियाफलम् ॥ ४६ ॥
न स्वभावेन फलति यथा शरलता फलम् ।
क्रियानिर्वासनामुत्र फलं फलति नो तथा ॥ ४७ ॥

॥ ४२ ॥ ४३ ॥ ज्ञानमिति ॥ ज्ञानं ज्ञानसाधनम् । कालातिवाहनाय कालहरणरूपाय विनोदायैव क्रिया तपःस्वाध्यायादिरूपा उदिता ॥ ४४ ॥ अलब्धेति ॥ अलब्धज्ञानदृष्टीनां अनात्मविदां क्रियैव परायणं परा गतिः । यतो वासनामात्रसारत्वात् प्रकृष्टवासनत्वाद्धेतोरज्ञस्यैव क्रियाः सफला न तु निर्वासनस्य ज्ञस्येत्यर्थः ॥ ४५ ॥ ऋत्वन्तर इति ॥ पूर्वं प्राक्तनं आर्तवमृतौ भवं कुसुमफलादिकं वस्तु ऋत्वन्तरे पूर्वर्त्वन्तरापगमेनान्यस्मिन्नृतौ यथा विलयं याति तथैव वासनानां नाशे सति क्रियाफलमपि नाशमेति वासनाहेतुत्वात्क्रियाफलस्य ॥ ४६ ॥ एतदेवोपपादयन्नाह—नेति ॥ शरलता

यस्य मौर्ख्यं क्षयं याति सर्वं ब्रह्मेति भावनात्।
नोदेति वासना तस्य प्राज्ञस्येवाम्बुधिर्मरौ ॥ ४८ ॥
वासनामात्रसंत्यागाज्जरामरणवर्जितम्।
पदं भवति जीवोऽन्तर्भूयोजन्मविवर्जितम् ॥ ४९ ॥
सवासनं मनो ज्ञानं ज्ञेयं निर्वासनं मनः।
ज्ञानेन ज्ञेयतामेत्य पुनर्जीवो न जायते ॥ २५० ॥
ज्ञानमेव परं श्रेय इति ब्रह्मादयोऽपि ते।
संसारतारणं ज्ञानं त्वं किमज्ञानवान्स्थितः ॥ ५१ ॥
कोऽहं कथमिदं जातं कथं शाम्यति वेति भो।
राजन्नावेक्षसे कस्मात्किमज्ञ इव तिष्ठसि ॥ ५२ ॥
कथं बन्धः कथं मोक्ष इति प्रश्नानुदाहरन्।
पारावारविदां पादान्कस्माद्राजन्न सेवसे ॥ ५३ ॥
साधूनां समदृष्टीनां परिप्रश्नेन सेवया।
संगमेन च सा युक्तिर्लभ्यते मुच्यते यया ॥ ५४ ॥

वसिष्ठ उवाच ॥

कान्तया देवरूपिण्या तयैवं प्रतिबोधितः।
अश्रुपूर्णमुखो वाक्यं शिखिध्वज उवाच ह ॥ ५५ ॥

शराख्यतृणस्य स्तम्बः सा यथा स्वभावेनैव वस्तुस्वभावेनैव फलं न फलति कुसुममात्रपर्यवसिततत्वात् तथा निर्वासना अपि क्रिया अमुत्र जन्मान्तरे फलं नो फलति तस्या अपि तादृशस्वभावत्वात् ॥४७॥४८॥४९॥ २५० ॥ ५१ ॥ ५२ ॥ कथमिति ॥ पारावारविदां संसारसागरस्य पारमवारं च ब्रह्मैव तद्विदाम्। पारावारशब्दाभ्यां अन्तादी लक्ष्येते ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

शिखिध्वज उवाच ॥

अहो नु बोधितोऽस्म्यद्य चिरात्सुरसुत त्वया ।
मौर्ख्याद्दार्यसमासङ्गं मुक्त्वाहमवसं वने ॥ ५६ ॥
अहो नु मे क्षयं यातं मन्ये पापमशेषतः ।
स त्वं मे वनमागत्य संप्रबोधयसीह माम् ॥ ५७ ॥
गुरुस्त्वं मे पिता त्वं मे मित्रं त्वं मे वरानन ।
शिष्यो नमस्करोम्यद्य पादौ तव कृपां कुरु ॥ ५८ ॥
यदुदारतमं वेत्सि यस्मिञ्ज्ञाते न शोच्यते ।
भवामि निर्वृतो येन तद्ब्रह्मोपदिशाशु मे ॥ ५९ ॥

कुम्भ उवाच ॥

यद्युपादेयवाक्योऽहं राजर्षे तद्वदामि ते ।
अन्यथानेकधा प्रोक्तमपि स्याद्विफलं वचः ॥ २६० ॥
अनुपादेयवाक्यस्य वक्तुः पृष्टस्य लीलया ।
व्रजन्त्यफलतां वाचस्तमसीवाक्षसंविदः ॥ २६१ ॥

शिखिध्वज उवाच ॥

यद्वक्षि तदनुष्ठेयं मया विधिरिव श्रुतेः ।
अविचारितमेवाशु सत्यमेतन्मयोदितम् ॥ ६२ ॥

॥ ५९ ॥ पुनः कुम्भवाक्यम् ॥ २६० ॥ अनुपादेयेति ॥ लीलया अनादरेण पृष्टस्य अनुपादेयवाक्यस्य अनाप्तस्य वक्तुर्वाचस्तमसि अक्षसंविदः चक्षुरिन्द्रियवृत्तय इव अफलतां व्रजन्ति ॥ ६१ ॥ यदिति ॥ त्वं यद्वक्षि ब्रूषे तच्छ्रुतेर्विधिरिव वैदिकं कार्यमिव अविचारितमेव मया स्वनुष्ठेयं एतन्मया सत्यमेवोदितम् ॥ ६२ ॥

## नवमे चिन्तामण्युपाख्यानम्

कुम्भ उवाच ॥

यथा बालः पितुर्वाक्यं युक्तिहेतूपपादनम् ।
आदत्ते हि तथैव त्वं गृहाण वचनं मम ॥ ६३ ॥
प्रथमं शृणु भो राजन्वृत्तान्तं कंचिदद्भुतम् ।
पश्चात्ते वर्णयिष्यामि प्रकृतार्थव्यवस्थितिम् ॥ ६४ ॥
"अस्ति कश्चित्पुमाञ्छ्रीमान्स्थानं सर्वगुणश्रियाम् ।
सर्वशास्त्रार्थतत्त्वज्ञो नतु जानात्यजं पदम् ॥ ६५ ॥
अनन्तयत्नसंसाध्ये स चिन्तामणिसाधने ।
प्रवृत्तो वाडवो वह्निरब्धिसंशोषणे यथा ॥ ६६ ॥
तस्य यत्नेन महता कालेनाध्यवसायिनः ।
कालस्य वशतस्तस्य मुनेर्निर्बन्धशालिनः ॥ ६७ ॥
सिद्धिश्चिन्तामणिः किं वा न सिद्ध्यत्युद्यतात्मनाम् ।
मणिमग्रे स्थितप्रायं हस्तप्राप्यं ददर्श सः ॥ ६८ ॥
मेरोरुदयशृङ्गस्थो मुनिरिन्दुमिवोदितम् ।
बभूव मणिराजेन्द्रे नतु निश्चयवानसौ ॥ ६९ ॥
राज्ञि द्रागिति संप्राप्ते सुदीन इव पामरः ।
इदं स चिन्तयामास मनसा क्षयशालिना ॥ २७० ॥
अयं मणिर्मणिर्नायं मणिश्चेत्तद्भवेन्न सः ।
पश्यामि न स्पृशाम्येनं कदाचित्स्पर्शतो व्रजेत् ॥ ७१ ॥

पुनः कुम्भः—यथेति ॥ बालो यथा पितुर्वाक्यं युक्तिहेतूपपादनं त्यक्तयुक्तिसमर्थनमेवादत्ते स्वीकरोति तथैव त्वमपि मम वचो गृहाण ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ २७० ॥ अयमिति सप्तभिः श्लोकैर्वाक्यम् ॥ अयं तु पुरोवर्ती मणिर्वा

नैतावतैव कालेन मणीन्द्रः किल सिद्ध्यति ।
यत्नेन जीवितान्तेन सिद्ध्यतीत्यागमक्रमः ॥ ७२ ॥
कृपणः कुणितेनाक्ष्णा लोलालातलतोपमम् ।
रत्नालोकं प्रपश्यामि द्विचन्द्रत्वमिव भ्रमात् ॥ ७३ ॥
कुत एतावती स्फीता भाग्यसंपत्समागता ।
अधुनैव यदाप्नोमि मणीन्द्रं सर्वसिद्धिदम् ॥ ७४ ॥
केचिदेव महान्तस्ते महाभाग्या भवन्ति हि ।
येषामल्पेन कालेन भवन्त्यभिमुखाः श्रियः ॥ ७५ ॥
अहमल्पतपाः साधुर्वराको मानुषः किल ।
सिद्धयः कथमायान्ति मामभाग्यैकभाजनम् ॥ ७६ ॥

अयं दृश्यमानो मणिर्न भवति वा । मणिश्चेन्मणिर्भवति चेत्तर्हि स चिन्तामणिर्न भवेत् । अतः संदेहदशायां पश्याम्येव न स्पृशामि । कुतः स्पर्शतः कदाचिद्व्रजेदपि ॥ ७१ ॥ मणीन्द्रश्चिन्तामणिरेतावतैव कालेन न सिद्ध्यति किल किं तर्हि जीवितान्तेन प्राणसंपादितेन महता यत्नेन सिद्ध्यतीत्यागमानां मणिसाधनकल्पनाक्रमः ॥ ७२ ॥ अहं तु कृपणः सन् कुणितेन संकुचितेनाक्ष्णा लोलालातलतोपमं अलातमुल्मुकं तच्छाखासदृशं रत्नालोकं द्विचन्द्रत्वमिव भ्रमादेव पश्यामि ॥ ७३ ॥ एतावती स्फीता भूयिष्ठा भाग्यसंपन्मम कुत आगता तस्या भाग्यसंपदो हेतोरधुनैव सर्वसिद्धिदं मणीन्द्रं प्राप्नोमि ॥ ७४ ॥ येषामल्पेनैव कालेन श्रियोऽभिमुखा भवन्ति ते केचिदेव महान्तो महाभाग्या भवन्ति ॥ ७५ ॥ अहं पुनरल्पतपाः साधु-वराकः साधूनां शोच्यो मानुष एव । अतो मामभाग्यैकभाजनं

एवं विकल्पसंकल्पैश्चिरमज्ञः परामृशन् ।
न मणिग्रहणे यत्नमकरोन्मौर्ख्यमोहितः ॥ ७७ ॥
इति तस्मिंस्थिते यातो मणिरुड्डीय सिद्धयः ।
त्यजन्ति ह्यवमन्तारं शरा गुणमिवोज्झिताः ॥ ७८ ॥
पुमान्भूयः क्रियायत्नं चक्रे रत्नेन्द्रसाधने ।
नोद्विजन्ते स्वकार्येषु जना अध्यवसायिनः ॥ ७९ ॥
ददर्शाथ कचद्रूपं काचखण्डमखण्डितम् ।
हसद्भिर्वञ्चकैः सिद्धैः पुरस्कृतमलक्षितैः ॥ २८० ॥
अयं चिन्तामणिरिति मूढस्तस्मिन्स वस्तुताम् ।
बुबुधे मोहितो ह्यज्ञो मृदं हेमेव पश्यति ॥ ८१ ॥
ततस्तं मणिमादाय प्राक्तनीं स श्रियं जहौ ।
सर्वं चिन्तामणेरस्मात्प्राप्यते किं धनैरिति ॥ ८२ ॥
देशोऽयमसुखो रूक्षो जनैः पापिभिरावृतः ।
दूरं गत्वा यथाकामं सुखं तिष्ठामि संपदा ॥ ८३ ॥
इत्यादाय मणिं मूढः शून्यकाननमाययौ ।
तत्रैष काचमणिना महतीमापदं गतः ॥ ८४ ॥"

इति श्रीयोगवासिष्ठसारे चिन्तामण्युपाख्यानं नाम प्रकरणम् ॥

सिद्धयः कथमायान्ति ॥ ७६ ॥ एवं विकल्पसंकल्पैः विकल्पैः संकल्पैश्च चिरं परामृशन्मौर्ख्यमोहितोऽज्ञानपरवशो मणिग्रहणे यत्नं नाकरोत् ॥ ७७ ॥ ७८ ॥ ७९ ॥ ददर्शेति ॥ अथ हसद्भिर्वञ्चकैः सिद्धैरलक्षितैरेव पुरस्कृतं कचद्रूपं स्फुरद्रूपं अखण्डितं काचखण्डं ददर्श ॥ २८० ॥ अयमिति ॥ स मूढः तस्मिन्काचखण्डे अयं चिन्तामणिरिति वस्तुतां परमार्थचिन्तामणित्वं बुबुधे । अज्ञो हि मोहितः सन्मृदं मृत्तिकाविशेषं हेमवत्पश्यति ॥ ८१ ॥ ८२ ॥

## नवमे गजेन्द्रोपाख्यानम्

कुम्भ उवाच ॥

अथेममपरं रम्यं वृत्तान्तं शृणु भूमिप ।
परं प्रबोधनं बुद्धेः साधो सदृशमात्मनः ॥ ८५ ॥
"अस्ति विन्ध्यवने हस्ती महायूथपयूथपः ।
वज्रास्थिविषमौ दीर्घौ तस्यास्तां दशनौ सितौ ॥ ८६ ॥
स बद्धो लोहजालेन हस्तिपेन किलाभितः ।
निबद्धो यन्त्रणामाप क्रूरशृङ्खलयार्दितः ॥ ८७ ॥
खेदान्निगडनिर्भेदं चकार स मतङ्गजः ।
दन्ताभ्यां यत्नतस्ताभ्यां मुहूर्तद्वितयेन तु ॥ ८८ ॥
तस्य तं निगडोच्छेदं दृष्ट्वा तद्बन्धनिश्चयः ।
पपाताथ गजेन्द्रस्य मूर्ध्नि तालतरो रिपुः ॥ ८९ ॥
सोऽपतद्दुर्मतिर्भूमावप्राप्य करिणः शिरः ।
तं पुरः पतितं दृष्ट्वा महेभः करुणां ययौ ॥ ९० ॥

॥ ८३ ॥ ८४ ॥ इति श्रीयोगवासिष्ठविवरणे चिन्तामण्युपाख्यानं नाम प्रकरणम् ॥

अस्तीति ॥ महायूथपयूथपो महायूथपानामपि यूथपः श्रेष्ठः । वज्रास्थिविषमौ वज्रादप्यस्थ्नोऽपि कठिनौ । वज्राश्रविषमौ इति पाठे वज्रायुधकोटिरिव विषमावित्यर्थः ॥ ८५ ॥ ८६ ॥ स इति ॥ स हस्ती हस्तिपेन कर्त्रा लोहजालेन शृङ्खलया साधनेन अभितो बद्धोऽभूत् । इत्थं निबद्धश्च क्रूरशृङ्खलया अर्दितः सन् यन्त्रणां पारतन्त्र्यमापेति वाक्यभेदान्निबद्ध इति न पौनरुक्त्यम् ॥ ८७ ॥ ८८ ॥ तस्येति ॥ तद्बन्धनिश्चयः तस्य हस्तिनो बन्धे निश्चयो यस्य स रिपुर्हस्तिपकः तालतरोः सकाशाद्गजेन्द्रस्य मूर्ध्नि पपात

केऽपि स्फारगुणाः सन्तः सन्ति तिर्यग्गतावपि ।
पतितं दलयामीति किंनाम मम पौरुषम् ॥ ९१ ॥
वारणोऽपीति कलयन्न जघान स तं रिपुम् ।
केवलं तं परित्यज्य स्वदेशं स ययौ गजः ॥ ९२ ॥
गते गजे समुत्तस्थौ हस्तिपः स्वस्थदेहधीः ।
सोऽन्वियेष गजं यत्नादुल्मुकान्तरितं वने ।
चिरेणालभ्यतेभेन्द्रं कस्मिंश्चित्कानने स्थितम् ॥ ९३ ॥
स खातवलयं चक्रे हस्तिपः काननेऽभितः ।
उपर्यस्थगयज्जीर्णलतौघेन स तं शठः ॥ ९४ ॥
दिनैः कतिपयैरेव वारणो विहरन्वने ।
तस्मिन्निपतितः खाते शुष्काब्धाविव पर्वतः ॥ ९५ ॥
इति भूयो दृढं बद्धस्तेन हस्तिपकेन सः ।
तिष्ठत्यद्यापि दुःखेन स्वसद्मनि यथा बलिः ॥ ९६ ॥
अहनत्पुष्करेणासौ यद्यग्रे पतितं रिपुम् ।
तन्नालप्स्यत तद्दुःखं गजः खातनिबन्धनम् ॥ ९७ ॥
मौर्ख्यादागामिनं कालं वर्तमानक्रियाक्रमैः ।
अशोधयन्नरो दुःखं याति विन्ध्यगजो यथा ॥ ९८ ॥"

इति श्रीयोगवासिष्ठसारे गजेन्द्रोपाख्यानं नाम प्रकरणम् ॥

॥ ८९ ॥९०॥९१॥९२॥९३॥ स इति ॥ खातवलयं श्वभ्रवलयम् । अस्थगयदावृणोत् ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ मौर्ख्यादिति ॥ नरो मौर्ख्यादज्ञानाद्धेतोः आगामिनं कालं वर्तमानैः क्रियाक्रमैः उपायभेदैरशोधयन्निरुपायमकुर्वन्दुःखं याति विन्ध्यगजो यथेत्यन्वयः ॥ ९८ ॥ इति श्रीयोगवासिष्ठविवरणे गजेन्द्रोपाख्यानं नाम प्रकरणम् ॥

## नवमे चिन्तामण्युपाख्यानविवरणम्

शिखिध्वज उवाच ॥

मणिसाधकविन्ध्येभबन्धनादमरात्मज ।
सूचितं यत्कथाजालं पुनर्मे प्रकटीकुरु ॥ ९९ ॥

कुम्भ उवाच ॥

"योऽसौ शास्त्रार्थकुशलस्तत्त्वज्ञाने त्वपण्डितः ।
रत्नसंसाधकः प्रोक्तः स त्वमेव महीपते ॥ ३०० ॥
तज्ज्ञो भवसि शास्त्रेषु तत्त्वज्ञाने त्वशिक्षितः ॥ १ ॥
विद्धि चिन्तामणिं साधो सर्वत्यागमकृत्रिमम् ।
तं मतं सर्वदुःखानां त्वं साधयितुमुद्यतः ॥ २ ॥
संत्यक्तं भवता राज्यं सदारधनबान्धवम् ।
स्वदेशस्यातिदूरस्थमागतोऽसि ममाश्रमम् ॥ ३ ॥

इदानीं शिखिध्वजः कथाद्वयस्य तात्पर्यं पृच्छति—मणीति ॥ मणिसाधकविन्ध्येभबन्धनान्मणिसाधकाद्विन्ध्येभबन्धनाच्चेत्यर्थः ॥ ९९ ॥ योऽसाविति सार्धश्लोकद्वयं वाक्यम् ॥ यः पुमान् शास्त्रकुशलः शास्त्रज्ञाने प्रवीणः तत्त्वज्ञाने त्वपण्डितः अप्रगल्भः स पुमान् रत्नसंसाधकः प्रोक्तः । शास्त्रोक्तविधिना रत्नसाधनाल्लब्धेऽपि रत्ने तत्त्वनिश्चयाभावात् । स च रत्नसंसाधकः पुमांस्त्वमेव ॥ ३०० ॥ यतस्त्वं शास्त्रेषु तत्त्वज्ञो भवसि । ते हृदि विश्रान्तिस्तत्त्वनिष्ठा च नास्ति ॥ १ ॥ कस्तर्हि चिन्तामणिरित्यत्राह—विद्धीति श्लोकद्वयं वाक्यम् ॥ यतो भवता राज्यं संत्यक्तं यतश्चातिदूरमिममाश्रममागतोऽसि अतस्त्वं सर्वदुःखविनाशकं सर्वत्यागं नाम चिन्तामणिं

केवलं सर्वसंत्यागे शेषिताहंमतिस्त्वया ।
ततः सर्वपरित्यागो यावन्नाप्नोति पूर्णताम् ।
तावत्त्यागविकल्पस्त्वां खमम्बुद इवावृणोत् ॥ ४ ॥
नायं स परमानन्दः सर्वत्यागो महोदयः ।
कोऽप्युच्चैरन्य एवासौ चिरसाध्यो महानिति ॥ ५ ॥
चिन्तयेति गते वृद्धिं विकल्पे तत्र चेतसि ।
वात्ययेव वनस्पन्दे त्यागः प्रोड्डीय ते गतः ॥ ६ ॥
सर्वत्यागमहारत्ने गते कमललोचन ।
तपःकाचमणिर्दृष्टस्त्वया संकल्पचक्षुषा ॥ ७ ॥
अमितानन्दमुत्सृज्य सुसाध्यं यः प्रवर्तते ।
मिते वस्तुनि दुःसाध्ये स्वात्महा स शठः स्मृतः ॥ ८ ॥

साधयितुमुद्यत इत्यन्वयः ॥ २ ॥ ३ ॥ कथं तर्हि स चिन्तामणिर्मया न लब्ध इत्यत्राह—केवलमिति अर्धत्रयं वाक्यम् ॥ यतस्त्वया सर्वसंत्यागेऽहंमतिः केवलं शेषिताऽभिमानो न त्यक्त इत्यर्थः । ततस्तस्माद्धेतोः सर्वत्यागस्यास्यापूर्णत्वात्तद्विषयो विकल्पस्त्वामावृणोत् । खमाकाशमम्बुद इव ॥ ४ ॥ नायमिति श्लोकद्वयं वाक्यम् ॥ अयमिदानीं सिद्धः सर्वत्यागः परमानन्दः परम आनन्दो यस्मिन् । महानुदयः उद्बोधो यस्मिंस्तादृशः सर्वत्यागो न भवति । यतोऽसौ परमानन्दहेतुः सर्वत्यागश्चिरसाध्यो महानन्य एव कोऽपीति ॥ ५ ॥ एवं चिन्तया विकल्पे चेतसि वृद्धिं गते सति ते त्यागः प्रोड्डीय गतः वात्यया वातसमूहेन वनस्पन्दे कम्पे वृद्धिं गते तु पक्षी यथा प्रोड्डीय गच्छति तद्वत् ॥ ६ ॥ ७ ॥ अमितेति ॥ अमितानन्दः सुसाध्यश्च सर्वत्यागः । मितं परिमितानन्दं दुःसाध्यं

चिन्तामणिर्मया प्राप्त इत्यलं बुद्धवानसि ।
न लब्धवान्भवान्साधो स्फटिकस्यापि खण्डिकाम् ॥ ९ ॥"

इति योगवासिष्ठसारे चिन्तामण्युपाख्यानविवरणं नाम प्रकरणम् ॥

## नवमे गजेन्द्रोपाख्यानविवरणम्

कुम्भ उवाच ॥

"योऽसौ विन्ध्यवने हस्ती सोऽस्मिन्भूमितले भवान् ।
यौ वैराग्यविवेकौ ते तौ तस्य दशनौ सितौ ॥ ३१० ॥
यश्चासौ वारणाक्रान्तितत्परो हस्तिपः स्मृतः ।
त्वदज्ञानं त्वदाक्रान्तितत्परं तेऽतिदुःखदम् ॥ ११ ॥
अतिशक्तोऽप्यशक्तेन दुःखाद्दुःखं भयाद्भयम् ।
हस्ती हस्तिपकेनेव राजन्मौर्ख्येण नीयसे ॥ १२ ॥
यल्लोहरज्जुजालेन वारणः परिवेष्टितः ।
तदाशापाशजालेन भवानपि समावृतः ॥ १३ ॥
आशा हि लोहरज्जुभ्यो विषमा विपुला दृढा ।
कालेन क्षीयते लोहं तृष्णा तु परिवर्धते ॥ १४ ॥

च वस्तुतः ॥ ८ ॥ चिन्तेति ॥ तपःकाचमणिं लब्धवान् श्रेयस्तु किंचिदपि न लब्धवानित्यर्थः ॥ ९ ॥ इति श्रीयोगवासिष्ठविवरणे चिन्तामण्युपाख्यानविवरणं नाम प्रकरणम् ॥

इदानीं विन्ध्यहस्तिकथां विवृणोति योऽसावित्यादिना नृप बद्धो यथा बलिरित्यन्तेन ॥ विन्ध्यहस्ती भवान् मूर्खत्वात् । वैराग्यविवेकौ च त्वदीयौ दशनौ शृङ्खलादिबन्धभञ्जकत्वात् ॥ ३१० ॥ हस्तिपकस्त्वदज्ञानं बन्धकत्वाद्दुःखहेतुत्वाच्च ॥ ११ ॥ १२ ॥ लोहरज्जुजालमाशापाशजालम् । शृङ्खलाभङ्गस्तु राज्यभोगत्यागः ॥ १३ ॥

यद्बभञ्ज गजः शत्रोः शृङ्खलाजालबन्धनम् ।
तत्तत्याज भवान्भोगान्भूमिं राज्यमकण्टकम् ॥ १५ ॥
यत्तु तालतरोर्भ्रष्टो भूमौ हस्तिपकोऽपतत् ।
त्वयि त्यजति तद्राज्यमज्ञानं पतितं कृतम् ॥ १६ ॥
यदा विरक्तः पुरुषो भोगाशां त्यक्तुमिच्छति ।
तदा प्रकम्पतेऽज्ञानं छेद्ये वृक्षे पिशाचवत् ॥ १७ ॥
भोगौघे नूनमुन्मुक्ते पतत्यज्ञानसंस्थितिः ।
यदा विवेकी पुरुषो भोगान्संत्यज्य तिष्ठति ॥ १८ ॥
तदा पलायतेऽज्ञानं छिन्ने वृक्षे पिशाचवत् ।
यदा वनं प्रयातस्त्वं तदा ज्ञानं क्षतं त्वया ।
पतितं सन्न निहतं सर्वत्यागमहासिना ॥ १९ ॥
तेन भूयः समुत्थाय स्मृत्वा परिभवं कृतम् ।
ततः प्रपञ्चखातेऽस्मिन्गहने त्वं नियोजितः ॥ ३२० ॥
तदैवाघातयिष्यस्त्वं यद्यज्ञानं तथा गतम् ।
राज्यत्यागविधौ तत्त्वां नाहनिष्यत्क्षयं गतम् ॥ २१ ॥
यत्खातवलयस्तेन वैरिणा हस्तिनः कृतः ।
तत्तेन दुःखमतुलमज्ञानेन तवार्पितम् ॥ २२ ॥
या तस्य परिवारश्रीर्गजारेर्नृपसत्तम ।
सा त्वदज्ञाननृपतेश्चित्तभूतिर्विसारिणी ॥ २३ ॥

॥ १४ ॥ १५ ॥ हस्तिपकस्य तालतरोर्भ्रंशो नाम त्वया राज्ये त्यज्यमाने त्वदज्ञानस्य भ्रंशः । पतितं हस्तिपकमुपेक्ष्य हस्तिनो वनगमनं नाम तव सर्वत्यागमहासिना निःशेषमज्ञानस्योच्छेदनेनारण्याश्रयणम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ ३२० ॥

यत्खातवलयो बाललताभिरवगुण्ठितः।
आवृतं तत्तपोदुःखमीषत्सज्जनवृत्तिभिः ॥ २४ ॥
इत्यद्यापि तपःखाते दुःखे ह्यस्मिन्सुदारुणे।
स्थितोऽसि पातालतले नृप बद्धो यथा बलिः ॥ २५ ॥

इति श्रीयोगवासिष्ठसारे गजेन्द्रोपाख्यानविवरणं नाम प्रकरणम् ॥

कुम्भ उवाच ॥

यदुक्तं तव शालिन्या तया विदितवेद्यया।
तदा चूडालया ज्ञानं तत्कस्मान्नोररीकृतम् ॥ २६ ॥
सा हि तत्त्वविदां मुख्या यद्यद्वक्ति करोति च।
तत्सर्वं सत्यमेवाङ्ग तदनुष्ठेयमादरात् ॥ २७ ॥
अथ चेद्वचनं तस्यास्त्वया नानुष्ठितं नृप।
एतत्सर्वपरित्यागः कस्मान्न निपुणीकृतः ॥ २८ ॥

शिखिध्वज उवाच ॥

राज्यं त्यक्तं गृहं त्यक्तं देशस्त्यक्तस्तथाविधः।
दारास्त्यक्ताः सुतास्त्यक्ताः सर्वत्यागो न किं कृतः ॥ २९ ॥

॥ २१ ॥ २२ ॥ २३ ॥ हस्तिपकेन भूयो हस्तिबन्धनाय वने खातकल्पनं अज्ञानेन तपोनियमेन नियोजनं खातवलयस्य बालतृणलताभिरवगुण्ठनं च तपोदुःखस्य सज्जनवृत्तिभिरीषदावरणमिति तात्पर्यनिष्कर्षः ॥ २४ ॥ २५ ॥ इति वासिष्ठविवरणे गजेन्द्रोपाख्यानविवरणं नाम प्रकरणम् ॥

यदुक्तमिति ॥ शालिन्या श्लाघ्यया ॥ २६ ॥ २७ ॥ अथेति ॥ तस्याश्चूडालाया वचनं नानुष्ठितं चेत्तर्हि स त्वया क्रियमाणः सर्वपरित्यागोऽपि कस्माद्धेतोर्न निपुणीकृतः न संपूर्णीकृतः ॥२८॥२९॥

कुम्भ उवाच ॥

धनं दारा गृहं राज्यं भूमिश्छत्रं च बान्धवाः ।
इति सर्वं न ते राजन्सर्वत्यागो हि कस्तव ॥ ३३० ॥
तवास्त्येवापरित्यक्तः सर्वस्माद्राग उत्तमः ।
तं परित्यज्य निःशेषं परमां यास्यशोकताम् ॥ ३१ ॥

शिखिध्वज उवाच ॥

राज्यं चेन्मम नो सर्वं तत्सर्वं वनमेव मे ।
शैलवृक्षादिगुल्माद्यं तदप्येतत्त्यजाम्यहम् ॥ ३२ ॥

वसिष्ठ उवाच ॥

इति राम वदन्नेव कुम्भवाक्येन नोदितः ।
निमेषान्तरमात्रेण वशी धीरः शिखिध्वजः ॥ ३३ ॥
प्रममार्ज वनास्थां तां हृदा स दृढनिश्चयः ।
प्रावृडोघस्तटगतां रजोरेखामिवात्मनः ॥ ३४ ॥

धनमिति ॥ छत्रं राजचिह्नानां अन्येषामुपलक्षणम् । इति सर्वं एतत्सर्वं ते त्वदीयं न भवति अतः सर्वत्यागः को नाम त्यागः कथम्। अस्वकीयस्य त्यागः त्यागो न भवतीत्यर्थः ॥ ३३० ॥ तर्हि मदीयः क इत्यत आह—तवेति ॥ सर्वस्माद्वस्तुनः अपरित्यक्तः अनपगत उत्तमो रागः इच्छा विषयस्तवास्ति तं रागं निःशेषं परित्यज्य परमामशोकतां यासि ॥ ३१ ॥ राज्यमिति॥ सर्वं राज्यं मम मदीयं नोचेत्तर्हि शैलवृक्षादिगुल्माद्यं वनमेव सर्वं मे मदीयं यदस्ति तदेतदपि त्यजामीत्यन्वयः ॥ ३२ ॥ इतीति श्लोकद्वयं वाक्यम् ॥ आत्मनस्तां वनास्थां वनाभिमानं प्रममार्जेत्यन्वयः ॥३३॥३४॥

शिखिध्वज उवाच ॥

सवृक्षाद्रिवनश्वभ्राद्द्विपिनादपि वासना ।
परित्यक्ता मया नूनं सर्वत्यागः स्थितो मम ॥ ३५ ॥

कुम्भ उवाच ॥

अद्रिस्तटं वनं श्वभ्रं सलिलं पादपाः स्थलम् ।
इत्यादि तव नो सर्वं सर्वत्यागः कथं तव ।
तवास्त्येवापरित्यक्तः सर्वस्माद्राग उत्तमः ॥ ३६ ॥

शिखिध्वज उवाच ॥

एतच्चेन्मम नो सर्वं तत्सर्वं भाजनादि मे ।
वापीस्थलोटजयुतस्तमेवाशु त्यजाम्यहम् ॥ ३७ ॥

कुम्भ उवाच ॥

आश्रमोऽपि न ते तस्मिंस्त्यक्ते त्यागो न सर्वगः ।
तवास्त्येवापरित्यक्तः सर्वस्माद्राग उत्तमः ॥ ३८ ॥

शिखिध्वज उवाच ॥

एतच्चेन्मम नो सर्वं तत्सर्वं भाजनादि मे ।
चर्मकुड्यकुशूलादि तत्तावत्संत्यजाम्यहम् ॥ ३९ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वोत्थाय तत्सर्वमक्षमालाजिनादिकम् ।
एकत्रैव समानीय ददाह त्यागबुद्धितः ॥ ३४० ॥
भाण्डजातं दहत्यग्नौ सहशुष्केन्धनेन तत् ।
केवलाकृतिरस्नेहस्तुष्टिमानाह भूपतिः ॥ ४१ ॥

॥३५॥ अद्रिरिति सार्धश्लोकत्रयं वाक्यम् ॥ पूर्ववद्व्याख्येयम् ॥३६॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ३४० ॥ ४१ ॥ ४२ ॥ किं नामेति ॥

वासनां तत्र संत्यज्य सर्वत्यागी स्थितो ह्यहम् ।
अहो रुचिरकालेन देवपुत्रप्रबोधितः ।
संपन्नः केवलः शुद्धः सुखेनोद्बोधवानहम् ॥ ४२ ॥
किं नाम किल वस्त्वेतद्भवे संकल्पितक्रमम् ।
यद्भाण्डोपस्करस्थानसदनाद्यवलम्बनम् ॥ ४३ ॥
यावद्यावत्प्रहीयन्ते विविधा बन्धहेतवः ।
तावत्तावत्समायाति परमां निर्वृतिं मनः ॥ ४४ ॥
शाम्यामि परिनिर्वामि सुखितोऽस्मि जयाम्यहम् ।
विबन्धाः प्रलयं याताः सर्वत्यागो मया कृतः ॥ ४५ ॥
दिगम्बरो भवास्म्येव दिक्समोऽयमहं स्थितः ।
देवपुत्र महात्यागाद्यदन्यद्वद शिष्यते ॥ ४६ ॥

कुम्भ उवाच ॥

सर्वमेव न संत्यक्तं त्वया राजञ्शिखिध्वज ।
सर्वत्यागपरानन्दे मा मुधाभिनयं कुरु ॥ ४७ ॥

वसिष्ठ उवाच ॥

इत्येवं ब्रुवता तेन किंचित्संचिन्त्य भूभृता ।
इदमुक्तं महाबाहो राम राजीवलोचन ॥ ४८ ॥

संकल्पितक्रमं बुद्धिपरिकल्पितोपयोगं भाण्डोपस्करस्थानसदनाद्यवलम्बनं भाण्डं भाजनं उपस्करं गृहोपकरणं स्थानं निवासभूः सदनं गृहं इत्यादीनामवलम्बनं परिग्रह इति यदेतत्किं नाम वस्तु । न किंचिद्वस्तु दुःखैकहेतुत्वात् ॥ ४३ ॥ यदुक्तं वैष्णवे—'यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावतोऽस्य निखन्यन्ते हृदये शोकशङ्कवः' इति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

शिखिध्वज उवाच ॥

इन्द्रियव्यालसंघातो रक्तमांसमयाकृतिः ।
शिष्यते सर्वसंत्यागे देहो मे देवतात्मज ॥ ४९ ॥
तदुत्थाय पुनर्देहं भृगुपाताद्यविघ्नतः ।
विनाशात्मकतां नीत्वा सर्वत्यागी भवाम्यहम् ॥ ३५० ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा देहमग्रस्थे श्वभ्रे त्यक्तुमसौ जवात् ।
करोति यावदुत्थानं तावत्कुम्भोऽभ्युवाच ह ॥ ५१ ॥

कुम्भ उवाच ॥

राजन्किमिति देहं त्वं निरागस्कं महाऽवटे ।
त्यजस्यज्ञो हि वृषभो रुषितो हन्ति तर्णकम् ॥ ५२ ॥
त्यक्तेनापि शरीरेण किल तामरसेक्षण ।
सर्वत्यागो न ते याति निष्पत्तिं विषमो हि सः ॥ ५३ ॥
येनायं क्षोभ्यते देहो यद्बीजं जन्मकर्मणाम् ।
तत्संत्यजसि चेत्त्याज्यं तन्महात्यागवान्भवान् ॥ ५४ ॥

शिखिध्वज उवाच ॥

केनायं चाल्यते देहः किं बीजं जन्मकर्मणाम् ।
कस्मिंस्त्यक्ते परित्यक्तं सर्वं भवति सुन्दर ॥ ५५ ॥

कुम्भ उवाच ॥

साधो सर्वगताकारं जीवनामादिनामकम् ।
न जडं नाजडं भ्रान्तं चित्तं सर्वमवस्थितम् ॥ ५६ ॥

॥ ४९ ॥ ३५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ साधो इति श्लोकद्वयं वाक्यम् ॥ सर्वगताकारं सर्वजगदाकारेण परिणतं

चित्तं विद्धि जगज्जालं बन्धश्चित्तमुदीर्यते ।
तस्मिन्साधो परित्यक्ते सर्वत्यागो भवेदिति ॥ ५७ ॥
जन्मनां कर्मणां वापि चित्तं बीजमुदाहृतम् ।
पादपः पवनेनेव देहश्चित्तेन चाल्यते ॥ ५८ ॥
चित्तत्यागं विदुः सर्वत्यागं त्यागविदो जनाः ।
चित्ते त्यक्ते लयं याति द्वैतमैक्यं च सर्वतः ॥ ५९ ॥
शिष्यते परमं शान्तमेकमच्छमनामयम् ।
सर्वत्यागः परानन्दो दुःखमन्यत्सुदारुणम् ॥ ३६० ॥
इत्योमित्युरीकृत्य यदिच्छसि तदाचर ।
कृत्वा सर्वपरित्यागं शान्तः स्वस्थो वियत्समः ।
सौम्यो भवसि यद्रूपस्तद्रूपो भव भूपते ॥ ६१ ॥

शिखिध्वज उवाच ॥

चित्तस्यादौ स्वरूपं मे यथावद्भगवन्वद ।
ततश्चित्तपरित्यागं वद मे वदतां वर ॥ ६२ ॥

कुम्भ उवाच ॥

वासनैव सदा राजन्स्वरूपं विद्धि चेतसः ।
चित्तशब्दस्तु पर्यायो वासनाया उदाहृतः ॥ ६३ ॥
अहमर्थोदयो योऽयं सर्वानर्थैकभाजनम् ।
एतच्चित्तद्रुमस्यास्य विद्धि बीजं महामते ॥ ६४ ॥

न जडं संक्रान्तचैतन्यतया प्रकाशकत्वात्। नाजडं कल्पितत्वेनात्मव्यतिरिक्तत्वात् ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ३६० ॥ ६१ ॥ ६२ ॥ ॥ ६३ ॥ अहमिति ॥ सर्वानर्थैकभाजनं सर्वस्यानर्थरूपस्य संसारस्य मूलकारणं योऽयमहमर्थोदयः अहंकारोदयोऽस्ति एतदेवास्य

एतस्मात्प्रथमोद्भिन्नादङ्कुरोऽनुभवाकृतिः ।
निश्चयात्मा निराकारो बुद्धिरित्येव सोच्यते ॥ ६५ ॥
अस्य बुद्ध्यभिधानस्य याङ्कुरस्य प्रपीनता ।
संकल्परूपिणी तस्याश्चित्तचेतोमनोऽभिधाः ॥ ६६ ॥
ईदृशस्यास्य चित्तस्य दुर्वृक्षस्य प्रतिक्षणम् ।
शाखाविलवनं कुर्वन्मूलकाषे भरं कुरु ।
मूलाद्धरणमेवाशु त्यागं त्यागविदो विदुः ॥ ६७ ॥
वासना विविधाः शाखाः फलन्त्यो विविधं फलम् ।
अभाविता भवन्त्यन्तर्लूनाः संविद्बलेन वै ॥ ६८ ॥

चित्तद्रुमस्य वीजं निदानं विद्धि ॥ ६४ ॥ एतस्मादिति ॥ प्रथमोद्भिन्नात्प्रथममुद्भूतात् एतस्मादहंकारानुभवाकृतिः अनुभवरूपो निश्चयात्मा निश्चयस्वभावो निराकारः वाह्यविपयाकारानुपरक्तो योऽङ्कुरो जातः सैव बुद्धिरित्युदीर्यते ॥ ६५ ॥ अस्येति ॥ बुद्ध्यभिधानस्य बुद्धिरूपाङ्कुरस्य संकल्परूपिणी या प्रपीनता स्थूलतास्ति तस्याः संकल्परूपिण्याः स्थूलताया एव चित्तं चेतः मन इति वाभिधाः संज्ञा भवन्ति ॥ ६६ ॥ ईदृशेति ॥ ईदृशस्य उक्तप्रकारस्यास्य चित्तरूपस्य दुर्वृक्षस्य शाखाविलवनं कामसंकल्पविचिकित्सादिरूपवासनानां शाखानां विच्छेदं कुर्वन् चित्तस्य मूलकाषे अहंकारात्मनो मूलस्य छेदे भरमास्थातिशयं कुरु ॥ ६७ ॥ तच्छाखाविलवनप्रकारमाह—वासना इति ॥ विविधं नानाप्रकारं फलं सुखदुःखादिरूपं फलन्त्यो वितरन्त्यो वासनारूपा विविधाः शाखाः संविद्बलेन आत्मानुसंधानबलेन अन्तः अभाविता उपेक्षिताः सत्यो

असंसक्तमना मौनी शान्तवादविचारणः ।
संप्राप्तकारी यः सोऽन्तर्लूनचित्तलतो भवेत् ॥ ६९ ॥
गौणं शाखाविलवनं मुख्यं मूलविकर्तनम् ।
चित्तवृक्षस्य तेन त्वं मूलकाषपरो भव ॥ ३७० ॥
मुख्यत्वेन महाबुद्धे मूलदाहमलं कुरु ।
चित्तकण्टकखण्डस्य भवत्येवमचित्तता ॥ ७१ ॥

शिखिध्वज उवाच ॥

अहंभावात्मनश्चित्तद्रुमबीजस्य हे मुने ।
कोऽनलो दहनाख्योऽस्मिन्कर्मण्यर्थकरो भवेत् ॥ ७२ ॥

कुम्भ उवाच ॥

राजन्स्वात्मविचारोऽयं कोऽहं स्यामिति रूपकः ।
चित्तदुर्द्रुमबीजस्य दहने दहनः स्मृतः ॥ ७३ ॥

लूनाः छिन्ना भवन्ति ॥ ६८ ॥ असंसक्त इति ॥ यः पुमानसंसक्तमनाः विषयेष्वनासक्तः मौनी मौननिष्ठः शान्तवादविचारणः शान्ता निवृत्ता परेषां वादेषु संकथासु विचारणा किं केन कथमित्यादिरूपा यस्य तादृशः सन्संप्राप्तकारी आवश्यककार्यकारी भवति पुरुषोऽन्तर्लूनचित्तलतश्छिन्नचित्तशाखो भवेत् ॥ ६९ ॥ गौणमिति ॥ गौणमप्रधानम् । मुख्यं प्रधानम् ॥ ३७० ॥ मुख्यत्वेनेति ॥ चित्तकण्टकखण्डस्य चित्तमेव कण्टकसमूहस्तस्य तत्समूलदाहं अलं सम्यक्कुरु । एवं सत्यचित्तता भवति ॥ ७१ ॥ अहमिति ॥ अहंभावात्मनोऽहंकाररूपस्य चित्तद्रुमबीजस्य दहने को वा अनलोऽर्थकरोऽर्थक्रियाकारी भवेत् ॥ ७२ ॥ राजन्निति ॥ चित्तदुर्द्रुमबीजस्य अहंकारस्य दहने को वाहमित्येवंरूप आत्मविचार एव दहनः स्मृतः

शिखिध्वज उवाच ॥

मुने मया स्वया बुद्ध्या बहुशः प्रविचारितम् ।
नाहं जगत्तदा देहो न मांसास्थ्यसृगादिमान् ॥ ७४ ॥

कर्मेन्द्रियाण्यपि न च न च बुद्धीन्द्रियाण्यपि ।
न मनो नापि च मतिर्नाहंकारश्च जाड्यतः ।
कटकत्वं यथा हेम्नि तथाहन्त्वं चिदात्मनि ॥ ७५ ॥

कुम्भ उवाच ॥

एतावन्मात्रकं वृन्दं यदि न त्वं महीपते ।
जडत्वात्तन्महाबुद्धेर्योऽसि तं वद मेऽनघ ॥ ७६ ॥

शिखिध्वज उवाच ॥

चिन्मात्रमजमच्छात्म वेदनं विदुषांवर ।
यत्र भावाः स्वदन्त्येते निर्णीयन्ते च येन वा ॥ ७७ ॥

एवंरूपस्य मे लग्नं नूनं मलमकारणम् ।
चित्तद्रुमस्य यद्बीजमहंभावात्मकं हृदि ॥ ७८ ॥

तच्च त्यक्तुं न शक्नोमि त्यक्तं त्यक्तमुपैति माम् ।
मुने यस्मान्न शक्नोमि तेन तप्ये सुदारुणम् ॥ ७९ ॥

॥ ७३ ॥ मुने इति श्लोकद्वयं वाक्यम् ॥ जगदादिरहंकारान्तो वर्गो जडत्वात् नाहमिति स्वयैव बुद्ध्या बहुशः प्रविचारितमित्यन्वयः ॥ ७४ ॥ ७५ ॥ ७६ ॥ चिदिति ॥ एते प्रतीयमाना भावाः पदार्था यत्र यस्मिन्वस्तुनि स्वदन्ते यदाश्रिता रोचन्ते येन च निर्णीयन्ते निश्चीयन्ते तदच्छात्म निर्मलं अजं चिन्मात्रं वेदनमेवाहं अहंशब्दस्य मुख्योऽर्थः ॥ ७७ ॥ एवमिति ॥ यच्चित्तद्रुमस्य बीजं तदहंभावात्मकं मलं एवंरूपस्य विशुद्धचिन्मात्ररूपस्य मे हृदि अकारणमेव लग्नम् ॥ ७८ ॥ तच्चेति ॥ तच्च अहंभावात्मकं मलं भूयो-

कुम्भ उवाच ॥

कारणाज्जायते कार्यमहंभावात्मकस्य तत् ।
मुने कारणमन्विष्य कथयाशु ममाधुना ॥ ३८० ॥

शिखिध्वज उवाच ॥

मुनेऽहमिति दोषस्य वेदनं वेद्मि कारणम् ।
तद्यथोपशमं याति तन्मे वद मुनीश्वर ॥ ८१ ॥
चितश्चेत्योन्मुखत्वेन दुःखायायमहं स्थितः ।
चेत्योपशमनं ब्रूहि मुने दुःखोपशान्तये ॥ ८२ ॥

कुम्भ उवाच ॥

कारणं कारणज्ञोऽसि वेदनस्य वदाशु मे ।
अतस्त्वां बोधयिष्यामि कारणाकारणक्रमम् ॥ ८३ ॥

भूयस्त्यक्तमपि मामुपैति अतस्त्यक्तुं न शक्नोमि। यस्माच्च न शक्नोमि तेन हेतुना सुदारुणं तप्ये तप्तो भवामि ॥ ७९ ॥ कारणमिति ॥ कार्यं वस्तु कारणादेव जायते तत्तस्मात्कारणादहंभावात्मकस्य कार्यस्य कारणमन्विष्यात्मनैव कथय ॥ ३८० ॥ मुने इति ॥ अहमिति दोषस्य अहंकारस्य वेदनं चितश्चेत्योन्मुखत्वमेव कारणं वेद्मि । तच्च वेदनं यथोपशमं याति तन्मे वद ॥ ८१ ॥ एतदेव विवृणोति—चित इति ॥ चितश्चैतन्यस्य चेत्योन्मुखत्वं दृश्यानुसंधानं तेन हेतुना अयमहंकारो दुःखाय स्थितः । अतो दुःखोपशान्तये चेत्योपशमनं दृश्यस्यास्फुरणं ब्रूहि ॥ ८२ ॥ कारणमिति ॥ त्वं कारणज्ञोऽसि अतो वेदनस्य कारणं वद । अतो वेदननिमित्तनिरूपणानन्तरं त्वां कारणाकारणक्रमं कारणस्य कारणाभावस्य च क्रमं प्रकारं बोधयिष्यामि। इदमस्य कारणं भवति इदमस्य कारणं न

शिखिध्वज उवाच ॥

देहादिरूपयोदेति वेदनं वस्तुसत्तया ।
असत्याभासया स्पन्दो यथा पवनलेखया ॥ ८४ ॥
असत्तां वस्तुसत्ताया नावगच्छाम्यहं यया ।
अहन्त्ववेदनं चित्तबीजं समनुशाम्यति ॥ ८५ ॥

कुम्भ उवाच ॥

विद्यते यदि देहादिवस्तुसत्ता तदस्ति ते ।
अभावाद्देहसत्तादेः किंनिष्ठं तव वेदनम् ॥ ८६ ॥

शिखिध्वज उवाच ॥

हस्तपादादिसंयुक्तक्रियाफलविलासवान् ।
सदानुभूयमानोऽयं देहो नास्ति कथं मुने ॥ ८७ ॥

कुम्भ उवाच ॥

कारणं यस्य कार्यस्य भूमिपाल न विद्यते ।
विद्यते न हि तत्कार्यं तत्संवित्तिस्तु विभ्रमः ॥ ८८ ॥

भवत्येतद्बोधयिष्यामीत्यर्थः ॥ ८३ ॥ देहेति ॥ वेदनं कर्तृ देहादिरूपया असत्याभासया मिथ्याभूतस्फुरणया वस्तुसत्तया पदार्थःरूपसत्तया उदेति पवनलेखया स्पन्दः कम्प इव ॥ ८४ ॥ असत्तामिति ॥ यया असत्तया चित्तबीजं अहन्त्ववेदनं अहंकारस्तत्कारणं च वेदनं समनुशाम्यति तां वस्तुसत्ताया असत्तां मिथ्यात्वं नावगच्छामि ॥ ८५ ॥ विद्यत इति ॥ देहादिवस्तुसत्ता यदि विद्यते तत्तर्हि ते वेदनमस्ति संभवति युज्यत इति यावद्देहसत्तादेरभावात् तव वेदनं किंनिष्ठम् । निरालम्बनमित्यर्थः ॥ ८६ ॥ हस्तेति ॥ सावयवोऽर्थक्रियाकारी सदानुभूयमानश्च देहः कथमपलपितुं शक्यत इत्यर्थः ॥ ८७ ॥ कारणमिति ॥ कारणं विना प्रतीयमानं कार्यं

अविद्यमानमेव त्वं विद्धि सर्वं भ्रमोदितम् ।
अकारणं हि यद्वस्तु तन्मिथ्या रज्जुसर्पवत् ॥ ८९ ॥

शिखिध्वज उवाच ॥

आद्यः पितामहो यः स्यात्तेन सृष्टमिदं जगत् ।
स एवास्य कथं न स्यात्कारणं वद मे मुने ॥ ३९० ॥

कुम्भ उवाच ॥

सर्गादौ केवलं शान्तं ब्रह्मैवास्ति महीपते ।
द्वितीयकलनाभावाद्वेधसोऽस्ति न कारणम् ॥ ९१ ॥

शिखिध्वज उवाच ॥

वेधसः परमं ब्रह्म कारणं किं न हे मुने ।
अकारणकतां साधो तन्न प्रत्येमि वेधसः ॥ ९२ ॥

कुम्भ उवाच ॥

अनन्तमजमव्यक्तं यदाद्यमुपलम्भनम् ।

नास्त्येव। तत्संवित्तिस्तु विभ्रमो भ्रान्तिरित्यर्थः ॥८८॥ अविद्यमानमिति ॥ भ्रमोदितं भ्रान्तिकल्पितं सर्वं अविद्यमानमेव विद्धि । हि यस्मात्कारणाद्यद्वस्तु अकारणं उत्पत्तिकारणं विनैव प्रतीयते तत्कार्यं रज्जुसर्पवन्मिथ्या ॥ ८९ ॥ आद्य इति ॥ इदं जगत्पितामहेन सृष्टमिति कृत्वा स एव पितामहोऽस्य कारणं कथं न स्यात् ॥३९०॥ सर्गादाविति ॥ सर्गादौ केवलं अद्वितीयं ब्रह्मास्ति तत्तु न कारणं निर्विकारत्वात्। अन्यदपि कारणभूतं वस्तु नास्ति द्वितीयकलनाभावात्। द्वितीयस्य ब्रह्मव्यतिरिक्तस्य वस्तुनः प्रतीत्यभावात्। 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' इति श्रुतेः । अतो वेधसः कारणं नास्तीत्यन्वयः ॥ ९१ ॥ ९२ ॥ अनन्तमिति सार्ध-

अप्रतर्क्यमविज्ञेयमक्षरं शान्तमच्युतम्।
अद्वितीयमनाद्यन्तं तच्छिवं शान्तमव्ययम् ॥ ९३ ॥
तत्कथं कस्य केनैव कर्तृ भोक्तृ कदा भवेत्।
अतो नेदं कृतं किंचिज्जगदेतन्न विद्यते ॥ ९४ ॥
चिन्मात्रकल्पितो वेधाश्चिदेवेति विनिश्चितः।
तन्मात्रजनितः सर्गस्तदात्मक इति स्थितिः ॥ ९५ ॥
न कर्तासि न भोक्तासि सर्वं शान्तमजं शिवम्।
इति निश्चयवानन्तरज्ञानं तनुतां नय ॥ ९६ ॥
अज्ञानं शिथिलीभूतमेवं नष्टं विदुर्बुधाः।
न नाशेन विनोदेति पूर्वसंस्थानविच्युतिः ॥ ९७ ॥

श्लोकत्रयं वाक्यम् ॥ अनन्तत्वादिलक्षणं यदाद्यमुपलम्भनं ज्ञानस्वरूपं वस्त्वस्ति तद्वस्तु शिवं शान्तं अव्ययं चेति कृत्वा ॥ ९३ ॥ तत्कथं केन प्रकारेण कर्तृ भवेत्। न कथंचित्कस्यचित्कर्तृत्वं व्यतिरिक्तस्य कार्यस्याभावात्। केन वा उपकरणेन न केनचित्तस्याप्यभावात्। एवं कर्तृत्वाभावात् भोक्तृत्वमपि नास्तीत्यर्थः। अतः कर्त्रभावादिदं जगत्किंचिदपि न कृतं अतश्चैतज्जगन्न विद्यते वस्तुतो नास्ति च ॥ ९४ ॥ अतश्च वेधाश्चिन्मात्रकल्पितत्वाच्चिदेव। सर्गश्च चिन्मात्रजनितश्चिन्मात्ररूपिणा वेधसैव जनितत्वात्तदात्मकश्चिन्मात्रात्मक इत्येवं स्थितो निश्चितः ॥ ९५ ॥ नेति ॥ सर्वं इदन्तया अहन्तया च प्रतीयमानं सर्वं वस्तु शान्तं अजं शिवं च। अतो न कर्ता भोक्ता चास्मि इत्येवं निश्चयवान्सन् अन्तस्थमज्ञानं तनुतां कृशतां नय ॥ ९६ ॥ अज्ञानमिति ॥ एवं पूर्वोक्तरीत्या शिथिलीभूतमज्ञानं नष्टं विदुः। यस्मान्नाशेन विना पूर्वसंस्थानविच्युतिर्नोदेति असमवायि-

तानवं दृश्यते यस्य तस्यानुक्रमतः स्वयम् ।
पूर्वसंस्थानविगमात्प्रशमोऽप्युपपद्यते ॥ ९८ ॥
तस्माच्चिदात्मकतयात्मनि चित्ततोऽयं
नित्यं स्वयं कचति भूमिप देवदेवः ।
तेनैव पङ्कज इति स्वयमात्मनात्मा
प्रोक्तः स्वरूपमिति शान्तमिदं समस्तम् ॥ ९९ ॥

शिखिध्वज उवाच ॥

बुद्धोऽस्मि भगवन्युक्तियुक्तमुक्तं त्वयोत्तम ।
कर्तृभावाज्जगन्नास्ति तेन नास्ति पदार्थदृक् ॥ ४०० ॥
एवं स्थिते विबुद्धोऽस्मि प्रबुद्धोऽस्मि शिवोऽस्मि च ।
नमो मह्यं परं चेत्यं न किंचिदिति बोधितः ॥ १ ॥

कारणनाशे कार्यद्रव्यनाशस्य न्याय्यत्वात्पूर्वसंस्थानविच्युतेश्चासमवायिनाशरूपत्वादिति भावः ॥ ९७ ॥ तानवमिति ॥ स एवार्थप्रशमस्तेजोद्रव्यविनाशो निर्विकारता वा ॥ ९८ ॥ तस्मादिति ॥ तस्माद्धेतोः देवदेवः परमात्मा स्वयं स्वात्मनि चिदात्मकतया इत्थंभूत एव चित्ततः स्वसंकल्पवशादयं प्रतीयमानप्रपञ्चरूपः कचति स्फुरति । तेनैव देवदेवेनात्मा स्वयं स्वस्वरूपमेव पङ्कज इत्यात्मनैव प्रोक्त इति । अतो हेतोरिदं समस्तं देवदेवस्य शान्तस्वरूपम् ॥ ९९ ॥ बुद्ध इति ॥ बुद्धः प्रबुद्धोऽस्मि । कर्त्रभावात्कार्यं जगन्नास्ति । तेन जगदभावेन च पदार्थदृङ्नास्ति इति त्वया युक्तियुक्तमुक्तम् ॥ ४०० ॥ एवमिति ॥ यतोऽहमतः परं चेत्यं किंचिदपि नास्तीति बोधितः चिन्मात्ररूपोऽहमेव सर्वात्मा स्फुरामीति बोधवानस्मि । अतः कारणादेवं चिन्मात्र एव स्थितो विशुद्धो निर्मलोऽस्मि । विशुद्धस्वरूपा-

पदार्थवेदनादित्थमसदेवावभासते ।
अहमद्यालमेतेन शान्तमासे खकोशवत् ॥ २ ॥

जगत्पदार्थप्रविभागदृष्टिः
सदेशदिक्कालकलाक्रियौघा ।
अहो नु कालेन चिरेण शान्ता
ब्रह्मैव शान्तं स्थितमव्ययात्मा ॥ ३ ॥

वसिष्ठ उवाच ॥

कुम्भेन बोधितस्त्वेवं स बभूवावबोधवान् ।
विनिर्गतो रराजाथ महामोहसमुद्रकात् ॥ ४ ॥
एवं कुम्भवचो राजा भावयंस्तदकृत्रिमम् ।
स्व एवात्मपदे तस्मिन्क्षणं परिणतोऽभवत् ॥ ५ ॥
बभूवामीलितमनोलोचनः शान्तवाङ्मुनिः ।
शिलातलादिवोत्कीर्णो निष्पन्दावयवाकृतिः ॥ ६ ॥

चबोधवानस्मि। तेन च शिवः परमात्मैवास्मि। ततश्च मह्यमेव नमः नन्तव्यस्य देवतान्तरस्याभावात् ॥ १ ॥ पदार्थेति ॥ पदार्थवेदनाद्भेदेन पदार्थानुसंधानाद्धेतोः असदेवेदं जगदित्थमनेन प्रकारेणावभासते। अत एतेन पदार्थवेदनेनालं पर्याप्तम्। अद्येदानीमहं खकोशवदाकाशगर्भवच्छान्तमासे ॥ २ ॥ जगदिति ॥ सदेशदिक्कालकलाक्रियौघा देशादिसंवित्सहिता जगत्पदार्थप्रविभागदृष्टिर्जगद्विषया पदार्थभेदविषया च सन्विच्चिरेण शान्ता निवृत्ता अव्ययात्मा शान्तं ब्रह्मैव स्थितं अवस्थितम् ॥ ३ ॥ ४ ॥ ५ ॥ बभूवेति ॥ आमीलितमनोलोचनः। मनोमीलनं नाम वृत्तिनिरोधः शिलातलादुत्कीर्ण-

ततो मुहूर्तमात्रेण प्रवुद्धस्फुरितेक्षणम् ।
तमुवाच महाबाहो चूडाला कुम्भरूपिणी ॥ ७ ॥

कुम्भ उवाच ॥

कच्चिदस्मिन्पदे स्फारे शुद्धे मृदुनि निर्मले ।
सुतल्पे निर्विकल्पानां सुखं विश्रान्तवानसि ॥ ८ ॥
कच्चिदन्तः प्रबुद्धोऽसि कच्चिद्भ्रान्तिस्त्वयोज्झिता ।
कच्चिज्ज्ञेयं परिज्ञातं दृष्टं द्रष्टव्यमेव वा ॥ ९ ॥

शिखिध्वज उवाच ॥

भगवंस्त्वत्प्रसादेन महाविभवभूषिता ।
महती पदवी दृष्टा सर्वस्योर्ध्वं स्थिता मया ॥ ४१० ॥
सतां विदितवेद्यानामहो वत महात्मनाम् ।
अपूर्वैकामृतमयः सङ्गः सारफलप्रदः ॥ ११ ॥
जन्मनापि मया लब्धं यन्न नाम महामृतम् ।
तदद्य त्वत्समासङ्गात्तेनैवासादितं मया ॥ १२ ॥
अनन्तमाद्यममृतमेतत्कमललोचन ।
कथं नासादितमभूतपूर्वमात्मपदं मया ॥ १३ ॥

कुम्भ उवाच ॥

मनस्युपशमं याते त्यक्तभोगैषणे स्थिते ।
कषायपाके निर्वृत्ते सर्वेन्द्रियगणस्य च ॥ १४ ॥

इव टङ्कादिभिः शिलातले उत्कीर्य निर्मित इव ॥ ६ ॥ ७ ॥ कच्चिदिति ॥ निर्विकल्पानां समाधिभाजाम् सुतल्पे विश्रान्तिस्थाने ॥ ८ ॥ ॥९॥ भगवन्निति ॥ महाविभवभूषिता महाविभवा अणिमादयः । महतीपदवी जीवन्मुक्तमार्गः ॥ ४१० ॥ ११ ॥ १२ ॥ १३ ॥ मनसीति श्लोकत्रयं वाक्यम् ॥ त्यक्तभोगैषणे त्यक्तविषयाभिलाषे

यान्ति चेतसि विश्रान्तिं विमला देशिकोक्तयः।
यथा सितांशुके शुद्धे विन्दवः कुसुमाम्भसः ॥ १५ ॥
देहान्मलानि सर्वाणि कालेन कमलेक्षण।
साधो वृक्षात्फलानीव पाकेन विगलन्त्यधः ॥ १६ ॥
द्वित्वैकत्वदृशौ चित्तं तदेवाज्ञानमुच्यते।
एतयोर्यो लयो दृष्ट्योस्तज्ज्ञानं सा परा गतिः ॥ १७ ॥
प्रबुद्धोऽसि विमुक्तोऽसि त्यक्तं चित्तं त्वया नृप।
महोदयो मुनिर्मौनी स्वरूपे तिष्ठ निर्मलः ॥ १८ ॥
शिखिध्वज उवाच ॥
प्रबुद्धस्य न तज्ज्ञस्य चित्तं नाम किल प्रभो।
जीवन्मुक्तास्तदेते हि विहरन्ति कथं वद ॥ १९ ॥
कुम्भ उवाच ॥
पुनर्जननयोग्या या वासना घनवासना।
सा प्रोक्ता चित्तशब्देन न सा तज्ज्ञस्य विद्यते ॥ ४२० ॥
यया वासनया तज्ज्ञा विहरन्तीह कर्मसु।
तां त्वं सत्त्वाभिधां विद्धि पुनर्जननवर्जिताम् ॥ २१ ॥

कषायपाके अन्तःकरणपाके सर्वेन्द्रियगणस्य च पाके ॥ १४ ॥ आनुकूल्ये निवृत्ते निष्पन्ने। कुसुमाम्भसः कुसुम्भकुसुमादिरसस्य ॥ १५ ॥ कालेन यः पाकः तेन वृक्षात्फलानीव देहात्सर्वाणि मलानि विगलन्ति ॥ १६ ॥ द्वित्वेति ॥ द्वित्वैकत्वदृशौ द्वित्वैकत्वविषये दृष्टी तदेव चित्तं तदेवाज्ञानम् एतयोर्दृष्ट्योर्यो लयः तदेव ज्ञानम् सैव परा गतिः कैवल्यम् ॥ १७ ॥ १८ ॥ १९ ॥ पुनरिति ॥ पूर्वोक्ता मलिना वासनैव चित्तम्। सा तु तज्ज्ञस्य नास्तीत्यर्थः ॥ ४२० ॥ ययेति ॥ तज्ज्ञस्य व्यवहारहेतुः शुद्धवासना सत्त्वमभिधीयते न

मूढं चित्तं चित्तमाहुः प्रबुद्धं सत्त्वमुच्यते ।
अप्रबुद्धा हि चित्तस्थाः सत्त्वस्थाः सुमहाधियः ॥ २२ ॥
स्वर्गमोक्षादिफलदं यत्किंचित्सर्वमेव तत् ।
त्यक्त्वा समस्तमाभासो योऽस्यसावेव वै भवान् ॥ २३ ॥
पदार्थौघमगृह्णानस्तिष्ठास्पन्दितचित्तभूः ।
अपरिस्पन्दचित्तस्य संसृतिर्नेह धावति ॥ २४ ॥
यानि यानीह दुःखानि प्रस्फुरन्ति जगत्त्रये ।
चेतश्चापलजान्येव तानि तानि महीपते ॥ २५ ॥
अथ चेतसि तत्त्वज्ञ स्पन्दास्पन्दौ त्वमेकताम् ।
नीत्वा तिष्ठ यथाकाममैक्यमागत्य शाश्वतम् ॥ २६ ॥

शिखिध्वज उवाच ॥

कथमैक्यं विभो यातः स्पन्दास्पन्दाविमावुभौ ।
सर्वसंशयविच्छेदकारणं तद्वदाशु मे ॥ २७ ॥

कुम्भ उवाच ॥

एकं वस्तु जगत्सर्वं चिन्मात्रं वारिवाम्बुधिः ।
तदेव स्पन्दते धीभिः शुद्धवारीव वीचिभिः ॥ २८ ॥

चित्तमिति ॥ २१ ॥ तदेवाह—मूढं मलिनवासनानुविद्धम् । प्रबुद्धं शुद्धवासनम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ अथेति ॥ स्पन्दः चित्तस्य बहिः प्रसरः अस्पन्दः समाधिः तावेकतां नीत्वा सर्वदा स्वरूपानुसंधानेन विक्षेपाविक्षेपावभेदं नीत्वा शाश्वतं नित्यमैक्यं ब्रह्माद्वैतमागत्य यथाकामं तिष्ठ ॥ २६ ॥ कथमिति ॥ यात इति लटि द्विवचनम् । विभो कुम्भ ॥ २७ ॥ एकमिति ॥ सर्वं जगच्चिन्मात्रमेकं वस्तु यथाम्बुधिः सर्वो वार्मात्रं तद्वत् तदेव चिन्मात्रं वस्तु वीचिभिः

ब्रह्म चिन्मात्रममलं सत्यमित्यादिनामकम् ।
यद्गीतं तदिदं मूढाः पश्यन्त्यङ्ग जगत्तया ॥ २९ ॥
सर्गचित्स्पन्दमात्रात्मा सम्यग्दृष्टौ विलीयते ।
उदेत्यसम्यग्दृष्ट्या तु रज्ज्वां सर्पभ्रमो यथा ॥ ४३० ॥
शास्त्रसज्जनसंपत्तिसंतताभ्यासयोगतः ।
कालेनामलतां याते चेतसीन्दाविवोदिते ॥ ३१ ॥
एतत्केवलमाभासं स्वानुभूतिमयं ततम् ।
उदेत्यन्तर्महाबुद्धे स्वयमेव महात्मनाम् ॥ ३२ ॥
इति ते कथितं सर्वं शिखिध्वज महीपते ।
यथेदमुत्थितं सर्वं यथा च प्रविलीयते ॥ ३३ ॥
एतत्कृत्वा च मत्वा च बुद्ध्वा च मुनिनायक ।
यथेच्छसि तथा तिष्ठ दृष्टस्पष्टपदे पदे ॥ ३४ ॥
स्वर्गं गच्छाम्यहं पर्वकालेऽस्मिन्नारदो मुनिः ।
ब्रह्मलोकात्समायातो भवत्यमरसंसदम् ॥ ३५ ॥

शुद्धवारीव धीभिर्बुद्धिवृत्तिभिः स्पन्दते ॥ २८ ॥ ब्रह्मेति ॥ ब्रह्मैव मूढजगत्तया पश्यन्तीत्यर्थः ॥ २९ ॥ सर्ग इति ॥ चित्स्पन्दमात्रमेष सर्गः । स च सम्यग्दृष्टौ अधिष्ठानयाथात्म्यज्ञाने विलीयते । असम्यग्दृष्ट्या तु रज्ज्वां सर्पभ्रम इवोदेति ॥ ४३० ॥ शास्त्रेति श्लोकद्वयं वाक्यम् ॥ स्वानुभूतिमयं स्वप्रकाशम् ॥ ३१ ॥ ३२ ॥ इतीति श्लोकद्वयं वाक्यम् ॥ एतत्कृत्वा चेतसि कृत्वा मत्वा युक्तिभिरनुसंधाय बुद्ध्वा तत्त्वतोऽवगम्य दृष्टस्पष्टपदे दृष्टस्फुटस्वरूपे पदे जीवन्मुक्तिपदे यथेच्छसि तथा तिष्ठेत्यन्वयः ॥ ३३ ॥ ३४ ॥ स्वर्गमिति

न मां पश्यति चेत्तत्र स कोपमुपगच्छति ।
नोद्वेजनीया भव्येन गुरवो हि कदाचन ॥ ३६ ॥
त्यक्तसंकल्पलेखेन न किंचिदभिवाञ्छता ।
त्वया सदैव वस्तव्यं दृष्टिरेषा हि पावनी ॥ ३७ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा भगवान्कुम्भः क्षणादन्तर्धिमाययौ ।
गते कुम्भे महीपालः परं विस्मयमाययौ ॥ ३८ ॥

शिखिध्वज उवाच ॥

अहो नु शीतला शुद्धा शान्तेयं पदवी निजा ।
रसायनोद्भवाकारा सत्त्वं शान्तयतीव मे ॥ ३९ ॥

वसिष्ठ उवाच ॥

एवं संचिन्तयन्राजा नूनं निर्वासनाशयः ।
शैलादिव समुत्कीर्णो मौनमेवाव्रतस्थिवान् ॥ ४४० ॥
तस्मिन्नेव ततो मौने निःसंकल्पे निराश्रये ।
प्रतिष्ठां निश्चलां प्राप्य स तस्थौ गिरिशृङ्गवत् ॥ ४१ ॥
निर्विकल्पसमाधानात्काष्ठकुड्योपमस्थितिः ।
एवं शिखिध्वजो राजा चूडालामधुना शृणु ॥ ४२ ॥
शिखिध्वजं तं भर्तारं कुम्भवेषेण तेन सा ।
प्रबोध्यान्तर्धिमागत्य ततार तरसा नभः ॥ ४३ ॥

श्लोकत्रयं वाक्यम् ॥ अमरसंसदं देवसभाम् ॥ ३५ ॥ तत्र देवसभायाम् । नोद्वेजनीयाः विक्षेपं न प्रापणीयाः ॥ ३६ ॥ त्वया न किंचिदभिवाञ्छता सदैव त्यक्तसंकल्पलेखेन स्थातव्यम् । लेखा राजिः समूहः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

विदग्धमुग्धमाकारं स्त्रैणं जग्राह सुन्दरम् ।
स्वपत्तनमथो गत्वा विवेशान्तःपुरं क्षणात् ॥ ४४ ॥
दृश्या बभूव लोकस्य नृपकर्म चकार च ।
वत्सरत्रितयेनाथ पुनरम्बरमेत्य सा ॥ ४५ ॥
बभूव कुम्भो योगेन शिखिध्वजवनं ययौ ।
ततस्तत्रैव तं भूपमपश्यद्वनभूमिगम् ॥ ४६ ॥
निर्विकल्पसमाधिस्थं तत्रापश्यन्महीपतिम् ।
राजानं तावदेतस्माद्बोधयामि परात्पदात् ॥ ४७ ॥
इति संचिन्त्य चूडाला सिंहनादं चकार सा ।
भूयोभूयः प्रभोरग्रे वनेचरभयप्रदम् ॥ ४८ ॥
न चचाल शिलेवाद्रौ यदा नादेन तेन सः ।
भूयोभूयः कृतेनापि तदा सा तं व्यचालयत् ॥ ४९ ॥
चालितः पातितोऽप्येष यदा न बुबुधे नृपः ।
सा तदा चिन्तयामास चूडाला कुम्भरूपिणी ॥ ४५० ॥
अहोऽप्युपरतः साधुः स्वपदे भगवानयम् ।
आलोकयामि वै तावदेनं देहं महीपतेः ॥ ५१ ॥
यद्यस्य सत्त्वशेषोऽस्ति बोधबीजं हृदन्तरम् ।
तदाहमपि जीवामि प्रभोर्दाम्पत्यसिद्धये ॥ ५२ ॥
अन्यथा त्वङ्गनादेहमिमं त्यक्त्वा परं पदम् ।
अपुनर्जननायैव गच्छामीह हि किं मम ॥ ५३ ॥

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ सा चूडाला ॥ ४९ ॥ ॥ ४५० ॥ अहो इति श्लोकचतुष्टयं वाक्यम् । देहमालोकयामि जीवितशेषवद्भवति नवेति विचारयामीत्यर्थः । सत्त्वशेषो जीवित-

वसिष्ठ उवाच ॥

इति संचिन्त्य चूडाला स्पर्शेन नयनेन च ।
पतिमालोक्य साशङ्कमुवाच वरवर्णिनी ॥ ५४ ॥
अस्त्येव सत्त्वशेषोऽस्य हृदि संबोधकारणम् ।
संबोधहेतूदयने सत्त्वशेषं व्यबुध्यत ॥ ५५ ॥

राम उवाच ॥

भृशं प्रशान्तचित्तस्य काष्ठलोष्टसमस्थितेः ।
सत्त्वशेषः कथं ब्रह्मञ्ज्ञायते ध्यानशालिनः ॥ ५६ ॥

वसिष्ठ उवाच ॥

प्रबोधकारणं ज्ञस्य दुर्लक्ष्याणुवपुर्हृदि ।
विद्यते सत्त्वशेषोऽन्तर्बीजे पुष्पफलं यथा ॥ ५७ ॥
चित्तस्पन्दविमुक्तस्य तस्याचलसमस्थितेः ।
कायः समसमाभोगो न ग्लायति न हृष्यति ॥ ५८ ॥
नास्तमेति न चोदेति सममेवावतिष्ठते ।
पृष्टं ते कथितं राम सांप्रतं प्रकृतं शृणु ॥ ५९ ॥

शेषः ॥ ५१ ॥ ५२ ॥ ५३ ॥ स्पर्शेन प्राणसंचारसूचकेन शरीरगतसर्वमर्मस्थानसंस्पर्शेन । नयनेन च जीवितसूचकेनागलितगोलकेन । रक्तरेखायुक्तेन नेत्रद्वयेन च सत्त्वशेषं व्यबुध्यतेत्यन्वयः ॥ ५४ ॥ ५५ ॥ ५६ ॥ प्रबोधेति श्लोकत्रयं वाक्यम् ॥ ज्ञस्य समाधिस्थस्य दुर्लक्ष्याणुवपुर्हृदि दुर्दर्शसूक्ष्मरूपे हृदि अन्तःसत्त्वशेषो बीजे पुष्पफलमिव विद्यते ॥ ५७ ॥ चित्तस्पन्दविमुक्तस्य अचलसमस्थितेस्तस्य कायः समसमाभोगत्वात् न ग्लायति न हृष्यति ॥ ५८ ॥ नास्तमेति न चोदेति किंतु साम्येन तिष्ठति ।

इति निर्णीय चूडाला स्वदेहं तं तथा स्थितम् ।
संत्यज्य प्राप चित्तत्त्वे स्थितिमाद्यन्तवर्जिते ॥ ४६० ॥
तत्र सा चेतसः स्पन्दं कृत्वा सत्त्ववतः प्रभोः ।
स्वं विवेश पुनर्देहं खान्नीडमिव पक्षिणी ॥ ६१ ॥
कुम्भाकृतिरथोत्थाय प्रविष्टा निजविष्टरे ।
साम गातुं प्रवृत्ता सा भ्रमरीवृन्दनिःस्वना ॥ ६२ ॥
तं सामस्वनमाकर्ण्य चित्सत्त्वगुणशालिनी ।
बुबुधे भूपतेर्देहे वसन्त इव पद्मिनी ॥ ६३ ॥
दृशं विकासयामास तां तदार्क इवाब्जिनीम् ।
अपश्यत्कुम्भमग्रस्थं स्वस्थचेताः शिखिध्वजः ॥ ६४ ॥
अहो वत वयं धन्याः पुनः प्राप्तो मुनीश्वरः ।
इत्येवोदाहरन्राजा कुम्भाय कुसुमं ददौ ॥ ६५ ॥
दिष्ट्या दृष्टोऽसि भगवन्नागतोऽसि पुनर्वनम् ।
अस्मत्पवित्रीकरणं तवागमनकारणम् ॥ ६६ ॥

कुम्भ उवाच ॥

यतःप्रभृति यातोऽस्मि त्वत्सकाशादनिन्दितम् ।
ततःप्रभृति चेतो मे त्वय्येवेह समं स्थितम् ॥ ६७ ॥

पृष्टमेवं कथितम्। सांप्रतं प्रकृतं शृण्वित्यन्वयः ॥ ५९ ॥ इतीति श्लोकद्वयं वाक्यम् ॥ चूडाला इति सत्त्वशेषस्य सत्तां निर्णीय परकायप्रवेशप्रवीणतया स्वदेहं संत्यज्य चित्तत्त्वे स्थितिमाप। तत्र च स्वपरसाधारणे चित्तत्त्वे स्थिता सती प्रभोः शिखिध्वजस्य चेतसः स्पन्दं कृत्वा नीडं पक्षिणीव स्वं देहं पुनर्विवेश ॥ ४६० ॥ ६१ ॥ ६२ ॥ तमिति ॥ भूपतेश्चिच्चेतना बुबुधे ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

न रमे स्वर्गलीलासु निवत्स्यामि समं त्वया ।
त्वादृशो बन्धुराप्तश्च सुहृन्मित्रं तथा सखा ॥
विश्वास्यो वापि शिष्यश्च मन्ये जगति नास्ति मे ॥ ६८ ॥

शिखिध्वज उवाच ॥

अहो नु फलितं पुण्यपादपैर्नश्चिरार्जितैः ।
यस्माद्भवानसङ्गोऽपि वाञ्छत्यस्मत्समागमम् ॥ ६९ ॥
भवद्वितीर्णया योगयुक्त्या विश्रान्तवानहम् ।
यथा साधो तथा मन्ये स्वर्गे विश्रमणं कुतः ॥ ४७० ॥
तामेवं स्वां स्थितिं स्वच्छामवलम्ब्य प्रकाशिनीम् ।
विहरेयं यथाकामं स्वर्गे भूमितले तथा ॥ ७१ ॥

कुम्भ उवाच ॥

परे पदे महानन्दे कच्चिद्विश्रान्तवानसि ।
इदं भेदमयं दुःखं कच्चित्संत्यक्तवानसि ॥ ७२ ॥
कच्चिदापातरम्येभ्यः संकल्पेभ्यो रतिर्भृशम् ।
निर्मूलतां गता राजन् तव तत्त्वार्थदर्शिनः ॥ ७३ ॥
हेयादेयदशातीतं शान्तं सममवस्थितम् ।
यथाप्राप्तेष्वनुद्वेगं कच्चित्तव मनः स्थितम् ॥ ७४ ॥

शिखिध्वज उवाच ॥

त्वत्प्रसादेन भगवन्दृष्टा दृश्यातिगा गतिः ।
प्राप्तः संसारसीमान्तो लब्धो लब्धव्यनिश्चयः ॥ ७५ ॥
नोपदेष्टव्यमस्माकं किंचिदप्युपयुज्यते ।
सर्वत्रैवातितृप्ताः स्मः स्थिताः स्मो विगतज्वराः ॥ ७६ ॥

॥ ६७ ॥ ६८ ॥ ६९ ॥ ४७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥

निःसंसृतिर्विगतमोहभयो विरागो
नित्योदितः शमसमाशयसर्वसौम्यः ।
सर्वात्मकः सकलसंकलनाविमुक्त
आकाशकोशविशदः सममागतोऽस्मि ॥ ७७ ॥

वसिष्ठ उवाच ॥

इत्यध्यात्मविचित्राभिः कथाभिस्तौ परस्परम् ।
आसातां वेद्यवेत्तारौ चरन्तौ विपिने ततः ॥ ७८ ॥
वनान्यनेकरूपाणि जङ्गलानि तटानि च ।
सरांसि गुल्मजालानि मृगादिगहनानि च ॥ ७९ ॥
सममेव समस्नेहौ समेतौ तौ स्थितावुभौ ।
समसत्त्वौ समोत्साहौ चरन्तौ तस्थतुः सह ॥ ४८० ॥
आनर्चतुः पितॄन्देवान्बुभुजाते च राघव ।
इदं ग्राह्यमिदं नेति विकल्पकलनां मनः ॥ ८१ ॥
नाजहार तयो राम वात्येव विबुधाचलम् ।
विचेरतुस्तौ सुहृदौ क्वचिद्धूलिविधूसरौ ॥ ८२ ॥
क्वचिच्चन्दनदिग्धाङ्गौ क्वचिद्भस्मानुरञ्जितौ ।
दिनैः कतिपयैरेवं समचित्ततया तया ॥ ८३ ॥
सत्त्वोदारतया चैव राजा कुम्भवदाबभौ ।
अथ तं सुरगर्भाभं चूडाला सा शिखिध्वजम् ॥ ८४ ॥

॥ ७५ ॥ ७६ ॥ निःसंसृतिरिति ॥ शमसमाशयसर्वसौम्यः शमसमेन शमप्रकारेण आशयेनाभिप्रायेण सर्वत्र सौम्यो हर्षविषादरहितः सकलसंकलनाविमुक्तः संकलनाः कलत्रपुत्रादिममतापाशाः । सममागतोऽस्मि समं सर्वगतं ब्रह्म तत्प्राप्तोऽस्मीत्यर्थः ॥ ७७ ॥
॥ ७८ ॥ ७९ ॥ ४८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

दृष्ट्वा शोभामुपगतं चिन्तयामास भामिनी ॥ ८५ ॥
निजः पतिरुदारात्मा निराधिश्च नवं वयः ।
गृहाणि पुष्पजालानि सा हता या न कामिनी ॥ ८६ ॥
समुज्झता यथाप्राप्तमपि वेद्यविदा सदा ।
अनिन्द्यं समुदारार्थं किंतु ज्ञेन कृतं भवेत् ॥ ८७ ॥
तत्किंचिद्रचयाम्याशु प्रपञ्चं प्रज्ञया नवम् ।
येनायं भूपतिर्भर्ता रमेत मयि मानदः ॥ ८८ ॥
इति संचिन्त्य चूडाला कुम्भवेषधरा पतिम् ।
प्राह काननमध्यस्था कोकिलं कोकिला यथा ॥ ८९ ॥

कुम्भ उवाच ॥

चैत्रमासस्य शुक्लोऽयं प्रतिपद्दिवसो महान् ।

निज इति श्लोकचतुष्टयं वाक्यम् ॥ निजः पतिः स च उदारात्मा उदारचित्तो निराधिर्निश्चिन्त उभयोर्नवं वयः पुष्पजालानि पुष्पलतासमूहा एव गृहाणि एवंविधे सुखसाधनसंदेहे सत्यपि या कामिनी भोगेच्छावती न भवति सा हता अनिषिद्धसुखत्यागात् ॥ ८६ ॥ समुज्झतेति ॥ यथाप्राप्तमपि अनिन्द्यं स्वमात्मीयं उदारार्थं महत्सुखं समुज्झता त्यजता वेद्यविदा वेद्यं ब्रह्म प्राप्तवता ज्ञेन किंतु कृतं भवेत् किंवा प्रयोजनं साधितं स्यात्। न किंचिदित्यर्थः । न्याय्यसुखत्यागी व्यर्थ एव स्यात् इति पूर्वोक्त एवार्थः ॥ ८७ ॥ तदिति ॥ तत्तस्मात्कारणात्प्रज्ञया स्वप्रज्ञया विशेषेण नवं प्रपञ्चं किंचिद्रचयामि कल्पयामि । येन कल्पितप्रपञ्चहेतुना अयं भर्ता मयि रमेत ॥ ८८ ॥ इति संचिन्त्य चूडाला पतिं प्राहेत्यन्वयः ॥ ८९ ॥ चैत्रेति श्लोकपञ्चकं वाक्यम् ॥ ४९० ॥ ९१ ॥ ध्यानपुष्पाभ्यां

अद्यास्थानं महारम्भं स्वर्गे भवति वै हरेः ॥ ४९० ॥
संनिधानं मया तत्र कर्तव्यं पितुरग्रतः ।
यथास्थिता हि नियतिर्न संत्याज्या कदाचन ॥ ९१ ॥
प्रतिपालयितव्यं तत्त्वयेह चरतावनौ ।
क्रीडता ध्यानपुष्पाभ्यां समुद्वेगमगच्छता ॥ ९२ ॥
आगच्छामि दिनान्तेऽद्य निर्विकल्पं नभःस्थलात् ।
स्वर्गादतितरामेव त्वत्सङ्गो मम तुष्टये ॥ ९३ ॥
इत्युक्त्वा मञ्जरीं कुम्भो ददौ मित्राय कौसुमीम् ।
प्रीतये स्वामिवत्प्रीतिं कान्तां नन्दनवृक्षजाम् ॥ ९४ ॥
आगन्तव्यं त्वया शीघ्रमेवं वदति भूपतौ ।
पुप्लुवे तरसा व्योम शरन्मुखपयोदवत् ॥ ९५ ॥
शिखिध्वजदृशामन्ते व्योम्नि कुम्भवपुर्जहौ ।
शान्तावर्तेव वारिश्रीर्मुग्धा स्वं रूपमाययौ ॥ ९६ ॥
प्राप्य मञ्जरिताकारं कल्पवृक्षोपमं पुरम् ।
अन्तःपुरमदृश्येव विवेश ललनाकुलम् ॥ ९७ ॥

समाधौ ध्यानेन असमाधौ पुष्पेण च क्रीडता । पुष्पशब्दो जातिवाची अतो द्विवचनम् ॥ ९२ ॥ ९३ ॥ ९४ ॥ शरन्मुखपयोदवत् यथा शरदादौ पयोदो मेघः तरसा व्योम प्लवते लघुत्वात्तद्वदित्यर्थः ॥ ९५ ॥ शिखिध्वजेति ॥ दृशो नयनरश्मयः शान्तावर्तेव वारिश्रीर्यथा वारिसमृद्धिः आवर्तशान्तौ स्वरूपमादत्ते तद्वत् ॥ ९६ ॥ प्राप्येति ॥ मञ्जरिताकारं मञ्जर्यः कृता मञ्जरिताः तादृशा आकाराः प्रासादादिसन्निवेशा यस्मिन्नत एव कल्पवृक्षोपमम् ॥ ९७ ॥ ९८ ॥

राजकार्याण्यशेषाणि तत्र संपाद्य सत्वरम् ।
शिखिध्वजस्य पुरतः कुम्भरूपधरापतत् ॥ ९८ ॥
तत्र म्लानद्युति मुखं चकाराखिन्नमानसा ।
इन्दुं सनीहारमिव श्यामा खिन्नमिवाम्बुजम् ॥ ९९ ॥
तं दृष्ट्वा तादृशाकारं समुत्तस्थौ शिखिध्वजः ।
बभूव खिन्नचेताश्च समुवाचेदमादरात् ॥ ५०० ॥
देवपुत्र नमस्तेऽस्तु विमना इव लक्ष्यसे ।
कुम्भ संत्यज्य संरम्भमिदमासनमास्यताम् ॥ १ ॥
सन्तो विदितवेद्या ये ते हि हर्षविषादजाम् ।
नाश्रयन्ति स्थितिं स्वस्थाः पद्मा इव जलार्द्रताम् ॥ २ ॥

वसिष्ठ उवाच ॥

तेन क्ष्मापतिनेत्युक्ते कुम्भ आहासने विशन् ।
गिरा विषण्णया शीर्णवंशस्वनसमानया ॥ ३ ॥

कुम्भ उवाच ॥

यावद्देहमवस्थासु समचित्ततयैव ये ।
कर्मेन्द्रियैर्न तिष्ठन्ति न ते तत्त्वविदः शठाः ॥ ४ ॥

तत्रेति ॥ तत्र शिखिध्वजस्य पुरोभागे च चूडाला अखिन्नमानसैव कलनयाशु मुखं म्लानद्युति चकार। श्यामा रात्रिः सा यथा इन्दुं सनीहारं करोति। अम्बुजं वा खिन्नं मुकुलितं करोति तद्वत् ॥ ९९ ॥ ॥ ५०० ॥ १ ॥ सन्त इति ॥ पद्मा जलार्द्रतां यथा हि पद्माः कमलानि जले वसन्तोऽपि तज्जन्यामार्द्रतां नाश्रयन्ति तद्वत् ॥ २ ॥ ॥ ३ ॥ यावदिति ॥ अवस्थासु सुखदुःखदशासु ये यावद्देहं समचित्ततयैव निर्विकारचित्ततयैव कर्मेन्द्रियैर्न तिष्ठन्ति ते तत्त्वविदो न

ये ह्यतत्त्वविदो मूढा राजन्बालतयैव ते ।
अवस्थाभ्यः पलायन्ते गृहीताभ्यः स्वभावतः ॥ ५ ॥
यावत्तिलं यथा तैलं यावद्देहं तथा दशा ।
यो न देहदशामेति स च्छिनत्त्यसिनाम्बरम् ॥ ६ ॥
एष देहदशादुःखपरित्यागो ह्यनुत्तमः ।
यत्साम्यं चेतसो योगान्न तु कर्मेन्द्रियस्थितेः ॥ ७ ॥
यावद्देहं यथाचारं दशास्वङ्ग विजानता ।
कर्मेन्द्रियैर्हि स्थातव्यं न तु बुद्धीन्द्रियैः क्वचित् ॥ ८ ॥
परमेष्ठीप्रभृतयः सर्वे एवोदिताशयाः ।
देहावस्थासु तिष्ठन्ति नियतेरेष निश्चयः ॥ ९ ॥

भवन्ति किंतु ते शठा वञ्चका एव ॥ ४ ॥ ये पुनरतत्त्वविदो मूढाः सन्ति ते बालतयैव हेतुना स्वभावतो गृहीताभ्योऽवस्थाभ्यः सुखदुःखदशाभ्यः पलायन्ते। अवस्थाभिर्विकारं नीयन्त इत्यर्थः ॥ ५ ॥ यावदिति ॥ तिलेषु सकलेषु तैलमिव देहेष्वपि सर्वेषु सुखदुःखदशास्त्येव। अतो यो देहदशां नैति तावाप्नोति सः असिना अम्बरं छिनत्ति । अम्बरछेदकवद्देहदशारहितोऽपि नास्तीत्यर्थः ॥ ६ ॥ एष इति ॥ योगात्समाधेर्हेतोश्चेतसो यत्साम्यं निर्विकारता एष एवानुत्तमो देहदशादुःखपरित्यागः। कर्मेन्द्रियस्थितेः साम्ये तु देहदशादुःखपरित्याग इति नोच्यते ज्ञानिनामपि तदसंभवात् ॥ ७ ॥ यावदिति ॥ तस्माद्विजानता पुरुषेण यावद्देहं देहदशासु यथाचारं स्ववर्णाश्रमोचिताचारानुसारेण कर्मेन्द्रियैरेव सह स्थातव्यं न तु बुद्धीन्द्रियैः बुद्धीन्द्रियप्रवृत्तेर्बुद्धिपूर्वकत्वात्। निवृत्तौ निवृत्तेः कर्मेन्द्रियाणां त्वबुद्धिपूर्वमपि प्रवृत्तेः बुद्धिनिवृत्तौ निवृत्त्यसंभवात् ॥ ८ ॥ पर-

अज्ञतत्त्वज्ञभूतानि दृश्यजातमिदं हि यत् ।
तत्सर्वमेव नियतिं धावत्यम्बु यथाम्बुधिम् ॥ ५१० ॥
तज्ज्ञा बुद्ध्यादिसाम्येन पाण्यादिचलनेन च ।
नियतिं यापयन्तीमां यावद्देहमखण्डिताम् ॥ ११ ॥
अज्ञास्तु सर्वक्षोभेण सुखदुःखदशाहताः ।
नियतिं यापयन्त्यङ्ग देहलक्षैर्विखण्डिताम् ॥ १२ ॥

शिखिध्वज उवाच ॥

एवं स्थिते महाभाग कथमुद्वेगमीदृशम् ।
लब्धवानसि देवोऽपि वद वेद्यविदां वर ॥ १३ ॥

कुम्भ उवाच ॥

कथयामि तवाशेषं स्वर्गे यद्वृत्तमद्य मे ।
सुहृद्यावेदितं दुःखं परमायाति तानवम् ॥ १४ ॥
अहं तावदितो यातो भवते पुष्पमञ्जरीम् ।
दत्त्वा गगनमुल्लङ्घ्य संप्राप्तश्च त्रिविष्टपम् ॥ १५ ॥
ततः पित्रा सहेन्द्रस्य सभास्थाने यथाक्रमम् ।

मेष्ठीति ॥ परमेष्ठीप्रभृतयो ब्रह्मादयः ॥ ९ ॥ अज्ञेति ॥ अज्ञतत्त्वज्ञभूतानि अज्ञाः तत्त्वज्ञाश्च प्राणिनः । तर्ह्यज्ञतत्त्वज्ञयोः को विशेष इत्याशङ्क्य श्लोकद्वयेन विशेषं दर्शयन्नाह ॥ ५१० ॥ तज्ज्ञा इति ॥ तज्ज्ञास्तावद्बुद्ध्यादिसाम्येन बुद्धीन्द्रियादिसाम्येन पाण्यादिचलनेन च कर्मेन्द्रियाणामायासेन च यावद्देहं यावद्देहपर्यन्तमेव नियतिमखण्डितां यापयन्ति ॥ ११ ॥ अज्ञास्तु सर्वेन्द्रियक्षोभेण सुखदुःखदशाहताः सन्तो देहलक्षैरनन्तैः देहैर्नियतिं विखण्डितां विविधं खण्डितां यापयन्तीति शेषः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

स्थित्वास्थाय तदोत्थानकाले पित्रा विसर्जितः ॥ १६ ॥
इहागन्तुमहं स्वर्गं त्यक्त्वा संप्राप्तवान्नभः ।
दिवाकरहयैः साकं वहाम्यनिलवर्त्मनि ॥ १७ ॥
अथैकत्र गतो भानुरेकेनान्येन वर्त्मना ।
आगच्छाम्यहमाकाशं सागरात्पतिताकृतिः ॥ १८ ॥
अथाग्रे वारिपूर्णानां मेघानां मध्यवर्त्मना ।
अपश्यन्मुनिमायान्तमहं दुर्वाससं जवात् ॥ १९ ॥
कृत्वा तस्य नमस्कारमुक्तं खे वहता मया ।
मुने लीलाभ्रवस्त्रस्त्वमभिसारिकया समः ॥ ५२० ॥
इत्याकर्ण्य मुमोचासौ मयि मानद शापकम् ।
स्तनकेशवती कान्ता हावभावविकारिणी ॥ २१ ॥
गच्छानेन दुरुक्तेन रात्रौ योषा भविष्यसि ।
इति श्रुत्वा शुभं वाक्यमुत्थितं जर्जरद्विजात् ॥ २२ ॥
विमृशामि मनाग्यावत्तावदन्तर्हितो मुनिः ।
इत्युद्विग्नमनाः साधो प्राप्तोऽहं नभसस्तलात् ॥ २३ ॥
अतिवाह्यं दिनान्तेषु स्त्रीत्वमेकं मया कथम् ।
गुरुदेवद्विजातीनां लज्जापरवशात्मना ॥ २४ ॥
कथमग्रे मया सम्यग्वस्तव्यं यामिनीस्त्रिया ॥ २५ ॥

शिखिध्वज उवाच ॥

परिदेवनया कार्यं देवपुत्र न विद्यते ।
यदायाति तदायातु देहस्यात्मा न लिप्यते ॥ २६ ॥
यदि त्वमत्र विद्वान्सन्नखेदार्होऽपि खिद्यसे ।
तदान्येषामुपायः स्यात्क इवागमभूषण ॥ २७ ॥

॥ १७ ॥ १८ ॥ १९ ॥ ५२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

वसिष्ठ उवाच ॥

तावेवमादिभिर्वाक्यैरन्योन्याश्वासनं स्वयम् ।
कृत्वा स्थितौ वने स्निग्धौ सुहृदौ खेदिनौ यथा ॥ २८ ॥
अथार्कोऽप्यस्य कुम्भस्य स्त्रीत्वमुत्पादयन्निव ।
जगामास्तं जगद्दीपो दीपः स्नेहक्षयादिव ॥ २९ ॥
सुहृदौ तावदुत्थाय संध्यामुद्यन्निशाकरम् ।
वन्दयित्वा तथा कृत्वा जप्यं गुल्मान्तरे स्थितौ ॥ ५३० ॥
ततः कुम्भः शनैस्तत्र स्त्रैणमभ्याहरद्वपुः ।
शिखिध्वजं पुरःसंस्थं प्रोवाच गलदक्षरम् ॥ ३१ ॥
पतामीव स्फुरामीव द्रवामीवाङ्गयष्टिभिः ।
लज्जयैव वने राजन्मध्ये स्त्रीत्वं व्रजाम्यहम् ॥ ३२ ॥
पश्येमे परिवर्धन्ते राजन्मम शिरोरुहाः ।
पश्येमौ मम जायेते प्रोन्मुखावुरसि स्तनौ ॥ ३३ ॥
आगुल्फमवलम्बानि संपद्यन्तेऽम्बराणि मे ।
संविदानुभवाम्येतं नितम्बजघने त्विमे ॥ ३४ ॥

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ५३० ॥ ३१ ॥ पतामीवेति ॥ लज्जयैव तावदङ्गयिष्टिभिः तनुतरैरङ्गैः पतामीव भूमाविति शेषः। स्फुरामीव द्रवामीव। वने बन्धुमित्रादिरहिते मध्ये नतु जन्मादौ स्त्रीत्वं व्रजामि॥ ३२ ॥ ३३ ॥ आगुल्फमिति॥ अम्बराणि बाह्यानि आभ्यन्तराणि चानेकानीति बहुवचनम् । इमे नितम्बजघने नितम्बः स्त्रीकट्याः पश्चाद्भागः जघनं । ते उभे अपि संविदा अन्तरनुभवामि । अत्र नितम्बस्य जघनस्य च मायाकल्पितत्वेन देहारम्भकत्वाभावात्प्राण्यङ्गत्वं नास्तीत्येकवद्भावो न कृत इत्यनुसंधेयम्

वसिष्ठ उवाच ॥

विपिने कुम्भ इत्युक्त्वा तूष्णीं खिन्नो बभूव ह ।
राजापि च तमालोक्य खिन्नचित्तोऽभ्युवाच ह ॥ ३५ ॥

शिखिध्वज उवाच ॥

साधो विदितवेद्यस्त्वं जानासि नियतेर्गतिम् ।
अवश्यभाविन्यर्थेऽस्मिन्मा खिन्नहृदयो भव ॥ ३६ ॥

कुम्भ उवाच ॥

एवमस्त्वनुतिष्ठामि नृपते स्त्रीत्वमात्मनः ।
न खेदमनुगच्छामि नियतिः केन लङ्घ्यते ॥ ३७ ॥
इति निर्णीय तौ खेदं तं नीत्वा तनुतामिव ।
एकतल्पे निशां तूष्णीं नीतवन्तौ चिरेण तौ ॥ ३८ ॥
अथ प्रभाते तत्स्त्रैणं वपुरुत्सृज्य यौवनम् ।
बभूव कुम्भः कुम्भाभः कुचप्रोज्झितमूर्तिमान् ॥ ३९ ॥
इति सा राजमहिषी चूडाला वरवर्णिनी ।
कुम्भत्वमाश्रिता भर्तुः पश्चात्स्त्रीत्वमुपागता ॥ ५४० ॥
विजहार वनान्तेषु कुमारीधर्मिणी निशि ।
कुम्भरूपधरा चाह्नि भर्त्रा मित्रेण संयुता ॥ ४१ ॥
ततः कतिपयेष्वेवं गतेषु दिवसेषु सा ।
इदं प्रोवाच भर्तारं कुम्भरूपधरा सती ॥ ४२ ॥
राजन्राजीवपत्राक्ष ममेदं वचनं शृणु ।
निशायां प्रत्यहं तावद्भवाम्येवाहमङ्गना ॥ ४३ ॥
तदिच्छाम्यङ्गनाधर्मं निपुणीकर्तुमीदृशम् ।
भर्त्रे कस्मैचिदात्मानं विवाहेन ददाम्यहम् ॥ ४४ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ५४० ॥ ४१ ॥

तद्भवानेव मे भर्ता रोचते भुवनत्रये ।
गृहाण मां विवाहेन भार्या ते निशि सर्वदा ॥ ४५ ॥

शिखिध्वज उवाच ॥

कृतेनानेन कार्येण न शुभं नाशुभं सखे ।
पश्यामि तन्महाबुद्धे यथेच्छसि तथा कुरु ॥ ४६ ॥

कुम्भ उवाच ॥

यद्येवं तन्महीपाल लग्नमद्यैव शोभनम् ।
राकेयं श्रावणस्यास्य ह्यः सर्वं गणितं मया ॥ ४७ ॥
रात्रावुद्द्योतिते चन्द्रे परिपूर्णकलामले ।
जन्यत्रो नौ महाबाहो द्वयोरेव भविष्यति ॥ ४८ ॥
उत्तिष्ठात्मविवाहार्थे कुर्वन्कमललोचन ।
राजंश्चन्दनपुष्पादिसंभारं रत्नसंयुतम् ॥ ४९ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा कुम्भ उत्थाय सह तेन महीभृता ।
कुसुमावचयं चक्रे तथा रत्नादिसंचयम् ॥ ५५० ॥
तथा जन्यत्रसंभारं कृत्वा काञ्चनकन्दरे ।
ययतुस्तौ महामित्रे स्नातुं मन्दाकिनीं नदीम् ॥ ५१ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ यद्येवमिति श्लोकचतुष्टयं वाक्यम् ॥ ४७ ॥ राका पूर्णचन्द्रयुक्त्या पूर्णिमायाः पूर्वस्मिन्नहनि । जन्यत्रो जन्या वरस्य स्निग्धाः संबन्धबान्धवास्तांस्त्रायते पालयति वाञ्छितार्थसाधनेनेति जन्यत्रशब्देन विवाह उच्यते। नौ आवयोरेव विवाहो भविष्यति ॥ ४८ ॥ ४९ ॥ ५५० ॥ तथेति ॥ जन्यत्रसंभारं विवाहोपयुक्तरत्नकुसुमादिद्रव्यसंभारम् । महामित्रे

पूजयामासतुः स्नातौ तत्र देवपितॄन्मुनीन् ।
यथा क्रियाफलेऽनिच्छौ क्रियात्यागे तथैव तौ ॥ ५२ ॥
कल्पवृक्षदुकूलानि परिधाय सितानि तौ ।
फलानि भुक्त्वा जन्यत्रस्थानमाययतुः क्रमात् ॥ ५३ ॥
एतावताथ कालेन रविरस्ताचलं ययौ ।
सांध्ये कर्मणि निर्वृत्ते वधूत्वं कुम्भ आययौ ॥ ५४ ॥
उवाचेदं च हे नाथ त्वं मां भूषय भूषणैः ।
क्रमेणाग्निं च संज्वाल्य मत्पाणिग्रहणं कुरु ॥ ५५ ॥
अहं मदनिका नाम भार्या ते पद्मलोचन ।
एवमुक्तो महीपालस्तत्सर्वं समवर्तयत् ॥ ५६ ॥
एवं महेन्द्रदर्यां तावुभौ कुम्भशिखिध्वजौ ।
स्वयं विवाहिताविष्टौ संपन्नौ स्निग्धदंपती ॥ ५७ ॥
विलेसतुर्विचित्रासु प्रत्यहं वनराजिषु ।
प्रपक्वफलभारासु पुष्पपल्लविनीषु च ॥ ५८ ॥
दिनैस्त्रिभिस्त्रिभिर्गत्वा निद्रां याते शिखिध्वजे ।
चूडाला राजकार्याणि कृत्वा स्वान्याययौ पुनः ॥ ५९ ॥
ततो यातेषु मासेषु शनैः कतिपयेषु सा ।
चूडाला चिन्तयामास देवपुत्रकरूपिणी ॥ ५६० ॥

अतिप्रियसखौ ॥ ५१ ॥ पूजयामासतुरिति ॥ यथा क्रियाफलेऽनिच्छौ क्रियायाः सत्कर्मणः फले यथा इच्छारहितौ तथा क्रियात्यागेऽप्यनिच्छौ तत्र वैराग्यात्क्रियाफलेनिच्छौ लोकसंग्रहार्थं क्रियात्यागे ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ते मदनस्य मदनतुल्यस्य ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ५६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

कुम्भ उवाच ॥

सांप्रतं भोगभारेण परीक्ष्येऽहं शिखिध्वजम् ।
मा कदाचन चेतोऽस्य भोगेषु रतिमेष्यति ॥ ६१ ॥

वसिष्ठ उवाच ॥

इति संचिन्त्य चूडाला सा ययौ विपिनावनौ ।
आगतं दर्शयामास ससुराप्सरसं हरिम् ॥ ६२ ॥
इन्द्रमभ्यागतं दृष्ट्वा परिवारसमन्वितम् ।
यथा च पूजयामास वनसंस्थः शिखिध्वजः ॥ ६३ ॥

शिखिध्वज उवाच ॥

आत्मनः किंकृता दूरादभ्यागमकदर्थना ।
देवराज यथावन्मे प्रसादाद्वक्तुमर्हसि ॥ ६४ ॥

इन्द्र उवाच ॥

इमे वयमिहानीतास्त्वद्गुणातिशयेन च ।
हृदि लग्नेन सूत्रेण खगा वनगता इव ॥ ६५ ॥
उत्तिष्ठ स्वर्गमागच्छ तत्र सर्वे त्वदुन्मुखाः ।
त्वद्गुणश्रवणाश्चर्याः स्थिता देवाङ्गनागणाः ॥ ६६ ॥
आकल्पं विविधा भोगास्त्वया विबुधसद्मनि ।
जीवन्मुक्तेन भोक्तव्यास्तेन त्वामहमागतः ॥ ६७ ॥

शिखिध्वज उवाच ॥

सर्वं स्वर्गसमाचारं वेद्मि देवाधिनायक ।
किंतु सर्वत्र मे स्वर्गो नियतो न तु कुत्रचित् ॥ ६८ ॥

शिखिध्वज उवाच—आत्मन इति ॥ आत्मनस्तव दूरात् अभ्यागमकदर्थना दूरादागमनप्रयासः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥

सर्वत्रैव तु तुष्यामि सर्वत्रैव रमे प्रभो ।
अवाञ्छनत्वान्मनसः सर्वत्रानन्दवानहम् ॥ ६९ ॥
नियतं कंचिदेकत्र स्थितं सर्गकमीदृशम् ।
शक्र गन्तुं न जानामि त्वदाज्ञां न करोम्यहम् ॥ ५७० ॥

वसिष्ठ उवाच ॥

एवमुक्ते क्षितिभृता सुरवृन्दमशेषतः ।
कल्याणं तेऽस्तु कुम्भेति वदन्तर्धिमाययौ ॥ ७१ ॥
तां मायां शममानीय चूडाला समचिन्तयत् ।
दिष्ट्या भोगेच्छया नायं ह्रियते वसुधाधिपः ॥ ७२ ॥
शान्तः समसमाभोग एवं शक्रसमागमे ।
असंभ्रममहेलं च कृतवान्व्यावहारिकम् ॥ ७३ ॥
भूय एव प्रपञ्चेन विमृशाम्येव सादरम् ।
रागद्वेषप्रधानेन केनचिद्बुद्धिहारिणा ॥ ७४ ॥
इति संचिन्त्य सा रात्राविन्दावभ्युदिते वने ।
संध्याजप्यपरे नद्यास्तीरसंस्थे शिखिध्वजे ॥ ७५ ॥
संजातकलना गेहं नीरन्ध्रा पुष्पगुच्छकैः ।
शुद्धान्तं वनदेवीनां प्रविश्य मदनान्विता ॥ ७६ ॥
तत्र संकल्पिते पुष्पशयने माल्यमालिना ।
कण्ठे संकल्पितं कान्तं स्वाङ्कमादाय संस्थिता ॥ ७७ ॥
आगत्यान्विष्य कुञ्जान्तः संध्यान्ते स शिखिध्वजः ।
मिथुनं तद्ददर्शाथ मिथः प्रहसिताननम् ।
तदालोक्याविकारेण चेतसालं तुतोष सः ॥ ७८ ॥

॥ ६८ ॥ ६९ ॥ ५७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

अहो स्थितौ सुखं खिङ्गावित्याह च शिखिध्वजः।
तिष्ठतोऽङ्ग यथाकामं सुखं खिङ्गौ यथासुखम् ॥ ७९ ॥
विघ्नं मा कुरुतं भीतावित्युक्त्वा निर्जगाम सः।
ततो मुहूर्तमात्रेण प्रपञ्चं तमुपेत्य सा ॥ ८० ॥
निर्ययौ दर्शयन्ती स्वं रतियुद्धाकुलं वपुः।
उपविष्टं ददर्शैनं नृपं हेमशिलातले ॥ ८१ ॥
समाधिसंस्थमेकान्ते मनाग्विकसितेक्षणम्।
तत्प्रदेशमुपागम्य लज्जावनमितानना ॥ ८२ ॥
तूष्णीमासीत्क्षणं खिन्ना म्लाना मदनिकाङ्गना।
क्षणाच्छिखिध्वजो ध्यानाद्विरतस्तामुवाच ह ॥ ८३ ॥
प्रसन्नो मधुरं वाक्यमिदमक्षुब्धया धिया।
तन्वि किं शीघ्रमेव त्वं विघ्नितानन्दमागता ॥ ८४ ॥
भूयस्तोषयितुं गच्छ कान्तं प्रणयवृत्तिभिः।
परस्परेप्सितस्नेहो दुर्लभो हि जगत्त्रये ॥ ८५ ॥

मदनिकोवाच ॥

एवमेष महाभाग स्त्रीस्वभावो हि चञ्चलः।
कामो ह्यष्टगुणः स्त्रीणां न कोपं कर्तुमर्हसि ॥ ८६ ॥
अबला स्त्री तथा बाला मूढाहमपराधिनी।
क्षन्तुमर्हसि नाथ त्वं क्षमावन्तो हि साधवः ॥ ८७ ॥

शिखिध्वज उवाच ॥

मन्युर्मम न बाले हि विद्यते ख इव द्रुमः।
केवलं साधुनिन्द्यत्वान्नेच्छामि त्वामहं वधूम् ॥ ८८ ॥

वसिष्ठ उवाच ॥

एवं समतया तत्र स्थिते तस्मिन्शिखिध्वजे ।
चूडाला चिन्तयामास तत्साम्येनोदिताशया ॥ ८९ ॥
अहो बत परं साम्यं भगवानयमागतः ।
नैनं हरन्ति भोगाशा न महत्योऽपि संपदः ॥ ९० ॥
आत्मवृत्तान्तमखिलं तदेनं स्मारयाम्यहम् ।
त्यक्त्वा मदनिकारूपं चूडालैव भवाम्यहम् ॥ ९१ ॥

वसिष्ठ उवाच ॥

इति संचिन्त्य चूडाला चूडालावपुराददे ।
तां ददर्शानवद्याङ्गीं पुरः प्रणयपेशलाम् ॥ ९२ ॥
अथ तां दयितां दृष्ट्वा विस्मयोत्फुल्ललोचनः ।
शिखिध्वज उवाचेदमाश्चर्याकुलया गिरा ॥ ९३ ॥
का त्वमुत्पलपत्राक्षि कुतः प्राप्तासि सुन्दरि ।
किमिहासि कियत्कालं किमर्थमिह तिष्ठसि ॥ ९४ ॥
अङ्गेन व्यवहारेण स्मितेनानुनयेन च ।
मम जायाविलासेन चूडालेवोपलक्ष्यसे ॥ ९५ ॥

चूडालोवाच ॥

एवमेव प्रभो विद्धि चूडालास्मि न संशयः ।
अकृत्रिमेण देहेन लब्धोऽस्यद्य मया स्वयम् ॥ ९६ ॥
कुम्भादिदेहनिर्माणैस्त्वां बोधयितुमेव मे ।
प्रपञ्चशतशाखात्वमिह यातो वनान्तरे ॥ ९७ ॥
बुद्ध्वाविदितवेद्यस्त्वं ध्यानेनैतदखण्डितम् ।

॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ५९० ॥ ९१ ॥
॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥

सर्वं पश्यसि तत्त्वज्ञ ध्यानेनाथावलोकय ॥ ९८ ॥

वसिष्ठ उवाच ॥

अथ चूडालयेत्युक्तो बध्वा परिकरं नृपः ।
आत्मोदन्तमशेषेण ध्यानेनालमवैक्षत ॥ ९९ ॥
आस्वराज्यपरित्यागाच्चूडालादर्शनावधि ।
सर्वमालोक्य भूपालो विरराम समाधितः ॥ ६०० ॥
विस्तार्य तरसा बाहू पुलकोज्ज्वलतां गतौ ।
आलिलिङ्ग चिरं कान्तां समाधिविरतो नृपः ॥ १ ॥
घनानन्दं क्षणं स्थित्वा तूष्णीं प्रणयपेशलम् ।
तामथाङ्के समारोप्य प्रोवाच स शिखिध्वजः ॥ २ ॥
एवं दुरुत्तरादस्मात्संसारकुहरादहम् ।
उत्तारितो यया युक्त्या सा हि केनोपमीयते ॥ ३ ॥
मोहादनादिगहनादनन्तविषमादपि ।
पतितव्यवसायिन्यस्तारयन्ति कुलाङ्गनाः ॥ ४ ॥
निरिच्छायाः प्रयातायाः पारं संसारवारिधेः ।
कथमस्योपकारस्य करिष्ये ते प्रतिक्रियाम् ॥ ५ ॥

चूडालोवाच ॥

देव शुष्कक्रियाजालपरे त्वय्याकुलात्मनि ।
भूयोभूयो भृशमहं त्वदर्थं दुःखिताभवम् ॥ ६ ॥
तेन त्वदवबोधान्मे स्वार्थ एवोपपादितः ।
मया तत्र कथं देवः करोति मम गौरवम् ॥ ७ ॥
तास्तुच्छतृष्णाकलनास्ताः संकल्पकुकल्पनाः ।
त्वयि नाद्यावलोक्यन्ते देव व्योम्नीव पर्वताः ॥ ८ ॥

॥ ९९ ॥ ६०० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

शिखिध्वज उवाच ॥

निरीहोऽस्मि निरंशोऽस्मि नभःस्वच्छोऽस्मि निःस्पृहः ।
शान्ताहमर्थरूपोऽस्मि चिरायाहमहं स्थितः ॥ ९ ॥
अकिंचिन्मात्रचिन्मात्रनिष्ठोऽस्मि स्वस्थ आस्थितः ।
न तुष्टोऽस्मि न खिन्नोऽस्मि नायमस्मि न चेतरत् ॥ ६१० ॥
तेजोबिम्बात्प्रयातेन भित्तावपतितेन च ।
क्षयातिशयमुक्तेन प्रकाशेनास्म्यहं समः ॥ ११ ॥
यदस्ति तत्तदेवास्मि वक्तुं शक्नोमि नैव तत् ।
तरङ्गतरलापाङ्गे गुरुस्त्वं मे नमोऽस्तु ते ॥ १२ ॥
प्रसादेन विशालाक्ष्यास्तीर्णोऽस्मि भवसागरात् ।
सर्वातीतः सर्वगश्च खमिवायमहं स्थितः ॥ १३ ॥

चूडालोवाच ॥

एवं स्थिते महासत्त्व प्राणेश हृदयप्रियम् ।
किमिदानीं प्रभो ब्रूहि रोचते ते महामते ॥ १४ ॥

निरीह इति ॥ शान्ताहमर्थरूपः शान्तः अहमर्थोऽहंकारो यस्मिन् रूपे तादृग्रूपोऽस्मि ॥ ९ ॥ अकिंचिदिति ॥ अकिंचिन्मात्रचिन्मात्रनिष्ठः अकिंचिन्मात्रं परिपूर्णं यच्चिन्मात्रं तन्निष्ठोऽस्मि ॥ ६१० ॥ तेजोबिम्बाच्चन्द्रमण्डलादेः प्रयातेन निर्गतेन भित्तौ कुड्यादावाश्रयान्तरे अपतितेन क्षयातिशयमुक्तेन नित्येन निरतिशयेन च प्रकाशेन समोऽस्मि ॥ ११ ॥ यदिति ॥ अस्मीत्येतदव्ययमहमित्यर्थे । तत्प्रसिद्धं यद्वस्त्वस्ति अहं तदेवास्मि तत्तद्वस्तु वक्तुं न शक्नोमि नामजात्याद्यभावात् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

शिखिध्वज उवाच ॥

प्रतिषेधं न जानामि न जानाम्यभिवाञ्छितम् ।
यदाचरसि तन्वि त्वं कदाचिद्वेद्मि तत्तथा ॥ १५ ॥
यदेव किंचिज्जानासि तदेव कुरु सुन्दरि ।
तदेव धारयिष्यामि प्रतिबिम्बं यथा मणिः ।
न स्तौमि न च निन्दामि यथेच्छसि तथा कुरु ॥ १६ ॥

चूडालोवाच ॥

यद्येवं तन्महाबाहो समाकर्णय मन्मतम् ।
आकर्ण्य जीवन्मुक्तात्मंस्तदेवाहर्तुमर्हसि ॥ १७ ॥
सर्वत्रैक्यावबोधेन मौर्ख्यक्षयभयान्विताः ।
निरिच्छास्तावदाकाशविशदाः संस्थिता वयम् ॥ १८ ॥
तस्मादाद्यन्तमध्येषु ये वयं पुरुषोत्तम ।
मौर्ख्यमेकं परित्यज्य गत्वा तद्रूपतां पुनः ॥ १९ ॥
राज्येन प्रकृतेनेमं कालं नीत्वा क्रमेण वै ।
विदेहतां प्रयास्यामः प्रभो कालेन केनचित् ॥ ६२० ॥
स्व एव नगरे राजा भव त्वं स्वासने स्थितः ।
उत्तमाहं तु कामानां महिषी ते भवाम्यहम् ॥ २१ ॥
इदं सुखमिदं नेति मिथुने क्षयमागते ।
सममेव पदे शान्ते तिष्ठ त्वं विगतेषणः ॥ २२ ॥

शिखिध्वज उवाच ॥

युक्तमुक्तं विशालाक्षि त्वयैतत्समया धिया ।
कोवार्थः किल राज्यस्य ग्रहे त्यागेऽपि वा भवेत् ॥ २३ ॥

॥ १८ ॥ १९ ॥ ६२० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

सुखदुःखदशाचिन्तां त्यक्त्वा विगतमत्सरम् ।
यथासंस्थानमेवेमौ तिष्ठावः स्वच्छमागतौ ॥ २४ ॥

वसिष्ठ उवाच ॥

अथोत्थाय तु चूडाला रत्नकुम्भं पुरः स्थितम् ।
कान्तं संकल्पयामास पूर्णं सप्ताब्धिवारिभिः ॥ २५ ॥
तेन मङ्गलकुम्भेन तं पूर्वाभिमुखं स्थितम् ।
भार्या भर्तारमेकान्ते स्वराज्येऽभिषिषेच सा ॥ २६ ॥
तथासने समास्थाप्य महादेवीं पदे तथा ।
अभिषिक्तां नृपः कृत्वा चूडालामाह तां प्रियाम् ॥ २७ ॥

शिखिध्वज उवाच ॥

प्रिये कमलपत्राक्षि क्षणात्संकल्पसंभवम् ।
महाविभवमुद्दामं सैन्यमाहर्तुमर्हसि ॥ २८ ॥

वसिष्ठ उवाच ॥

इति कान्तवचः श्रुत्वा चूडाला वरवर्णिनी ।
सैन्यं संकल्पयामास नीरन्ध्रीकृतकाननम् ॥ २९ ॥
तत्र गन्धद्विपवरं कृतपार्थिवमण्डनम् ।
रक्षितं हृष्टसामन्तैरारूढौ नृपदम्पती ॥ ६३० ॥
ततः शिखिध्वजो राजा महिष्या सममिष्टया ।
पदातिरप्यसंबाधं कर्षन्नतिबलो बलम् ॥ ३१ ॥
तस्मान्महेन्द्रशैलेन्द्राच्चलितः स्वां पुरीं प्रति ।
आपाल्पेनैव कालेन स्वां पुरीं स्वर्गशोभनाम् ॥ ३२ ॥
पुरीस्थास्तस्य सामन्तास्तदागमनमादृताः ।
विविदुर्जयशब्देन निर्जग्मुश्चोदिताशयाः ॥ ३३ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ६३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

एकतां संप्रयातेन तारतूर्यादिना सह ।
प्रत्युद्गतेन पूर्वेण स सामन्तेन तेन च ॥ ३४ ॥
बलद्वयेन तेनासौ विवेश नगरं नृपः ।
दशवर्षसहस्राणि राज्यं कृत्वा महीतले ॥ ३५ ॥
सह चूडालया राम विरतो देहधारणात् ।
देहमुत्सृज्य निर्वाणमस्नेह इव दीपकः ॥ ३६ ॥
अपुनर्जन्मने राजा जगामेति महामतिः ॥ ३७ ॥
भुक्त्वा भोगाननन्तान्भुवि सकलमहीपालचूडामणित्वे
स्थित्वासौ दीर्घकालं परममृतमनन्तं गतः शून्यशेषः ।
एवं रामागतं तं प्रकृतमनुसरन्कार्यजातं विशोकैः
स्थित्वातिष्ठत्स्वयं वा प्रसभमनुसरन्भोगमोक्षादिलक्ष्मीम् ६३८

इति श्रीवासिष्ठरामायणे मोक्षोपाये निर्वाणप्रकरणे किराटचिन्तामणिगजेन्द्रोपाख्यानत्रयगर्भं शिखिध्वजोपाख्यानं नाम नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः

वसिष्ठ उवाच ॥

एतत्ते सर्वमाख्यातं शिखिध्वजकथानकम् ।
अनेन गच्छ मार्गेण न कदाचन खिद्यसे ॥ १ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ततः परं तावन्योन्यानुमत्या स्वराज्योन्मुखौ संकल्पसिद्धेन सर्वतीर्थजलेन परस्परमभिषिक्तौ महता राज्यवैभवेन स्वपुरीं प्रविश्य दशवर्षसहस्राणि साम्राज्यसुखमनुभूय भूयो जन्मविमुक्तां विदेहमुक्तिं जग्मतुरिति कथाशेषसंक्षेपः ॥ ६३८ ॥ इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे शिखिध्वजोपाख्यान नाम नवमः सर्गः ॥ ९ ॥

पूर्वं प्रतिबन्धकपापसंक्षयाभावे दुर्लभमपि स्वात्मज्ञानमाचार्यस्य

शिखिध्वजः क्रमेणैव यथा बोधमवाप्तवान् ।
कचो बृहस्पतेः पुत्रस्तथा बुध्यस्व राघव ॥ २ ॥

राम उवाच ॥

बृहस्पतेर्भगवतः पुत्रोऽसौ भगवान्कचः ।
यथा प्रबुद्धो भगवन्समासेन तथा वद ॥ ३ ॥

वसिष्ठ उवाच ॥

बालभावात्समुत्तीर्णः संसारोत्तरणोन्मुखः ।
कचः पदपदार्थज्ञो बृहस्पतिमभाषत ॥ ४ ॥

कच उवाच ॥

भगवन्सर्वधर्मज्ञ कथं संसृतिपञ्जरात् ।
अस्मान्निर्गम्यते ब्रूहि जन्तुना जीवतन्तुना ॥ ५ ॥

बृहस्पतिरुवाच ॥

अनर्थमकरागारादस्मात्संसारसागरात् ।
उत्तीर्यते निरुद्वेगं सर्वत्यागेन पुत्रक ॥ ६ ॥

वसिष्ठ उवाच ॥

इत्याकर्ण्य कचो वाक्यं पितुः परमपावनम् ।
सर्वमेव परित्यज्य जगामैकान्तकाननम् ॥ ७ ॥

प्रयत्नातिशयाल्लभ्यत इति दर्शयितुं अनेकोपाख्यानगर्भं शिखिध्वजोपाख्यानमाख्यातम् । इदानीं चित्तत्याग एव सर्वत्यागो नाम इति कचोपाख्यानेनाभिधीयते ॥ १ ॥ २ ॥ ३ ॥ बालेति ॥ बालभावान्मौर्ख्यात् पदपदार्थज्ञः पदपदे तत्त्वंपदे तयोरर्थः पदपदार्थस्तं जानातीति ॥ ४ ॥ भगवन्निति ॥ जीवतन्तुना जीवः प्राणधारणं स एव तन्तुः चेष्टानिमित्तं सूत्रं यस्य तेन ॥ ५ ॥ ६ ॥ ७ ॥

बृहस्पतेस्तद्गमनं नोद्वेगाय बभूव ह।
संयोगे च वियोगे च न क्षुभ्यन्ति महाशयाः ॥ ८ ॥
अथ वर्षेषु यातेषु त्रिषु पञ्चसु चानघ।
पुनः प्राप महारण्ये कस्मिंश्चित्पितरं कचः ॥ ९ ॥
परिपूज्याभिवाद्यैनं समालिङ्गितपुत्रकम्।
अपृच्छद्वाक्पतिं भूयः स कचः कान्तया गिरा ॥ १० ॥
अद्येदमष्टमं वर्षं सर्वत्यागः कृतो मया।
तथापि तात विश्रान्तिं नाधिगच्छाम्यनिन्दिताम् ॥ ११ ॥

वसिष्ठ उवाच ॥

एवमार्तं वचस्तस्मिन्कचे वदति कानने।
सर्वमेव त्यजेत्युक्त्वा वाक्पतिर्दिवमाययौ ॥ १२ ॥
गते तस्मिन्कचो देहाद्वल्कलाद्यप्यथात्यजत्।
ततो व्यभ्रार्कतारेण शरद्व्योम्ना समोऽभवत् ॥ १३ ॥
पुनर्वर्षत्रयेणाथ कस्मिंश्चित्काननान्तरे।
दूयमानमनाः प्राप तमेव पितरं गुरुम् ॥ १४ ॥
कृतपूजानमस्कारं तमालिङ्गितपुत्रकम्।
अपृच्छत्तमसौ भूयः खेदगद्गदया गिरा ॥ १५ ॥

कच उवाच ॥

तात सर्वं परित्यक्तं कन्थां चैव लताद्यपि।
तथापि नास्ति विश्रान्तिः स्वपदे किं करोम्यहम् ॥ १६ ॥

बृहस्पतिरुवाच ॥

चित्तं सर्वमिति प्राहुस्तत्त्यक्त्वा पुत्र राजसे।
चित्तत्यागं विदुः सर्वत्यागं सर्वविदो जनाः ॥ १७ ॥

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

वसिष्ठ उवाच ॥

इत्युक्त्वा वाक्पतिः पुत्रं पुप्लुवे तरसा नभः ।
अन्वियेष कचश्चित्तं परित्यक्तुमखिन्नधीः ॥ १८ ॥
चिन्तयन्नप्यसौ चित्तं न यदा वेद कानने ।
तदा संचिन्तयामास धियैवमविखिन्नया ॥ १९ ॥

कच उवाच ॥

पदार्थवृन्दं देहादि न चित्तमिति कथ्यते ।
तदेतत्किं क्व वा व्यर्थं निरागस्कं त्यजाम्यहम् ॥ २० ॥
पितुः सकाशं गच्छामि ज्ञातुं चित्तं महारिपुम् ।
ज्ञात्वा तावत्त्यजाम्याशु ततस्तिष्ठामि विज्वरः ॥ २१ ॥

वसिष्ठ उवाच ॥

चिन्तयित्वा जगामेति कचः स्वं पितरं गुरुम् ।
पप्रच्छ प्रयतो भूत्वा चित्तं तात किमुच्यते ॥ २२ ॥

बृहस्पतिरुवाच ॥

चित्तं निजमहंकारं विदुश्चित्तविदो जनाः ।
अन्तर्योऽयमहंभावो जन्तोस्तच्चित्तमुच्यते ॥ २३ ॥

कच उवाच ॥

मन्येऽस्य दुष्करस्त्यागो न सिद्धिमुपगच्छति ।
कथमेष किल त्यक्तुं शक्यते योगिनां वर ॥ २४ ॥

बृहस्पतिरुवाच ॥

अपि पुष्पावदलनादपि लोचनमीलनात् ।
सुकरोऽहंकृतेस्त्यागो न क्लेशोऽत्र मनागपि ॥ २५ ॥

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

एकमाद्यन्तरहितं चिन्मात्रममलं ततम् ।
खादप्यतितरामच्छं विद्यते सर्ववेदनम् ॥ २६ ॥
तदेव भावयन्साधुः शान्तस्तिष्ठ गतव्यथः ।
मिथ्यारूपो ह्यहंभावो लीयते तत्त्वभावनात् ॥ २७ ॥
चिति कोऽयमहंभावः कोवा नु कथमुत्थितः ।
अन्तः कोऽयमहंभावः कुतो नु कथमुत्थितः ॥ २८ ॥
क्वाप्सु जातो रजोराशिः क्वानलादुत्थितं जलम् ।
अयं सोऽहमिति व्यर्थं प्रत्ययं त्यज पुत्रक ॥ २९ ॥
तुच्छं परिमिताकारं दिक्कालविवशीकृतम् ॥ ३० ॥
दिक्कालाद्यनवच्छिन्नं स्वच्छं नित्योदितं ततम् ।
सर्वार्थमयमेकार्थं चिन्मात्रममलं भवान् ॥ ३१ ॥

वसिष्ठ उवाच ॥

इति प्राप्य परं योगमुपदेशमनुत्तमम् ।
जीवन्मुक्तो बभूवासौ ततो देवगुरोः सुतः ॥ ३२ ॥
निर्ममो निरहंकारश्छिन्नग्रन्थिः प्रशान्तधीः ।
कचो यथा स्थितो राम तथा तिष्ठाविकारवान् ॥ ३३ ॥

॥ २५ ॥ एकमिति ॥ सर्ववेदनं सर्वसाक्षिचिन्मात्रमेव वस्तु विद्यत इत्यन्वयः ॥ २६ ॥ तदिति ॥ तत्त्वभावनाच्चित्स्वरूपभावनात् ॥ २७ ॥ चिदिति ॥ २८ ॥ अप्सु जातो रजोराशिरिव अनले जलमिव चित्स्वरूपेऽप्यहंभावो न युज्यत इत्यर्थः । अयं अहं सोऽहमिति ॥ २९ ॥ दिक्कालविवशीकृतं परिमिताकारं तुच्छं प्रत्ययं त्यज ॥ ३० ॥ दिगिति ॥ सर्वार्थमयमपि यदेकार्थमेकरूपं तदमलं चिन्मात्रं भवानित्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥

अहंकारमसद्विद्धि मैनमाश्रय मा त्यज ।
असतः शशशृङ्गस्य किल त्यागग्रहौ कुतः ॥ ३४ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे कचोपाख्यानं
नाम दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः

वसिष्ठ उवाच ॥

द्वित्वैकत्वमतस्त्यक्त्वा शेषस्थः सुखितो भव ।
मा दुःखितो भव व्यर्थं त्वं मिथ्यापुरुषो यथा ॥ १ ॥

राम उवाच ॥

परमामागतोऽस्म्यन्तस्तृप्तिं ज्ञानामृतेन ते ।
तृप्तोऽपि भूयः पृच्छामि त्वां प्रश्नमिममीश्वर ॥ २ ॥
किमुच्यते मुनिश्रेष्ठ मिथ्यापुरुषनामकम् ।
वस्त्ववस्तुकृतं जगद्वस्तुजातं वदाशु मे ॥ ३ ॥

अहमिति ॥ शशशृङ्गवदसन्तमहंकारं माश्रय मा त्यजेत्यर्थः ॥ ३४ ॥ इति श्रीयोगवासिष्ठविवरणे निर्वाणप्रकरणे कचोपाख्यानं नाम दशमः सर्गः ॥ १० ॥

पूर्वं चित्तत्याग एव सर्वत्याग इत्युक्तम् । इदानीमविचारितरम्योऽयमहंकारः संसारे वृथैव शोचतीत्यत्र दृष्टान्ततया मिथ्यापुरुषवृत्तान्तो निरूप्यते—द्वित्वेति ॥ द्वित्वमतेर्भेदविषयत्वात् एकत्वमतेश्च भेदप्रतियोगित्वेन भेदोल्लेखित्वात्ते उभे अपि त्यक्त्वा शेषस्थः भेदाभेदाभ्यामव्यपदेश्ये चिन्मात्ररूपे वस्तुनि स्थितः सन्सुखितो भव । व्यर्थं निर्निमित्तमेव मिथ्यापुरुषवद्दुःखितो माभव ॥ १ ॥ २ ॥ ३ ॥

वसिष्ठ उवाच ॥

मिथ्यापुरुषबोधाय शृणु राघव शोभनाम् ।
इमामाख्यायिकां हासजननीं मदुदीरिताम् ॥ ४ ॥
अस्ति कश्चिन्महाबाहो मायायन्त्रमयः पुमान् ।
बालपेलवधीर्मूढो मानी मौर्ख्येण केवलम् ॥ ५ ॥
स एकान्ते क्वचिज्जातः शून्ये तत्रैव तिष्ठति ।
केशोण्ड्रकमिव व्योम्नि मृगतृष्णेव वा मरौ ॥ ६ ॥
तस्मादन्यन्न तत्रास्ति यदस्ति च स एव तत् ।
यच्चान्यत्तत्तदाभासं न च पश्यति दुर्मतिः ॥ ७ ॥
संकल्पस्तस्य संजातस्तत्र वृद्धिमुपेयुषः ।
खं स्थापयित्वा रक्षामि वस्त्विष्टं रक्ष्यमादरात् ॥ ८ ॥

॥ ४ ॥ अस्तीति ॥ मायायन्त्रमयः पुमान् अहंकाररूपः । बालपेलवधीर्बालवदल्पबुद्धिः ॥ ५ ॥ स इति ॥ पुमानेकान्ते निःप्रपञ्चे शून्ये निर्विशेषे क्वचिदव्यपदेश्ये चिदाकाशरूपे वस्तुनि जातः तत्रैव वस्तुनि व्योम्नि केशोण्ड्रकमिव कुण्डलिनः केशसंचयमिव मरौ मृगतृष्णेव च भ्रान्तिमात्रसिद्धस्तिष्ठति ॥६॥ तस्मादिति ॥ तत्र चिदाकाशे तस्मान्मायापुरुषादहंकारादन्यन्नास्ति । यच्चास्ति तत्स एव सर्वस्याप्यहंकारिकत्वात् तत्तदाभासं तेनतेन वियदादिरूपेण भासमानमन्यत्प्रपञ्चातिरिक्तं यच्च वस्त्वस्ति तच्च न पश्यति नानुसंधत्ते दुर्मतित्वात् मन्दमतित्वात् ॥ ७ ॥ संकल्प इति श्लोकद्वयं वाक्यम् । तत्र चिदाकाशे वृद्धिमुपेयुषस्तस्य मायापुंसः खं आकाशं स्थापयित्वा कुत्रचिदाश्रये प्रतिष्ठाप्य रक्षामि । यस्मादिष्टं वस्त्वादरा-

इति संचिन्तयन्व्योमरक्षार्थं सोऽकरोद्गृहम् ।
अस्य कोशे च बन्धास्थां रक्षितं खं मयेत्यसौ ॥ ९ ॥
अथ कालेन तत्तस्य गृहं नाशमुपाययौ ।
ऋत्वन्तरेणाब्द इव वातेनेव तरङ्गकः ॥ १० ॥
हा गृहाकाश नष्टस्त्वं हा क्व यातमसि क्षणात् ।
गृहे भग्ने गृहाकाशमित्यथैनं शुशोच सः ॥ ११ ॥
इति शोकशतं कृत्वा पुनस्तत्रैव दुर्मतिः ।
कूपं चक्रे खरक्षार्थं कूपाकाशपरोऽभवत् ॥ १२ ॥
ततो नाशं स कालेन नीतः कूपोऽपि तस्य वै ।
कूपाकाशे गते शोके निमग्नोऽसौ ततोऽभवत् ॥ १३ ॥
कूपाकाशप्रलापान्ते कुम्भं शीघ्रमथाकरोत् ।
कुम्भाकाशपरो भूत्वा स्वयं निर्वृतिमाययौ ॥ १४ ॥
कुम्भोऽपि तस्य कालेन नाशं नीतो रघूद्वह ।
यामेव दिशमादत्ते दुर्भगः सा हि नश्यति ॥ १५ ॥
कुम्भाकाशप्रलापान्ते खरक्षार्थं चकार सः ।
कुण्डं तत्रैव तेनासौ कुण्डाकाशपरोऽभवत् ॥ १६ ॥

द्रक्ष्यं रक्षणीयमिति संकल्पो जातः ॥ ८ ॥ इति एवंच संचिन्तयन् व्योमरक्षार्थं स पुमान् गृहमकरोत्। अस्य च गृहस्य कोशेऽभ्यन्तरे खं मया रक्षितमित्यास्थामादरमकरोत् ॥ ९ ॥ अथेति ॥ ऋत्वन्तरेण शरदाख्येन वर्षकोऽब्दो यथा नाशमुपयाति तद्वत् ॥ १० ॥ हा गृहेत्यादि ॥ आदौ गृहं तन्नाशे कूपम् ॥ ११ ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ ततः कुम्भं ततः कुण्डं गर्तविशेषं स्थालीं वा

कुण्डमप्यस्य कालेन केनचिन्नाशमाययौ ।
तेजसेव तमस्तेन कुण्डाकाशं शुशोच सः ॥ १७ ॥
कुण्डाकाशस्य नाशान्ते खरक्षार्थं चकार सः ।
चतुःशालं महाशालं तदाकाशपरोऽभवत् ॥ १८ ॥
तदप्यवजहाराशु कालः कवलितप्रजः ।
जीर्णं पर्णं यथा वातस्ततः शोकपरोऽभवत् ॥ १९ ॥
स चतुःशालशोकान्ते खरक्षार्थं चकार ह ।
कुशूलमम्बुदाकारं तदाकाशपरः स्थितः ॥ २० ॥
तदप्यस्य जहाराशु कालो वात इवाम्बुदम् ।
कुशूलाकाशशोकेन तेनासौ पर्यतप्यत ॥ २१ ॥
एवं गृहचतुःशालकुम्भकुण्डकुशूलकैः ।
तस्यापर्यवसानात्मा कालो दुःखमयो गतः ॥ २२ ॥
एवं स्थितः स गगनं कुमतिर्गुहायां
गृह्णन्गृहेण गगनेन किलात्मबुद्ध्या ।
दुःखान्तराद्घनतराद्घनदुःखजात-
मायाति याति च गतागतिसङ्गमूढः ॥ २३ ॥

॥ १६ ॥ १७ ॥ ततो महाशालं विशालगृहयुक्तं चतुःशालं चतुर्णां शालानां समाहारम् ॥ १८ ॥ १९ ॥ ततः कुशूलं धान्यावपनस्थानं च कृत्वा तत्तन्नाशे शुशोचेति संक्षेपः ॥ २० ॥ २१ ॥ २२ ॥ एवमिति ॥ दुःखमयतया स्थितः स कुमतिर्गुहायां स्थितं गगनं गृहेण केनचिदावासस्थानेन च गृह्णन् संगृह्णन् गगनेन जनिता यात्मबुद्धिः तया गगनविषयात्मबुद्ध्या घनतराद्दुःखान्तरात् घनदुःखजातमायाति । गतागतिसङ्गमूढः उपाधीनां गमनागमनसंबन्धेन मूढः

राम उवाच ॥

मिथ्यानरप्रसङ्गेन किं मायापुरुषः प्रभो ।
कथितोऽयं त्वया व्योमरक्षणं च किमुच्यते ॥ २४ ॥

वसिष्ठ उवाच ॥

मायायन्त्रमयः प्रोक्तो यः पुमान्रघुनन्दन ।
एनं च त्वमहंकारं विद्धि शून्याम्बरोत्थितम् ॥ २५ ॥
यस्मिन्नाकाशकोशेऽस्मिन्साधो जगदिदं स्थितम् ।
तदनन्तमसच्छून्यं सर्गादौ तिष्ठति स्वयम् ।
तस्मादुदेत्यहंकारः पूर्वस्पन्द इवानिलात् ॥ २६ ॥
अनात्मात्मैकरक्षार्थं देहान्नानाविधानसौ ।
भूयोभूयो विनाशेऽपि सृजत्याकुलतां गतः ॥ २७ ॥
कूपकुण्डचतुःशालकुम्भादीन्देहकानसौ ।
कृत्वा रक्षित आत्मेति याति तद्व्योम्नि भावनाम् ॥ २८ ॥

सन्स्वयं च याति ॥ २३ ॥ २४ ॥ मायेति ॥ मायायन्त्रमयो यः पुमान् प्रोक्तः तमेनं शून्याम्बरोत्थितं चिदाकाशोत्थमहंकारं विद्धि ॥ २५ ॥ यस्मिन्निति ॥ अनन्तमपरिच्छिन्नं शून्यं सर्वोपाधिरहितं अतश्चासत् व्यवहारस्याविषयः । 'असद्वा इदमग्र आसीत् ततो वै सदजायत' इति श्रुतेः । ईदृशं यद्वस्तु सर्गादौ तिष्ठति तस्माद्वस्तुनः पूर्वं प्रथममेवाहंकार उदेति अनिलात्स्तिमितवायोः सकाशात्स्पन्दश्चलनमिवेति ॥ २६ ॥ अनात्मेति ॥ अनात्मा वस्तुत आत्मनोऽन्यः सोऽयमहंकारः आत्मैकरक्षार्थं चिदाकाशरूपस्यात्मन एव रक्षणाय नानाविधान्देहान् भूयोभूयो विनाशेऽपि सति सृजति ॥ २७ ॥ कूपेति ॥ असावहंकारः कूपादितुल्यान्देहकान् कृत्वा आकाशकल्प

यथैव मिथ्यापुरुषो रक्षन्व्योमात्मशङ्कया ।
घटाकाशादिषु क्लिष्ट एवं मा क्लेशवान्भव ॥ २९ ॥
आकाशादपि विस्तीर्णः शुद्धः सूक्ष्मः शिवः शुभः ।
य आत्मा स कथं केन गृह्यते रक्ष्यतेऽथवा ॥ ३० ॥
हृदयाकाशमात्रस्य शरीरक्षयसंक्षये ।
व्यर्थं भूतानि शोचन्ति नष्ट आत्मेति शङ्कया ॥ ३१ ॥
घटादिषु प्रनष्टेषु यथाकाशो ह्यखण्डितः ।
तथा देहेषु नष्टेषु देही नित्यमलेपकः ॥ ३२ ॥
शुद्धचिन्मात्र आत्मायमाकाशादप्यणोरणुः ।
स्वानुभूत्यंशमात्रत्वात्खवद्राम न नश्यति ॥ ३३ ॥
न जायते न म्रियते क्वचित्किंचित्कदाचन ।
जगद्विवर्तरूपेण केवलं ब्रह्म जृम्भते ॥ ३४ ॥

आत्मा रक्षित इति तद्व्योम्नि तस्मिंश्चिदाकाशे भावनां याति ॥२८॥ ॥ २९ ॥ आकाशादिति ॥ य आत्मा आकाशादपि विस्तीर्णः स कथं गृह्यते केन वा गृह्यते रक्ष्यते च। तद्व्यतिरिक्तस्य वस्तुन एवाभावादिति भावः ॥ ३० ॥ हृदयेति ॥ हृदयाकाशमात्रस्य हृत्पुण्डरीकावच्छिन्नस्याकाशस्य शरीरलक्षणस्य क्षयस्य निवासस्य संक्षये सति भूतानि आत्मा नष्ट इति शङ्कया व्यर्थमेव शोचन्ति॥ ३१ ॥ घटादिष्विति ॥ आकाशादीत्यादिशब्देन दिगाद्यमूर्तद्रव्यसंग्रहः॥ ३२॥ शुद्धेति ॥ य आत्मा शुद्धचिन्मात्रः अणोः सूक्ष्मादाकाशादप्यणुः सूक्ष्मो निरवयवत्वात् आत्मा स्वानुभूत्यंशमात्रत्वात्स्वानुभवमात्ररूपत्वात् खवत् आकाशवन्न नश्यति ॥ ३३ ॥ नेति ॥ किंचिदपि वस्तु क्वचिद्देशे कदाचिदपि न जायते न म्रियते च किं तर्हि ब्रह्मैव

सर्वमेकमिदं शान्तमादिमध्यान्तवर्जितम् ।
भावाभावविनिर्मुक्तमिति मत्वा सुखी भव ॥ ३५ ॥

सर्वापदां निलयमध्रुवमस्वतन्त्र-
मासन्नपातमविवेकममानमज्ञम् ।
बोधादहंकृतिपदं सकलं विमुच्य
शेषे सुबुद्धपद उत्तमतां प्रयाहि ॥ ३६ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे मिथ्यापुरुषोपाख्यानं नाम एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः

वसिष्ठ उवाच ॥

तस्मादृश्यात्मतत्त्वस्य विस्मृत्यैव गतं स्थितिम् ।
नान्यस्मादागतं राम जगद्रज्जुभुजङ्गवत् ॥ १ ॥

केवलं जगद्विवर्तरूपेण जगदाकारेण जृम्भते परिस्फुरति ॥ ३४ ॥ सर्वमिति ॥ इदं सर्वं जगत् आदिमध्यान्तवर्जितं अतएव भावाभावाभ्यां जन्मनाशाभ्यां विनिर्मुक्तं शान्तमेकमद्वितीयं ब्रह्मेति मत्वा सुखी भव ॥ ३५ ॥ सर्वेति ॥ सर्वापदां निलयं अध्रुवं अस्वतन्त्रं आसन्नपातं नश्वरं अविवेकं अमानं अप्रामाणिकं अज्ञं जडं अहंकृतिपदं अहंकाररूपं वस्तु सकलमपि बोधादात्मतत्त्वरूपादवबोधात् विमुच्य शेषे अहंकृतिरहिते सुबुद्धपदे ज्ञानपदे स्थित्वा उत्तमां जीवन्मुक्ततां प्रयाहि ॥ ३६ ॥ इति श्रीयोगवासिष्ठविवरणे निर्वाणप्रकरणे एकादशः सर्गः ॥ ११ ॥

पूर्वमहंकृतिरेव मिथ्या शोकहेतुरित्युक्तम् । इदानीं कथं तर्हि धीविश्रान्तिरित्याकाङ्क्षायां समाधिना विनापि महता कर्तृत्वादिना धियो विश्रान्तिः सिध्यतीति भृङ्गीशोपाख्यानेन निरूप्यते—तस्येति ॥

आदित्यव्यतिरेकेण यो भावयति राघव ।
रश्मिजालमिदं ह्येतत्तस्यान्यदिव भास्वतः ॥ २ ॥
कनकव्यतिरेकेण केयूरं येन भावितम् ।
केयूरमेव तत्तस्य न तस्य कनकं हि तत् ॥ ३ ॥
आदित्याव्यतिरेकेण रश्मयो येन भाविताः ।
आदित्या एव ते तस्य निर्विकल्पः स उच्यते ॥ ४ ॥
कनकाव्यतिरेकेण केयूरं येन भाव्यते ।
कनकैकमहाबुद्धिर्निर्विकल्पः स उच्यते ॥ ५ ॥
नानातामखिलां त्यक्त्वा शुद्धचिन्मात्रकोटरे ।
संवेद्येन विनिर्मुक्ते संवित्तत्त्वे स्थिरो भव ॥ ६ ॥

इदं जगत्तस्य सर्वप्रपञ्चाधिष्ठानस्य आत्मतत्त्वस्य विस्मृत्यैव अननुसंधानेनैव स्थितिं प्रामाणिकबुद्धिं गतं अन्यस्मात्तु कारणान्नागतं रज्जुभुजङ्गवत् । यथाहि रज्ज्वारोपितो भुजङ्गो रज्जुस्वरूपाज्ञानादेव सिद्धो नान्यस्मात्कारणात्तद्वत् ॥ १ ॥ आदित्येति ॥ यः पुमानिदं रश्मिजालं आदित्यव्यतिरेकेण भावयति आदित्याद्भेदेन भावयति तस्य एतद्रश्मिजालं भास्वतोऽन्यदिव भवति ॥ २ ॥ कनकेति ॥ पूर्वोक्त एवार्थः ॥ ३ ॥ इदानीमभेदभावनामाह—आदित्येति ॥ येन पुंसा रश्मय आदित्याव्यतिरेकेण भाविताः तस्य ते रश्मयोऽप्यादित्या एव स पुमानभेददर्शी निर्विकल्प उच्यते ॥ ४ ॥ कनकेति ॥ कनकैकमहाबुद्धिः केयूरादिषु कनकमित्येकैव महती बुद्धिर्यस्य स पुमान् निर्विकल्प उच्यते ॥ ५ ॥ नानातामिति ॥ अखिलां नानातां त्यक्त्वा शुद्धचिन्मात्रकोटरे शुद्धस्य चिन्मात्रस्य कोटरे गर्भे स्थितं यत् संवेद्येन विनिर्मुक्तं संवित्तत्त्वं तत्रैव स्थिरः समाहितो भव

स्वयमात्मात्मनैवाशु शक्तिं संकल्पनामिकाम् ।
यदा करोति स्फुरितां स्पन्दशक्तिमिवानिलः ॥ ७ ॥
तदा पृथगिवाभासं संकल्पकलनामयम् ।
मनो भवति विश्वात्मा भावयन्स्वाकृतिं स्वयम् ॥ ८ ॥
संकल्पमात्रमेवेदं जगदाभोगि दृश्यताम् ।
न सत्यं नच मिथ्यैव स्वप्नजालमिवोत्थितम् ॥ ९ ॥
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्वदन्व्यवहरन्स्वपन् ।
नापूर्वं विद्यते सर्वं सत्यमित्येव भावयन् ॥ १० ॥
यद्यत्करोति तद्विद्धि चिन्मात्रममलं ततम् ।
ब्रह्म प्रबृंहिताकारं तस्मादन्यन्न विद्यते ॥ ११ ॥
पदार्थजाते सर्वस्मिन्संवित्सारतया स्थिते ।
संविदेवेदमखिलं जगन्नान्यास्ति कल्पना ॥ १२ ॥

॥ ६ ॥ स्वयमिति श्लोकद्वयं वाक्यम् । आत्मा स्वयमेव यदा संकल्पनामिकां शक्तिं अनिलः स्पन्दशक्तिमिव आत्मनैव न कारणान्तरेण स्फुरितां कार्योन्मुखीं करोति तदा पृथगिवाभासं आत्मनोऽन्यदिवाभासमानं संकल्पकलनामयं विश्वात्मा सर्वप्रपञ्चकारणं स्वाकृतिं स्वाकारमेव स्वयं भावयन्मनो भवति ॥ ७ ॥ ८ ॥ संकल्पेति ॥ अतः कारणादिदं आभोगि विस्तीर्णं जगत्संकल्पमयमेव दृश्यतां न सत्यम् । तत्त्वज्ञानेन बाध्यत्वात् । न च मिथ्यैव व्यवहार्यत्वात् । किं तर्हि स्वप्नजालमिवानिर्वचनीयत्वेनोत्थितम् ॥ ९ ॥ ॥१०॥११॥ पदार्थेति ॥ पदार्थजाते वस्तुसमूहे सर्वस्मिन्नपि संवित्सारतया संविन्मात्रतया संविन्मात्रे प्रमाणतया स्थिते सति संविदेव हि भवति विषयसत्त्वोपशमे शरणमिति न्यायात् ॥ १२ ॥

संभवादखिलाकारेणैकस्या एव संविदः ।
संवेद्यमपि नास्त्येव बन्धमोक्षावतः कथम् ॥ १३ ॥
मोक्षोऽयमेष खलु बन्ध इति प्रसह्य
चिन्तां निरस्य सकलां विकलाभिमानः ।
मौनी वशी विगतमानमदो महात्मा
कुर्वन्स्वकार्यमनहंकृतिरेव तिष्ठ ॥ १४ ॥
महाकर्ता महाभोक्ता महात्यागी भवानघ ।
सर्वाः शङ्काः परित्यज्य धैर्यमालम्ब्य शाश्वतम् ॥ १५ ॥

राम उवाच ॥

किमुच्यते महाकर्ता महात्यागी किमुच्यते ।
किमुच्यते महाभोक्ता सम्यक्कथय मे प्रभो ॥ १६ ॥

वसिष्ठ उवाच ॥

एतद्व्रतत्रयं राम पुरा चन्द्रार्धमौलिना ।
भृङ्गीशाय तु संप्रोक्तं येनासौ विज्वरः स्थितः ॥ १७ ॥
सुमेरोरुत्तरे शृङ्गे पूर्वं शशिकलाधरः ।
अतिष्ठदग्निसंकाशे समग्रपरिवारवान् ॥ १८ ॥
तमपृच्छन्महातेजास्तत्त्वं जिज्ञासुरादरात् ।
भृङ्गीशः प्रणतो राम बद्धाञ्जलिरुमापतिम् ॥ १९ ॥

भृङ्गीश उवाच ॥

संसाररचनां नाथ तरङ्गतरलामिमाम् ।
अवलोक्य विमुह्यामि तत्त्वविश्रान्तिवर्जितः ॥ २० ॥

इदमखिलं जगत् संविदेवेति निश्चीयताम् । अत्रान्या कल्पना भेदकल्पना नास्ति । अखिलाकारेण एकस्या एव संविदः संभवाद्धेतोः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

कमन्तर्निश्चयं कान्तमुररीकृत्य सुस्थिरम् ।
अस्मिञ्जगज्जीर्णगृहे तिष्ठामि विगतज्वरः ॥ २१ ॥

ईश्वर उवाच ॥

सर्वाः शङ्काः परित्यज्य धैर्यमालम्ब्य शाश्वतम् ।
महाकर्ता महाभोक्ता महात्यागी भवानघ ॥ २२ ॥

भृङ्गीश उवाच ॥

किमुच्यते महाकर्ता महाभोक्ता किमुच्यते ।
किमुच्यते महात्यागी सम्यक्कथय मे प्रभो ॥ २३ ॥

ईश्वर उवाच ॥

रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले ।
यः करोत्यनपेक्षैव महाकर्ता स उच्यते ॥ २४ ॥
मौनवान्निरहंभावो निर्मानो मुक्तमत्सरः ।
यः करोति गतोद्वेगं महाकर्ता स उच्यते ॥ २५ ॥
सर्वत्र विगतस्नेहो यः साक्षिवदवस्थितः ।
निरिच्छं वर्तते कार्ये महाकर्ता स उच्यते ॥ २६ ॥
उद्वेगानन्दरहितः समया स्वच्छया धिया ।
न शोचति न चोदेति महाकर्ता स उच्यते ॥ २७ ॥
जन्मस्थितिविनाशेषु सोदयास्तमयेष्वलम् ।
सममेव मनो यस्य महाकर्ता स उच्यते ॥ २८ ॥
न किंचन द्वेष्टि तथा न किंचिदभिकाङ्क्षति ।
भुङ्क्ते च प्रकृतं सर्वं महाभोक्ता स उच्यते ॥ २९ ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

सुखैर्दुःखैः क्रियायोगैर्भावाभावैर्भ्रमप्रदैः ।
भुक्तैर्न संक्षुभ्यति यो महाभोक्ता स उच्यते ॥ ३० ॥
जरामरणमापच्च राज्यं दारिद्र्यमेव च ।
रम्यमित्येव यो भुङ्क्ते महाभोक्ता स उच्यते ॥ ३१ ॥
कट्वम्ललवणं तिक्तममृष्टं मृष्टमुत्तमम् ।
अन्धः संयाति साम्येन महाभोक्ता स उच्यते ॥ ३२ ॥
सरसं नीरसं चैव सुरतं विरतं तथा ।
यः पश्यति समं सौम्यो महाभोक्ता स उच्यते ॥ ३३ ॥
क्षीरे खण्डप्रकारे च शुभे वाप्यशुभे तथा ।
समता सुस्थिरा यस्य महाभोक्ता स उच्यते ॥ ३४ ॥
इदं भोज्यमभोज्यं चेत्येवं त्यक्त्वा विकल्पितम् ।
गताभिलाषं यो भुङ्क्ते महाभोक्ता स उच्यते ॥ ३५ ॥
आपदं संपदं मोहमानन्दमपरम्परम् ।
यो भुङ्क्ते समया बुद्ध्या महाभोक्ता स उच्यते ॥ ३६ ॥
धर्माधर्मौ सुखं दुःखं तथा मरणजन्मनी ।
धिया येनेति संत्यक्तं महात्यागी स उच्यते ॥ ३७ ॥
सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः ।
धिया येन परित्यक्ता महात्यागी स उच्यते ॥ ३८ ॥
येन धर्ममधर्मं च मनो मननमीहितम् ।
सर्वमन्तः परित्यक्तं महात्यागी स उच्यते ॥ ३९ ॥
यावती दृश्यकलना सकलेयं विलोक्यते ।
सा येन सुष्ठु संत्यक्ता महात्यागी स उच्यते ॥ ४० ॥

॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

वसिष्ठ उवाच ॥

इत्युक्तं देवदेवेन भृङ्गीशाय पुरानघ ।
एतां दृष्टिमवष्टभ्य तिष्ठ राम गतज्वरः ॥ ४१ ॥

नित्योदितं विमलरूपमनन्तमाद्यं
ब्रह्मास्ति नेतरकलाकलनं हि किंचित् ।
इत्येव भावय निरञ्जनतामुपेतो
निर्वाणमेहि सकलामलशान्तवृत्तिः ॥ ४२ ॥

अनामयं ब्रह्म समस्तकल्प-
कार्यैकबीजं परमात्मरूपम् ।
बृहच्च तद्बृंहितसर्वभावं
खमस्तिभातीव यदङ्ग किंचित् ॥ ४३ ॥

अन्यत्क्वचित्किंचिदिदं कदाचि-
न्न संभवत्येव सदप्यसच्च ।
इत्येव साधो दृढनिश्चयोऽन्तः
स्थित्वा गताशङ्कविलासमास्व ॥ ४४ ॥

अन्तर्मुखः सन्सततं समस्तं
कुर्वन्बहिष्ठं खलु कार्यजातम् ।
न खेदमायासि कदाचिदेव
निराकृताहंकृतितामुपैषि ॥ ४५ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे भृङ्गीशोपाख्यानं
नाम द्वादशः सर्गः ॥ १२ ॥

---

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ अन्तर्मुखः अनुसंधाननिष्ठो बहिष्ठं शारीरं कार्यजातं कुर्वन् खेदं नायासि ।

## त्रयोदशः सर्गः

राम उवाच ॥

भगवन्सर्वतत्त्वज्ञ चित्तेऽहंकारनामनि ।
गलिते वा गलद्रूपे लिङ्गंसत्त्वस्य किं भवेत् ॥ १ ॥

वसिष्ठ उवाच ॥

बलादपि हि संजाता न लिम्पन्त्याशयं सितम् ।
लोभमोहादयो दोषाः पयांसीव सरोरुहम् ॥ २ ॥
मुदिताद्याः श्रियो वक्त्रं न मुञ्चन्ति कदाचन ।
गलत्यहंकारमये चित्ते गलति दुष्कृते ॥ ३ ॥
वासनाग्रन्थयश्छिन्ना इव त्रुट्यन्त्यलं शनैः ।
कोपस्तानवमायाति मोहो मान्द्यं हि गच्छति ॥ ४ ॥

निराकृताहंकृतितां च उपैषि ॥ ४५ ॥ इति श्रीयोगवासिष्ठविवरणे निर्वाणप्रकरणे भृङ्गीशोपाख्यानं नाम द्वादशः सर्गः ॥ १२ ॥

पूर्वं समाधिना विनापि महाकर्तृत्वादिनैव धीविश्रान्तिः सिद्ध्यतीत्युक्तम् । इदानीं स्वविचारेण बोद्धुमशक्यमपि तत्त्वं गुरूक्तितो बोद्धुं शक्यत एवेति इक्ष्वाकूपाख्यानेनाख्यायते—भगवन्निति ॥ अहंकारनामनि चित्ते गलिते गलद्रूपे वा सति सत्त्वस्य प्राणिनः किं लिङ्गं चिह्नं भवेत् ॥ १ ॥ बलादिति श्लोकषट्कं वाक्यम् । अहंकारमये चित्ते गलति शिथिलीभवति दुष्कृते च गलति सति बलात् परेषां यत्नविशेषात्संजाता अपि लोभमोहादयो दोषाः पयांसि च सरोरुहमिव सितं विमलमाशयं न लिम्पन्ति न स्पृशन्ति ॥ २ ॥ मुदिताद्या मैत्र्यादयः शोभाहेतवः श्रियो वक्त्रं कदाचिदपि न मुञ्चन्ति ॥ ३ ॥ वासनारूपा ग्रन्थयो विच्छिन्ना इव शनैस्त्रुट्यन्ति भ्रश्यन्ते

कामः क्लमं गच्छति च लोभः क्वापि पलायते ।
नोल्लसन्तीन्द्रियाण्युच्चैः खेदः स्फुरति नोच्चकैः ॥ ५ ॥
न दुःखान्युपबृंहन्ति न वल्गन्ति सुखानि च ।
सर्वत्र समतोदेति हृदि शैत्यप्रदायिनी ॥ ६ ॥
सुखदुःखादयस्त्वेते दृश्यन्ते यदि वा मुखे ।
दृश्यन्त एव तुच्छत्वान्नतु लिम्पन्ति ते मनः ॥ ७ ॥
चित्ते गलति गीर्वाणगणस्य स्पृहणीयताम् ।
साधुर्गच्छत्युदेत्यस्य समता शीतचन्द्रिका ॥ ८ ॥
उपशान्तं च कान्तं च सेव्यमप्रतिरोधि च ।
निभृतं चोर्जितं स्वच्छं भवतीत्यमलं वपुः ॥ ९ ॥
भावाभावावरुग्णोऽपि विचित्रोऽपि महानपि ।
नानन्दाय न खेदाय सतां संसृतिविभ्रमः ॥ १० ॥

कोपादयोऽपि क्षीयन्ते ॥ ४ ॥ इन्द्रियाणि उच्चैर्नोल्लसन्ति नहि स्फुरन्ति । खेदो दैन्यं च तथा पूर्ववन्न स्फुरति ॥५॥ दुःखानि नोपबृंहन्ति न वर्धन्ते । सुखानि च न वल्गन्ति पारवश्यहेतवो न भवन्ति । हृदि शैत्यप्रदायिनी सर्वविषया समता उदेति ॥ ६ ॥ सुखदुःखादयो मुखे दृश्यमाना अपि तत्तद्विकारैरभिनीयमाना अपि तुच्छत्वात् कल्पितत्वात् मनो न लिम्पन्ति ॥ ७ ॥ चित्त इति श्लोकद्वयं वाक्यम् । किंचिच्चित्ते गलिते सति स साधुर्गीर्वाणानां गणस्यापि स्पृहणीयतां अभिलषणीयतां गच्छति ॥ ८ ॥ तस्य च वपुरुपशान्तं कान्तं कान्तिमत् अप्रतिरोधि समाधेरप्रतिबन्धकं निभृतं निर्विकारं ऊर्जितं दैन्यरहितं स्वच्छं निर्मलं च सत् इत्थमनेन प्रकारेण सेव्यं भवति ॥९॥ भावाभावेति ॥ संसृतिविभ्रमः भावाभावा-

बुद्ध्यालोकनसाध्येऽस्मिन्वस्तुन्यस्तमितापदि ।
प्रवर्तते न यो मोहात्तं धिगस्तु नराधमम् ॥ ११ ॥

विश्रान्तिमाप्तुमुचितां चिरसङ्गदुःख-
रत्नाकरं जननसागरमुत्तितीर्षोः ।
कोऽहं कथं जगदिदं च परश्च कः स्या-
त्किं भोगकैरिति मतिः परमोऽभ्युपायः ॥ १२ ॥

वसिष्ठ उवाच ॥

भवतामादिपुरुष इक्ष्वाकुर्नाम भूपतिः ।
इक्ष्वाकुवंशप्रभवो यथा मुक्तस्तथा शृणु ॥ १३ ॥
इक्ष्वाकुर्नाम भूपालः स्वराज्यं परिपालयन् ।
कदाचिदेकान्तगतो मनसा समचिन्तयत् ॥ १४ ॥
जरामरणसंक्षोभसुखदुःखभ्रमास्थितेः ।
अस्य दृश्यप्रपञ्चस्य को हेतुः स्यादिति स्वयम् ॥ १५ ॥

वरुग्णोऽपि भावाभावाभ्यामुत्पत्तिविपत्तिभ्यां अवरुग्णोऽपि भङ्ग्युक्तोऽपि विचित्रोऽपि महानपि सतां तत्त्वज्ञानिनां नानन्दाय न खेदाय। हर्षविषादहेतुर्न भवतीत्यर्थः ॥ १० ॥ बुद्ध्येति ॥ बुद्ध्या यदालोकनं विचारः तन्मात्रसाध्ये अस्मिन्मोक्षलक्षणे अस्तमितापदि वस्तुनि यो मोहान्न प्रवर्तते तं धिगस्तु ॥ ११ ॥ विश्रान्तिमिति ॥ उचितां विश्रान्तिं तत्त्वनिष्ठामाप्तुं चिरसङ्गनिमित्तानां दुःखरत्नानां आकरं जननसागरमुत्तितीर्षोः पुंसः किं भोगकैरिति वैराग्यपूर्वकोऽहं इदं जगच्च कथं केन प्रकारेणोत्पन्नं परः परमात्मा च कः कीदृशः स्यादिति विचारात्मिका मतिः परमो मोक्षोपायः ॥१२॥१३॥१४॥१५॥

जगतो न विवेदासौ कारणं चिन्तयन्नपि ।
अथैकदापृच्छदसौ ब्रह्मलोकागतं मनुम् ।
पूजितं स्वसभासंस्थं भगवन्तं प्रजापतिम् ॥ १६ ॥

इक्ष्वाकुरुवाच ॥

मां योजयति धार्ष्ट्येन भगवन्करुणानिधे ।
भवत्प्रसाद एवायं भवन्तं प्रष्टुमञ्जसा ॥ १७ ॥
कुतः सर्गोऽयमायातः स्वरूपं चास्य कीदृशम् ।
कियदेतज्जगत्कस्य कदा केनेति कथ्यताम् ॥ १८ ॥
अहं कथं च विषमादस्मात्संसृतिविभ्रमात् ।
विमुच्येयं घनास्तीर्णाज्जालादिव विहङ्गमः ॥ १९ ॥

मनुरुवाच ॥

अहो नु चिरकालेन विवेके सुविकाशिनि ।
विततार्थपरिच्छेत्ता सारः प्रश्नस्त्वया कृतः ॥ २० ॥
यदिदं दृश्यते किंचित्तन्नास्ति नृप किंचन ।
यथा गन्धर्वनगरं यथा वारि मरुस्थले ॥ २१ ॥
मनःषष्ठेन्द्रियातीतं यत्तु नो दृश्यते क्वचित् ।
अविनाशं तदस्तीह तत्सदात्मेति कथ्यते ॥ २२ ॥

॥ १६ ॥ १७ ॥ कुत इति ॥ एतज्जगत् कियत् किंपरिमाणम् । कस्य किं ईश्वरस्य उत जीवानाम् । कदा कस्मिन्काले प्रादुर्भूतम् । केन वा कारणेन जातमिति कथ्यताम् ॥ १८ ॥ अहमिति ॥ घनास्तीर्णात् घनं निरन्तरं यथा तथा आस्तीर्णात् प्रसारितात् ॥ १९ ॥ ॥ २० ॥ २१ ॥ मन इति॥ यत्तु वस्तु क्वचिदपि नो दृश्यते इदन्तया न प्रतीयते । मनःषष्ठेन्द्रियातीतं मनः षष्ठं येषामिन्द्रियाणां

इयं तु सर्वदृश्याद्या राजन्सर्गपरम्परा ।
तस्मिन्नेव महादर्शे प्रतिबिम्बमुपागता ॥ २३ ॥
भाः स्वभावसमुत्पन्ना ब्राह्म्यः स्फुरणशक्तयः ।
काश्चिद्ब्रह्माण्डतां यान्ति काश्चिद्गच्छन्ति भूतताम् ॥ २४ ॥
न बन्धोऽस्ति न मोक्षोऽस्ति ब्रह्मैवास्ति निरामयम् ।
नैक्यमस्ति न च द्वित्वं संवित्सारं विजृम्भते ॥ २५ ॥

एकं यथा स्फुरति वारि तरङ्गभङ्गै-
रेवं परिस्फुरति चिन्नच किंचिदेतत् ।
त्वं बन्धमोक्षकलने प्रविमुच्य दूरे
स्वस्थो भवाभवभयोऽभयसार एव ॥ २६ ॥

संकल्पोन्मुखतां याताः सत्यश्चिन्मात्रसंविदः ।
आपस्तरङ्गत्वमिव यान्ति भूमिप जीवताम् ॥ २७ ॥

चक्षुरादीनां तान्यतीतं अविनाशं तदेव वस्त्वस्ति सद्रूपं तद्वस्तु आत्मेति कथ्यते ॥ २२ ॥ इयमिति ॥ तस्मिन्नेव आत्मन्येव । महादर्शे महति दर्पणे ॥ २३ ॥ भाः स्वभावसमुत्पन्नाः तेजसः स्वभावादुत्पन्नाः तेजसः स्फुरणस्वभावत्वात् ब्राह्म्यः ब्रह्मसंबन्धिन्यः स्फुरणशक्तयः विक्षेपशक्तयः काश्चिद्ब्रह्माण्डतां यान्ति ब्रह्माण्डतया विवर्तन्ते । काश्चित्स्फुरणशक्तयो भूततां प्राणिरूपतां गच्छन्ति ॥ २४ ॥ ॥ २५ ॥ एकमिति ॥ एकं वारि अनेकैस्तरङ्गभङ्गैर्यथा स्फुरति एवं चिदेकैव परितः स्फुरति एतद्दृश्यं किंचिदेव नास्ति । अतः कारणात्त्वं बन्धमोक्षकल्पने दूरे प्रविमुच्य अभवभयः संसारभयरहितः अभयसारःअभयं ब्रह्म तत्सार एव भूत्वा स्वस्थो भव ॥ २६ ॥ संकल्पोन्मुखतामिति ॥ तस्याश्चिन्मात्ररूपायाः संविद एव संकल्पोन्मुखतां

ते जीवाः संसरन्तीह संसारे पूर्वमुत्थिते।
सुखदुःखदशामोहो मनस्येवास्ति नात्मनि ॥ २८ ॥
अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना।
तथानुभवमात्रात्मा दृश्येनात्मावलोक्यते ॥ २९ ॥
न शास्त्रेणापि गुरुणा दृश्यते परमेश्वरः।
दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थया धिया ॥ ३० ॥
पथिकाः पथि दृश्यन्ते रागद्वेषविमुक्तया।
यथा धिया तथैवैते द्रष्टव्याश्चेन्द्रियारयः ॥ ३१ ॥
एतेषु नादरः कार्यः सता नैवावधीरणम्।
पदार्थमात्रताविष्टास्तिष्ठन्त्वेते यथास्थितम् ॥ ३२ ॥
पदार्थजातं देहादिधिया संत्यज्य दूरतः।
आशीतलान्तःकरणो नित्यमात्ममयो भव ॥ ३३ ॥
देहोऽहमिति या बुद्धिः सा संसारनिबन्धिनी।
न कदाचिदियं बुद्धिरादेया हि मुमुक्षुभिः ॥ ३४ ॥

याताः सत्यः आपस्तरङ्गत्वमिव जीवतां यान्ति ॥ २७ ॥ त इति ॥ ते जीवाः पूर्वमुत्थिते संसारे संसरन्ति। सुखदुःखदशामोहश्च मनस्येवास्ति। आत्मनि तु नास्ति ॥ २८ ॥ अदृश्य इति ॥ अदृश्यः द्रष्टुमशक्योऽपि राहुर्गृहीतेन इन्दुनोपाधिना यथा दृश्यते तथा अनुभवमात्ररूपोऽप्यात्मा दृश्येन देहाद्युपाधिनावलोक्यते ॥ २९ ॥ नेति ॥ स्वात्मनैव स्वपौरुषेणैव स्वया सत्त्वगुणनिष्ठया धिया आत्मा परमेश्वरो दृश्यते ॥ ३० ॥ ३१ ॥ एतेष्विति ॥ सता विदुषा एतेषु देहेन्द्रियादिषु आदरो न कार्यः। अवधीरणं अवज्ञापकं नैव कार्यम्। एते देहादयः पदार्थमात्रताविष्टाः पदार्थमात्रतामिति बुद्धिविषयाः सन्तो यथास्थितं तिष्ठन्तु ॥ ३२ ॥ ३३ ॥ ३४ ॥

न किंचिन्मात्रचिन्मात्ररूपोऽसि गगनादणुः ।
इति या शाश्वती बुद्धिः सा न संसारबन्धनी ॥ ३५ ॥
यथा विमलतोयानां बहिरन्तश्च भानवम् ।
तेजस्तिष्ठति सर्वत्र तथात्मा सर्ववस्तुषु ॥ ३६ ॥
सन्निवेशांशवैचित्र्यं यथा हेम्नोऽङ्गदादिना ।
आत्मनस्तदतद्रूपा तथैव जगदादिना ॥ ३७ ॥
विनाशवाडवाक्रान्तं कल्पकालमहार्णवम् ।
जगज्जालतरङ्गिण्यो यान्ति भूततरङ्गिकाः ॥ ३८ ॥
तस्याप्यद्याप्यपूर्णस्य यः पाता कालवारिधेः ।
तमात्मानं महागस्त्यं राजन्भावय सर्वदा ॥ ३९ ॥

नेति ॥ न किंचिन्मात्रचिन्मात्ररूपः न किंचिन्मात्रं विश्वविलक्षणं यच्चिन्मात्रं तद्रूपः ॥ ३५ ॥ यथेति ॥ भानवं सूर्यसंबन्धि तेजो विमलतोयानां बहिरन्तश्च सर्वत्र यथा तिष्ठति तथैवात्मा सर्ववस्तुषु बहिरन्तश्च सर्वत्र तिष्ठति ॥ ३६ ॥ सन्निवेशेति ॥ यथा हेम्नः सन्निवेशांशवैचित्र्यं सन्निवेशः संस्थानं अंशा एकदेशाः तेषां वैचित्र्यं नानारूपतैव अङ्गदादिना केयूरादिभूषणभावेन नच वस्त्वन्तरं तथैव आत्मनो मायासहायस्य संनिवेशांशवैचित्र्यं एवं तदतद्रूपा चेतनाचेतनात्मिका जगदादिना लोकलौकिकप्रपञ्चभावः ॥ ३७ ॥ विनाशेति ॥ भूततरङ्गिकाः भूतानि प्राणिन एव तरङ्गा यासां ताः जगज्जालान्येव तरङ्गिण्यो नद्यः विनाशवाडवाक्रान्तं विनाशेनैव वाडवाग्निना व्याप्तं कल्पकालमहार्णवं प्रलयकालमेव महार्णवं यान्ति । नद्यः समुद्र इव जगज्जालानि प्रलयकाले लीयन्त इत्यर्थः ॥ ३८ ॥ तस्येति ॥ अद्यापि गतेष्वपि कल्पकोटिष्विदानीमपि अपू-

अनात्मन्यात्मतामास्मिन्देहादौ दृश्यजालके ।
त्यक्त्वा सत्त्वमुपारूढो गूढस्तिष्ठ यथासुखम् ॥ ४० ॥
कुचकोटरसंसुप्तं विस्मृत्य जननी सुतम् ।
यथा रोदिति पुत्रार्थं तथात्मार्थमयं जनः ॥ ४१ ॥
अजरामरमात्मानमबुद्ध्वा परिरोदिति ।
हा हतोऽहमनाथोऽहं नष्टोऽस्मीति वपुर्व्यये ॥ ४२ ॥
यथा वारि परिस्पन्दान्नानाकारं विलोक्यते ।
तथा संकल्पवशतश्चिद्ब्रह्मपरिबृंहितम् ॥ ४३ ॥

संस्थाप्य संकल्पकलङ्कमुक्तं
चित्तं त्वमात्मन्युपशान्तशङ्कः ।

र्णस्य तस्यापि सर्वसंहर्तुरपि कालवारिधेः कालस्यैव समुद्रस्य यः पाता संहर्ता तं महागस्त्यमगस्त्यादपि महाप्रभावमात्मानं सर्वदा भावय ॥ ३९ ॥ अनात्मनीति ॥ अनात्मनि देहादौ दृश्यजालके आत्मतामात्माभिमानं त्यक्त्वा सत्त्वं ज्ञानमुपारूढो गूढः संवृताकारो यथासुखं तिष्ठ ॥ ४० ॥ कुचेति ॥ यथाहि काचिज्जननी जनयित्री नारी कुचकोटरसंसुप्तं कुचयोरन्तरे प्रसुप्तं सुतं विस्मृत्य तत्रत्यमबुद्ध्वा पुत्रार्थं पार्श्वयोः शयने चापश्यन्ती हन्त क्व यातः सुत इति तदर्थे रोदिति तथात्यन्तसन्निहितमप्यात्मानं विस्मृत्यायं जनस्तदर्थं आत्मान्वेषणार्थं रोदिति खिद्यते ॥ ४१ ॥ अजरेति ॥ अयं जनः अजरामरमात्मानं अबुद्ध्वा वपुर्व्यये देहनाशे सति हा हतोऽहमनाथोऽहं नष्टोऽस्मीति च परिरोदिति ॥ ४२ ॥ यथेति ॥ वारि जलं यथा परिस्पन्दवशात्तरङ्गफेनबुद्बुदादिरूपेण नानाकारं विलोक्यते तथा चिद्रूपं ब्रह्म संकल्पवशतः परिबृंहितं परितो वियदादिरूपेण विवृद्धं सत् नानाकारं विलोक्यते ॥ ४३ ॥ संस्थाप्येति ॥ संकल्पकलङ्कमुक्तं

स्पन्देऽप्यविस्पन्द इवेश्वरात्मा
स्वस्थः सुखी राज्यमिदं प्रशाधि ॥ ४४ ॥

मनुरुवाच ॥

सर्गात्मभिर्विभुः स्पन्दैः क्रीडते बालवत्स्वयम् ।
संहारात्मकशक्त्याथ संहृत्यात्मनि तिष्ठति ॥ ४५ ॥
स्वयमस्य तथा शक्तिरुदेत्याबध्यते यया ।
स्वयमस्य तथा शक्तिरुदेत्युन्मुच्यते यया ॥ ४६ ॥
चन्द्रार्कवह्नितप्तायोरत्नादीनां यथार्चिषः ।
यथा पत्रादि वृक्षाणां निर्झराणां यथा कणाः ॥ ४७ ॥
तथेदं ब्रह्मणि स्फारे जगद्बुद्ध्यादि कल्पितम् ।
दुःखप्रदमतज्ज्ञानां तदेतावदवस्थितम् ॥ ४८ ॥

चित्तमात्मनि संस्थाप्य उपशान्तसंकल्पः सन्स्पन्देऽपि विक्षेपेऽपि अस्पन्द इव स्पन्दरहित इव स्वस्थो निर्विकार ईश्वरात्मा सुखी राज्यमिदं प्रशाधि पालय ॥ ४४ ॥ सर्गेति ॥ विभुर्व्यापकः आत्मा सर्गात्मभिः स्पन्दैर्बालवत् क्रीडते। अथ स्वयमेव संहारात्मकशक्त्या संहरणस्वभावया शक्त्या सर्वं संहृत्यात्मन्येव तिष्ठति ॥ ४५ ॥ स्वयमिति ॥ अस्यात्मनः स्वयमेव तथा तादृशी शक्तिरुदेति यया शक्त्या आबध्यते यया च स्वयमुन्मुच्यते तथाभूता शक्तिरप्यस्य स्वयमेवोदेति । बन्धमोक्षहेतू शक्ती उभे अप्यात्मनः स्वभावसिद्धे इत्यर्थः ॥ ४६ ॥ चन्द्रेति श्लोकद्वयं वाक्यम् । चन्द्रार्कवह्नितप्तायोरत्नादीनां चन्द्रश्च अर्कश्च वह्निश्च तप्तायश्च रत्नानि च तान्यादिर्येषां तेषां तेजोद्रव्याणामर्चिषो ज्वाला यथा अभिन्ना अपि भिन्नतया कल्पिताः । यथा च वृक्षाणां पत्राणि। यथा निर्झराणां प्रवाहाणां कणाः शीकराः ॥ ४७ ॥ तथेदं जगद्बुद्ध्यादि जगद्बुद्धिर्भूत-

अहो नु चित्रा मायेयं तात विश्वविमोहिनी ।
सर्वाङ्गप्रोतमप्यात्मा यदात्मानं न पश्यति ॥ ४९ ॥
चिदाकाशमयं सर्वं जगदित्येव भावयन् ।
यस्तिष्ठत्युपशान्तोऽन्तः स ब्रह्मकवचः सुखी ॥ ५० ॥
अहमर्थविमुक्तेन भावेनाभावरूपिणा ।
सर्वं शून्यं निरालम्बं चिद्रूपमिति भावयेत् ॥ ५१ ॥
इदं रम्यमिदं नेति बीजं तद्दुःखसंततेः ।
तस्मिन्साम्याग्निना दग्धे दुःखस्यावसरः कुतः ॥ ५२ ॥
राजन्नभावनास्त्रेण रम्यारम्यविभागिना ।
पौरुषातिशयेनाशु स्वेनैवान्तर्विलूयताम् ॥ ५३ ॥

बुद्धिर्भौतिकबुद्धिरित्यादिकं सर्वं स्फारे ब्रह्मणि कल्पितं सत् तदेव ब्रह्मात्मकमेव अविद्यावशात्तु अवस्थितं अतज्ज्ञानां दुःखदं प्रवर्तते ॥ ४८ ॥ अहो इति ॥ इयं चित्रा माया विश्वविमोहिनी अहो यत् यस्मात्कारणात् आत्मा पुरुषः सर्वाङ्गप्रोतमपि सर्वेष्ववयवेषु व्याप्तमपि आत्मानं स्वरूपं न पश्यति नावबुध्यते ॥ ४९ ॥ चिदाकाशेति ॥ ब्रह्मकवचः ब्रह्मैव परिपूर्णब्रह्मभावनैव कवचं रक्षकं यस्य स एव सुखी जीवन्मुक्तः ॥ ५० ॥ अहमिति ॥ अहमर्थोऽहंकारः तद्विमुक्तेनाभावरूपिणा निरुपाधिकत्वव्यपदेशेन भावेनाशयेन सर्वं जगत्कर्म निरालम्बं निराश्रयं चिद्रूपं शून्यं चिदाकाशमिति भावयेत् ॥ ५१ ॥ इदमिति ॥ इदं रम्यमिदमरम्यमिति भेदभावनं तद्दुःखसंततेर्बीजं तस्मिन् बीजे साम्याग्निना दग्धे दुःखस्य कुतोऽवसरः ॥ ५२ ॥ राजन्निति ॥ रम्यारम्यविभागिना अभावनारूपेणास्त्रेण स्वेन पौरुषातिशयेन च अन्तरेव विलूयतां छिद्यताम् ॥५३॥

अभावनेन भावनं विलूय कर्मकाननम् ।
परं समेत्य तानवं विशोक एव तिष्ठ भो ॥ ५४ ॥
भरितभुवनाभोगो भूत्वा विभागबहिष्कृतो
गलितकलनाभासोल्लासो विवेकविलासवान् ।
अधिगतपरानन्दस्पन्दश्चिराय निरामयः
शमसमसितस्वच्छाभोगो भवाभयचिद्वपुः ॥ ५५ ॥

मनुरुवाच ॥

शास्त्रसज्जनसंपर्कैः प्रज्ञामादौ विवर्धयेत् ।
प्रथमा भूमिकैषोक्ता योगस्य नवयोगिनः ॥ ५६ ॥
विचारणा द्वितीया स्यात्तृतीयाऽसङ्गभावना ।
विलापिनी चतुर्थी स्याद्वासनाविलयात्मिका ॥ ५७ ॥

अभावनेनेति । भावनं भेदभावनं तन्निबन्धनं कर्मकाननं च अभावनेन शस्त्रेण विधूय परं तानवं वासनातानवं समेत्य विशोक एव तिष्ठ । भो इति संबोधनम् ॥ ५४ ॥ भरितेति ॥ भरितभुवनाभोगः परिपूर्णात्मभावनया पूरितभुवनविस्तारो भूत्वा विभागबहिष्कृतो भेदबुद्धिरहितो गलितकलनाभासोल्लासो निर्वासनज्ञानविलासः विवेकविलासवान् अधिगतपरानन्दस्पन्दो निरामयः शमेन समः सित उज्ज्वलः स्वच्छो निर्मलश्चाभोगः परिपूर्णता यस्य तादृशश्च सन् चिराय अभयचिद्वपुः अभयं चिद्रूपं वपुर्यस्य तादृशो भव ॥ ५५ ॥ अथ ज्ञानभूमिकाः सप्त संक्षेपेण दर्शयन्नाह—शास्त्रेति ॥ शास्त्रसत्सङ्गादिभिः प्रज्ञाविवर्धनं योगस्य प्रथमा भूमिकेत्यर्थः । पूर्वं तु शुभेच्छेत्युक्ता ॥ ५६ ॥ विचारणेति ॥ विचारणा द्वितीया । असङ्गभावना तृतीया । इयमेव मनसः तनुत्वसंपादकत्वात् तनुमानसेति पूर्व-

शुद्धसंविन्मयानन्दरूपा भवति पञ्चमी ।
अर्धसुप्तप्रबुद्धाभो जीवन्मुक्तोऽत्र तिष्ठति ॥ ५८ ॥
असंवेदनरूपा च षष्ठी भवति भूमिका ।
आनन्दैकघनाकारा सुषुप्तसदृशस्थितिः ॥ ५९ ॥
तुर्यावस्थोपशान्ता च मुक्तिरेव हि केवलम् ।
समता स्वच्छता सौम्या सप्तमी भूमिका भवेत् ॥ ६० ॥
तुर्यातीता तु यावस्था परा निर्वाणरूपिणी ।
सप्तमी सा परिप्रौढा विषयः सा न जीवताम् ॥ ६१ ॥
पूर्वावस्थात्रयं त्वत्र जाग्रदित्येव संस्थितम् ।
चतुर्थी स्वप्न इत्युक्ता स्वप्नाभं यत्र वै जगत् ॥ ६२ ॥

मुक्ता । चतुर्थी तु वासनाविलयात्मकत्वात् विलापिनीत्युच्यते । पूर्वं तु वासनाविलयाच्चित्तस्य सत्त्वापत्त्या सत्त्वापत्तिरित्युक्ता ॥ ५७ ॥ शुद्धेति ॥ शुद्धो निर्वासनः संविन्मयश्च आनन्दः तद्रूपा पञ्चमी । अत्र अस्यां भूमिकायां अर्धसुप्तप्रबुद्धाभः अर्धसुप्तोऽर्धप्रबुद्धश्च यः तादृशव्यवहारो जीवन्मुक्तस्तिष्ठति ॥ ५८ ॥ असंवेदनेति अर्धत्रयं वाक्यम् । षष्ठी त्वसंवेदनरूपा आनन्दैकघनाकारा सुषुप्तसदृशस्थितिः ॥ ५९ ॥ उपशान्ता च सा भूमिका जाग्रदादित्रयातीतत्वात्तुर्यावस्था केवलं मुक्तिरेव ॥ ६० ॥ इयमेवासंवेदनरूपैव पदार्थाभाविनीति पूर्वमुक्ता । समतेति अर्धत्रयं वाक्यम् । या समता सर्वत्र परिपूर्णता या वा सौम्या स्वच्छता सा सप्तमी भूमिका निर्वाणरूपिणी तुर्यातीता परा अवस्था परिप्रौढा सा सप्तमी जीवतां न विषया । विदेहमुक्तैकविषयेत्यर्थः । इयं तु स्वरूपनिष्ठतारूपा स्वच्छता तुर्यगेति पूर्वमुक्ता ॥ ६१ ॥ पूर्वेति श्लोकत्रयं वाक्यम् । उक्तासु सप्तसु

आनन्दैकघनीभावा सुषुप्ताख्या तु पञ्चमी ।
असंवेदनरूपा तु षष्ठी भवति भूमिका ॥ ६३ ॥
तुर्यातीतपदावस्था सप्तमी भूमिकोत्तमा ।
मनोवचोभिरग्राह्या स्वप्रकाशपदात्मिका ॥ ६४ ॥
अन्तःप्रत्याहृतिवशाच्चेत्यं चेन्न विभावितम् ।
मुक्त एवास्यसंदेहो महासमतया तया ॥ ६५ ॥
यद्भोगसुखदुःखांशैरपरामृष्टपूर्णधीः ।
आत्मारामो नरस्तिष्ठेत्तन्मुक्तत्वमुदाहृतम् ॥ ६६ ॥
व्यवहार्युपशान्तो वा गृहस्थो वाथवा यतिः ।
सशरीरोऽशरीरो वा भवत्येवंमतिः पुमान् ॥ ६७ ॥
न म्रिये न च जीवामि नाहं सन्नाप्यसन्नहम् ।
अहं न किंचिच्चिदिति मत्वा जीवन्न शोचति ॥ ६८ ॥

पूर्वावस्थात्रयं जाग्रदिति संस्थितम् । चतुर्थी तु स्वप्न इत्युक्ता । यस्मात्तत्र जगत्स्वप्नाभं वर्तते ॥ ६२ ॥ पञ्चमी त्वानन्दैकघनीभावा सुषुप्ताख्या असंवेदनरूपा षष्ठी तुर्यपदाभिधा ॥ ६३ ॥ मनोवचोभिरग्राह्या स्वप्रकाशपदात्मिका उत्तमा सप्तमी भूमिका तुर्यातीतपदावस्था ॥ ६४ ॥ अन्तरिति ॥ चित्तस्यान्तःप्रत्याहृतिवशात् अन्तर्निरोधाद्धेतोश्चेत्यं न विभावितं चेत्तर्हि तया महासमतया हेतुना असंदेहः मुक्त एवासि ॥ ६५ ॥ यदिति ॥ भोगसुखदुःखांशैः भोगेषु विषयेषु ये सुखदुःखांशाः तैर परामृष्टपूर्णधीः सन्नरः आत्मारामस्तिष्ठेदिति यत् तन्मुक्तत्वमुदाहृतम् ॥ ६६ ॥ व्यवहारीति ॥ एवंमतिः पूर्वोक्तप्रकारमतियुक्तो यः पुमान्स व्यवहारी भवतु उपशान्तो वा भवतु गृहस्थो वा भवतु यतिर्वा भवतु सशरीरोऽशरीरो वा भवतु सर्वथापि मुक्त एवेत्यर्थः ॥ ६७ ॥ नेति ॥ अहं न म्रिये न च

अलेपकोऽहमजरो नीरागः शान्तवासनः ।
निरंशोऽस्मि चिदाकाश इति मत्वा न शोचति ॥ ६९ ॥
अहंमत्या विरहितः शुद्धो बुद्धोऽजरामरः ।
शान्तः समसमाभास इति मत्वा न शोचति ॥ ७० ॥
तृणाग्रेष्वम्बरे भानौ नरनागामरेषु च ।
यत्तदस्ति तदेवेति मत्वा भूयो न शोचति ॥ ७१ ॥
तिर्यगूर्ध्वमधस्तान्मे व्यापको महिमा चितः ।
तस्यानन्तविलासस्य ज्ञात्वेति क इव क्षयी ॥ ७२ ॥
बद्धवासनमर्थो यः सेव्यते सुखयत्यसौ ।
यत्सुखाय तदेवाशु वस्तु दुःखाय नाशतः ॥ ७३ ॥
अविनाभावनिष्ठत्वं प्रसिद्धं सुखदुःखयोः ।

जीवामि ॥ प्राणानां त्यागो धारणं च देहादिधर्म एव न पुनरात्मधर्म इत्यर्थः । अयमहं सन्न असन्नपि न अस्तिनास्तिव्यवहारयोरविषयत्वात् । अहं न किंचिच्चित् विश्वविलक्षणा चिद्रूप इति मत्वा जीवन्नपि न शोचति ॥ ६८ ॥ अलेपक इति ॥ अलेपको जीवो नीरागः शान्तवासनो निरंशश्चाहं चिदाकाशमस्मीति मत्वा न शोचति ॥ ६९ ॥ ७० ॥ ७१ ॥ तिर्यगिति ॥ चिद्रूपस्यानन्तविलासस्य मे महिमा तिर्यगूर्ध्वमधस्ताच्च व्यापको वर्तत इति ज्ञात्वा क इव क्षीयते ॥ ७२ ॥ बद्धेति ॥ योऽर्थो बद्धवासनं प्रगाढसङ्गं सेव्यते भुज्यते असावर्थः सुखयति सुखं करोति । यच्च वस्तु सुखाय जायते तदेवाशु नाशतो विनाशाद्धेतोः दुःखाय स्यात् ॥ ७३ ॥ अविनेति ॥ इत्थं सुखदुःखयोरविनाभावनिष्ठत्वं प्रसिद्धं अतस्ते सहैव प्रवर्तेते निवर्तेते च । यस्त्वर्थस्तनुवासनं विगतवासनं वा सेव्यते असावर्थः सुखाय मदहेतवे न भवति। कालेन नाशात् दुःख-

तनुवासनमर्थो यः सेव्यते वा विवासनम् ।
नासौ सुखाय तेनासौ नाशकाले न दुःखदः ॥ ७४ ॥
क्षीणवासनया बुद्ध्या कर्म यत्क्रियतेऽनघ ।
तद्दग्धबीजवद्भूयो नाङ्कुरं प्रविमुञ्चति ॥ ७५ ॥
देहेन्द्रियादिना कर्म करणौघेन कल्पते ।
एकः कर्तात्र भोक्ता वा क इवात्रोपपद्यते ॥ ७६ ॥
भावनां सर्वभावेभ्यः समुत्सृज्य समुत्थितः ।
शशाङ्कशीतलः पूर्णो भाति भासेव भास्करः ॥ ७७ ॥
क्रियमाणा कृता कर्मतूलश्रीर्देहशाल्मलेः ।
ज्ञानानिलसमुद्धूता प्रोड्डीय क्वापि गच्छति ॥ ७८ ॥
सर्वैव हि कला जन्तोरनभ्यासेन नश्यति ।
एषा ज्ञानकला त्वन्तः सकृज्जाता दिने दिने ॥ ७९ ॥

दोऽपि न भवति ॥ ७४ ॥ क्षीणेति ॥ यत्कर्म क्षीणवासनया बुद्ध्या क्रियते तत्कर्म दग्धबीजवत् भूयः सुखदुःखादिरूपमङ्कुरं न प्रविमुञ्चति ॥ ७५ ॥ देहेति ॥ देहेन्द्रियादिना करणौघेन करणकलापेन कर्म कल्पते । अत्र करणसमूहे कः कर्ता भोक्ता वा उपपद्यते ॥ ७६ ॥ भावनामिति ॥ सर्वभावेभ्यः सर्वपदार्थेभ्यः सकाशात्तद्विषयां भावनां समुत्सृज्य प्रत्याहृत्य समुत्थितः स्वस्यकैवल्यायोद्यतः पुमान् शशाङ्कवच्छीतलः पूर्णश्च भासा तेजसा भास्कर इव भाति ॥ ७७ ॥ क्रियमाणेति ॥ देहशाल्मलेर्देह एव शाल्मलिर्वृक्षविशेषः तस्य संबन्धिनी क्रियमाणा कृता वा कर्मतूलश्रीः पुण्यापुण्यकर्मरूपा तूलसमृद्धिर्ज्ञानानिलसमुद्धूता तत्त्वज्ञानमहावायुना विक्षिप्ता सती प्रोड्डीय क्वापि गच्छति ॥ ७८ ॥ जन्तोः संबन्धिनी सर्वैव कला विद्या अनभ्यासेन पुनःपुनः परिशीलना-

वृद्धिमेति बलादेव सुक्षेत्रव्युप्तबीजवत् ॥ ८० ॥

एकः स्फुरत्यखिलवस्तुषु विश्वरूप
आत्मा सरःसु जलधिष्विव तोयमच्छम् ।
संशान्तसंकलनभूरिकलापमेकं
सत्तांशमात्रमखिलं जगदङ्ग विद्धि ॥ ८१ ॥

मनुरुवाच ॥

यावद्विषयभोगाशा जीवाख्या तावदात्मनः ।
अविवेकेन संपन्ना या साप्याशा न तु स्वतः ॥ ८२ ॥
विवेकवशतो याता क्षयमाशा यदा तदा ।
आत्मा जीवत्वमुत्सृज्य ब्रह्मतामेत्यनामयः ॥ ८३ ॥
ऊर्ध्वादधस्त्वधस्ताच्च पुनरूर्ध्वं व्रजंश्चिरम् ।
सा संसारारघट्टस्य चिन्तारज्ज्वां घटीभव ॥ ८४ ॥

भावेन नश्यति । हिशब्दः प्रसिद्धौ । प्रसिद्धोऽयमर्थः ॥ ७९ ॥ ज्ञानं तु सुक्षेत्रव्युप्तशालिवत् अन्तर्वर्धत एव ॥ ८० ॥ एक इति ॥ सरःसु जलधिषु च तोयमिवाखिलवस्तुषु विश्वरूप एक एवात्मा स्फुरति अतः कारणादखिलं जगत्संशान्तसंकलनभूरिकलापं प्रशान्तसंकल्पभूयिष्ठकलापं सत्तांशमात्रमेकं वस्तु विद्धि ॥ ८१ ॥ यावदिति श्लोकद्वयं वाक्यम् । आत्मनः पुरुषस्य यावत् यावन्तं कालं विषयभोगाशा वर्तते तावदेव जीवाख्या जीवभावः । सा आशाप्यविवेकेन संपन्ना न तु स्वतः ॥ ८२ ॥ यदा तु सा आशा विवेकवशतः क्षयं याता तदा अनामयः सन्नात्मा जीवत्वमुत्सृज्य ब्रह्मतामेति ॥ ८३ ॥ ऊर्ध्वादिति ॥ ऊर्ध्वादूर्ध्वलोकादधः अधोलोकं व्रजन्नधस्ताच्च पुनरूर्ध्वं व्रजन्कर्मवशतया संसारारघट्टस्य संसाररूपस्य

इदं ममाहमस्येति व्यवहारं घनभ्रमम् ।
ये मोहात्परिसेवन्ते तेऽधस्ताद्यान्त्यधः शठाः ॥ ८५ ॥
अस्याहमेष मे सोऽयमहमेवं तु यैः किल ।
मोहो बुद्ध्या परित्यक्त ऊर्ध्वादूर्ध्वं प्रयान्ति ते ॥ ८६ ॥
स्वप्रकाशं स्वमात्मानमवलम्ब्याविलम्बितम् ।
आस्व संपूरिताकाशं जगन्ति नृप पश्य हे ॥ ८७ ॥
यदैवैवं चितो रूपं ततं बुद्धमखण्डितम् ।
तदैव तीर्णसंसारः परमेश्वरतां गतः ॥ ८८ ॥
ब्रह्मेन्द्रविष्णुवरुणा यद्यत्कर्तुं समुद्यताः ।
तदहं चिद्वपुः सर्वं करोमीत्येव भावयेत् ॥ ८९ ॥

घटीयन्त्रस्य चिन्तारज्ज्वां संकल्पनात्मकबन्धनरज्जौ मा घटीभव । अरघट्टघटवद्भ्रमणभाजनं माभूः ॥ ८४ ॥ इदमिति ॥ इदं पुत्रकलत्रादिकं मम मदीयमहं वास्य पित्रादेः संबन्धीति व्यवहारं घनभ्रमं मोहाद्ये सेवन्ते ते शठाः अधस्तादधो यान्ति पुनःपुनरधोगतिमेव प्राप्नुवन्ति ॥ ८५ ॥ अस्येति ॥ अहमस्य पित्रादेः संबन्धी एष पुत्रादिर्मे मदीयः अयमहमेतादृशोऽहमिति । एवं तु मोहो यैर्विवेकिभिः बुद्ध्या परित्यक्तः ते ऊर्ध्वादूर्ध्वं प्रयान्ति उत्तरोत्तरमुत्कृष्टामेव गतिं प्रयान्ति ॥ ८६ ॥ स्वप्रकाशमिति ॥ स्वप्रकाशं स्वमात्मानमविलम्बितमेवावलम्ब्य तत्त्वतो निश्चित्य आस्व सुखेन तिष्ठ । जगन्ति च सर्वाणि संपूरिताकाशमात्मानमेव पश्य ॥ ८७ ॥ यदेति ॥ एवं ततं व्याप्तं चितो रूपं यदैवाखण्डितं यथा तथा बुद्धं तदैव तीर्णसंसारः सन् बोधात्परमेश्वरतां गतः ॥ ८८ ॥ ब्रह्मेति ॥ ब्रह्मादयो यद्यत् सृष्ट्यादिकं कर्तुं समुद्यतास्तत्सर्वं चिद्वपुरहं करोमीत्येव भावयेत् चिद्रूपस्यात्मन एकत्वात् ॥ ८९ ॥

येषु येषु यदा यद्यद्दर्शनेषु निगद्यते ।
सर्वमेवाङ्ग तत्सत्यं चिद्विलासो ह्यनङ्कुशः ॥ ९० ॥
चिन्मात्रत्वं प्रयातस्य तीर्णमृत्योरचेतसः ।
यो भवेत्परमानन्दः केनासावुपमीयते ॥ ९१ ॥
नाप्यशून्यं न शून्यं च नाचिद्रूपं न चिन्मयम् ।
नात्मरूपं नान्यरूपं भुवनं भावयन्भव ।
एतत्स्वरूपमासाद्य प्रकृतिः परिशाम्यति ॥ ९२ ॥
न देशो मोक्षनामास्ति न कालो नेतरा स्थितिः ।
अहंकृतेर्विमोहस्य क्षयेणेयं विलीयते ।
प्रकृतिर्भावनानाम्नी मोक्षः स्यादेष एव सः ॥ ९३ ॥

येष्विति ॥ येषु येषु दर्शनेषु वैदिकेष्ववैदिकेषु वा यदा यस्मिन्काले यद्यन्मतं निगद्यते तत्सर्वं सत्यमेव । हि यास्मात्कारणाच्चिद्विलासः अनङ्कुशो निरर्गलः ॥ ९० ॥ चिदिति ॥ चिन्मात्रत्वं प्रयातस्य अतएव तीर्णमृत्योः उत्तीर्णसंसारस्य अचेतसः नष्टचित्तस्य यः परमानन्दो भवेत् असावानन्दः केन वा आनन्देनोपमीयते । ब्रह्मानन्दतुल्यस्यानन्दस्याभावात् ॥ ९१ ॥ नापीति अर्धत्रयं वाक्यम् ॥ भुवनं जगत् कर्तृ नापि शून्यं अशून्यमपि न आत्मनोऽन्यस्य वस्तुनोऽभावात् । इत्थमनिर्वचनीयं भुवनं भावयन् भव । एतत् एतादृशमनिर्वचनीयं रूपमासाद्य प्रकृतिरविद्या भुवनादिरूपा परिशाम्यति ॥९२॥ नेति अर्धत्रयं वाक्यम् ॥ मोक्षनामा मोक्षशब्दवाच्यो देशः कश्चिन्नास्ति । कालश्च मोक्षनामा नास्ति । इतरा स्थितिरवस्था वा मोक्षनाम्नी नास्ति । किंतु इयं भावनानाम्नी वासनारूपा प्रकृतिरविद्या अहंकृतिरूपस्य विमोहस्य क्षयेण विलीयते एष एव प्रकृ-

प्रशान्तशास्त्रार्थविचारचापलो
निवृत्तनानारसकाव्यकौतुकः ।
निरस्तनिःशेषविकल्पविप्लवः
समः सुखं तिष्ठति शाश्वतात्मकः ॥ ९४ ॥

मनुरुवाच ॥

येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचनशायी च स सम्राडिव राजते ॥ ९५ ॥
वर्णधर्माश्रमाचारशास्त्रयन्त्रणयोज्झितः ।
निर्गच्छति जगज्जालात्पञ्जरादिव केसरी ॥ ९६ ॥
वाचामतीतविषयो विषयाशादशोज्झितः ।
कामप्युपगतः शोभां शरदीव नभःस्थलम् ॥ ९७ ॥

त्तिविलय एव स मोक्षः स्यात् ॥ ९३ ॥ प्रशान्तेति ॥ प्रशान्तं शास्त्रार्थविचाररूपं चापलं यस्य । निवृत्तं नानारसं काव्यविषयं कौतुकं यस्य । निरस्ता निःशेषा विकल्पविभ्रमा भ्रान्तयो यस्य तादृशः समः साम्यनिष्ठः पुमान् शाश्वतात्मकः सुखं तिष्ठति ॥९४॥ येनेति ॥ येन केनचिदनियतेन वस्त्रवल्कलकम्बलकन्थादिना आच्छन्नः आच्छादनवान् । येनकेनचिदनियतेन भोज्यवस्तुना आशितो भोजनवान् । यत्र क्वचन स्थण्डिले पर्यङ्के वा शायी यः स बाह्यवस्तुनिःस्पृहो ब्रह्मवित्सम्राडिव साम्राज्याधीश्वर इव राजते ॥ ९५ ॥ वर्णेति ॥ वर्णधर्माश्रमाचारशास्त्रयन्त्रणया वर्णा ब्राह्मणादयः । आश्रमाः ब्रह्मचर्यादयः । वर्णधर्माणामाश्रमाचाराणां च यानि शास्त्राणि बोधकानि तेषां या यन्त्रणा नियमरूपा मर्यादा तया उज्झितो देहाद्यभिमानरहितः पुमान् पञ्जरात्केसरी सिंह इव जगज्जालान्निर्गच्छति ॥ ९६ ॥ वाचामिति श्लोकद्वयं वाक्यम् ॥

गम्भीरश्च प्रसन्नश्च गिराविव महाह्रदः ।
परानन्दरसाक्षुब्धो रमते स्वात्मनात्मनि ॥ ९८ ॥
सर्वकर्मफलत्यागी नित्यतृप्तो निराश्रयः ।
न पुण्येन न पापेन नेतरेण च लिप्यते ॥ ९९ ॥
स्फटिकः प्रतिबिम्बेन यथा नायाति रञ्जनम् ।
तज्ज्ञः कर्मफलेनान्तस्तथा नायाति रञ्जनम् ॥ १०० ॥
विहरञ्जनतावृन्दे देहकर्तनपूजनैः ।
खेदाह्लादौ न जानाति प्रतिबिम्बगतैरिव ॥ १ ॥
निःस्तोत्रो निर्विकारश्च पूज्यपूजाविवर्जितः ।
संयुक्तश्च वियुक्तश्च सर्वाचारनयक्रमैः ॥ २ ॥

विषयाशादशोज्झितः अत्यन्तविरक्तः पुमान्वाचामतीतविषयः अतीतवाग्विषयः शरदि नभःस्थलमिव कामपि निरुपाधिकां शोभामुपगतः ॥ ९७ ॥ गिरौ स्थितो महाह्रद इव गम्भीरश्च प्रसन्नश्च परानन्दरसाक्षुब्धः परमानन्दास्वादनिश्चलः स्वात्मनि स्वात्मना स्वस्वरूपेण रमते ॥ ९८ ॥ सर्वेति ॥ नेतरेण विलिप्यते पुण्यपापाभ्यामितरेण जात्यायुर्भोगरूपेण तद्विपाकेनापि न लिप्यते ॥ ९९ ॥ स्फटिक इति ॥ स्फटिको मणिः प्रतिबिम्बेन नीलपीतादिना द्रव्येण यथा रञ्जनं तद्वर्णसंक्रान्तिं नायाति तथा तज्ज्ञो ब्रह्मविदपि कर्मफलेन अन्तःकरणेन रञ्जनं नायाति ॥ १०० ॥ विहरन्निति ॥ जनतावृन्दे जनताः नानाजातीया जनसमूहाः तासां वृन्दे व्यूहे विहरन् भेदाभिमानरहितस्तज्ज्ञो देहस्य कर्तनैश्छेदनैः पूजनैः गन्धपुष्पादिभिरर्चनैः प्रतिबिम्बगतैः स्वदेहप्रतिबिम्बगतैश्छेदनपूजनैरिव खेदाह्लादौ न जानाति ॥ १ ॥ निःस्तोत्र इति ॥ तज्ज्ञः पुमान्निःस्तोत्रः स्वविषयात्परविषयाच्च स्तोत्रान्निष्क्रान्तो निर्वि-

तस्मान्नोद्विजते लोको लोकान्नोद्विजते च सः ।
रागद्वेषभयानन्दैस्त्यज्यतेऽपि च युज्यते ॥ ३ ॥
प्रमेये कस्यचिदपि नारोहति महाशयः ।
प्रमेयीक्रियते चापि बालेनाप्यदुराशयः ॥ ४ ॥
तनुं त्यजति वा तीर्थे श्वपचस्य गृहेऽथवा ।
मा कदाचन वा राजन्वर्तमाने च वा क्षणे ॥ ५ ॥
ज्ञानसंपत्तिसमये मुक्तोऽसौ विगताशयः ।
अहंभ्रान्तिर्हि बन्धाय मोक्षो ज्ञानेन तत्क्षयः ॥ ६ ॥
संपन्नो यस्य सोऽयं तु पूजार्हो मनुजैः सदा ।
स पूजनीयः स स्तुत्यो नमस्कार्यः स यत्नतः ॥ ७ ॥
स निरीक्ष्योऽभिवाद्यश्च विभूतिविभवैषिणा ॥ ८ ॥

न यज्ञतीर्थैर्न तपःप्रदानै-
रासाद्यते तत्परमं पवित्रम् ।

कारश्च पूज्यपूजाविवर्जितः स्वव्यतिरिक्तस्य पूज्यस्याभावात् । सर्वाचारनयक्रमैः कदाचित्संयुक्तः कदाचिद्वियुक्तश्च वर्तते ॥ २ ॥ तस्मादिति ॥ तस्मात्तज्ज्ञाल्लोको नोद्विजते सर्वभूताभयप्रदानात् । स च लोकान्नोद्विजते भयहेतोः स्वव्यतिरिक्तस्य वस्तुनोऽभावात् । रागादिभिस्त्यज्यते कदाचिद्युज्यते च ॥ ३ ॥ प्रमेय इति ॥ तज्ज्ञो महाशयत्वात् कस्यचिदपि प्रभोः प्रमेये प्रमाविषये नारोहति । महतामपि कदाचिद्दुर्लभो भवतीत्यर्थः । असौ तज्ज्ञोऽदुराशयत्वात् बालेनापि कदाचित् प्रमेयीक्रियते । बालस्यापि कदाचित् सुलभो भवतीत्यर्थः ॥४॥५॥६॥७॥८॥ नेति ॥ क्षीणभवामयानामात्मविदां सतां भक्त्या सेवया परमं पदमासाद्यते । तत्पवित्रं परमं पदं

आसाद्यते क्षीणभवामयानां
भक्त्या सतामात्मविदां पदं यत् ॥ ९ ॥
वसिष्ठ उवाच ॥
एवमुक्त्वा स भगवान्मनुर्ब्राह्मं गृहं ययौ ।
इक्ष्वाकुरपि तां दृष्टिमवष्टभ्य स्थिरोऽभवत् ॥ ११० ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे इक्ष्वाकूपाख्यानं
नाम त्रयोदशः सर्गः ॥ १३ ॥

---

## चतुर्दशः सर्गः

राम उवाच ॥
एवंस्थिते हि भगवञ्जीवन्मुक्तस्य सन्मतेः ।
अपूर्वोऽतिशयः कोऽसौ भवत्यात्मविदां वर ॥ १ ॥
वसिष्ठ उवाच ॥
ज्ञस्य कस्मिंश्चिदेवाङ्ग भवत्यतिशयेन धीः ।
नित्यतृप्तः प्रशान्तात्मा स आत्मन्येव तिष्ठति ॥ २ ॥

यज्ञतीर्थतपोदानैरपि नासाद्यते ॥ ९ ॥ एवमुक्त्वा स भगवानिति ॥ ब्रह्मगृहं ब्रह्मलोकम् ॥ ११० ॥ इति श्रीयोगवासिष्ठविवरणे निर्वाणप्रकरणे इक्ष्वाकूपाख्यानं नाम त्रयोदशः सर्गः ॥ १३ ॥

पूर्वं स्वविचारेण दुर्बोधमपि तत्त्वं गुरूपदेशात्सुबोधमिति दर्शितम् । इदानीं बुद्धतत्त्वस्य विश्रान्तस्य नास्ति प्रायेण लौकिको व्यवहार इति निदर्शनार्थं मुनिव्याधवृत्तान्तो निरूप्यते—एवमिति ॥ एवंस्थिते जीवन्मुक्तस्य आकाशगमनादयोऽतिशया न सन्तीति पूर्वमुक्तम् । एवंस्थिते सति अस्य सन्मतेर्जीवन्मुक्तस्य अपूर्वोऽतिशयः कोऽसौ भवति ॥ १ ॥ ज्ञस्येति ॥ ज्ञस्य धीः कस्मिंश्चिदेव विश्वविलक्षणे कुत्रचिदेव तत्त्वे अतिशयेन भवति । स च तावतैव

मन्त्रसिद्धैस्तपःसिद्धैस्तन्त्रसिद्धैश्च भूरिशः ।
कृतमाकाशयानादि का तत्र स्यादपूर्वता ॥ ३ ॥
अणिमाद्यपि संप्राप्तं तादृशैरेव भूरिशः ।
यत्नेन साधितत्वात्तैर्नेतरेणात्मदर्शिना ॥ ४ ॥
एष एव विशेषोऽस्य न समो मूढबुद्धिभिः ।
सर्वत्रास्थापरित्यागान्नीरागममलं मनः ॥ ५ ॥
एतावदेव खलु लिङ्गमलिङ्गमूर्तेः
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य ।
तज्ज्ञस्य यन्मदनकोपविषादमोह-
लोभापदामनुदिनं निपुणं तनुत्वम् ॥ ६ ॥

नित्यतृप्तः प्रशान्तात्मा च सन्नात्मन्येव तिष्ठति नान्यदाशास्ते ॥ २ ॥ मन्त्रेति ॥ का तत्र स्यादपूर्वता आकाशगमनादेः पक्ष्यादिसाधारणत्वात् जीवभावस्य वा निवृत्तेः को वा अपूर्वातिशय इत्यर्थः ॥ ३ ॥ अणिमाद्यपि अष्टविधमैश्वर्यमपि तादृशैर्मन्त्रादिसिद्धैरेव भूरिशः संप्राप्तम् । इतरेण त्वात्मदर्शिना न संप्राप्तम् । कुतः । तैरेव मन्त्रादिसिद्धैर्यत्नेन साधितत्वात्। आत्मदर्शिना त्वणिमाद्यनपेक्षिणा प्रयत्नेनासाधितत्वात् ॥ ४ ॥ एष एवेति ॥ अस्य ज्ञस्य सर्वत्र बाह्यवस्तुनि आस्थापरित्यागाद्धेतोः सर्वत्र मनो नीरागममलं चेति यत् एष एवास्य विशेषो मूढबुद्धिभिः समः साधारणो न भवति ॥ ५ ॥ तमेव विशेषमाह—एतावदिति ॥ अलिङ्गमूर्तेर्वर्णाश्रमादिलिङ्गरहितस्य संशान्तसंसृतिचिरभ्रमनिर्वृतस्य संशान्तः संसृतिरूपः चिरभ्रमो यस्य । अतएव निर्वृतस्य निश्चिन्तस्य तज्ज्ञस्य मदनकोपविषादमोहलोभापदां कामक्रोधादिनिमित्तानां आपदामनुदिनं

वसिष्ठ उवाच ॥

यथा सत्त्वमुपेक्ष्य स्वं शनैर्विप्रो दुरीहया ।
अङ्गीकरोति शूद्रत्वं तथा जीवत्वमीश्वरः ॥ ७ ॥

भूतानि द्विविधान्येव प्रतिसर्गे स्फुरन्ति वै ।
आद्यचित्स्पन्दजातानि तानि निष्कारणानि वै ॥ ८ ॥

ईश्वरात्समुपागत्य पुनर्जन्मान्तराणि तु ।
भूतान्यनुभवन्त्यङ्ग स्वकृतैरेव कर्मभिः ।
कार्यकारणभावोऽयमीदृशो जन्मकर्मभिः ॥ ९ ॥

निपुणं निर्विकारं तनुत्वं क्षय इति यत् एतावदेव लिङ्गं विशेष इत्यर्थः ॥ ६ ॥ यथेति ॥ यथा हि कश्चिद्विप्रः स्वमात्मीयं सत्त्वं जात्यादिभिः प्रशस्तत्वमुपेक्ष्याविचार्य दुरीहया पुत्रोत्पादनपर्यन्तशूद्राङ्गनासङ्गादिरूपया दुश्चेष्टया शूद्रत्वमङ्गीकरोति । तथाच मनुः—'शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् । जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते' इति । तथा दुरीहया स्वसंकल्पेन स्वाविद्यया वा ईश्वरोऽपि जीवत्वमङ्गीकरोति । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति श्रुतेः ॥ ७ ॥ भूतानीति श्लोकद्वयं सार्धं वाक्यम् ॥ द्विविधान्येव भूतानि चराचररूपाः प्राणिनः प्रतिसर्गं स्फुरन्ति प्रादुर्भवन्ति । तत्र यानि भूतानि आद्यचित्स्पन्दजातानि । स्पन्दः स्फुरणं सिसृक्षेति यावत् । आद्यचित्स्पन्दाज्जातानि भूतानि निष्कारणानि कर्मादेर्जन्मकारणस्याभावात् आत्मनश्च निर्विकारत्वेनाकारणत्वात् ॥ ८ ॥ ईश्वरात्समुपागत्य तु भूतानि स्वकृतैः कर्मभिरेव पुनःपुनर्जन्मान्तराणि अनुभवन्ति । जन्मकर्मणोरयं कार्यकारणभाव ईदृशः उक्तप्रकारः प्रथमं

अकारणमुपायान्ति सर्वे जीवाः परास्पदात् ।
पश्चात्तेषां स्वकर्माणि कारणं सुखदुःखयोः ॥ १० ॥
आत्माज्ञानात्समुत्पन्नः संकल्पः कर्मकारणम् ॥ ११ ॥
संकल्पित्वं हि बन्धस्य कारणं तत्परित्यज ।
मोक्षस्तु निःसंकल्पित्वं तदभ्यासं धिया कुरु ॥ १२ ॥
सावधानो भव त्वं च ग्राह्यग्राहकसंगमे ।
अजस्रमेव संकल्पदशाः परिहरञ्शनैः ॥ १३ ॥
मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव ।
भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ १४ ॥
अजस्रं यं यमेवार्थं पतत्यक्षगणोऽनघ ।
बध्यते तत्र रागेण विरागेण विमुच्यते ॥ १५ ॥

जन्म कर्मणः सुकृतदुष्कृतरूपस्य कारणम् । अनन्तरं तु कर्म जन्मतो नामरूपस्य कारणमित्यर्थः ॥ ९ ॥ एतदेव स्पष्टयति—अकारणमिति अर्धत्रयं वाक्यम् ॥ सुखदुःखयोरित्युपलक्षणम् । जात्यायुषोरपि नानारूपयोः स्वकर्माण्येव कारणम् । आत्माज्ञानात् आत्मतत्त्वस्याज्ञानात् समुत्पन्नः संकल्पस्तु कर्मणां कारणम् ॥ १० ॥ ११ ॥ ॥ १२ ॥ सावधान इति ॥ चशब्दो हेत्वर्थे । अतो हेतोः स्वसंकल्पदशाः शनैरभ्यासक्रमेण परिहरन् ग्राह्यग्राहकसंगमे दृश्यदर्शनसंबन्धे अजस्रमेव सावधानो भव अव्यवहितो भव ॥ १३ ॥ अवधानप्रकारमेवाह—मा भवेति ॥ ग्राह्यभावात्मा दृश्यभावादात्माऽभिमानी मा भव । ग्राहकात्मा द्रष्टृत्वाभिमानी मा भव किंतर्हि अखिलानां भावानां कर्मकर्त्रादिवासनां त्यक्त्वा यच्छिष्टं वस्तु कर्मादिविलक्षणं तन्मयो भव ॥ १४ ॥ अजस्रमिति ॥ अक्षगणः

यत्किंचिद्रोचते चित्ते तद्बद्धोऽसि भवस्थितौ ।
न किंचिद्रोचते चित्ते तन्मुक्तोऽसि भवस्थितौ ॥ १६ ॥
तस्मात्पदार्थनिचयाद्राम स्थावरजङ्गमात् ।
तृणादेर्देवपर्यन्तान्मा किंचित्तव रोचताम् ॥ १७ ॥
अरतिः सन्यदश्नासि यत्करोषि जहासि यत् ।
न कर्तासि न भोक्तासि तत्र मुक्तमतिः शमी ॥ १८ ॥
सन्तोऽतीतं न शोचन्ति भविष्यच्चिन्तयन्ति नो ।
वर्तमानं च गृह्णन्ति क्रमप्राप्तं सदानघ ॥ १९ ॥
मनसि ग्रथिताः पाशास्तृष्णामोहमदादयः ।
मनसैव मनो नाम छेदनीयं विजानता ॥ २० ॥
विवेकेनातितीक्ष्णेन बलादय इवायसा ।
मनसैव मनश्छिन्धि संसारभ्रान्तिशान्तये ॥ २१ ॥
क्षालयन्ति मलेनैव मलं क्षालनकोविदाः ।
वारयन्त्यस्त्रमस्त्रेण विषं प्रतिविषेण च ॥ २२ ॥
जीवस्य त्रीणि रूपाणि स्थूलसूक्ष्मपराणि तु ।
तत्रास्य यत्परं रूपं तद्भज द्वे परित्यज ॥ २३ ॥
पाणिपादमयो योऽयं देहो भोगाय वल्गति ।
भोगार्थमेतज्जीवस्य रूपं स्थूलमिह स्थितम् ॥ २४ ॥

इन्द्रियसमूहोयं यमेवार्थमजस्रं पतति गच्छति तत्र रागेण चेत्पतति तर्हि बध्यते। विरागेण चेत्पतति तर्हि विमुच्यते ॥१५॥ एतदेवाह—यदिति ॥ १६ ॥ तस्मादिति ॥ तव तुभ्यमित्यर्थः ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥ विवेकेनेति ॥ विवेकेन अतितीक्ष्णं यन्मनस्तेन मनसा मलिनं मनश्छिन्धीत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥

स्वसंकल्पमयाकारे यावत्संसारभावि यत् ।
चित्तं तद्विद्धि जीवस्य रूपं रामातिवाहिकम् ॥ २५ ॥
आद्यन्तरहितं सत्यं चिन्मात्रं निर्विकल्पकम् ।
यत्तद्विद्धि परं रूपं जीवस्याद्यं तृतीयकम् ॥ २६ ॥
एतत्तुर्यपदं शुद्धमत्र बद्धपदो भव ।
संपरित्यज्य पूर्वे द्वे मा तत्रात्ममतिर्भव ॥ २७ ॥

राम उवाच ॥

जाग्रत्स्वप्नसुषुप्तेषु स्थितं त्रिष्वप्यलक्षितम् ।
तुर्यं ब्रूहि विशेषेण विविच्य मुनिनायक ॥ २८ ॥

वसिष्ठ उवाच ॥

अहंभावानहंभावौ त्यक्त्वा सदसती तथा ।
यदसंसक्तमस्वच्छं स्थितं तत्तुर्यमुच्यते ॥ २९ ॥
या स्वच्छा समता शान्ता जीवन्मुक्तव्यवस्थितिः ।
साक्ष्यवस्था व्यवहृतौ सा तुर्यकलनोच्यते ॥ ३० ॥

॥ २४ ॥ स्वेति ॥ चित्तमेवास्य जीवस्य आतिवाहिकम् । लोकान्तरगमनागमनयोग्यं सूक्ष्मरूपमित्यर्थः ॥ २५ ॥ २६ ॥ एतदिति ॥ तुरीयं स्थूलसूक्ष्मकारणशरीरापेक्षया चतुर्थम् ॥ २७ ॥ जाग्रदिति ॥ जाग्रदादिषु त्रिषु स्थितं अवस्थितमपि जाग्रदादिभिरलक्षितं अवशेषितं असंस्पन्दं तुर्यं ब्रूहीत्यर्थः ॥ २८ ॥ अहमिति ॥ यच्चैतन्यं अहंभावानहंभावौ अहं नाहमिति चाभिमानं सदसती सत्त्वासत्त्वाभिमानं च त्यक्त्वा असंसक्तं स्वच्छं च स्थितं तत्तादृशचैतन्यं तुर्यमुच्यते ॥ २९ ॥ येति ॥ स्वच्छा निष्कलङ्का समतया शान्ततया च जीवन्मुक्तस्य स्थितिरूपायां व्यवहृतौ साक्ष्यवस्था औदासीन्या-

नैतज्जाग्रन्न च स्वप्नः संकल्पानामसंभवात् ।
सुषुप्तभावो नाप्येतदभावाज्जडतास्थितेः ॥ ३१ ॥
शान्तसम्यक्प्रबुद्धानां यथास्थितमिदं जगत् ।
विलीनं तुर्यमित्याहुरबुद्धानां स्थिरं स्थितम् ॥ ३२ ॥
अहंकारकलात्यागे समतायाः समुद्गमे ।
विशरारौ कृते चित्ते तुर्यावस्थोपतिष्ठते ॥ ३३ ॥

वसिष्ठ उवाच ॥

अथेमं शृणु दृष्टान्तं कथ्यमानं मयाधुना ।
प्रबुद्धोऽपि यथा बोधमुपैषि विबुधोपम ॥ ३४ ॥
कस्मिंश्चित्काननाभोगे महामौनव्यवस्थितम् ।
दृष्ट्वाद्भुतमिदं किंचिन्मुनिं पप्रच्छ लुब्धकः ॥ ३५ ॥
पश्चादुपगतो बाणभिन्नं मृगमभिद्रुतम् ।
मुने मदीयबाणेन विद्धो मृग इहागतः ।
क्व प्रयातो मृग इति प्रत्युवाच स तं मुनिः ॥ ३६ ॥
समशीला वयं साधो मुनयो वनवासिनः ।
नास्माकमस्त्यहंकारो व्यवहारेषु यः क्षमः ॥ ३७ ॥

वस्था सा तुर्यकलना तुर्यावस्थोच्यते ॥ ३० ॥ नैतदिति ॥ एतत्तुर्यपदं जाग्रन्न स्वप्नश्च न संकल्पानामभावात् । एतत्सुषुप्तभावोऽपि न जडतास्थितेरभावात् ॥ ३१ ॥ शान्तेति ॥ शान्ता ये सम्यक्प्रबुद्धाः तेषां यथास्थितमेवेदं जगत् ब्रह्मणि विलीनं तत्तुर्यमित्याहुः । अबुद्धानां तु स्थिरमेव स्थितम् ॥ ३२ ॥ अहमिति ॥ विशरारौ विशरणशीले ॥ ३३ ॥ ३४ ॥ कस्मिन्निति ॥ महामौनव्यवस्थितम् । महामौनं नाम द्वैतप्रपञ्चाननुसंधानम् ॥ ३५ ॥ ३६ ॥ समेति ॥

सर्वाणीन्द्रियकर्माणि करोतीह सखे मनः ।
अहंकारमयं तन्मे नूनं प्रगलितं चिरम् ॥ ३८ ॥
जाग्रत्स्वप्नसुषुप्ताख्या दशा वेद्मि न काश्चन ।
तुर्य एवावतिष्ठेऽहं तत्र दृश्यं न विद्यते ॥ ३९ ॥

वसिष्ठ उवाच ॥

इति तस्य वचः श्रुत्वा मुनिमुख्यस्य राघव ।
लुब्धकोऽर्थमविज्ञाय जगामाभिमतां दिशम् ॥ ४० ॥
अतो वच्मि महाबाहो नास्ति तुर्येतरा दशा ।
निर्विकल्पा हि चित्तुर्यं तदेवास्तीह नेतरत् ॥ ४१ ॥
जाग्रत्स्वप्नसुषुप्ताख्यं त्रयं रूपं हि चेतसः ।
शान्तं घोरं च मूढं च त्र्यात्म चित्तमिह स्थितम् ॥ ४२ ॥
घोरं जाग्रन्मयं चित्तं शान्तं स्वप्नमयं स्थितम् ।
मूढं सुषुप्तभावस्थं त्रिभिर्हीनं मृतं भवेत् ॥ ४३ ॥

समशीलाः समं ब्रह्मैव शीलयन्त्यनुसंदधत इति समशीलाः । शील समाधाविति धातुः ॥ ३७ ॥ ३८ ॥ जाग्रदिति ॥ तुर्ये पूर्वोक्तायां तुर्यावस्थायाम् ॥ ३९ ॥ ४० ॥ अत इति ॥ तुर्येतरा तुर्यव्यतिरिक्ता दशा वस्तुतो नास्ति कल्पितत्वात् । हि यस्मात्कारणात् निर्विकल्पा चिदेव तुर्यम् ॥ ४१ ॥ जाग्रदिति ॥ हि यस्मात्कारणात् जाग्रत्स्वप्नसुषुप्ताख्यं त्रयं चेतस एव रूपं अवस्था नात्मनोऽतो घोरं शान्तं मूढं चेति जाग्रदादिषु चित्तं त्र्यात्म त्रय आत्मानः स्वभावा यस्य तादृशं स्थितम् ॥ ४२ ॥ एतदेव विवृणोति—जाग्रन्मयं चित्तं घोरं भवेत् सुखदुःखसंरम्भबाहुल्यात् । स्वप्नमयं चित्तं शान्तं तथाविधसंरम्भाभावात् । सुषुप्तभावस्थं मूढं जाड्यभूयिष्ठत्वात् । त्रिभिः शान्तादिरूपैः हीनं तु चित्तं मृतं भवेत् निर्विकारत्वात् ॥ ४३ ॥

यच्च चित्तं मृतं यच्च सत्त्वमेकं स्थितं समम् ।
तदेव योगिनः सर्वे यत्नात्संपादयन्ति हि ॥ ४४ ॥

समस्तसंकल्पविलासमुक्ते
तुर्ये पदे तिष्ठ निरामयात्मा ।
यत्र स्थिताः साधु सदैव मुक्ताः
प्रशान्तभेदा मुनयो महान्तः ॥ ४५ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे मुनिव्याधोपाख्यानं नाम चतुर्दशः सर्गः ॥ १४ ॥

---

## पञ्चदशः सर्गः

वसिष्ठ उवाच ॥

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमग्रिमम् ॥ १ ॥
शान्त एव चिदाकाशे स्वस्थे समसमात्मनि ।
समग्रशक्तिखचिते ब्रह्मेति कलिताभिधे ॥ २ ॥

यच्चेति ॥ यच्च चित्तं मृतमित्युक्तं तच्च तदेव चित्तं सममेकं च सत्त्वं सत्त्वगुणरूपं स्थितम् । अतस्तदेव चित्तं सर्वे योगिनो यत्नात्संपादयन्ति ॥ ४४ ॥ समस्तेति ॥ यत्र यस्मिंस्तुर्ये पदे ॥४५॥ इति श्रीयोगवासिष्ठविवरणे निर्वाणप्रकरणे मुनिव्याधोपाख्यानं नाम चतुर्दशः सर्गः ॥ १४ ॥

पूर्वं विश्रान्तस्य बाह्यव्यवहारभारो नास्तीति दर्शितम् । इदानीं सर्वस्य चास्य ज्ञानशास्त्रस्य ज्ञानभूमिकासारत्वात् तत्स्वरूपं विस्तरेण निरूपयितुं अन्तिममिदमाख्यानमारभ्यते—सिद्धान्त इति ॥ शान्तमग्रिममिदं ब्रह्मैवास्ति अविद्या माया तत्कार्यं च नास्तीति सर्वप्रपञ्चापह्नव एवाध्यात्मशास्त्राणां सिद्धान्तः ॥ १ ॥ शान्त इति

निर्णीय केचिच्छून्यत्वं केचिद्विज्ञानमात्रताम् ।
केचिदीश्वररूपत्वं विवदन्ते परस्परम् ॥ ३ ॥
सर्वमेव परित्यज्य महामौनी भवानघ ।
निर्वाणवान्निर्मननः क्षीणचित्तः प्रशान्तधीः ॥ ४ ॥
आत्मन्येव प्रशान्तात्मा मूकान्धबधिरोपमः ।
नित्यमन्तर्मुखो भूत्वा त्वमास्वान्तः प्रपूर्णधीः ॥ ५ ॥
जाग्रत्येव सुषुप्तस्थः कुरु कर्माणि राघव ।
अन्तः सर्वपरित्यागी बहिः कुरु यथागतम् ॥ ६ ॥
चित्तसत्ता परं दुःखं चित्तासत्ता परं सुखम् ।
अन्तश्चित्तं चिदेकात्मा नय क्षयमवेदनात् ॥ ७ ॥

श्लोकद्वयं वाक्यम् ॥ शान्तादिलक्षणे ब्रह्मेति कलिताभिधे चिदाकाश एव केचिद्वादिनः शून्यत्वं केचित्तु विज्ञानमात्रतां केचित्पुनरीश्वररूपत्वं निर्णीय परस्परं विवदन्ते ॥ २ ॥ ३ ॥ सर्वमिति ॥ त्वं च सर्वमेव विवादं परित्यज्य निर्मननो निःसंकल्पविकल्पः क्षीणचित्तो निर्वासनचित्तः प्रशान्तधीश्च सन् महामौनी बाह्यमननुसंदधन् निर्वाणवान् जीवन्मुक्तो भव ॥ ४ ॥ आत्मनीति ॥ त्वं नित्यमन्तर्मुखो भूत्वा आत्मन्येव प्रशान्तात्मा निर्वृतचित्तः मूकान्धबधिरोपमः चित्तस्यान्तर्मुखत्वात् निष्फलबाह्येन्द्रियव्यापारः अन्तः प्रपूर्णधीरास्व तिष्ठ ॥ ५ ॥ जाग्रतीति ॥ जाग्रत्येव सत्येव बाह्येन्द्रियव्यापारे सुषुप्तस्थो निर्विकारचित्तः कर्माणि कुरु । तदेव स्पष्टयति—अन्तः सर्वपरित्यागी रागद्वेषादिकं सर्वं परित्यज्य बहिर्यथागतं यथाप्राप्तं कर्म कुरु ॥ ६ ॥ चित्तेति ॥ यतश्चित्तसत्तासत्ते एव परे दुःखसुखे । अतश्चिदेकात्मा चिदेकरसः सन् अवेदनात्

दृष्ट्वा रम्यमरम्यं वा स्थेयं पाषाणवत्समम् ।
एतावतात्मयत्नेन जिता भवति संसृतिः ॥ ८ ॥
संवेदनीयं न सुखं नासुखं नैव मध्यमम् ।
एतावतात्मयत्नेन दुःखान्तोऽनन्त आप्यते ॥ ९ ॥
आपीनमण्डलशशाङ्कवदन्तरेव
श्रीमद्रसायनमयः सुखमेति तज्ज्ञः ।
विज्ञातसर्वभुवनत्रयवस्तुसारः
कुर्वन्न नाम कुरुते परमभ्युपेतः ॥ १० ॥

राम उवाच ॥

सप्तानां योगभूमीनामभ्यासः क्रियते कथम् ।
कीदृशानि च चिह्नानि भूमिकां प्रति योगिनः ॥ ११ ॥

वसिष्ठ उवाच ॥

प्रवृत्तश्च निवृत्तश्च भवति द्विविधः पुमान् ।
स्वर्गापवर्गोन्मुखयोः शृणु लक्षणमेतयोः ॥ १२ ॥

बाह्यानन्तुसंधानाद्धेतोश्चित्तं क्षयं नय ॥ ७ ॥ दृष्ट्वेति ॥ रम्यमरम्यं वा दृष्ट्वा पाषाणवत् समं निर्विकारं स्थेयम् । एतावतैवात्मयत्नेन संसृतिर्जिता भवति ॥ ८ ॥ संवेदनीयमिति ॥ सुखमेतत् दुःखमेतत् मध्यममनुभवरूपमेतदिति त्रितयमपि न संवेदनीयं नानुसंधानीयम् । एतावतात्मयत्नेन अनन्तो दुःखान्तः आत्यन्तिकी दुःखनिवृत्तिराप्यते ॥ ९ ॥ आपीनेति ॥ आपीनमण्डलशशाङ्कवत् पूर्णेन्दुवत्तज्ज्ञः अन्तः श्रीमद्रसायनमयः अमृतमयः सुखं स्वरूपसुखमेति । विज्ञातसर्वभुवनत्रयवस्तुसारः तज्ज्ञः परं परमात्मानं अभ्युपेतः कर्माणि कुर्वन्नपि न नाम कुरुते न कुरुत एव अभिमानाभावात् ॥ १० ॥ ११ ॥ प्रवृत्त इति ॥ स्वर्गापवर्गोन्मुखयोः सका-

कियत्तन्नाम निर्वाणं वरं संसृतिरेव मे ।
इति निर्णीय कर्ता यः स प्रवृत्त उदाहृतः ॥ १३ ॥
चलार्णवयुगच्छिद्रकूर्मग्रीवाप्रवेशवत् ।
अनेकजन्मनामन्ते विवेकी जायते पुमान् ॥ १४ ॥
असारा बत संसारव्यवस्थालं ममैतया ।
किं कर्मभिः पर्युषितैर्दिनं तैरेव नीयते ॥ १५ ॥

सधर्मानुष्ठानेन स्वर्गोन्मुखः प्रवृत्तः । निष्कामधर्मानुष्ठानेनापवर्गोन्मुखो निवृत्तः ॥ १२ ॥ कियदिति ॥ तत् निर्वाणं नाम कियत् अल्पमेव । भोक्तव्यस्य वस्त्वन्तरस्याभावात् । संसृतिरेव मे वरं प्रार्थनीयं वस्तु भोक्तव्यानां विषयसुखानामानन्त्यात् । इति निर्णीय यः प्रवृत्तिहेतुभूतानि कर्माणि कर्ता स पुमान्प्रवृत्त उदाहृतः ॥ १३ ॥ चलेति ॥ चलार्णवयुगच्छिद्रकूर्मग्रीवाप्रवेशवत् चलयोरर्णवयोर्युगस्य युग्मस्य छिद्रे मध्यवर्तितीरविवरे कूर्मस्य ग्रीवया साधनभूतया प्रवेशे सति यथा पुरतो निर्गमने पश्चान्निवर्तते तथैव छिद्रावस्थाने वा नच क्वापि विश्रान्तिः तथा प्राक्तनं भवसागरं परित्यज्य भवान्तरं प्रविविक्षोर्जीवस्य न क्वापि विश्रान्तिः । तथाहि । प्राक्तने जन्मनि जरामरणादिदुःखपरम्परा भाविनि बाल्यादिदुःखसंततिः मध्यवर्तिनि यातनादेहे गर्भवासे च महत् दुःखमिति । इत्थं दुःखमयानां अनेकेषां जन्मनां अन्ते पुमान् कुतश्चित् पुण्यपरिपाकात् विवेकी जायते ॥ १४ ॥ असारेति ॥ संसारव्यवस्था असारा निःसारा बत । मम एतया संसारव्यवस्थया अलम् । पर्युषितैर्गतसारैः कर्मभिरपि किं फलं किमिति तैरेव पर्युषितैः कर्मभिर्दिन-

क्रियातिशयनिर्मुक्तं किं स्याद्विश्रमणं परम् ।
इति निश्चयवान्योऽन्तः स निवृत्त इति स्मृतः ॥ १६ ॥
कथं विरागवान्भूत्वा संसाराब्धिं तराम्यहम् ।
एवं विचारणपरो यदा भवति सन्मतिः ॥ १७ ॥
विरागमुपयात्यन्तर्वासनास्वनुवासरम् ।
क्रियासूदाररूपासु क्रमते मोदतेऽन्वहम् ॥ १८ ॥
ग्राम्यासु जडचेष्टासु सततं विचिकित्सति ।
नोदाहरति मर्माणि पुण्यकर्माणि सेवते ॥ १९ ॥
अनन्योद्वेगकारीणि मृदुकर्माणि सेवते ।
पापाद्बिभेति सततं न च भोगमपेक्षते ॥ २० ॥
स्नेहप्रणयगर्भाणि पेशलान्युचितानि च ।
देशकालोपपन्नानि वचनान्यभिभाषते ।
तदासौ प्रथमामेकां प्राप्तो भवति भूमिकाम् ॥ २१ ॥

मखिलं नीयते ॥ १५ ॥ क्रियातिशयेति ॥ क्रियातिशयेन निर्मुक्तं कर्मफलतारतम्यरहितं परमुत्कृष्टं विश्रमणं किं स्यात् इत्येवमन्तर्निश्चयवान् यो मुमुक्षुः स निवृत्त इति स्मृतः ॥ १६ ॥ कथमिति श्लोकषट्कं वाक्यम् ॥ विरागो वैराग्यम् ॥ १७ ॥ अनुवासरं प्रतिदिनं वासनासु विरागमुपयाति । उदाररूपासु प्रशस्तासु क्रमते कर्तुमुत्सहते । 'वृत्तिसर्गतायनेषु क्रमः' इत्यात्मनेपदम् ॥ १८ ॥ ग्राम्यास्विति ॥ ग्राम्यासु ग्रामे भवासु जडानां चेष्टासु कृष्यादिषु विचिकित्सति संशयेन युक्त इत्यर्थः । परेषां मर्माणि नोदाहरति नोद्घाटयति । 'न कंचिन्मर्मणि स्पृशेत्' इति निषेधात् ॥ १९ ॥ अनन्योद्वेगकारीणि अन्येषामभयंकराणि । मृदुकर्माणि अहिंस्राणि कर्माणि ॥ २० ॥ स्नेहप्रणयगर्भाणि स्नेहः प्रेमा प्रणयो विश्रम्भस्तद्गर्भाणि

मनसा कर्मणा वाचा सज्जनानुपसेवते ।
यतःकुतश्चिदानीय ज्ञानशास्त्राण्यवेक्षते ॥ २२ ॥
एवं विचारवान्यः स्यात्संसारोत्तरणं प्रति ।
स भूमिकावानित्युक्तः शेषस्त्वार्य इति स्मृतः ॥ २३ ॥
विचारनाम्नीमितरामागतो योगभूमिकाम् ।
श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणः ।
मुख्यया व्याख्यया ख्याताञ्श्रयति श्रेष्ठपण्डितान् ॥ २४ ॥
पदार्थप्रविभागज्ञः कार्याकार्यविनिर्णयम् ।
जानात्यधिगतश्रव्यो गृहं गृहपतिर्यथा ॥ २५ ॥
मदाभिमानमात्सर्यदम्भमोहातिशायिताम् ।
बहिरप्यर्थितामीषत्त्यजत्यहिरिव त्वचम् ॥ २६ ॥

॥ २१ ॥ मनसा वाचा च सज्जनान् ज्ञानिन उपसेवते शुश्रूषते । इत्थमाचरन्सन्मतिः प्रथमां शुभेच्छारूपामेकां भूमिकां प्राप्तो भवतीत्यन्वयः ॥ २२ ॥ एवमिति ॥ संसारोत्तरणं प्रति एवं पूर्वोक्तप्रकारेण यो विचारवान्स्यात् स एव भूमिकावानित्युक्तः प्रथमभूमिकां प्राप्त इत्युच्यते । शेषस्तु सन्मार्गवर्ती आर्य इति स्मृतः ॥ २३ ॥ विचारेति श्लोकपञ्चकं वाक्यम् ॥ श्रुतिस्मृतिसदाचार-धारणाध्यानकर्मणः श्रुत्यादयः कर्माणि कर्तव्यानि अनुसंधेयानि च येषां तान् । मुख्यया प्रशस्तया व्याख्यया अध्यात्मशास्त्राणां व्याख्यानेन ख्यातान् श्रेष्ठपण्डितान् श्रयति । ध्यानकर्मणामिति पाठे निर्धारणे षष्ठी । श्रुत्यादितत्पराणां मध्ये ये श्रेष्ठाः पण्डितास्तान् श्रयतीत्यर्थः ॥ २४ ॥ पदार्थप्रविभागज्ञः नित्यानित्यवस्तुप्रविभा-गज्ञः अधिगतश्रव्यः श्रुताध्यात्मशास्त्रः गृहपतिः गृहमिव कार्या-कार्यविनिर्णयं तत्त्वतो जानाति ॥ २५ ॥ ईषद्बहिरर्थितां स्फुरितामपि

इत्थंभूतमतिः शास्त्रे गुरुसज्जनसेवया ।
स रहस्यमशेषेण यथावदधिगच्छति ॥ २७ ॥
असंसङ्गाभिधामन्यां तृतीयां योगभूमिकाम् ।
ततः पतत्यसौ कान्तः पुष्पशय्यामिवामलाम् ॥ २८ ॥
यथावच्छास्त्रवाक्यार्थे मतिमाधाय निश्चलाम् ।
तापसाश्रमविश्रान्तैरध्यात्मकथनक्रमैः ॥ २९ ॥
संसारनिन्दकैस्तद्वद्वैराग्यकथनक्रमैः ।
शिलाशय्यासनासीनो जरयत्यायुराततम् ॥ ३० ॥
वनावनिविहारेण चित्तोपशमशोभिना ।
असङ्गसुखसौख्येन कालं नयति नीतिमान् ॥ ३१ ॥

मदाभिमानमात्सर्यदम्भमोहातिशायितां मदादीनामतिशयसंपत्तिं अहिस्त्वचमिव त्यजति ॥ २६ ॥ इत्थंभूतमतिः पूर्वोक्तसद्वासनावासितमतिः सः द्वितीयभूमिकां प्राप्तो गुरुसज्जनसेवया साधनेन शास्त्रे रहस्यं तत्त्वं यथावत्सम्यगधिच्छति ॥ २७ ॥ असंसंगेति श्लोकपञ्चकं वाक्यम् ॥ असंसङ्गाभिधां तृतीयां तनुमानसेति या पूर्वोक्ता सैव मानमस्य । तनुत्वाद्विषयेष्वासङ्गाभावादसंसङ्गामिधासंपन्नेति न पूर्वोत्तरविरोधः ॥ २८ ॥ शास्त्राणां अध्यात्मविषयाणां वाक्यार्थे आत्माद्वैतलक्षणे यथावन्निश्चलां मतिमाधाय तापसाश्रमेषु विश्रान्तैरध्यात्मनिष्ठैः सह अध्यात्मकथनक्रमैः ॥ २९ ॥ संसारनिन्दकैर्वैराग्यकथनैश्च शिलायामेव शय्यायां यत्रैवासन एवासीनः सन्नाततमायुर्जरयति क्षपयति ॥ ३० ॥ व्युत्थानदशायां वनावनिविहारेण समाधौ पुनश्चित्तोपशमशोभिना असङ्गसुखसौख्येन शब्दादिसङ्गसुखादन्यत् यत्सौख्यं तेन अविद्यमानं सङ्गसुखं येषां

अभ्यासात्साधुशास्त्राणां करणात्पुण्यकर्मणाम् ।
जन्तोर्यथावदेवेयं वस्तुदृष्टिः प्रसीदति ॥ ३२ ॥
तृतीयां भूमिकां प्राप्य बुद्धोऽनुभवति स्वयम् ।
द्विप्रकारमसंसङ्गं तस्य भेदमिमं शृणु ॥ ३३ ॥
द्विविधोऽयमसंसङ्गः सामान्यः श्रेष्ठ एव च ।
नाहं भोक्ता न कर्ता च न बाध्यो न च बाधकः ॥ ३४ ॥
इत्यसञ्जनमर्थेषु सामान्यासङ्गनामकम् ॥ ३५ ॥
प्राक्कर्मनिर्मितं सर्वमीश्वराधीनमेव वा ।
सुखं वा यदि वा दुःखं कैवात्र मम कर्तृता ॥ ३६ ॥
भोगाभोगा महारोगाः संपदः परमापदः ।

तेषां आत्मारामाणां यत्सौख्यं तेनेति वा स्वरूपसुखमुच्यते । तेन च कालं जीवितकालं नयति ॥ ३१ ॥ इयं वस्तुदृष्टिः असंसङ्गाभिधायां भूमिकायां या ज्ञानकक्षा सेयमित्यर्थः ॥ ३२ ॥ तत्रैवावान्तरभेदनिरूपणायाह—तृतीयामिति ॥ तृतीयां भूमिकां प्राप्य बुद्धो ज्ञानी सामान्यं श्रेष्ठमेव च द्विप्रकारमसंसङ्गमनुभवति ॥ ३३ ॥ नेति ॥ अहं कर्ता न निष्क्रियत्वात् । भोक्ता च न नित्यतृप्तत्वात् । बाधकश्च न निर्व्यापारत्वात् ॥ ३४ ॥ इत्येवमर्थेषु यदसञ्जनं सङ्गराहित्यं तत्सामान्यासङ्गनामकम् ॥ ३५ ॥ एतदेव प्रपञ्चयति—प्रागिति श्लोकत्रयं वाक्यम् ॥ सुखं वा दुःखं वा सर्वं निरीश्वरवादे प्राक्कर्मनिर्मितम् । सेश्वरवादे तु ईश्वराधीनमेव । अत्रास्मिन्पक्षद्वयेऽपि मम कैव कर्तृता । न काचिदित्यर्थः ॥ ३६ ॥ भोगाभोगाः विषयविस्ताराः महारोगाः पर्यन्तपरितापित्वात् संपदः समृद्धयः परमापदः अर्जनरक्षणादिनिमित्तदुःखहेतुत्वात् ।

वियोगायैव संयोगा आधयो व्याधयो धियः ॥ ३७ ॥
कालः कवलनोद्युक्तः सर्वभावान्विनाशयन् ।
तिष्ठतीति विचारो यः सामान्योऽसावसंगमः ॥ ३८ ॥
अनेन क्रमयोगेन संयोगेन महात्मनाम् ।
वियोगेनासतामन्तः प्रयोगेणात्मसंविदाम् ॥ ३९ ॥
पौरुषेण प्रयत्नेन संतताभ्यासयोगतः ।
करामलकवद्वस्तुन्यागते स्फुटतां दृढम् ॥ ४० ॥
नाहं कर्तेश्वरः कर्ता कर्म वा प्राक्तनं मम ।
कृत्वा दूरतरे नूनमिति शब्दार्थभावनाम् ॥ ४१ ॥
संसाराम्बुनिधेः पारे सारे परमकारणे ।
यन्मौनमासनं शान्तं तच्छ्रेष्ठासङ्ग उच्यते ॥ ४२ ॥

आधयश्चिन्ता धियो व्याधयः बुद्धिक्लेशहेतुत्वात् ॥ ३७ ॥ कालश्च कवलनोद्युक्तः संहारोद्यतः सन्सर्वभावान्विनाशयन् तिष्ठतीति यो विचारः असौ सामान्यासंगमः ॥ ३८ ॥ श्रेष्ठमसङ्गमाह—अनेनेति श्लोकचतुष्टयं वाक्यम् ॥ अनेन पूर्वोक्तक्रमयोगेन अभ्यासयोगेन महात्मनां संयोगेन असतां दुर्जनानां वियोगेन वर्जनेन आत्मसंविदां आत्मविचाराणां प्रयोगेण च ॥ ३९ ॥ पौरुषेण प्रयत्नेन यः संतताभ्यासः समाध्यभ्यासः तद्योगतः करामलकवद्वस्तुनि स्फुटतामागते सति ॥ ४० ॥ नाहं कर्ता ईश्वरः प्राक्तनं वा कर्मैव कर्तेति शब्दार्थभावनां शब्दार्थानुसंधानं दूरतरेऽत्यन्तदूरे कृत्वा त्यक्त्वा ॥ ४१ ॥ परमकारणे सर्वकारणे सारे अबाधिते संसाराम्बुनिधेः पारे प्रपञ्चातीते परे ब्रह्मणि मौनं शान्तं च यदासनं तच्छ्रेष्ठासङ्ग

यन्नान्तर्न बहिर्नाधो नोर्ध्वं नाशासु नाम्बरे ।
न पदार्थे नापदार्थे न जडे न च चेतने ॥ ४३ ॥
आश्रितं भासनं शान्तमभासनमभावनम् ।
अनाद्यन्तमजं कान्तं तच्छ्रेष्ठासङ्ग उच्यते ॥ ४४ ॥
संतोषामोदमधुरः सत्कार्यामलपल्लवः ।
चित्तनालाग्रसंलीनो विघ्नकण्टकसंकटः ॥ ४५ ॥
विवेकपद्मां रूढोऽन्तर्विवेकार्कविकासितः ।
फलं फलत्यसंसङ्गां तृतीयां भूमिकामिमाम् ॥ ४६ ॥
समवायाद्विशुद्धानां संचयात्पुण्यकर्मणाम् ।

उच्यते ॥ ४२ ॥ तदेव विशिनष्टि—यदिति श्लोकद्वयं वाक्यम् ॥ यद्भासनरूपमाश्रितमन्तरादिभिः देशविशेषैर्भावाभावरूपैः जडाजड-रूपैर्वस्तुभिर्न परिच्छिद्यते ॥ ४३ ॥ अभासनं अविद्यमानं स्वव्य-तिरिक्तं भासनं प्रकाशकं यस्य । अभावनं अविद्यमानं भावनं स्वव्यतिरिक्तं कारणं यस्य तादृशं सर्वप्रकाशकं सर्वकारणं च अना-द्यन्तमजं शान्तं कान्तं च तत्तादृशं भासनरूपमाश्रितं श्रेष्ठासङ्ग उच्यते ॥ ४४ ॥ अस्यास्तृतीयभूमिकाया हेतुमाह—संतोषेति श्लोक-द्वयं वाक्यम् ॥ संतोषामोदमधुरः अलंबुद्धिः संतोषः तज्जन्येना-मोदेन हर्षेण मधुरः मकरन्दवान् । सत्कार्याण्येवामलानि पल्लवानि पत्राणि यस्य सः । चित्तमेव नालः तस्याग्रे संलीनः विघ्नैरेव कण्टकैः संकटः संकीर्णः ॥ ४५ ॥ अन्तर्हृदये रूढो विवेकरूपेणा-र्केण विकासितः सन् विवेकपद्मां असंसङ्गां तृतीयामिमां भूमिकामेव फलं फलति ॥ ४६ ॥ इदानीं प्रथमभूमिकाया हेतुमाह—समवा-यादिति ॥ विशुद्धानां निष्कल्मषाणां सज्जनानां समवायात् पुण्य-

काकतालीययोगेन प्रथमोदेति भूमिका ॥ ४७ ॥
भूमिः प्रोदितमात्रान्तरमृताङ्कुरिकेव सा ।
विवेकेनाम्बुसेकेन रक्ष्या पाल्या प्रयत्नतः ॥ ४८ ॥
येनांशेनोल्लसत्येषा विचारेणोदयं नयेत् ।
तमेवानुदिनं यत्नात्कृषीवल इवाङ्कुरम् ॥ ४९ ॥
एषा हि परिमृष्टान्तरन्यासां प्रसवैकभूः ।
द्वितीयां भूमिकां यत्नात्तृतीयां प्राप्नुयात्ततः ॥ ५० ॥
श्रेष्ठासंसङ्गता ह्येषा तृतीया भूमिकात्र हि ।
भवति प्रोज्झिताशेषसंकल्पकलनः पुमान् ॥ ५१ ॥

राम उवाच ॥

मूढस्यासत्कुलोत्थस्य प्रवृत्तस्याधमस्य च ।
अप्राप्तयोगसङ्गस्य कथमुत्तरणं भवेत् ॥ ५२ ॥

कर्मणां संचयाच्च काकतालीययोगेन दैवगत्या प्रथमा भूमिकोदेति ॥ ४७ ॥ भूमिरिति ॥ सा प्रथमा भूमिरमृताङ्कुरिकेव प्रोदितमात्रापि विवेकेन विवेकरूपेणाम्बुसेकेन प्रयत्नतः पाल्या रक्ष्या च ॥ ४८ ॥ येनेति ॥ एषा भूमिका येनांशेनोल्लसति तमेवांशं विचारेण यत्नादनुदिनं कृषीवलोऽङ्कुरमिवोदयं नयेत् ॥ ४९ ॥ एषेति ॥ एषा भूमिका अन्तःपरिमृष्टा विचारेणोदयं नीता सती अन्यासां भूमिकानां प्रसवैकभूः । ततस्तस्या एव भूमिकाया हेतोर्द्वितीयां तृतीयां च भूमिकां प्राप्नुयात् ॥ ५० ॥ श्रेष्ठेति ॥ यैषा श्रेष्ठा असंसङ्गता तृतीया भूमिकास्ति अत्र अस्यां भूमिकायां वर्तमानः पुमान् प्रोज्झिताशेषसंकल्पकलनो भवति ॥ ५१ ॥ मूढस्येति ॥ मूढस्य अज्ञ-

एकामथ द्वितीयां वा तृतीयां वैतरां च वा ।
आरूढस्य मृतस्याथ कीदृशी भगवन्गतिः ॥ ५३ ॥

वसिष्ठ उवाच ॥

मूढस्यारूढदोषस्य तावत्संसृतिराततता ।
यावज्जन्मान्तरशतैर्नोदिता प्रथमात्र भूः ॥ ५४ ॥
अथवा साधुसंगत्या काकतालीययोगतः ।
संसारस्य परामर्शाद्वैराग्यं समुदेति हि ॥ ५५ ॥
वैराग्येऽभ्युदिते जन्तोरवश्यं भूमिकोदयः ।
ततो नश्यति संसार इति शास्त्रार्थसंग्रहः ॥ ५६ ॥
योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ।
भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ५७ ॥
ततः सुरविमानेषु लोकपालपुरेषु च ।
मेरुपर्वतकुञ्जेषु रमते रमणीसखः ॥ ५८ ॥

स्य प्रवृत्तस्य काम्यकर्मनिष्ठस्य ॥५२॥ एकामिति ॥ द्वितीयां तृतीयामितरां च वा एकां भूमिकामारूढस्य अथानन्तरं मृतस्य कीदृशी गतिः ॥ ५३ ॥ प्रथमप्रश्नस्योत्तरं श्लोकत्रयेणाह—मूढस्येति ॥ आरूढदोषस्य प्रवृद्धरागादिदोषस्य मूढस्य जन्मान्तरशतैरपि यावत्प्रथमा भूमिका नोदिता तावत्संसृतिरेवातता भवति ॥ ५४ ॥ अथवा काकतालीययोगतः साधुसंगत्या संसारस्य परामर्शाद्दोषदर्शनाद्वैराग्योदये ॥ ५५ ॥ भूमिकोदयात्संसारो नश्यतीति शास्त्रार्थसंग्रहः ॥ ५६ ॥ द्वितीयप्रश्नस्योत्तरं श्लोकपञ्चकेनाह—योगेति ॥ योगभूमिकया प्रथमादिष्वन्यतमयोत्क्रान्तजीवितस्य मृतस्य शरीरिणो जीवस्य भूमिकांशानुसारेण भूमिकाप्रकर्षानुसारेणैव पूर्वदुष्कृतं क्षीयते ॥ ५७ ॥ ततः सुकृतमहिम्ना सुरविमानादिषु स्वर्गप्रदेशेषु

ततः सुकृतसंभारे दुष्कृते च पुरा कृते ।
भोगक्षयात्परिक्षीणे जायन्ते योगिनो भुवि ॥ ५९ ॥
शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् ।
जनित्वा योगमेवैते सेवन्ते योगवासिताः ॥ ६० ॥
तत्र प्राग्भावनाभ्यस्तं योगभूमिक्रमं बुधाः ।
दृष्ट्वोपरिपतन्त्युच्चैरुत्तरं भूमिकाक्रमम् ॥ ६१ ॥
भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्मृतम् ।
जाग्रतीवात्र विस्पष्टं भेदबुद्ध्यनुवर्तनात् ॥ ६२ ॥
उदेति योगयुक्तानामत्र केवलमार्यता ।
यां दृष्ट्वा मूढबुद्धीनामप्युदेति मुमुक्षुता ॥ ६३ ॥
कर्तव्यमाचरन्काममकर्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारो यः स आर्य इति स्मृतः ॥ ६४ ॥

रमणीसखो रमते ॥ ५८ ॥ ततः पुरा कृते सुकृतसंभारे दुष्कृते च भोगक्षयात् क्षयहेतोर्भूमिकांशाच्च परिक्षीणे सति भुवि ॥ ५९ ॥ शुचीनां गुणवतां श्रीमतां सतां गुप्ते सुरक्षिते गेहे योगिनो जायन्ते । जनित्वा चैते योगवासितत्वात् योगमेव सेवन्ते ॥ ६० ॥ तत्र च प्राग्भावनाभ्यस्तं योगभूमिकाक्रमं दृष्ट्वा उत्तरं भूमिकाक्रमं परिपतन्ति अभ्यसन्ति ॥ ६१ ॥ भूमिकेति ॥ एतत्पूर्वोक्तं भूमिकात्रितयं जाग्रदिति स्मृतम् । कुतः अत्र अस्यां भूमिकायां जाग्रतीव विस्पष्टं भेदबुद्ध्यनुवर्तनात् ॥ ६२ ॥ उदेतीति ॥ अत्र भूमिकात्रये योगयुक्तानां पूर्वमार्यता केवलमुदेति यामार्यतां दृष्ट्वा मूढबुद्धीनामपि मुमुक्षुतोदेति ॥ ६३ ॥ आर्यलक्षणं श्लोकद्वयेनाह—कर्तव्यमिति ॥ प्रकृताचारः प्रकृतमावश्यकं देहधारणोपयुक्तमाचरन् यथास्थितं स्थितिर्मर्यादा तदनतिक्रम्य

यथाचारं यथाचित्तं यथाशास्त्रं यथास्थितम् ।
व्यवहारमुपादत्ते यः स आर्य इति स्मृतः ॥ ६५ ॥
प्रथमायामङ्कुरितं भूमौ विकसितं ततः ।
द्वितीयायां तृतीयायां फलत्यार्यत्वमुत्तमम् ॥ ६६ ॥
आर्यतायां मृतो योगी शुद्धसंकल्पसंभृतान् ।
भोगान्भुक्त्वा चिरं कालं योगवाञ्जायते पुनः ॥ ६७ ॥
भूमिकात्रितयाभ्यासादज्ञाने क्षयमागते ।
सम्यग्ज्ञानोदये चित्ते पूर्णचन्द्रोदयोपमे ॥ ६८ ॥
निर्विभागमनाद्यन्ते योगिनो युक्तचेतसः ।
समं सर्वं प्रपश्यन्ति चतुर्थीं भूमिकां गताः ॥ ६९ ॥
अद्वैते स्थैर्यमायाते द्वैते प्रशममागते ।
पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिताः ॥ ७० ॥
भूमिकात्रितयं जाग्रच्चतुर्थी स्वप्न उच्यते ।
चित्तं तु शरदभ्रांशविलायं प्रविलीयते ॥ ७१ ॥

॥ ६४ ॥ ६५ ॥ प्रथमायामिति ॥ आर्यत्वं प्रथमायां भूमावङ्कुरितं भवति । ततो द्वितीयायां विकसितं सत् तृतीयायां फलति ॥ ६६ ॥ ॥ ६७ ॥ भूमिकेति श्लोकद्वयं वाक्यम् । पूर्वोक्तभूमिकात्रितयाभ्यासात् अज्ञाने क्षयमागते सम्यग्ज्ञानोदये च सति चित्ते पूर्णचन्द्रोदयोपमे सति ॥ ६८ ॥ अनाद्यन्ते वस्तुनि युक्तचेतसः चतुर्थीं भूमिकां गता योगिनः सर्वं जगन्निर्विभागं समं प्रपश्यन्ति ॥ ६९ ॥ अद्वैत इति॥ इताः प्राप्ताः ॥ ७० ॥ भूमिकेति ॥ चतुर्थी भूमिका स्वप्न उच्यते । यस्मात्तस्यां भूमिकायां चित्तं शरदभ्रांशविलायं प्रविलीयते । शरद-

सत्तावशेष एवास्ते पञ्चमीं भूमिकां गतः ।
जगद्विकल्पो नोदेति चित्तस्यात्र विलापनात् ॥ ७२ ॥
पञ्चमीं भूमिकामेत्य सुषुप्तपदनामिकाम् ।
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥ ७३ ॥
गलितद्वैतनिर्भासो मुदितोऽन्तः प्रबोधवान् ।
सुषुप्तघन एवास्ते पञ्चमीं भूमिकां गतः ॥ ७४ ॥
अन्तर्मुखतया तिष्ठन्बहिर्वृत्तिपरोऽपि सन् ।
परिशान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥ ७५ ॥
कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ।
षष्ठीं तुर्याभिधामन्यां क्रमात्पतति भूमिकाम् ॥ ७६ ॥
यात्रानासन्नसद्रूपो नाहं नाप्यनहंकृतिः ।

श्रांशवत्प्रविलीयत इत्यर्थः ॥ ७१ ॥ सत्तेति ॥ पञ्चमीं भूमिकां गतो योगी सत्तावशेष एवास्ते सन्मात्ररूप एवास्ते । यस्मात्कारणादत्र भूमिकायां चित्तस्य विलापनात् जगद्विकल्पो नोदेति ॥ ७२ ॥ पञ्चमीमिति ॥ सुषुप्तपदनामिकां पञ्चमीं भूमिकामासाद्य शान्ताशेषविशेषांशः अद्वैतमात्रे तिष्ठति ॥ ७३ ॥ गलितेति ॥ पञ्चमीं भूमिकां गतो योगी गलितद्वैतनिर्भासो मुदितोऽन्तः प्रबोधवान् सुषुप्तघन एवास्ते सुषुप्तवद्घनीभूय एवास्ते ॥ ७४ ॥ अन्तरिति ॥ अत्र बहिर्वृत्तिपरः सन्नपि अन्तर्मुखतया तिष्ठन्परिशान्ततया निद्रालुरिव नित्यं लक्ष्यते ॥ ७५ ॥ कुर्वन्निति ॥ एतस्यां पञ्चम्यां भूमिकायां अभ्यासं कुर्वन् क्रमाद्विवासनस्तुर्याभिधां षष्ठीमन्यां भूमिकां पतति ॥ ७६ ॥ षष्ठभूमिकां प्राप्तस्य स्वरूपमाह—यत्रेति श्लोकत्रयं वाक्यम् ॥ यत्र यस्यां षष्ठभूमिकायां वर्तमानो योगी असत् असद्रूपो न व्यवहर्तृत्वात् ।

केवलं क्षीणमनन आस्ते द्वैतैक्यनिर्गतः ॥ ७७ ॥
निर्ग्रन्थिः शान्तसंदेहो जीवन्मुक्तो विभावनः ।
अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः ॥ ७८ ॥
अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ।
अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे ॥ ७९ ॥
किंचिदेवैष संपन्नस्त्वथवैष न किंचन ।
षष्ठ्यां भूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् ॥ ८० ॥

सद्रूपश्च न निर्वासनत्वात् । अहं न अहमित्यभिमानाभावात् । अनहंकृतिश्च न देहेन्द्रियादिप्रवर्तकत्वात् किं तर्हि केवलं क्षीणमननत्वात् निर्विकल्पत्वात् । द्वैतैक्यनिर्गतः भेदाभेदाभ्यां निर्गतो व्यपदेश्य आस्ते ॥ ७७ ॥ किंच निर्ग्रन्थिः अहंकारस्य ग्रन्थिरूपस्य विच्छिन्नत्वात् । शान्तसंदेहो विभावनो विगतवासनश्च जीवन्मुक्तो योगी अनिर्वाणोऽपि देहं धारयन्नपि निर्वाणः निरहंकारत्वात् निर्वासनत्वाच्च चित्रदीप इव आलेख्यगतप्रदीप इव स्थितः ॥ ७८ ॥ अन्तरिति ॥ किंच प्रपञ्चदृष्ट्या अन्तःशून्यो निर्वासनत्वात् । बहिःशून्यो बहिरपि ब्रह्मैवेदं सर्वमित्यनुसंधानात्तथाच, अम्बरे वर्तमानः शून्यकुम्भ इव रिक्तो घट इव भवति । किंच ब्रह्मदृष्ट्या अन्तःपूर्णः सर्वदान्तर्भावनात् । बहिश्च पूर्णो बहिरपि ब्रह्मभावनात् । तथाचार्णवे वर्तमानः पूर्णकुम्भ इव च भवति ॥ ७९ ॥ किंचिदिति ॥ एष षष्ठभूमिगतो योगी किंचिदेव वस्तुसंपन्नो जातः सद्रूपत्वात् । अथवा एष न किंचन संपन्नः अव्यपदेश्यत्वात् । इत्थं षष्ठ्यां भूमौ स्थित्वा असौ योगी सप्तमीं भूमि-

विदेहमुक्तता तूक्ता सप्तमी योगभूमिका ।
अगम्या वचसां शान्ता सा सीमा भवभूमिषु ॥ ८१ ॥
कैश्चित्सा शिव इत्युक्ता कैश्चिद्ब्रह्मेत्युदाहृता ।
कैश्चिद्विष्णुरिति प्रोक्ता कैश्चिच्छून्यमिति स्मृता ॥ ८२ ॥
अर्थ इत्युदिता कैश्चित्कैश्चित्काल इति स्मृता ।
कैश्चित्प्रकृतिपुंभावविभाग इति भाविता ॥ ८३ ॥
अन्यैरप्यन्यथा नानाभेदैरात्मविकल्पितैः ।
नित्यमव्यपदेश्यापि कथंचिद्व्यपदिश्यते ॥ ८४ ॥
सप्तैता भूमिकाः प्रोक्ता मया तव रघूद्वह ।
आसामभ्यासयोगेन न दुःखमनुभूयते ॥ ८५ ॥

वसिष्ठ उवाच ॥

अस्त्यनन्तमदोन्मत्ता मृदुमन्थरचारिणी ।
करिणीविग्रहव्यग्रा महादशनशङ्खिनी ॥ ८६ ॥

कामाप्नुयात् ॥ ८० ॥ विदेहेति श्लोकचतुष्टयं वाक्यम् ॥ सप्तमी योगभूमिका तु विदेहमुक्ततोक्ता शान्ता वचसां अगम्या च सा भवभूमिषु सीमा अवधिः । इतः परं भूमिकान्तरस्याभावात् ॥ ८१ ॥ सा च निरुपाधिकत्वान्नित्यमव्यपदेश्यापि तत्तन्मतभेदेन तैस्तैर्वादिभिः शिवादिशब्दैः कथंचित्कल्पितोपाधिना व्यपदिश्यते ॥ ८२ ॥ ॥ ८३ ॥ ८४ ॥ अत्र च सप्तानां योगभूमिकानां नामानि लक्षणानि च पूर्वमुक्तत्वान्नोक्तानि तत्तद्भूमिकावतां चिह्नान्येव तु पूर्वमनुक्तत्वादिह पृष्टानि प्रपञ्चितानि च यच्चात्र नोक्तं नामादिकं तदुत्पत्तिप्रकरणे लवणाख्याने द्रष्टव्यम् ॥ ८५ ॥ अस्तीति ॥ करिणी नाम इच्छा तस्याश्च मदो वासनाव्यूहः महादशनौ धर्माधर्मावित्यादिरामप्रश्नानन्तरं वसिष्ठ एव स्पष्टीकरिष्यति महादशनाभ्या-

सा चेन्निहन्यते नूनमनन्तानर्थकारिणी ।
तदैतासु समग्रासु भूमिकासु नरोऽजयी ॥ ८७ ॥
करिणी मदमत्ता सा यावन्न विजितौजसा ।
को नाम सुभटस्तावत्संपत्समरभूमिषु ॥ ८८ ॥

राम उवाच ॥

कासौ प्रमत्ता करिणी काश्च ता रणभूमयः ।
कथं निहन्यते चैषा क्व चैषा रमते चिरम् ॥ ८९ ॥

वसिष्ठ उवाच ॥

रामेच्छा नाम करिणी सेदं मेऽस्त्विति रूपिणी ।
शरीरकानने मत्ता विविधोल्लासकारिणी ॥ ९० ॥
मत्तेन्द्रियोग्रकलभा रसनाकलभाषिणी ।
मनोगहनसंलीना कर्मदन्तद्वयान्विता ॥ ९१ ॥
मदोऽस्या वासनाव्यूहः सर्वतः प्रसरद्वपुः ।
इच्छानागी निहन्त्येषा कृपणाञ्जीवसंचयान् ॥ ९२ ॥

मेव शङ्खिनी शङ्खवती करिणीति ॥ ८६ ॥ ८७ ॥ संपत्समरभूमिषु संसारसंपद एव समरभूमयः संसारसंपदो राम तस्याः समरभूमय इति वक्ष्यमाणत्वात् ॥ ८८ ॥ ८९ ॥ रामेति श्लोकद्वयं वाक्यम् ॥ करिणी नाम इच्छा सा च इच्छा इदं मे अस्त्वित्येवंरूपिणी सा चेच्छारूपा करिणी शरीर एव कानने मत्ता सती विविधोल्लासकरणशीला ॥ ९० ॥ मत्तानीन्द्रियाण्येवोग्राः कलभा यस्यास्तादृशी । रसनाकलभाषिणी रसनैव रसना तदीया तया कलभाषणशीला । मन एव गहनं दुःप्रवेशस्थानं तत्र संलीना । कर्मदन्तद्वयान्विता पुण्यापुण्यलक्षणदशनद्वयवती ॥ ९१ ॥ मद इति ॥ अस्याः स्वेच्छाकारिण्याः सर्वतः प्रसरद्वपुः वासनाव्यूह एव मदः

संसारदृष्टयो राम तस्याः समरभूमयः ।
भूयो यत्रानुभवति नरोजयपराजयौ ॥ ९३ ॥
वासनेहा मनश्चित्तं संकल्पो भावनं स्पृहा ।
इत्यादिर्निवहो नाम्नामस्या आशयकोशगः ॥ ९४ ॥
धैर्यनाम्ना वरास्त्रेण प्रसृतामवहेलया ।
नागीं सर्वात्मिकामेतामिच्छां सर्वात्मना जयेत् ॥ ९५ ॥
यावदस्त्विदमित्येवमियमन्तर्विजृम्भते ।
तावदुग्रा कुसंसारमहाविषविषूचिका ॥ ९६ ॥

एषा चेच्छानागी कृपणानेव जीवसंचयान्निहन्ति ॥ ९२ ॥ संसारेति ॥ नरः पुमान् जयपराजयौ भूयो यत्रानुभवति ताः संसारदृष्टय एव तस्याः समरभूमयः ॥ ९३ ॥ वासनेति ॥ आशयकोशगः आशयोऽन्तःकरणं स एव कोशः कोशगृहं तद्गतः तद्विषयो यो वासना ईहा मनश्चित्तं संकल्पो भावनं स्पृहेत्यादिः शब्दसमुदायः सोऽस्या इच्छाकरिण्या नाम्नां निवहः । इत्यादीति नपुंसकलिङ्गपाठे वासनेत्यादिपदकदम्बकं आशयकोशगोऽस्याः करिण्या नाम्नां निवह इति योजनीयम् ॥ ९४ ॥ धैर्येति ॥ अवहेलया इतरेषां सर्वेषामस्त्राणां अवज्ञया प्रसृतां सर्वात्मिकां सर्वविषयत्वाद्विषयैस्तादात्म्यापन्नां इच्छारूपां नागीं धैर्यनाम्ना वरास्त्रेण सर्वात्मना सर्वप्रकारेणापि जयेत् । धैर्येणैवाङ्कुशेनेच्छारूपां नागीं करिणीं वशीकुर्यादित्यर्थः । धैर्यं चात्र परे ब्रह्मणि चित्तस्य स्थैर्यम् ॥ ९५ ॥ यावदिति ॥ इदमस्त्वित्येवंरूपा इयमिच्छाकरिणी यावदन्तर्विजृम्भते तावदेवेयमुग्रा कुसंसारमहाविषविषूचिका विजृम्भते । कुत्सितः

एतावानेव संसार इदमस्त्विति यन्मनः ।
अस्य तूपशमो मोक्ष इत्येवं ज्ञानसंग्रहः ॥ ९७ ॥
प्रसादकारिणी स्वच्छा निरिच्छे विमलाकृतौ ।
तैलबिन्दुरिवादर्शे विश्राम्यत्युपदेशवाक् ॥ ९८ ॥
मनागप्युदितैवेच्छा छेत्तव्यानर्थकारिणी ।
असंवेदनशस्त्रेण विषस्येवाङ्कुरावली ॥ ९९ ॥
इच्छाविच्छुरितो जीवो विजहाति न दीनताम् ।
असंवेदनमात्रेण नोदेतीच्छाभवाङ्कुरः ॥ १०० ॥
असंवेदनशस्त्रं तु तूष्णीं चित्तव्यवस्थितिः ।
प्रत्याहारः स विज्ञेयस्तेनेच्छा विनिवार्यते ॥ १ ॥

संसार एव महती विषजन्या विषूचिका ॥ ९६ ॥ एतावानेवेति ॥ इदमस्त्विति यन्मनःसंकल्पनमस्त्येतावानेव संसारः । सर्वस्यापि संसारस्य मनोमूलत्वात् अस्य तु मनस उपशम एव मोक्षः । इत्येवं ज्ञानस्य ज्ञानोपदेशस्य संग्रहः संक्षेपः ॥ ९७ ॥ प्रसादेति ॥ स्वच्छा स्वयं निर्मला अतश्च प्रसादकारिणी परचित्तप्रसादहेतुरुपदेशवाक् परोपदेशपरगुरुवाक्यं निरिच्छे निःसंकल्पे अतश्च विमलाकृतौ शिष्ये आदर्शे दर्पणे तैलबिन्दुरिव विश्राम्यति संक्रामति । तैलबिन्दुरपि प्रसादहेतुः स्वच्छश्च । दर्पणोऽपि निरिच्छो विमलाकृतिश्च ॥ ९८ ॥ मनागिति ॥ अनर्थकारिणी इयमिच्छा मनागपि उदितैव विषस्य विषवृक्षस्य अङ्कुरावलीव असंवेदनशस्त्रेण संवेदनं बाह्यानुसंधानं तदभावोऽसंवेदनं तेनैव शस्त्रेण छेत्तव्या ॥ ९९ ॥ इच्छेति ॥ जीवः इच्छया विच्छुरितः सन् दीनतां इष्टार्थसिद्धिनिमित्तं दैन्यं न विजहाति । भवाङ्कुर इच्छा च असंवेदनमात्रेण नोदेति ॥ १०० ॥ किं तदसंवेदनमित्यत्राह—असंवेदनेति ॥ चित्तस्य

इदं मेऽस्त्विति विज्ञानमाहुः कल्पनमुत्तमाः ।
अर्थस्याभावनं यत्तत्कल्पनात्याग उच्यते ॥ २ ॥
स्मरणं विद्धि संकल्पं शिवमस्मरणं विदुः ।
तत्र प्रागनुभूतं च नानुभूतं च भाव्यते ॥ ३ ॥
अनुभूतां नानुभूतां स्मृतिं विस्मृत्य काष्ठवत् ।
सर्वमेवाशु विस्मृत्य मूढस्तिष्ठ महामतिः ॥ ४ ॥
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति तत् ।
असंकल्पः परं श्रेयः स किमन्तर्न भाव्यते ॥ ५ ॥
किल तूष्णींस्थितेनैव तत्पदं प्राप्यते परम् ।
परमं यत्र साम्राज्यमपि राम तृणायते ॥ ६ ॥

तूष्णीं व्यवस्थितिरेवासंवेदनशस्त्रं स एव च प्रत्याहाररूपं योगांगं तेनैवेच्छा निवार्यते ॥१॥ इदमिति ॥ इदं मेऽस्त्विति विज्ञानमेव कल्पनमाहुः । अर्थस्य बाह्यस्य यदभावनं तदेव कल्पनात्याग उच्यते ॥ २ ॥ स्मरणमिति ॥ स्मरणमेव संकल्पं विद्धि । अस्मरणं च शिवं शान्तं ब्रह्म विदुः । तत्र च स्मरणे प्रागनुभूतं नानुभूतं च वस्तु भाव्यते विषयीक्रियते ॥ ३ ॥ अनुभूतामिति ॥ अनुभूतां नानुभूतां अनुभूतविषयामननुभूतविषयां च स्मृतिं विस्मृत्य विहाय काष्ठवत्सर्वमेव विस्मृत्य अननुसंधाय महामतिरेव सन् मूढस्तिष्ठ मूढवत्तिष्ठ ॥ ४ ॥ ऊर्ध्वबाहुरिति ॥ ऊर्ध्वबाहुः सर्वेषां प्रबोधाय उद्धृतभुजः सन्नेषोऽहं परमार्थदर्शी विरौमि घोषयामि । अत्र न कश्चिदपि शृणोति । अहो मोहमहिमेति शेषः । किं तद्विराव्यमित्यत्राह—असंकल्प इति । असंकल्प एव परं श्रेयः सोऽयं किमित्यन्तः सर्वैरपि मुमुक्षुभिर्न भाव्यते ॥ ५ ॥ किलेति ॥ परमं साम्राज्य-

गम्यदेशैकनिष्ठस्य यथा पान्थस्य पादयोः ।
स्पन्दो विगतसंकल्पस्तथा स्पन्दः स्वकर्मसु ॥ ७ ॥
बहुनात्र किमुक्तेन संक्षेपादिदमुच्यते ।
संकल्पनं परो बन्धस्तदभावो विमुक्तता ॥ ८ ॥
सर्वं जगदिदं शान्तमनन्तं ध्रुवमव्ययम् ।
पश्यन्भूतार्थचिद्रूपं शान्त आस्व यथासुखम् ॥ ९ ॥
अवेदनं विदुर्योगं शान्तमासनमुत्तमम् ।
योगस्थः कुरु कर्माणि विकर्माण्यथ मा कुरु ॥ ११० ॥
अवेदनं विदुर्योगं चित्तक्षयमकृत्रिमम् ।
अत्यन्तं तन्मयो भूत्वा तथा तिष्ठ यथासि भोः ॥ ११ ॥

मपि यत्र यस्मिन्पदे भाव्यमाने तृणायते तृणमिव तुच्छं भाति तत्परं पदं तूष्णींस्थितेनैव किल प्राप्यते । अहो सौलभ्यं परमपदस्येति शेषः ॥ ६ ॥ गम्येति ॥ गम्यदेशैकनिष्ठस्य गन्तव्यदेशतत्परस्य पान्थस्य पादयोः स्पन्दः संचारो यथा विगतसंकल्पः प्रतिपदं संकल्पाभावात् तथा ज्ञानिनो ब्रह्मनिष्ठस्य स्वकर्मसु स्पन्दो व्यवहारो विगतसंकल्पः ॥ ७ ॥ ८ ॥ सर्वमिति ॥ सर्वमिदं जगत् शान्तादिलक्षणं भूतार्थचिद्रूपं परमार्थचिन्मयं पश्यन् शान्तो यथासुखमास्व ॥ ९ ॥ अवेदनमिति ॥ शान्तं निर्विकारं उत्तममासनमेव अवेदनयोगं निर्विकल्पसमाधिं विदुः । अतश्च त्वं योगस्थः सिद्ध्यसिद्ध्योः समत्वं योगः तन्निष्ठः कर्माणि कुरु । नीरसो निष्कामो वा कुरु । अथवा आत्मारामतया कर्तव्याभावान्मा कुरु ॥ ११० ॥ अवेदनमिति ॥ अवेदनमेव योगं अकृत्रिमं अप्रयाससिद्धं चित्तक्षयं च विदुः । अतश्चात्यन्तं तन्मयो भूत्वा यथासि

अहंममेति संविदन्न दुःखतो विमुच्यसे ।
असंविदन्विमुच्यसे यदीप्सितं तदाचर ॥ १२ ॥
शिवं सर्गगतं शान्तं बोधात्मकमजं शुभम् ।
तदेकभावनं राम कर्मत्याग इति स्मृतः ॥ ११३ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे योगसप्तभूमिकोपाख्यानं नाम पञ्चदशः सर्गः ॥ १५ ॥

---

## षोडशः सर्गः

### वसिष्ठ उवाच ॥

प्रसह्य वेधसः सृष्टिं यत्कटाख्यरसाञ्जनम् ।
वादी वाग्मी कविश्चायं राम कीर्तिं सृजत्यहो ॥ १ ॥

यद्रूपोऽसि तथा तिष्ठ ॥ ११ ॥ अहमिति ॥ त्वं अहं ममेति च संविदन् अभिमन्यमानो दुःखतो दुःखमयात्संसारान्न विमुच्यसे । इत्थमसंविदंस्तु विमुच्यसे । अत्र बन्धमोक्षसाधनद्वये यदीप्सितमभिमतं तदाचरेति निपुणोक्तिः ॥ १२ ॥ प्रकृतोपसंहारव्याजेन महता प्रबन्धेनोपपादितमात्माद्वैतविज्ञानमुपसंहरन्नाह—शिवमिति ॥ यत्खलु शिवं ब्रह्म सर्गगतं परिपूर्णं शान्तं निर्विकारं अजं जन्मादिरहितं शुभं अशुभसंसारनिवर्तकं बोधात्मकं विशुद्धज्ञानात्मकं तदेकभावनं तस्यैव ब्रह्मण एकमद्वैतं यद्भावनं ब्रह्मैवेदं सर्वमिति यत्परिपूर्णं भावनं तदेव जीर्णपर्णवत् कर्मणां कुट्टनहेतुत्वात्कर्मत्याग इति स्मृतः इति विधीयमानकर्मत्यागरूपापेक्षया पुंल्लिङ्गनिर्देशः । असंवेदनमसंकल्पनं तूष्णींभाव इति यन्नैष्कर्म्यं कर्म प्रकृतं तस्यायमुपसंहार इति सर्वं समञ्जसम् ॥११३॥ इति संसारतरणिनाम्नि योगवासिष्ठविवरणे निर्वाणप्रकरणे सप्तभूमिकोपाख्यानं नाम पञ्चदशः सर्गः ॥ १५ ॥

निन्दन्ति ये हरिहरार्यकृपामृताब्धि
स्वच्छन्दसंचरणसंचितवाञ्छितार्थाः ।
निन्दन्ति ते जलनिधिं बहिरुत्क्षिपन्ते
स्नातुं समागतवतोऽपि तरङ्गहस्तैः ॥ २ ॥
मज्जन्तमप्यनुदिनं द्विजराजमेक-
मद्यापि नैव जलधिर्विमलीकरोति ।
स्पृष्टोऽप्यहो हरिहरार्यकृपाम्बुधिस्ते
प्रक्षालयत्यमतिपङ्कमपि द्विजानाम् ॥ ३ ॥
मन्यामहे हरिहरार्यगुरो त्वदीय-
वाणीसुधाजलधिमेव वरं वरेण्यम् ।
आनन्दकन्दलितनन्दनपारिजात-
निष्यन्दमानमकरन्दमहीनदीनाम् ॥ ४ ॥

वाल्मीकिरुवाच ॥

इत्युक्तवत्यथ मुनौ दिवसो जगाम
स्नातुं समाकृतमुनिप्रणतिर्जगाम ।
सायंतनास्तविधयेऽस्तमितो जगाम
श्यामाक्षये रविकरैश्च सभा जगाम ॥ ५ ॥
अष्टादशेति दिवसान्विदधे गरिष्ठां
गोष्ठीं वसिष्ठमुनिना सह रामचन्द्रः ।
हित्वा भवप्रभवमोहमथावतस्थे
निर्वातवारिधिरिवाचलसत्त्वपूर्णः ॥ ६ ॥
तस्मिन्क्षणे कल्पतरुप्रसूतप्रसूनसङ्घस्य पपात वृष्टिः ।
संतुष्टगीर्वाणगणप्रमुक्ता मुक्ताफलादभ्रमिवाभ्रपूर्णा ॥ ७ ॥

अवतीर्य स्वयं विष्णुर्मानुष्यो रामनामधृक् ।
खिन्नः संसारजालेऽस्मिन्योगज्ञानेन बोधितः ॥ ८ ॥

प्रबुद्धेनाथ रामेण संपूज्याभिष्टुतो मुहुः ।
पितृभ्रातृसमेतेन प्रणम्याभिहितो मुनिः ॥ ९ ॥

त्वत्प्रसादाद्गुरो भगवन्निःसंशयमिदं मनः ।
विज्वरं शीतलं शान्तं संजातमविकारि मे ॥ १० ॥

सर्वार्तिहर्ता सर्वज्ञः सर्वदेवाश्रितो गुरुः ।
मोहान्धकारविध्वंसः सवितेव भवानिति ॥ ११ ॥

ततस्तदानीं मुनिना रामाय गगनस्थिताः ।
श्रोतुमभ्यागता देवा आहूय प्रकटीकृताः ॥ १२ ॥

यक्षगन्धर्वसिद्धर्षिविद्याधरमहोरगाः ।
रामेण प्रणताश्चैनमूचुः संतुष्टमानसाः ॥ १३ ॥

श्रुतमस्माभिरखिलं ज्ञानमेतन्महोदयम् ।
त्रैलोक्यमोहार्तिहरौ भवन्तौ प्रणता वयम् ॥ १४ ॥

भवद्गुरोर्वसिष्ठस्य भवतश्च महात्मनः ।
मिथः संवादमखिलं ज्ञानमेतन्महोदयम् ॥ १५ ॥

ततः सिद्धैरयोध्यायां स्तुत्वैतदवतारितम् ।
काश्मीरमण्डलस्यान्तर्भूतानामनुकम्पया ॥ १६ ॥

अथ सर्वाणि कार्याणि ज्ञाततत्त्वो गतव्यथः ।
निर्ममो निर्ममे रामो निष्कामो जनको यथा ॥ १७ ॥

यथाम्बु बिसिनीपत्रे सज्जते नाम्बुमज्जनैः ।
तथास्य राज्यभोगेन न चेतो रज्यतेऽमलम् ॥ १८ ॥

शास्त्रं त्विदं विरक्ता ये सत्सङ्गाः सत्क्रियापराः ।
तेषां धर्मात्मनामेव प्रदातव्यं प्रयत्नतः ॥ १९ ॥
सर्वा सर्वोपकाराय मतिश्चेदस्ति वः शुभा ।
तदिदं सर्वथा देयं विद्यादानं महाफलम् ॥ २० ॥
दुर्ग्रहग्रस्तमनसामसाधूनां प्रमादिनाम् ।
निन्दकानामिदं शास्त्रं रहस्यं न प्रकाशयेत् ॥ २१ ॥
पूर्वं नाराधितो येन भगवानिन्दुशेखरः ।
हरिर्ब्रह्मा रविश्चापि न लभेदिदमद्भुतम् ॥ २२ ॥
महेश्वरेण यत्प्रोक्तं देव्या यच्चापि विष्णुना ।
मुनीनां नारदादीनां तदिदं ज्ञानमुत्तमम् ॥ २३ ॥
महारामायणाख्यं यन्मोक्षोपायापराभिधम् ।
ततः क्षीरनिधिप्रख्यात्पीयूषमिदमुद्धृतम् ॥ २४ ॥
सामान्येन विचारेण क्षयमायाति दुष्कृतम् ।
सम्यगस्य विचारेण को न याति परं पदम् ॥ २५ ॥
एकवेलमधीतेन शास्त्रेणानेन किल्बिलम् ।
प्रणश्यति नृणां सर्वं क्षिप्रं बोधश्च जायते ॥ २६ ॥
अप्रबुद्धोऽपि यश्चेदं भावयेद्भक्तिभावितः ।
तस्य निर्मलतासिद्धं चित्तं नास्त्यत्र संशयः ॥ २७ ॥
मूढैर्मुमुक्षुभिर्वापि संयतैर्वाप्यसंयतैः ।
परमार्थमिदं चिन्त्यं दुर्लभं ब्रह्मदर्शनम् ॥ २८ ॥
किंचित्संस्कृतबुद्धीनां श्रुतं शास्त्रमिदं यथा ।
सौख्यापहं तथा शास्त्रमन्यदस्ति न किंचन ॥ २९ ॥
भुक्तिमुक्तिप्रदमिदं योगिनां परमं प्रियम् ।

हस्तस्थं प्राप्य चिद्रूपं प्राक्पुण्यैरेव लभ्यते ॥ ३० ॥
सर्वागमार्थसंवेत्ता वसिष्ठः परमो मतः ।
मोक्षोपायस्य सारोऽयमिति सर्वत्र गीयते ॥ ३१ ॥
प्रियार्थादिवियोगेन जातखेदस्य देहिनः ।
शास्त्रं विना किमत्र स्यादन्तःसंतापशान्तिदम् ॥ ३२ ॥

चिदम्बरात्प्रोदित एव पूर्णः
शास्त्रं नुरानन्दनिधिः सुपादः ।
सान्द्रामृतः काव्यरसोपशोभा-
स्फुरन्प्रकाशः क्षपितोऽन्धकारः ॥ ३३ ॥

स्नातं तेन समस्ततीर्थसलिलैः सर्वापि दत्तावनि-
र्यज्ञानां च कृतं सहस्रमखिला देवाश्च संपूजिताः ।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥ ३४ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे शास्त्रग्रहणफलनिर्देशो नाम षोडशः सर्गः ॥ १६ ॥

---

## सप्तदशः सर्गः

वाल्मीकिरुवाच ॥

इति वरमुनिनोक्तं ज्ञानसारं पुराणे
सकलमनुनिशम्य श्रीरघूणां कुलाग्र्यः ।
विमलमतिरपृच्छत्किंचिदन्यत्स्वयं वै
शमसुखपरिपूर्णः पूर्णबोधास्थितोऽसौ ॥ १ ॥

स खलु परमयोगी विश्ववन्द्यः सुरेन्द्रो
जननमरणहीनः शुद्धबोधस्वरूपः ।

सकलगुणनिधानं संनिधानं रमाया-
त्रिजगदुदयरक्षानुग्रहाणामधीशम् ॥ २ ॥
शक्तिपातवशोन्मेषप्रकटामलचिद्घनः ।
मुहूर्तमासीदुद्बुद्धश्चैतन्यानन्दसागरः ॥ ३ ॥
प्रश्नोत्तरविभागादिपरिपाटीविवर्जितः ।
आनन्दामृतपूर्णाश्रुरोमकण्टकिताङ्गकः ॥ ४ ॥
महासामान्यरूपत्वचिद्व्यापकतया स्थितः ।
नित्यमष्टगुणैश्वर्यतृणप्रायमनोरथः ॥ ५ ॥
न किंचिदूचे संपन्नः शिवे परिणतः पदे ॥ ६ ॥

भरद्वाज उवाच ॥

अहो खलु महाश्चर्यं रामः प्राप्तो महत्पदम् ।
कथमेतादृशी प्राप्तिरस्माकं मुनिनायक ॥ ७ ॥
मूर्खाः शोच्याश्च किंचित्ता मादृशाः क च पापिनः ।
क च ब्रह्मादिभिः प्रार्थ्या दुर्लभा राम संस्थितिः ॥ ८ ॥
अहो मुनीश्वरगुरो कथं विश्राम्यतां मया ।
दुष्पारश्च भवाम्भोधिस्तीर्यते तद्वदाशु मे ॥ ९ ॥

वाल्मीकिरुवाच ॥

श्रीरामवृत्तान्तमशेषमादितो
वसिष्ठवाक्यानुगतं निरूपितम् ।
धिया विचार्यानुपरामृश स्वयं
मयापि वेद्यं कथनीयमत्र ते ॥ १० ॥
अविद्यया प्रपञ्चोऽयं नास्ति सत्यमिहाण्वपि ।
विवेचयन्ति विबुधा विवदन्त्यविवेकिनः ॥ ११ ॥

नास्ति भिन्नं चितः किंचित्किं प्रपंचेन रुध्यते ।
अभ्यासेन रहस्यानां वयस्य विशदो भव ॥ १२ ॥
प्रपञ्चविषया वृत्तिर्जाग्रन्निद्रेति कीर्तिता ।
स प्रबुद्धस्तु यस्यान्तश्चित्प्रदीपो निरञ्जनः ॥ १३ ॥
शून्यमूलप्रपञ्चोऽयं शून्यताशिखरं सखे ।
सारशून्यतया मध्येऽप्यनास्था सन्मनीषिणा ॥ १४ ॥
अनादिवासनादोषादसन्नेनायमीक्ष्यते ।
गन्धर्वनगराकारः संसारबहुविभ्रमः ॥ १५ ॥
चित्तेऽनभ्यस्य कल्याणीं चैतन्यामृतकन्दलीम् ।
संमुह्यसि किमध्यास्य वासनाविषवीरुधः ॥ १६ ॥
जाग्रदेतन्निपतितं ज्ञानालम्बग्रहादधः ।
वसत्युपरि सर्वेषां ये निरालम्बसंविदः ॥ १७ ॥
तावदूढस्फुराकाररसा विद्यामहानदी ।
न यावदात्मरूपेण निपुणैरवगाह्यते ॥ १८ ॥
प्राङ्नास्ति चरमं नास्ति वस्तु सर्वमिदं सखे ।
विद्धि मध्येऽपि तन्नास्ति स्वप्नवृत्तमिदं जगत् ॥ १९ ॥
अविद्यायोनयो भेदाः सर्वेऽमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥ २० ॥
सुशीतलोदकनदीं विदित्वा प्रविगाह्यताम् ।
बहिर्भ्रान्तिनिदाघास्ते निर्यान्तु कलिताः शुचा ॥ २१ ॥
एकश्चाज्ञानजलधिर्जगदात्मा व्यतिष्ठति ।
ज्येष्ठोऽयमहमित्यूर्मिरविद्यावातसंभवः ॥ २२ ॥
चित्तस्खलनभेदाली रागाद्याश्च प्रकल्पिताः ।

समतोत्कलितावर्तस्ततः स्वैरं प्रवर्तते ॥ २३ ॥
रागद्वेषावतिग्राहौ गृहीतसमनन्तरम् ।
ततश्चानर्थपातालप्रवेशः केन वार्यते ॥ २४ ॥
प्रशान्तामृतकल्लोले केवलामृतवारिधौ ।
मत्त मज्जसि किं द्वैतग्रहक्षाराब्धिवीचिषु ॥ २५ ॥
कस्तिष्ठति गतः को वा कस्य केन किमागतम् ।
किं निमज्जसि मायायामेतत्तत्त्वमतन्द्रितः ॥ २६ ॥
तत्त्वमेकं यदात्मेति जगदेतत्प्रचक्षते ।
ततोऽन्यः कस्तवातीतो यस्तात विषयः शुचाम् ॥ २७ ॥
बालान्प्रति विवर्तोऽयं ब्रह्मणः सकलं जगत् ।
अविवर्तितमानन्दमास्थिताः कृतिनः सदा ॥ २८ ॥
अविविक्तो जनः शोचत्यकस्माच्च प्रहृष्यते ।
तत्त्ववित्तु हसन्नास्ते तस्य मोहो विडम्बनम् ॥ २९ ॥
तच्च सूक्ष्ममिदं तत्त्वं तिरोहितमविद्यया ।
यथा स्थलेषु लोकानां जलेष्वात्मसु संशयः ॥ ३० ॥
पृथिव्यादिमहाभूतपरमाणुमयं जगत् ।
स्थितं यदा तदापीह को गतो योऽनुशोच्यते ॥ ३१ ॥
असतः संभवो नास्ति नास्त्यभावः सतः सखे ।
आविर्भावतिरोभावसंस्था नानामयी परे ॥ ३२ ॥
किन्त्वनेकपुरोत्साहाद्विषतामुपगच्छति ।
भज संचरिताभोगं परमेशं जगद्गुरुम् ॥ ३३ ॥
दुरितानि समस्तानि पच्यन्तेऽद्यापि न ध्रुवम् ।
द्रुतमेवास्य देवस्य पाशाः प्रश्रयतां गताः ॥ ३४ ॥

साकारं भज तावत्त्वं यावत्सत्त्वं प्रसीदति ।
निराकारे परे तत्त्वे ततः स्थितिरकृत्रिमा ॥ ३५ ॥
इममुद्दामतमसं जित्वा शत्रुं बलाद्ध्रुवम् ।
यमस्यानुसर ध्यानं विश्वस्तेनान्तरात्मना ॥ ३६ ॥
समाधाय क्षणं पश्य प्रत्यगात्मानमात्मनि ।
इयं विभातु संव्यक्तं द्राग्बुद्धिरजनी तव ॥ ३७ ॥
कृतं पुरुषकारेण केवलेन च कर्मणा ।
महेशानुग्रहादेव प्राप्तव्यं प्राप्यते नरैः ॥ ३८ ॥
नाभिजात्यं न चारित्र्यं न नयो न च विक्रमः ।
बलवन्ति पुराणानि सखे कर्माणि केवलम् ॥ ३९ ॥
अप्रतर्क्यात्प्रतीकारात्किमेवमवसीदति ।
न लुम्पति ललाटस्थामीश्वरोऽप्यक्षमालिकाम् ॥ ४० ॥
क्व चिद्भक्ता क्व वैदग्ध्यं क्व चेयं मोहवल्लरी ।
अचिन्तनीया नियतिर्निर्ययेद्द्वन्द्वमोहितम् ॥ ४१ ॥
हे भरद्वाज मोहं त्वं विवेकेन जहि स्फुटम् ।
असामान्यमिदानीं ते ज्ञानं प्राप्स्याम्यसंशयम् ॥ ४२ ॥
दूरमुत्सहते राजा महासत्त्वो महापदि ।
अल्पसत्त्वो जनः शोचत्यल्पेऽपि हि परिक्षये ॥ ४३ ॥
बोधं पुण्यपराधीनं प्राप्यते बहुजन्मभिः ।
अनुमीयेत धीरेषु जीवन्मुक्तेषु कार्यतः ॥ ४४ ॥
द्विषद्भूतेन येनैव कर्मणां बन्ध ईदृशः ।
सुहृद्भूतेन तेनैव मोक्षमाप्स्यसि पुत्रक ॥ ४५ ॥
सतां सत्कर्मसंवेगः पुराणं प्रणुदन्नयम् ।

वर्षौघइव भूतानां दावानलमसेचयत् ॥ ४६ ॥
सखे संन्यस्य कर्माणि ब्रह्मणः प्रणयी भव ।
नेष्यते यदि संसारचक्रावर्तभ्रमभ्रमम् ॥ ४७ ॥
तावदेतद्विकल्पोत्थमिदं यावद्बहिर्ग्रहः ।
प्रतिकूलेऽब्धिकल्लोले केवलं निश्चलं पयः ॥ ४८ ॥
अयं किमन्धंकरणस्त्वया शोकोऽवलोक्यते ।
निर्वाहयतु सैव त्वां प्रज्ञायष्टिरभङ्गुरा ॥ ४९ ॥
न जातु ते विगण्यन्ते गणनां सुगरीयसीम् ।
ये तरङ्गैस्तृणानीव ह्रियन्ते हर्षशोकयोः ॥ ५० ॥
समारूढदशादोलामहोरात्रमिदं जगत् ।
क्रीड्यते षड्विधैः प्रेक्ष्यैः सखे किमिति खिद्यसे ॥ ५१ ॥
सूते संहरति क्षिप्रं पुनः सृजति हन्ति च ।
जगन्ति बहुपर्यायैः काल एव कुतूहली ॥ ५२ ॥
न विशेषग्रहः कश्चिन्न कश्चिन्न च कश्चन ।
जन्तुष्वभ्यवहार्येषु प्रकाम्यं कालभोगिनः ॥ ५३ ॥
का कथा मर्त्यपिण्डानां निमेषान्तरवासिनाम् ।
अपि देवनिकाया ये ते दुःकालस्य गोचराः ॥ ५४ ॥
स्वयं नृत्यसि किं प्रीते विपत्तौ विकलेन्द्रियः ।
क्षणं निखिन्नमासीनः पश्य संसारनाटकम् ॥ ५५ ॥
अस्यानेकतरङ्गस्य जगतः क्षणभङ्गिनः ।
न विषीदति मनस्वी भारद्वाज मनागपि ॥ ५६ ॥
त्यज शोकममङ्गल्यं मङ्गलानि विचिन्तय ।
चिदानन्दघनस्वच्छमात्मानं च विभावय ॥ ५७ ॥

देवद्विजगुरुप्राज्ञामरसाधुषु चेतसाम् ।
सदागमप्रमाणानां महेशानुग्रहो भवेत् ॥ ५८ ॥

इति श्रीयोगवासिष्ठसारे निर्वाणप्रकरणे श्रीवाल्मीकीये मोक्षोपाये भरद्वाजानुशासनं नाम सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः

भरद्वाज उवाच ॥

ज्ञातं तव प्रसादेन सर्वमेतदशेषतः ।
न वैराग्यात्परं भाग्यं न संसारात्परो रिपुः ॥ १ ॥
इदानीं श्रोतुमिच्छामि वसिष्ठेनोपपादितम् ।
ज्ञानसारमशेषेण ग्रन्थेनोक्तं यदात्मना ॥ २ ॥

वाल्मीकिरुवाच ॥

भरद्वाज शृणुष्वेदं महाज्ञानं विमुक्तिदम् ।
यस्य श्रवणमात्रेण भवाब्धौ न निमज्जसि ॥ ३ ॥
संहृतिस्थितिसंभूतभेदैर्योऽनेकधा स्थितः ।
एकोऽपि सन्नमस्तस्मै सच्चिदानन्दमूर्तये ॥ ४ ॥
कृते प्रपञ्चविलये यथा तत्त्वं प्रकाशते ।
तदोपायं प्रवक्ष्यामि संक्षेपाच्छ्रुतिशासनात् ॥ ५ ॥
शान्तो दान्तश्चोपरतो निषिद्धात्पापकर्मणः ।
विषयेन्द्रियसंश्लेषसुखाच्च श्रद्धयान्वितः ॥ ६ ॥
मृद्वासने समासीनो जितचित्तेन्द्रियक्रियः ।
ओमित्युच्चारयेत्तावन्मनो यावत्प्रसीदति ॥ ७ ॥
प्राणायामं ततः कुर्यादन्तःकरणशुद्धये ।
इन्द्रियाण्याहरेत्पश्चाद्विषयेभ्यः शनैःशनैः ॥ ८ ॥

देहेन्द्रियमनोबुद्धिक्षेत्रज्ञानां च संभवः ।
पश्चाद्भवति तद्भावात्तेषु पश्चाद्विलापयेत् ॥ ९ ॥
विराजि प्रथमं स्थित्वा तत्रात्मनि ततः परम् ।
अव्याकृते स्थितः पश्चात्स्थिते परमकारणे ॥ १० ॥
मांसादिपार्थिवं भागं पृथिव्यां प्रविलापयेत् ।
आप्यं रक्तादिकं चाप्सु तैजसं तेजसि क्षिपेत् ॥ ११ ॥
वायव्यं च महावायौ नभस्यं नभसि क्षिपेत् ।
पृथिव्यादिषु विन्यस्य चेन्द्रियाण्यात्मयोनिषु ॥ १२ ॥
श्रोत्रादिलक्षणोपेताः कर्तुर्भोक्तुः प्रसिद्धये ।
दिक्षु न्यस्यात्मनः श्रोत्रं त्वचं विद्युति निक्षिपेत् ॥ १३ ॥
चक्षुरादित्यबिम्बे च जिह्वामप्सु विनिक्षिपेत् ।
घ्राणं वायौ वाचमग्नौ पाणिमिन्द्रे विनिक्षिपेत् ॥ १४ ॥
विष्णौ तथात्मनः पादौ पायुं मित्रे तथैव च ।
उपस्थं कश्यपे न्यस्य मनश्चन्द्रे निवेशयेत् ॥ १५ ॥
बुद्धिं ब्रह्मणि संयच्छेदेताः करणदेवताः ।
इन्द्रियव्यपदेशेन व्यादिश्यन्त्येव देवताः ॥ १६ ॥
श्रुतिवाक्यमनुस्मृत्य न स्वतः प्रकटीकृताः ।
एवं न्यस्यात्मनो देहं विराडस्मीति चिन्तयेत् ॥ १७ ॥
ब्रह्माण्डान्तः स्थितो योऽसावर्धनारीश्वरः प्रभुः ।
आधारः सर्वभूतानां कारणं तदुदाहृतम् ॥ १८ ॥
स यज्ञसृष्टिरूपोऽसौ जाग्रद्वृत्तौ व्यवस्थितः ।
द्विगुणाण्डाद्बहिः पृथ्वी पृथिव्या द्विगुणं जलम् ॥ १९ ॥
सलिलाद्द्विगुणं तेजस्तेजसो द्विगुणोऽनिलः ।
वायोर्द्विगुणमाकाशमूर्ध्वमेकैकशः क्रमात् ॥ २० ॥

व्यस्तेन च समस्तेन महता ग्रथितं जगत्।
क्षितिं चाप्सु समावेश्य सलिलं चानले क्षिपेत् ॥ २१ ॥
अग्निं वायौ समावेश्य वायुं च नभसि क्षिपेत्।
नभश्च महदाकाशे समस्तोत्पत्तिकारणे ॥ २२ ॥
स्थित्वा तस्मिन्महायोगी लिङ्गमात्रशरीरधृक्।
वासनाभूतसूक्ष्माश्च कर्माविद्ये तथैव च ॥ २३ ॥
दशेन्द्रियमनोबुद्धिरेतल्लिङ्गं विदुर्बुधाः।
ततश्चाण्डाद्बहिर्वायौ सूत्रात्मास्मीति चिन्तयेत् ॥ २४ ॥
चतुर्मुखोग्रके वायौ भूतसूक्ष्मव्यवस्थितः।
लिङ्गमव्याकृते सूक्ष्मे न्यस्याव्यक्ते च बुद्धिमान् ॥ २५ ॥
नामरूपविनिर्मुक्तं यस्मिन्संतिष्ठते जगत्।
तामाहुः प्रकृतिं केचिन्मायामेके परे त्वणून् ॥ २६ ॥
अविद्यामपरे प्राहुस्तर्कविभ्रान्तचेतसः।
तत्र सर्वे लयं गत्वा तिष्ठन्त्यव्यक्तरूपिणः ॥ २७ ॥
निःसंबोधा निरास्वादाः संभवन्ति ततः पुनः।
तत्स्वरूपेण तिष्ठन्ति यावत्सृष्टिः प्रवर्तते ॥ २८ ॥
आनुलोम्यात्स्मृता सृष्टिः प्रातिलोम्येन संहृतिः।
अतः स्थानत्रयं त्यक्त्वा तुरीयं पदमव्ययम् ॥ २९ ॥
ध्यायेत्तत्प्राप्तये लिङ्गं प्रविलाप्य परं विशेत्।
भूतेन्द्रियमनोबुद्धिवासनाकर्मवायवः ॥ ३० ॥
अज्ञानं च प्रविष्टाः स्युर्लिङ्गमव्याकृते सति।
इदानीं लिङ्गनिगडान्मुक्तोऽहं सर्वथा यतः ॥ ३१ ॥
चिदंशत्वात्प्रविष्टोऽहं चैतन्यानन्दसागरे।

अभेदात्परमात्मास्मि सर्वोपाधिविवर्जितः ॥ ३२ ॥
कूटस्थः केवलो व्यापी चिदचिच्छक्तिमानहम् ।
घटाभावे घटाकाशकलशाकाशयोर्यथा ॥ ३३ ॥
तमाहुः श्रुतयो ब्रह्म एवमेवैक्यमादरात् ।
यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् ॥ ३४ ॥
तदाख्यस्तन्मयो भूत्वा गृह्यते न विशेषतः ।
यथा तृणादिकं क्षिप्तं रुमायां लवणं भवेत् ॥ ३५ ॥
अचेतनं जगन्न्यस्तं चैतन्ये चेतनीभवेत् ।
यथा वै लवणग्रन्थिः समुद्रे सैन्धवो यथा ॥ ३६ ॥
नामरूपाद्विनिर्मुक्ताः प्रविश्यापः समुद्रताम् ।
यथा जले जलं न्यस्तं क्षीरे क्षीरं घृते घृतम् ॥ ३७ ॥
अविनष्टा भवन्त्येते गृह्यन्ते न विशेषतः ।
तथाहं सर्वभावेन प्रविष्टश्चेतने सति ॥ ३८ ॥
नित्यानन्दे समस्तज्ञे परे परमकारणे ।
नित्यं सर्वगतं शान्तं निरवद्यं निरञ्जनम् ॥ ३९ ॥
निष्कलं निष्क्रियं शुद्धं तद्ब्रह्मास्मि परं पदम् ।
केवलं सत्यसंकल्पं शुद्धं ब्रह्मास्म्यहं परम् ॥ ४० ॥
पुण्यपापविनिर्मुक्तं कारणं जगतः परम् ।
अद्वितीयं परं ज्योतिर्ब्रह्मास्म्यानन्दमद्वयम् ॥ ४१ ॥
एवमादिगुणैर्युक्तं सत्त्वादिगुणवर्जितम् ।
आविष्टं सकलं ब्रह्म सदा ध्यायेत्सुकर्मकृत् ॥ ४२ ॥
एवमभ्यसतः पुंसो मनोऽस्तं याति तत्र वै ।
मनस्यस्तं गते तस्य स्वयमात्मा प्रकाशते ॥ ४३ ॥

प्रसादे सर्वदुःखानां हानिः स्यात्सुखमात्मनि ।
स्वयमात्मात्मनात्मानमानन्दं प्रतिपद्यते ॥ ४४ ॥
इति ते वर्णितं सर्वं वसिष्ठस्योपदेशितम् ।
अनेन ज्ञानमार्गेण योगमार्गेण पुत्रक ॥ ४५ ॥
भरद्वाज महाप्राज्ञ सर्वं ज्ञास्यसि निश्चितम् ।
परामर्शेन शास्त्रस्य गुरुवाक्यार्थबोधनात् ॥ ४६ ॥
अभ्यासात्सर्वसिद्धिः स्यादिति वेदानुशासनम् ।
तस्मात्त्वं सर्वमुत्सृज्य कुर्वभ्यासे स्थिरं मनः ॥ ४७ ॥

भरद्वाज उवाच ॥

रामः प्राप्तः परं योगं स्वात्मनात्मनि हे मुने ।
कथं वसिष्ठदेवेन व्यवहारः परः कृतः ॥ ४८ ॥
इति ज्ञात्वाहमप्येवमभ्यासार्थं यते यथा ।
तथैव व्यवहारोऽपि व्युत्थाने मे भविष्यति ॥ ४९ ॥

वाल्मीकिरुवाच ॥

यदा परिणतः साधुः स्वस्वरूपे महामनाः ।
विश्वामित्रस्तदोवाच वसिष्ठमृषिसत्तमम् ॥ ५० ॥

विश्वामित्र उवाच ॥

हे वसिष्ठ महाभाग ब्रह्मपुत्र महानसि ।
गुरुत्वं शक्तिपातेन तत्क्षणादेव दर्शितम् ॥ ५१ ॥
दर्शनात्स्पर्शनाच्छब्दात्कृपया शिष्यदेहके ।
जनयेद्यः समादेशं शांभवं स हि देशिकः ॥ ५२ ॥
रामोऽप्ययं विशुद्धात्मा विरक्तः स्वात्मनैव हि ।
विश्रान्तिमात्राकाङ्क्षी च संवादात्प्राप्तवान्पदम् ॥ ५३ ॥

शिष्यप्रज्ञैव बोधस्य कारणं गुरुवाक्यतः ।
मलत्रयमपक्कं चेत्कथं बुद्ध्यति पक्ववत् ॥ ५४ ॥
ज्ञानं प्रत्यक्षमेवेदं गुरुशिष्यप्रयोजनम् ।
उभावपि ततस्तज्ज्ञौ सर्वेषां मादृशामपि ॥ ५५ ॥
इदानीं कृपया राम व्युत्थानं कर्तुमर्हसि ।
परेण परतस्त्वं हि कार्याविष्टोऽर्चयं यतः ॥ ५६ ॥
स्मर कार्यं मम विभो यदुद्दिश्याहमागतः ।
प्रार्थितश्चातिकष्टेन राजा दशरथः स्वयम् ॥ ५७ ॥
तद्वृथा मा कृथाः सर्वं शुद्धेन मनसा मुने ।
देवकार्यं च रामान्यदवतारप्रयोजनम् ॥ ५८ ॥
सिद्धाश्रमं मयानीतो रामो राक्षसमर्दनः ।
करिष्यति ततोऽहल्यामुक्तिं च जनकात्मजाम् ॥ ५९ ॥
परिणेष्यति कोदण्डभङ्गेन कृतनिश्चयः ।
रामस्य जामदग्न्यस्य कर्ता नैश्चित्यमात्मनः ॥ ६० ॥
पितृपैतामहं राज्यं त्यक्ष्यतेऽत्रैव निःस्पृहः ।
वनवासच्छलेनेव दण्डकारण्यवासिनः ॥ ६१ ॥
उद्धरिष्यति तीर्थानि प्राणिनो दुःखिनो हि ये ।
सीताहरणदौर्गत्यच्छलेन भुवि शोच्यताम् ॥ ६२ ॥
दर्शयिष्यति सर्वेषां रावणादिवधादपि ।
स्त्रीसङ्गिनां समासङ्ग वानरादिपरार्थताम् ॥ ६३ ॥
सीताविशुद्धिमन्विच्छंल्लोकानुगतमात्मनः ।
जीवन्मुक्तो निःस्पृहोऽपि क्रियाकाण्डपरायणः ॥ ६४ ॥
भविष्यति परिप्रष्टुं ज्ञानकर्मसमुच्चयम् ।

यैर्दृष्टो यैः स्मृतो वापि यैः श्रुतो बोधितस्तु यैः ।
सर्वावस्थागतानां तु जीवन्मुक्तिं प्रदास्यति ॥ ६५ ॥
इति कार्यमशेषेण त्रैलोक्यस्य समापि हि ।
अनेन रामचन्द्रेण पुरुषेण महात्मना ॥ ६६ ॥
नमोऽस्मै जितमेवैते कोऽप्येवं चिरमेधताम् ।
वसिष्ठ कृपया त्वं हि व्यवहारं परं कुरु ॥ ६७ ॥

वाल्मीकिरुवाच ॥

इत्युक्त्वावस्थितस्तूष्णीं विश्वामित्रो महामुनिः ।
वसिष्ठस्तु महातेजा रामचन्द्रमभाषत ॥ ६८ ॥

वसिष्ठ उवाच ॥

राम राम महाबाहो महापुरुष चिन्मय ।
नायं विश्रान्तिकालो हि लोकानन्दमयो भव ॥ ६९ ॥
यावल्लोकपरामर्शो निरूढो नास्ति योगिनः ।
तावद्रूढसमाधित्वं न भवत्येव निर्मलम् ॥ ७० ॥
तस्माद्राज्यादिविषयान्पर्यालोच्य विनश्वरान् ।
देवकार्यादिभारांश्च त्यज पुत्र सुखी भव ॥ ७१ ॥

वाल्मीकिरुवाच ॥

इत्युक्तोऽपि यदा रामः किंचिन्नोचे लयं गतः ।
तथा सुषुम्नया सोऽपि प्रविष्टो हृदयं शनैः ॥ ७२ ॥
शक्तिप्राणमनःप्रशान्तकरणो जीवप्रकाशात्मको
नाडीरन्ध्रसुषुप्तसर्वकरणः प्रोन्मील्य नेत्रे शनैः ।
हृष्टोत्कृष्टवसिष्ठमुख्यविदुषो निर्मुक्तसर्वैषणः
कृत्याकृत्यविचारणाद्विरहितः सर्वान्प्रतीक्ष्य स्थितः ॥ ७३ ॥

राम उवाच ॥

न विधिर्न निषेधश्च त्वत्प्रसादादहं पुनः ।
तथापि तव वाक्यं तत्करणीयं च सर्वदा ॥ ७४ ॥
वेदागमपुराणेषु स्मृतिष्वपि महामुने ।
गुरुवाक्यं विधिः प्रोक्तो निषेधस्तद्विपर्ययः ॥ ७५ ॥

वाल्मीकिरुवाच ॥

इत्युक्त्वा चरणौ तस्य वसिष्ठस्य महात्मनः ।
शिरस्याधाय सर्वात्मा सर्वान्प्राह घृणानिधिः ॥ ७६ ॥
सर्वे शृणुत भद्रं वो निश्चयेन सुनिश्चितम् ।
आत्मज्ञानात्परं नास्ति गुरोरपि च तद्विदः ॥ ७७ ॥

सिद्धा ऊचुः ॥

रामैवमेव सर्वेषां मनसि स्थितिमागतम् ।
त्वत्प्रसादाच्च सकलं संवादेन दृढीकृतम् ॥ ७८ ॥
सुखी भव महाराज रामचन्द्र नमोऽस्तु ते ।
वसिष्ठेनाप्यनुज्ञाता गच्छामोऽद्य यथागतम् ॥ ७९ ॥
एवमुक्त्वा गताः सर्वे रामसंस्तवने रताः ।
रामचन्द्रस्य शिरसि पौष्पी वृष्टिः पपात ह ॥ ८० ॥

वाल्मीकिरुवाच ॥

एतत्ते सर्वमाख्यातं रामचन्द्रकथानकम् ।
अनेन क्रमयोगेण भरद्वाज सुखी भव ॥ ८१ ॥

इति रघुपतिसिद्धिः प्रोदिता या मया ते
वरमुनिवचनालीरत्नमाला विचित्रा ।

निखिलकविकुलानां योगिनां सेव्यरूपा
परमगुरुकटाक्षान्मुक्तिमार्गं ददाति ॥ ८२ ॥
य इदं शृणुयान्नित्यं विधिं रामवसिष्ठयोः ।
सर्वावस्थोऽपि श्रवणान्मुक्तिमार्गं निगच्छति ॥ ८३ ॥
इह वैराग्यमुमुक्षुव्यवहारोत्पत्तिकस्थितयः ।
उपशमनिर्वाणाख्ये वासिष्ठे षट् प्रकरणानि ॥ ८४ ॥

इति श्रीतर्कवागीश्वरसाहित्याचार्यगौडमण्डलालंकारश्रीमदभिनन्दपण्डितसमुद्धृते वासिष्ठरामायणे मोक्षोपाये सारोद्धारे भरद्वाजोपाख्याने निर्वाणप्रकरणे श्रीवसिष्ठरामचन्द्रसंवादो नाम अष्टादशः सर्गः ॥ १८ ॥

समाप्तोऽयं ग्रन्थः ।

